| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३ | २ | समुह | समूह |
| ३ | १२ | मुख्या | मुखा |
| ६ | १३ | कर्तुमि | कर्तुम |
| ८ | ५ | संन्यासन | संन्यसन |
| ९ | १५ | नत्रेत्यर्थः | तत्रेत्यर्थः |
| ९ | १५ | त्रातिष्ट | प्रातिष्ठ |
| १० | ४ | विष्णो | विष्ण्वो |
| ११ | ३ | द्भुता | द्धुता |
| १४ | १ | छिन्ना | छन्ना |
| १७ | १२ | यतिन | यतीनां |
| १७ | १३ | किकृत | किंकृत |
| १७ | १ | शनेः | शनैः |
| १९ | १२ | राढ्य | राढ्या |
| २१ | १५ | हस्तरौ | हस्तैरा |

## षष्ठसर्गः

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | ८ | सुयते | सूयते |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३ | ९ | विपत्रि | वियत्रि |
| ८ | २ | पंचकं | पंचक |
| ८ | १३ | तापतीयं | तापनीयं |
| १० | ८ | मृद्धि | मृद्वि |
| १० | १० | रिश्व | रीश्व |
| १० | ६ | देहकेशयोः | दैहकशयोः |
| ११ | १३ | द्रंष्टा | दंष्ट्रा |
| १४ | ९ | स्पंदन्म | स्यंदन्म |
| १४ | १४ | रर्थार्थौ | रथार्थौ |

## सप्तमसर्गः

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २ | ९ | दर्शाना | दर्शना |
| ५ | १० | दृष्वा | दृष्ट्या |
| ६ | ४ | मपनिष | मुण्डकनिष |
| ६ | १० | भाप्य | भाप्य |
| ६ | ६ | विनीत | विनीतः |
| ६ | ६ | वेद | वेत्थ |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ७ | ९ | मत्कृता | चमत्कृता |
| ८ | १४ | संत्रध | संबंध |
| १३ | ४ | इत्यु | इत्यू |

## अष्टमसर्गः

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३ | ५ | बोटु | वोढु |
| ५ | ११ | वेदात | वेदांत |
| ९ | ४ | मध्य | मध्या |
| १० | १ | छृतकतुप्रे | छेतकेतुप्र |
| १० | ५ | प्रमाण्य | प्रामाण्य |
| ११ | ३ | वचनानि | वचनानि |
| ११ | ७ | जपोपयो | जयोपयो |
| १३ | ८ | तिसंययुक्तः | यितुंसयुक्तः |
| १३ | १० | विद्धान्न | विद्वान्न |
| १९ | ४ | र्तर्हि | तर्हि |
| १९ | ११ | बुद्धेः | बुद्धेः |
| २० | २ | वाक्य | वाक्यं |

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २७ | ३ | ष्टा | ष्ठा |
| २१ | १२ | विशिवष्टि | विशिनष्टि |
| २१ | १२ | दिव्या | देव्या |

## नवमसर्गः

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३ | ११ | प्रपत्स्य | प्रपत्स्यत |
| ३ | १२ | लाकै | लोके |
| ७ | १ | शिप्यं | शिष्यं |
| ७ | १ | त्वेया | त्वया |
| ७ | ४ | समया | समयो |
| १० | ४ | वल्मि | वच्मि |
| १३ | २ | शद्बः | शब्दाः |
| १३ | ४ | घाषः | घोषाः |

## दशमसर्गः

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | ३ | श्वर्ग्यः | श्वर्यः |
| २ | १ | [illegible] | मणितं |
| २ | ६ | भणितं | मणितं |
| ३ | ४ | पनश्चेदं | पुनश्चेदं |
| ७ | ३ | [illegible]योरग्निः | वायोरग्निः |
| ८ | ५ | त्वत्व | स्वत्व |
| ८ | २ | अर्या | आर्या |
| १७ | १ | शंकर | शंकरे |

## एकादशसर्गः

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३ | १४ | सकशा | सकाशा |
| ४ | ४ | प्रोद्यतखङ्गः | प्रोद्यतखङ्गः |
| ७ | ४ | निषेधमखे | निषेधमुखे |
| ७ | ४ | नत | नतु |
| ७ | ९ | भ्यसयो | भ्यसूयो |

## द्वादशसर्गः

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | २ | तार्थ | तीर्थ |
| ३ | १० | वहं | बर्हं |
| ४ | ५ | ासवो | वासो |
| ४ | ५ | भम्रे | भूम्रे |
| ९ | २ | द्विचवर्य | द्विजवर्य |
| ९ | ११ | ६३ | ६५ |
| १० | १ | मदाक्ष | मंदाक्ष |
| ११ | ३ | रांत | रार्ति |

## त्रयोदशसर्गः

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ४ | ३ | नंदयित | नंदयित |

## चतुर्दशसर्गः

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | ९ | त्समर्थः | त्वमर्थः |
| २ | ४ | दनुकला | दनुकूला |
| २ | ४ | गच्छ | गच्छति |
| २ | ४ | पूर्वमह | पूर्वमेव |
| २ | १२ | गच्छतो | गच्छता |
| ३ | ११ | विशेषेण | विशेषेण |
| ५ | १० | लक्ष्या | लक्ष्म्या |
| ५ | १३ | कुमटी | भ्रुकटी |

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ६ | ११ | मृतकुंभी | मृत्कुंभी |
| ९ | ६ | भावा | भावाः |
| १० | १४ | पादयंति | पादयति |
| ११ | ३ | संपजितो | संपूजितो |
| ११ | १ | पद्मपादा | पद्मपादो |
| १५ | ५ | वंधात् | वंधात् |
| १६ | १४ | ककन | केकेन |
| १६ | १५ | चिंतनम | चिंतनमे |

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १६ | ४ | भितांत | बितांत |
| | | **पंचदशसर्गः** | |
| २ | १ | चांत्यमः | चांतिमः |
| ६ | ६ | विनंदनात् | विनिंदनात् |
| ६ | १ | सत्स्यति | सेत्स्यति |
| १२ | २ | मुख्यपद्मैः | मुखपद्मैः |
| १३ | १६ | वंतेये | वंतेये |
| १५ | | मुडनं | मुंडनं |

| पत्र | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २० | ३ | तदुदा | स्तदुदा |
| २१ | १० | द्वैनमपा | द्वैतमपा |
| २६ | २ | मर्मतं | र्मम उदंतं |
| २६ | १ | रनया | रनयोः |
| ३० | १ | भद | भेद |
| २६ | ९ | पतद्गाह | पंतद्ग्याह |
| | | **षोडशसर्गः** | |
| १२ | १३ | रसाष्टि | रसाष्ट |

इतिशंकरदिग्विजयस्यशुद्धिपत्रंसमाप्तं

अस्मिन्ग्रंथेऽनेकविद्यामंडितानांडाकतरभाऊदाजीत्याव्हानांपुस्तकादिनासहायतयोपकारित्वमस्ति

[illegible] ॥ [illegible]पादकार[illegible]धृतवदूर्णसितास्रसौम्यवदनंसंसारतापापहं ॥ सत्यंज्ञानमनंतमाद्यविधुरं[illegible]शिवंकरसु
सर्वात्मानमपास्तसर्वममलंविश्वेश्वरंशंकरं ॥ १ ॥ नुमःश्रीबालगोपालतीर्थान्व्यासमुखान्मुनीन् ॥ विघ्नहर्तॄन्गणेशादीन्पंडितांश्चविम
रान् ॥२॥ व्याख्यानरहितस्यास्यव्याख्यानंडिंडिमाभिधं ॥ क्रियतेस्वीयबोधायप्रमादःक्षम्यतांबुधैः ॥ ३ ॥ निखिलानर्थनिवृत्तिपूर्वकपर
मानंदाविर्भावलक्षणपरमपुरुषार्थानन्यसाधनाद्वैतज्ञानविजयपर्यवसन्नंश्रीमच्छंकराचार्यविजयमाविष्कर्तुंग्रंथमारभमाणःश्रीमान्माधवाचा
र्यस्तस्यनिर्विघ्नपरिसमाप्त्यादिसिद्धयेऽविगीतशिष्टाचारानुमितश्रुतिप्रमितक[illegible]कंविषयप्रयोजनसूचकंमंगलमाचरन्चिकीर्षितंप्रतिजानीते
॥ प्रणम्येति ॥ परमात्मानंपरमेश्वरंप्रणम्यप्राचीनशंकरजयेसारः मयामाधवेनसंगृह्यते संग्रहत्वेनास्फुटत्वमाशंक्याह स्फुटंयथास्यात्तथेति पर
मात्मानंविशिनष्टि श्रीविद्यातीर्थरूपिणं ॥ अनेनस्वगुरोः श्रीविद्यातीर्थस्येश्वरावतारत्वंततएवसर्वज्ञत्वंचसूचितं अन्येषामपिपरमात्मनिस्वगुरौच
तुल्यभक्त्यैवनिःश्रेयसप्राप्तिरित्यपिध्वनितं तथाचश्रुतिः यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनइति ॥ य

## श्रीगणेशायनमः ॥ प्रणम्यपरमात्मानंश्रीविद्यातीर्थरूपिणं ॥ प्राचीनशंकरजयेसारःसंगृह्यतेस्फुटं ॥ १ ॥

द्वा परंपरमेश्वरंसर्वात्मानंशिवंप्रणम्येत्यर्थः तंविशिनष्टि श्रीविद्यातीर्थरूपिणं तार्किकादिकल्पितैःकुतर्कैर्मलिनीकृतायाविद्यायाःसरस्वत्यास्त
न्मलापकरणेनशोधकत्वात्विद्यातीर्थः श्रियाब्रह्मविद्यात्मिकयायुक्तःश्रीविद्यातीर्थोभगवान्भाष्यकारःतद्रूपिणं तथाचोक्तंसंक्षेपशारीरका
चार्यैः॥वक्तारमासाद्ययमेवनित्यासरस्वतीस्वार्थसमन्वितासीत् निरस्तदुस्तर्ककलंकपंकानमामितंशंकरमर्चितांघ्रिमिति शिवावतारत्वंभगवतो
भाष्यकारस्यशिवपुराणादेरवगंतव्यं तथाचोक्तंशिवपुराणे व्याकुर्वन्व्याससूत्रार्थंश्रुतेरर्थंयथोचिवान् श्रुतेर्न्याय्यःसएवार्थःशंकरःसवितान
नः यद्वा ॥ आत्मानंप्रत्यगभिन्नंपरंपरमेश्वरंश्रीमायाविद्याशब्देनपरापरविद्येवप्राप्यौमोक्षदेवलोकौचगृह्येते तीर्थशब्देनतीर्थंशास्त्राध्वरक्षेत्रपा
त्रोपाध्यायमंत्रिषु अवतारर्षिजुष्टांभःस्त्रीरजस्सुचविश्रुतमितिविश्वोक्ताजिशास्त्रादीनिगृह्यंते तद्रूपिणंसर्वात्मकमित्यर्थःसर्वंखल्विदंब्रह्म एकमे
वाद्वितीयमित्यादिश्रुतेस्तथाच श्रीमच्छंकरजयनिरूपणेनतदुक्तस्यब्रह्मात्मभावस्यैवजयइतिसएवाज्ञातःसन्विषयोज्ञातःसन्प्रयोजनंआचा

त ... सुखंकरोतीतिशिवंकरः अतएवसुशंकरइत्यभिधासन ... स्य शि... रश्चासौसुशंकराभिधश्चसचासौजगतांगुरुश्च तस्याशिवंकरसु
शं... जगद्गुरोर्भगवतोभाष्यकारस्यप्रायशोयशोहृदयशोधकंकलयितुंअनुसंधातुंकथयितुंवासमीहामहे संपूर्वकस्यचेष्टार्थकस्यईहधा
तोलं... रूपं सम्यक्चेष्टांप्रयत्नंकुर्मः क्वचिदन्ययशसोऽधिकथनात्प्रायशइत्युक्तं तंविशिनष्टि पयोब्धेःक्षीरसमुद्रस्यविवरीभ्यःसूक्ष्मच्छिद्रेभ्यः

पयोब्धिविवरीसुनिःसृतसुधाझरीमाधुरीधुरीणभणिताधरीकृतफणाधराधीशितुः॥
शिवंकरसुशंकराभिधजगद्गुरोःप्रायशोयशोहृदयशोधकंकलयितुंसमीहामहे॥५॥

सुनिःसृतायाःसुधायाअमृतस्यझरीणांसूक्ष्मप्रवाहाणांमाधुरीमधुरतातस्याःसकाशाद्धुरीणंश्रेष्ठमतिमधुरंयत्भणितंभाषितंतेनाधरीकृतःफणा
धराणांसर्पाणामधीशितानियंताशेषोयेनतस्य अत्ररेफस्यासकृदावृत्त्याऽऽवृत्त्यनुप्रासःशब्दालंकारः एकस्याप्यसकृत्परइत्युक्तेः पृथ्वीवृत्तं जसौ
जसयलावसुग्रहयतिश्चपृथ्वीगुरुरितिलक्षणात् ॥ ५ ॥ चंयाभ
स्याश्चूर्णैःक्षि

शंकरगुणानुवर्णनेस्यस्यानर्हतामाशंक्यपरिहरति क्वेमेइति तांम्येदमग्रआसीदेकमेवाद्वितीयमित्यादिश्रुत्युक्तसदद्वितीयस्यबोधकत्वात्सद्गुरुः सतांवागुरुः शंकरश्चासौसद्गुरुश्चतस्यगुणानांगणाःसमूहाः दिग्जालस्यकूलंरोधंकषंतिघ्नंतीतिदिग्जालकूलंकषाः सर्वकूलेत्यादिनाखश् अरुर्द्विषदजंतस्येतिमुम् दिग्जालमुल्लंघ्यगताइत्यर्थः कालेनवसंतादिकालेनोन्मीलितानांप्रफुल्लितानां मालतीत्युपलक्षणं मालत्यादिपुष्पाणांपरिमलोविमर्दोत्थोजनमनोहरोगंधस्तस्यावष्टंभस्यमुष्टिंधयामुष्टिंधयंतिपिबंतीतिते कालोन्मीलितमालतीपरिमलघनादपिअधिकतरसुखकराइत्यर्थः नाडीमुष्ट्योश्चेतिखश् इमेप्रसिद्धाःक्वाहंजंतुरत्यंतायोग्यःक यद्यपीत्यध्याहार्यं हंतेतिहर्षे तथापिसद्गुरोर्विद्यातीर्थस्यशंकरस्यवाक्रुपारूप

क्वेमेशंकरसद्गुरोर्गुणगणादिग्जालकूलंकषाःकालोन्मीलितमालतीपरिमलावष्टंभमुष्टिंधयाः॥ क्वाहंहंततथापिसद्गुरुरुपापीयूषपारंपरीमग्नोन्मग्नकटाक्षवीक्षणबलादस्तिप्रशस्तार्हता ॥ ६ ॥

स्य पीयूषस्यामृतस्यपारंपर्यांपरंपरायांमग्नेनोन्मग्नेनचकटाक्षेणनिमीलनेमग्नत्वस्योन्मीलनउन्मग्नत्वस्यचारोपः वीक्षणमेवबलंतस्मात्प्रशस्तायोग्यताममास्तीत्यर्थः अननुरूपयोर्घटनावर्णनेनविषमंवार्ण्यतेयत्रघटनाननुरूपयोरित्युक्तेनविषमेणप्रागभायाअनर्हतायाविचार्य्यरूपकेणप्रतिषेधरूपाक्षेपालंकारस्यआक्षेपः स्वयमुक्तस्यप्रतिषेधोविचारणादित्युक्तस्यताभ्यांसंकरःअविश्रांतिजुषामात्मन्यंगांगित्वंतुसंकरइत्युक्तेः सूर्याश्वैर्मसजस्तताःसगुरवःशार्दूलविक्रीडितं ॥ ६ ॥

...धन्यमन्यतइतिधन्यंमन्याः असज्जनंदुर्जनमात्मानंसुजनंमन्यंतइतिसुजनंमन्याः उक्तसूत्रेण ... स्यकन्या लक्ष्मीःसैवनटीचंचलत्वान्नर्तकीतस्यानृत्येननर्तनेनोन्मत्ताःधन्यंमन्याश्चतेविवेकशून्याश्चसुजनंमन्याश्चाब्धिकन्यानटीनृत्येनोन्मत्ताश्चेतिद्वंद्वो वाद्वयोर्द्वयोःकर्मधारयेद्वंद्वोवा तेचतेनराधमेभ्योऽप्यधमाश्चतेषांकथायद्वा तेषांनराधमानामधमाश्चताःकथाश्चतासांसंमर्दाःसंघर्षाएवदुष्कर्द मादुष्टपंकास्तैर्दिग्धांलिप्तांमेगिरंवाचंअद्यशंकरगुरोःक्रीडयासमुद्यद्यशएवपारावारःसमुद्रः पारावारःसरित्पतिरित्यमरःतस्यसमुच्चलद्भिर्झरैर्वा रिप्रवाहैःसंक्षालयामि स्फुटंयथास्यात्तथासम्यक्प्रक्षालयामीत्यर्थः तथाचोक्तंभगवतावेदव्यासेन असत्कीर्तनकांतारपरिवर्तनपांसुलां वा

धन्यंमन्यविवेकशून्यसुजनंमन्याब्धिकन्यानटीनृत्योन्मत्तनराधमाधमकथासंमर्ददुष्कर्दमैः॥ दिग्धांमेगिरमद्य शंकरगुरुक्रीडासमुद्यद्यशःपारावारसमुच्चलज्झरैःसंक्षालयामिस्फुटं॥ ७॥ वंध्यासूनुखरीविषाणसदृशक्षुद्र क्षितींद्रक्षमाशौर्यौदार्यदयादिवर्णनकलादुर्वासनावासितां॥ मद्वाणीमधिवासयामियमिनस्त्रैलोक्यरंगस्थली नृत्यत्कीर्तिनटीपटीरपटलीचूर्णैर्विकीर्णैःक्षितौ॥ ८ ॥

चंशौरिकथालापैर्गंगयेवपुनीमहे अत्ररूपकवृत्त्यनुप्रास योरन्योन्यनिरपेक्षयोरेकत्रसमावेशात्तिलतंडुलवत्संसृष्टिः सैषासंसृष्टिरेतेषांभवेदैक्या दिहस्थितिरित्युक्तेः ॥७॥ वंध्यासुतेनगर्दभाश्रृंगेणचतुच्छेनतुल्यायेक्षुद्राणांक्षितींद्राणांराज्ञांक्षमाशौर्यौदार्य्यदयाद्यस्तेषांवर्णनस्ययाकलात ल्लक्षणयादुर्वासनयादुर्गंधिनावासितांदुर्गंधिव्याप्तांस्ववाचंयमिनोयतेःश्रीशंकरस्यत्रैलोक्यलक्षणायांरंगस्थल्यांनृत्यभूमिप्रदेशेनृत्यंतीचासौ कीर्त्तिलक्षणानटीतस्याःपटीरस्यचंदनस्यपटलीसमूहःतास्याश्चूर्णैःक्षितौपृथिव्यांविकीर्णैःप्रसृतैरधिवासयामिसुगंधयामि ॥ ८ ॥

एवंप्रामामनंतांचितांकाव्यकरणेप्रतिबंधकांवारयति यद्वेति यद्वादीनेषुदयालवःसहृदयाःपरकीयश्रमाभ्यभिज्ञाःसौजन्यात्मिकायांकल्लोलि
न्यांनद्यांदोलांदोलनंइतस्ततोभ्रमणंतदात्मकंयत्खेलनंतस्मिन्नेवैकंमुख्यंरसिकंस्वांतंमनोयेषांतेपरोक्तिमौक्तिकवज्जुषंतीतितथाभूताःसंतःसंति
अतोऽनंतयाचितयाकिंनकिमपिसानकर्त्तव्येत्यर्थः तेषांदौर्लभ्यमाशंक्याह यद्वा कारुण्यस्यरत्नाकरःसमुद्रःपरगुरुःश्रीशंकरस्तुष्यति तथाचत
त्संतुष्ट्यर्थमवश्यंयतितव्यमितिभावः अत्रपूर्वश्लोकात्प्रामांचितायायद्वेत्यादिनाप्रतिषेधादाक्षेपालंकारः॥ ११॥ ननुयत्रश्रीशंकरगुणवर्णनेबहवो
ऽपिप्रभग्नास्तत्रप्रवृत्तस्यतवसाहसमात्रमेवेतिचेत्सत्यंतथापिगुरुकटाक्षाअघटितमपिमदभीष्टंघटयितुंशक्ताइत्याहोपक्रम्येतिद्वाभ्यां॥श्रीशंकरगु

यद्वादीनदयालवःसत्हृदयाःसौजन्यकल्लोलिनीदोलांदोलनखेलनैकरसिकस्वांताःसमंतादमी ॥ संतःसंति
परोक्तिमौक्तिकजुषःकिंचितयानंतयायद्वातुष्यतिशंकरःपरगुरुःकारुण्यरत्नाकरः ॥ ११ ॥ उपक्रम्यस्तो
तुंकतिचनगुणान्शंकरगुरोःप्रभग्नाःश्लोकार्द्धेकतिचनतदर्द्धार्द्धरचने ॥ अहंतुष्टूषुस्तानहहकलयेशीतकिर
णंकराभ्यामाहर्तुंव्यवसितमतेःसाहसिकतां ॥ १२ ॥

रोर्गुणान्स्तोतुमुपक्रम्यकतिचनकेचित्श्लोकार्द्धेप्रभग्नाःकेचित्तुश्लोकपादरचनेप्रभग्नाः केनप्रभग्नाअपितुसर्वएवप्रभग्नाइतिवा अनं...
भूतान्गुणान्तुष्टूषुःस्तोतुमिच्छुरहहअत्यंतमन्याय्यंशीतकिरणंचंद्रंकराभ्यांहस्ताभ्यामाहर्तुंव्यवसितमतेःव्यवसितत्वसिद्धिादित्यर्थः॥१६॥ एवंत
स्यसाहसिकतांकलयेसंपादयामि अत्रस्वस्मिस्तद्गतसाहसिकतापदार्थारोपान्निदर्शनम् तत्कर्त्यतासंपादनार्थमित्याशयेनाह नेतायत्रेति यत्रयस्मि
शिखरिणी रसैरुद्रैश्छिन्नायमनसभलागःशिखरिणीतिलक्षणात्
न्काव्ये... ...इतियावत् उल्लसतिप्रकाशते तस्यकाव्यस्यतददोषौशब्दार्थौसगुणावनलंकृती

यद्यप्येवंतथापिविपुलानांदुग्धाब्धेःक्षीरसमुद्रस्यलहर्य्यः... हासेएककरसिकामुख्यरसिकास्ततोप्यतिस्वच्छायतिपतेर्विद्यातीर्थस्यशंकरस्यका... तःअघटितंयदभीष्टंतस्यममाघटिताभीष्टस्यघटनेभृशमतिशयेनशक्ताइत्यत्रकिंचित्रंकिमप्याश्चर्यंनभवतीत्यर्थः... आमोदपरंपरांदद्यात् यथा



किंचित्रमितिवा ॥ १३॥ एवमपिचित्तस्थैर्यमलभमानोजगज्जननींसरस्वतींप्रार्थयते अस्मदिति अद्वैताचार्यपादस्तुत्याश्रीशंकर... ...शकुलःमंडन

तथाप्युज्जृंभंतेमयिविपुलदुग्धाब्धिलहरीलसत्कल्लोलालीलसितपरिहासैकरसिकाः ॥ अमीमूकान्वाचालयितुमपिशक्तायतिपतेःकटाक्षाःकिंचित्रंभृशमघटिताभीष्टघटने ॥ १३ ॥ अस्मज्जिह्वाग्रसिंहासनमुपनयतुस्वोक्तिधारामुदारामद्वैताचार्यपादस्तुतिकृतसुकृतोदारताशारदांबा ॥ नृत्यन्मृत्युंजयोच्चैर्मुकुटतटकुटीनिःस्रवत्स्वःस्रवंतीकल्लोलोद्वेलकोलाहलमदलहरीखंडिपांडित्यलक्ष्यां ॥ १४ ॥

...स्याःकृतंसंपादितंयत्सुकृतंपुण्यंतेनोदारतायस्याः कृतंसुकृतंयेनतस्मिन्मयिउदारतायस्याइतिवा साशारदांबानृत्यतोमृत्युंजयस्यशिवस्योच्चैर्मुकुटतटकुटीनिःस्रवंतीयास्वःसरित्गंगातस्याःकल्लोलानामुद्वेलोऽनतिवेलोऽत्यर्थोयःकोलाहलस्तस्यमदोगर्वोऽहंकारस्तस्यलहरीणांखंडिखंडनकर्त्र्यत्पांडित्यंतेनलक्ष्यांमनोज्ञांउदारांविशालांस्वीयांव्याहारधारां अस्मज्जिह्वायमेवसिंहासनमुपनयतुजिह्वापलक्षणसिंहासनसमीपंप्रापयतु अभ्यर्थनावाक्योद्भ स्रग्धराम्रभ्नैर्यानांत्रयेणत्रिमुनियतियुतास्रग्धराकीर्तितेयमितिलक्षणात् ॥ १४ ॥

ननु दुर्घटेऽर्थे तव वाचः पलायनमेवयुक्तं मध्येऽसामर्थ्यवशान्निवृत्तौ [illegible] तयशोनाशसंभवादितिचेदिदमेव विचार्य्यपलायितवतीमद्वाचं गुरोर्गौरवमहद्बलात्प्रत्याहृत्यकविगणानियुंक्तइत्याह केति इदंशंकरसद्गुरोः सुचरितंक अहंवराकीक्षुद्राक अतश्चिरार्जितंममयशः कथंकुतोनिर्बध्ना सिनाशयसि अंबुधौसमुद्रेमांममयशोवाकिमर्थमज्जयसिइत्युक्त्वापलायितवतींचपलांवाचंबलात्प्रत्याहृत्यकविसमूहोनियुंक्ते प्रेरयतीतिचित्रंगुरोर्गौरवं वंश० ॥ १५ ॥ काव्यरचनायांप्रवृत्तामद्वाणीक्रूराणांकवितावतांशैलीमनुसरिष्यति इतिसाक्रोशमाह रुक्षेति ॥ रुक्षाचासौएका

क्वेदंशंकरसद्गुरोःसुचरितंक्वाहंवराकीकथंनिर्बध्नासिचिरार्जितंममयशःकिंमज्जयस्यंबुधौ ॥ इत्युक्त्वाचपलांपलायितवतींवाचंनियुंक्तेबलात्प्रत्याहृत्यगुणस्तुतौकविगणश्चित्रंगुरोर्गौरवं ॥ १५ ॥ रुक्षैकाक्षरवाक्निघंटुशरणैरौणादिकप्रत्ययप्रायैर्हतयङंतदंतुरतरैर्दुर्बोधदूरान्वयैः ॥ क्रूराणांकवितावतांकतिपयैःकष्टेनकृष्टैःपदैर्हाहास्याद्वशगाकिरातविततेरेणीववाणीमम ॥ १६ ॥

क्षराचासौवाक्चसाचनिघंटवःकोशाश्चशरणंयेषांतैः औणादिकाःप्रत्ययाःप्रायेणयेषुतैः यङंतानिचतानिदंतुरतराणिविषमतराणिदंतुरंवाच्यवद्विद्यद्विषमोन्नतदंतयोरितिविश्वप्रकाशः यङंतानिचदंतुरतराणिचतैरितिवा दुर्बोधानिचतानिदूरान्वयानिचदुर्बोधानिचदूरान्वयानिचेतिवा तैःकष्टेनकृष्टैःक्रूराणांकवितावतांकतिपयैःकैश्चित्पदैर्हाहाममवाणीवशगास्यात् यथाएणीमृगीकिरातानांविततेःपंक्तेस्तद्वदित्यर्थः ॥ १६ ॥ एवंतर्हिकिमर्थंकाव्यरचनायांप्रवृत्तस्त्वमितिचेत् श्रीशंकराचार्यस्यगुणानुवर्णनेनस्वस्यकृतकृत्यतासंपादनार्थमित्याशयेनाह नेतायत्रेति यत्रयस्मिन्काव्येभगवत्पादेतिसंज्ञायस्यसमहेशोनेतामुख्यःस्वामीवर्ण्यइतियावत् उल्लसतिप्रकाशते तस्यकाव्यस्यतद्दोषौशब्दार्थौसगुणावनलंकृती

पुनःकापात्युक्तस्वरूपस्यप्रभुसंमितशब्दप्रधानवेदादिशास्त्रेभ्यःसुहृत्संमितार्थतात्पर्यवदितिहासपुराणादिभ्यश्चशब्दार्थयोर्गुणभावेनरसांगभूत
व्यापारप्रवणतयाविलक्षणस्यकांतिवसरसतापादनेनाभिमुखीकृत्योपदेशकर्त्तुर्लोकोत्तरवर्णनानिपुणस्यकवेःकर्मणःकर्त्ताव्यासइवाचलःस्थि
रश्चासौकविश्रेष्ठश्चेतिव्यासाचलकविवरोमाधवोधन्यःकृतकृत्यः नन्वविद्याक्षतिपूर्वकब्रह्मानंदप्राप्त्याकृतकृत्यतायावेदांतसिद्धांतत्वात्कथंतद्व
॥५॥ तिरिक्तरसयुक्तकाव्यकरणेनकृतकृत्यतेत्यतआह यत्रयस्मिन्काव्येशांतिःशांतिसंज्ञोरसःप्रकचतिप्रकाशते रसंविशिनष्टि उज्वलाद्यैःशेषैरुप
सर्जनभूतैःशेषवान्शेषीप्रधानभूतइतियावत् उज्वलःशृंगारः शृंगारःशुचिरुज्वलइत्यमरःआद्यपदेनवीरकरुणाऽद्भुतहास्यभयानकवीभत्सरौद्रा
ख्यारसागृह्यंते यत्रयस्मिन्काव्येअविद्याक्षतिरपिफलं क्षतेरन्यत्रफलत्वाभावात् अपिशब्दस्तथाचैवंविधकाव्यकर्त्ताधन्यएवेतिभावः तस्यमाध

नेतायत्रोल्लसतिभगवत्पादसंज्ञोमहेशःशांतिर्यत्रप्रकचतिरसःशेषवानुज्वलाद्यैः ॥ यत्राविद्याक्षतिरपिफ
लंतस्यकाव्यस्यकर्त्ताधन्योव्यासाचलकविवरस्तत्कृतिज्ञाश्चधन्याः ॥ १७॥ तत्रादिमउपोद्घातोद्वितीयेतु
तदुद्भवः ॥ तृतीयेतत्तदमृतांधोवतारनिरूपणं ॥ १८ ॥

वस्यकृतियत्नंजानंतीतितत्कृतिज्ञास्तेऽपिधन्याः मंदाक्रांता मंदाक्रांताजलधिषडगैर्म्भौनतौताद्गुरूचेदितिलक्षणात् ॥ १७ ॥ अथशांकरींकथां
विस्तरेणनिरूपयितुंप्रथमंतावच्छ्रोतुःसुखप्रतिपत्तयेषोडशसर्गैर्निरूप्यांतांसंक्षिप्यदर्शयतितत्रेत्यादिना तत्रषोडशसर्गात्मकेकाव्येआदिमेआ
द्येसर्गेउपोद्घातः चिंतांप्रकृतिसिद्ध्यर्थामुपोद्घातंप्रचक्षतेइत्युक्तःशिवदेवतासंवादादिरूपोनिरूपितः द्वितीयेसर्गेतुतस्यभगवतोमहेशस्योद्भव
आविर्भावः तृतीयसर्गेऽमृतमंधोऽन्नंअदनीयंयेषांअदेर्नुम्धौचअदेर्भक्तेवाच्येऽसुनुनुमागमोदस्यधादेशश्चतेषांतेषाममृतांधसांदेवानांअवतार ॥५
स्यनिरूपणंतस्यतस्यामृतांधसोऽवतारस्येतिवा ॥ १८ ॥

चतुर्थेसर्गेअष्टमवर्षात्प्राक्चरितमष्टमप्राक्चरितंशुद्धंचतदष्टमप्राक्चरितंतस्यमहेशस्यशुद्धाष्टमप्राक्चरितंस्थितंशुद्धत्वंचप्राकृतचरितंविलक्ष
णत्वं पंचमेसर्गेतस्ययोग्यायाजीवन्मुक्तिसुखसाधनस्यचतुर्थाश्रमस्यप्राप्तेर्निरूपणंयोग्यस्यसुखाश्रमस्येतिवा ॥ १९ ॥ याएषाशुद्धात्मवि
द्यासंप्रदायादागतामहताकालेनसंप्रदायस्यविच्छिन्नत्वात्गतातस्याःशुद्धात्मविद्यायाप्रतिष्ठितिःसम्यक्स्थापनंषष्ठेसर्गेस्थितं ॥ २० ॥ सप्तमे
सर्गेतस्यशंकराचार्यस्यव्यासाचार्यस्यचपरस्परसंदर्शनात्मकंविचित्रमाश्चर्यंस्थितं अष्टमेसर्गेमंडनार्ययोर्मंडनभाष्यकारयोःसंवादःस्थितः
॥ २१ ॥ नवमेसर्गेसरस्वतीसाक्षिकंमुनेर्यत्सार्वज्ञंतस्ययोनिर्वाहस्तदुपायस्यचिंतनंस्थितं दशमेसर्गेयोगशक्त्याभूपतेरमरकाभिधस्यराज्ञःका

चतुर्थसर्गेतच्छुद्धाष्टमप्राकुचरितंस्थितं ॥ पंचमेतद्योग्यसुखाश्रमप्राप्तिनिरूपणं ॥ १९ ॥ महतानेहसायैषा
संप्रदायागतागता ॥ तस्याःशुद्धात्मविद्यायाःषष्ठसर्गेप्रतिष्ठितिः ॥ २० ॥ तद्व्यासाचार्यसंदर्शविचित्रंस
प्तमेस्थितं ॥ स्थितोऽष्टमेमंडनार्यसंवादोनवमेमुनेः ॥ २१ ॥ वाणीसाक्षिकसार्वज्ञनिर्वाहोपायचिंतनं ॥
दशमेयोगशक्त्याभूपतिकायप्रवेशनं ॥ २२ ॥ बुध्वामीनध्वजकलास्तत्प्रसंगप्रपंचनं ॥ सर्गएकादशेतूग्र
भैरवाभिधनिर्जयः ॥ २३ ॥ द्वादशेहस्तधात्र्यार्यतोटकोभयसंश्रयः ॥ वार्तिकांतब्रह्मविद्याचालनंतुत्रयो
दशे ॥ २४ ॥ चतुर्दशेपद्मपादतीर्थयात्रानिरूपणं ॥ सर्गेपंचदशेतूक्तंतदाशाजयकौतुकं ॥ २५ ॥

येशरीरेप्रवेशनंस्थितं ॥ २२ ॥ मीनध्वजस्यकामस्यकलाबुध्वातासांकलानांप्रसंगस्यप्रपंचनंप्रकटीकरणमितिपूर्वेणान्वयः एकादशेसर्गे
तूग्रभैरवाभिधस्यकापालिकस्यनिर्जयःस्थितः ॥ २३ ॥ द्वादशेसर्गेहस्तामलकार्यतोटकोभयसंश्रयःद्वयोःशिष्यत्वेनाश्रयणंस्थितं त्रयोदशे
सर्गेतुवार्त्तिकांतायाःब्रह्मविद्यायाश्चालनंप्रचारःस्थितः ॥ २४ ॥ चतुर्दशेसर्गेपद्मपादस्यतीर्थयात्रायानिरूपणं पंचदशेसर्गेतुतस्यशंकर
स्याशाजयात्मकंकौतुकंउक्तं दिग्विजयस्यकौतुकमितिवा ॥ २५ ॥

षोडशेसर्गेतस्यमहात्मनःशारदापीठवासःस्थितः इत्येवंप्रकारेणषोडशभिःशांकरीकथाप्रतिपादनीया ॥ २६॥ सैषाशांकरीकथाकलिमल नाशकर्त्रीसकृच्छ्रवणेनापिकाम्यमानपुरुषार्थचतुष्टयप्रदानानाप्रश्नोत्तरैर्मनोज्ञाविदुषांप्रमोदार्थमारभ्यते॥ २७॥ इत्थंसंग्रहेणशांकरींकथांनि रूप्यतस्याविस्तरेणनिरूपणंप्रतिज्ञायतदुपोद्घातत्वेनकथांप्रस्तौति एकदेति एकदाएकस्मिन्कालेरूप्याचलेकैलासेस्थितंदेवानामिंद्रादीनांदेवं महादेवंपूर्वाचलस्थंचंद्रमिवदेवताउपतस्थिरेउपासांचक्रिरे देवताब्रह्माद्याअत्रयाम्नाः निगमाचारपरिभ्रष्टानागमाचाररतान्विप्रादिवर्णान

षोडशेशारदापीठवासस्तस्यमहात्मनः ॥ इतिषोडशभिःसर्गैर्व्युत्पाद्याशांकरीकथा ॥ २६ ॥ सैषाकलि मलच्छेत्रीसकृच्छ्रुत्वापिकामदा ॥ नानाप्रश्नोत्तरैरम्याविदामारभ्यतेमुदे ॥ २७॥ एकदादेवतारूप्याचल स्थमुपतस्थिरे ॥ देवदेवंतुषारांशुमिवपूर्वाचलास्थितं ॥ २८ ॥ प्रसादानुमितस्वार्थसिद्धयःप्रणिपत्यतं ॥ मुकुलीकृतहस्ताब्जाविनयेनव्यजिज्ञपन् ॥ २९ ॥ विज्ञातमेवभगवन्विद्यतेयद्धितायनः ॥ वंचयन्सुग तान्बुद्धवपुर्धारीजनार्दनः ॥ ३० ॥

वलोक्यसत्यलोकगतेननारदेनप्रेरितोब्रह्मास्वभक्तादिसहितःशिवलोकमागत्यप्रणिपत्यपंचवक्त्रंशिवमूचेइतिप्राचीनविजयोक्तेः॥ २८ ॥ उपा स्ययत्कृतवत्यस्तदाह उपासनयाप्रसादितस्यशिवस्यप्रसन्नतारूपेणलिंगेनानुमितास्वार्थस्यसिद्धिर्याभिस्ताः आमुकुलानिमुकुलीकृतानिह स्तकमलानियाभिस्ताबद्धांजलयोदेवदेवंप्रणिपत्यप्रकर्षेणनम्रीभूयव्यजिज्ञपन्विज्ञापनंकृतवत्यः॥ २९ ॥ तदेवोदाहरति हेभगवन्नोऽस्माकं हितायबुद्धवपुर्धारीजनार्दनःसुगतान्वंचयन्यद्विद्यतेस्मतत्त्वयाविज्ञातमेव ॥ ३० ॥

यद्यपिजनार्दनोऽस्मद्धिताय्दैत्यान्पूर्ववंचितवान् तथापीदानींतेनबुद्धेनप्रणीतारचितायेआगमास्तदालंबैर्बौद्धैर्दृश्यतेकर्मोपासनाज्ञानंचयेनयस्मिन्निति वा तद्दर्शनंकर्मादिप्रतिपादकंवेदादिशास्त्रंतद्दूषकैर्बौद्धैर्धात्रीपृथिवीव्याप्ता यथासंतमसैर्गाढांधकारैरात्रिस्तद्वत्तेषांनिराकरणेत्वमेवप्रभुरितिसूचयितुंप्रभोइतिसंबोधनं त्वयिप्रभौसतीदमत्यंतानुचितमितिवासंबोधनाशयः॥३१॥अनर्थरूपंतेषांकृत्यमाह्नः वर्णाश्रमाणांयेसम्यगाचारास्तान्द्विषंति यतोब्रह्माणंब्राह्मणंवेदंतपोब्रह्मचविद्विषंतीतिब्रह्मविद्विषः अतएववेदवचनानांजीविकामात्रतांब्रुवंति वेदाजीविकार्थंनिर्मिता इतिकथयंति हेप्रभो ॥ ३२ ॥ न्यासंसंन्यासंगताःप्राप्ताः ॥ ३३ ॥ क्रतुरित्यक्षरद्वयेश्रुतेऽपिसतिश्रोत्रेपिदधतिकर्णपिधानंकुर्वंति ॥ ३४ ॥

तत्प्रणीतागमालंबैर्बौद्धैर्दर्शनदूषकैः॥ व्याप्तेदानींप्रभोधात्रीरात्रिःसंतमसैरिव ॥३१॥ वर्णाश्रमसमाचारा
न्द्विषंतिब्रह्मविद्विषः॥ ब्रुवंत्याम्नायवचसांजीविकामात्रतांप्रभो ॥ ३२ ॥ नसंध्यादीनिकर्माणिन्यासंवानक
दाचन॥करोतिमनुजःकश्चित्सर्वेपाखंडतांगताः॥ ३३ ॥ श्रुतेपिदधतिश्रोत्रेक्रतुरित्यक्षरद्वये॥ क्रियाःकथंप्र
वर्त्तेरन्कथंक्रतुभुजावयं॥३४॥ शिवविष्ण्वागमपरैर्लिंगचक्रादिचिह्नितैः॥ पाखंडैःकर्मसंन्यस्तंकारुण्यमि
वदुर्जनैः॥ ३५॥ अनन्येनैवभावेनगच्छंत्युत्तमपूरुषं॥ श्रुतिःसाध्वीमदक्षीबैःकावाशाक्यैर्नदूषिता ॥३६॥
सद्यःकृत्तद्विजशिरःपंकजार्चितभैरवैः॥ नध्वस्तालोकमर्यादाकावाकापालिकाधमैः॥ ३७॥

शिवेतिस्पष्टोर्थः ॥ ३५॥ यथासाध्वीपतिव्रताऽनन्येनैवभावेनस्वपतिमनुसरंतीमदोन्मत्तैर्दुष्टैर्दूष्यतेतथोत्तमपुरुषंक्षराक्षरातीतंपरमात्मानंअनन्येनैवभावेनगच्छंतीश्रुतिःसाध्वीमदक्षीबैःशाक्यैर्बौद्धैःकावानदूषिताऽपितुसर्वैवदूषिता तथाचोत्तमपुरुषेणत्वयास्वप्रतिपादिकाश्रुतिरवश्यंरक्षणीयेतिभावः॥३६ ॥ सद्यःकृत्तानिच्छिन्नानिद्विजानांशिरांस्येवपंकजानितैरर्चितोभैरवोयैस्तैःकापालिकाधमैःलोकमर्यादाकावानध्वस्ता किंतुसर्वैवनाशितेत्यर्थः ॥ ३७ ॥

पदंदत्वागत्वा ॥ ३८ ॥ तत्तस्मादुत्साद्यविनाश्य श्रौतंवर्त्मवैदिकंमार्गं ॥ ३९ ॥ मानुष्यमवलंब्यमनुष्यभावमाश्रित्यवोयुष्माकंमनोरथंवांछां पूरयिष्ये ॥ ४० ॥ किंकुर्वन्नित्यपेक्षायामाह दुष्टाचारविनाशायेति ब्रह्मप्रतिपादकानांसूत्राणांतात्पर्यार्थस्य विशेषेणनिर्णयोयेनतत् अल्पाक्षरमसंदिग्धंसारवद्विश्वतोमुखं अस्तोभमनवद्यंचसूत्रंसूत्रविदोविदुः सूत्रार्थोवर्ण्यतेयत्रवाक्यैःसूत्रानुकारिभिः स्वपदानिचवर्ण्यंतेभाष्यंभाष्यविदोविदुरितिसूत्रभाष्यलक्षणश्लोकौद्रष्टव्यौ॥ ४१॥ मोहनमज्ञानंप्रकृतिरुपादानंयस्यतच्चतत्द्वैतमेवध्वांतंगाढंतमस्तस्य निरसनेमध्यान्हसूर्यैश्चतुर्भिश्चतुरैःकुशलैःशिष्यैःसहितश्चतुर्भिर्भुजैर्हरिवत् ॥ ४२ ॥ यतींद्रोनाम्नाशंकरोमहीतलेभविष्यामितथाभवंतोपिमानुषींतनुमाश्रिताःसर्वेस्वर्ग

अन्येपिवहवोमार्गाःसंतिभूमौसकंटकाः ॥ जनैर्येषुपदंदत्वादुरंतंदुःखमाप्यते ॥ ३८ ॥ तद्भवाँल्लोकरक्षार्थमुत्साद्यनिखिलान्खलान्॥वर्त्मस्थापयतुश्रौतंजगद्येनसुखंव्रजेत्॥३९॥इत्युक्तोपरतान्देवानुवाचगिरिजाप्रियः॥ मनोरथंपूरयिष्येमानुष्यमवलंब्यवः॥ ३९ ॥ दुष्टाचारविनाशायधर्मसंस्थापनायच॥भाष्यंकुर्वन्ब्रह्मसूत्रतात्पर्यार्थविनिर्णयं॥ ४१ ॥ मोहनप्रकृतिद्वैतध्वांतमध्याह्नभानुभिः॥ चतुर्भिःसहितःशिष्यैश्चतुरैर्हरिवद्भुजैः ॥ ४२॥ यतींद्रःशंकरोनाम्नाभविष्यामिमहीतले॥मद्वत्तथाभवंतोपिमानुषींतनुमाश्रिताः ॥ ४३ ॥ तंमामनुसरिष्यंतिसर्वेत्रिदिववासिनः॥ तदामनोरथःपूर्णोभवतांस्यान्नसंशयः ॥ ४४ ॥ ब्रुवन्नेवंदिविषदःकटाक्षानन्यदुर्लभान्॥ कुमारेनिदधेभानुःकिरणानिवपंकजे॥ ४५॥

वासिनोदेवास्तंयतींद्रंशंकरंमामनुसरिष्यंतितदाभवतांमनोरथःपूर्णःस्याद्भविष्यति नसंशयःअस्मिन्नर्थेसंशयोनकर्त्तव्यइत्यर्थः ॥ ४३॥ ४४ ॥ ततोयद्वृत्तंतदाह ब्रुवन्निति एवमनेनप्रकारेणदिविषदःदेवान्प्रतिब्रुवन्सअन्यदुर्लभान्कटाक्षान्कुमारेस्वामिकार्तिकेनिदधेयथासूर्यःपंकजेकिरणान्स्थापयतितद्वदित्यर्थः ॥ ४५ ॥

क्षीरनीरनिधेःक्षीरसमुद्रस्यवीचिभिस्तुल्यान्कटाक्षान्प्राप्यगुहःकुमारोमुमुदे यथाक्षीराब्धिवीचिसहकृतान्तुल्यान्वाचंद्रसंबंधिनोरश्मीन्प्रा प्यजलधिर्मोदमाप्नोतितिद्वत् ॥ ४६॥ चंद्रशेखरःशिवःस्वसुतममंदंबुद्धिमंतंस्कंदमवदत् उक्तवान् चंद्रशेखरंविशिनष्टि दंतात्मकैश्चंद्रातपैश्चंद्रज्यो त्स्नाभिरानंदिनोवृंदारकादेवाएवचकोरकायस्य दंतलक्षणानांचंद्राणामातपैरितिवा पाठांतरेतुक्रियाविशेषणं ॥ ४७॥ यदुवाचतदुदाहरति ज गदुद्धारविषयंश्रेयःसाधनंवचनं हेसौम्यश्रृणुश्रोतुंसावधानोभव कांडत्रयात्मकेकर्मोपासनाज्ञानभेदेनत्रयात्मकेवेदेप्रकर्षेणोद्धृतेसतिद्विजा नामुद्धृतिःस्यात् ॥ ४८ ॥ तेषांद्विजानांरक्षणेसतिसमस्तंजगतीतलंरक्षितंस्यात् वर्णाश्रमधर्माणांततेःसंततेस्तदधीनत्वतः द्विजाधीनत्वतः ततइ त्युत्तरान्वयि ॥ ४९ ॥ ततस्तस्मादिदानीमिदमुद्धार्यमित्यभिप्रायवतोममभैतद्दनात्पूर्वंगूढाशयाभिज्ञौविष्णुशेषौममसमीपगौमध्यमंकांडंदेवताकां

क्षीरनीरनिधेर्वीचिसचिवान्प्राप्यतान्गुहः॥कटाक्षान्मुमुदेरश्मीनुदन्वानैंदवानिव॥४६॥अवदन्नंदनंस्कंदममं दंचंद्रशेखरः॥दंतचंद्रातपानंदिवृंदारकचकोरकः॥४७॥श्रृणुसौम्यवचःश्रेयोजगदुद्धारगोचरं॥कांडत्रयात्मके वेदेप्रोद्धृतेस्याद्द्विजोद्धृतिः॥ ४८॥ तद्रक्षणेरक्षितंस्यात्सकलंजगतीतलं ॥ तदधीनत्वतोवर्णाश्रमधर्मततेस्ततः ॥ ४९ ॥ इदानीमिदमुद्धार्यमितिवृत्तिमतःपुरा॥ममगूढाशयविदौविष्णुशेषौसमीपगौ ॥५०॥

डमुद्धर्तुतौमयैवानुज्ञातौभूमावंशतोऽवतीर्यसंकर्षणपतंजलीमुनीभूत्वामुदोपास्तियोगकांडस्यकृतौकर्त्तारौस्थितौकरणार्थमितिवा अयिमंज्ञा नकांडंत्वहमुद्धरिष्यामीतिदेवताःप्रतिसंप्रतिजानेस्मप्रतिज्ञांकृतवानस्मि भवानपिजानात्येवत्वंतुजैमिनीयन्यायसमुद्रस्यशरत्पौर्णमासीचंद्रोभ वभूत्वाचब्रह्मणःकृतेब्राह्मणस्यवेदस्यहिरण्यगर्भस्यतपसःपरब्रह्मणश्चार्थेविशिष्टकर्मकांडस्योद्धरणादधुनासुब्रह्मण्यइतिख्यातिगमिष्यसीतिपं चानांयोजना ॥ ५० ॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ नैगमींवैदिकींआम्नायार्थस्यवेदार्थस्यविरोधिनः ॥ ५५ ॥ भूसुरःब्राह्मणः ॥ ५६ ॥ प्रभोःशिवस्यवाणींवा विधेर्हिरण्यगर्भस्यापिविधायिनींप्रवृत्तिकरींबुधानीकपतिर्देवसेनापतिर्गुहः तथास्त्वितिसुधाधारामिवप्रतिजग्राह ॥ ५७ ॥ दिवंस्वर्गं ॥ ५८ ॥ कृत्रिमयारचितयाश्रद्धयायुक्तः क्रौंचारिंक्रौंचाख्यपर्वतस्यशत्रुंगुहं॥ ५९ ॥ तारकस्यदैत्यविशेषस्यारातिःशत्रुःस्कंदःमहीतलेअजनिष्टप्रादुरभू

मध्यमंकांडमुद्धर्तुमनुज्ञातौमयैवतौ॥ अवतीर्यांशतोभूमौसंकर्षणपतंजली॥ ५१ ॥ मुनीभूत्वामुदोपास्तियोग
कांडकृतौस्थितौ॥अग्निमंज्ञानकांडंतूद्धरिष्यामीतिदेवताः ॥५२॥ संप्रतिप्रतिजानेस्मजानात्येवभवानपि ॥ जै
मिनीयनयांभोधेःशरत्पर्वशशीभव ॥५३॥ विशिष्टंकर्मकांडंत्वमुद्धरब्रह्मणःकृते ॥ सुब्रह्मण्यइतिख्यातिंगमिष्य
सिततोऽधुना ॥ ५४ ॥ नैगमींकुरुमर्यादामवतीर्यमहीतले॥निर्जित्यसौगतान्सर्वानाम्नायार्थविरोधिनः ॥५५॥
ब्रह्मापितेसहायार्थंमंडनोनामभूसुरः॥ भविष्यतिमहेंद्रोऽपिसुधन्वानामभूमिपः॥ ५६॥ तथेतिप्रतिजग्राहवि
धेरपिविधायिनीं॥बुधानीकपतिर्वाणींसुधाधारामिवप्रभोः॥ ५७॥ अथेंद्रोनृपतिर्भूत्वाप्रजाधर्मेणपालयन्॥
दिवंचकारपृथिवींस्वपुरीममरावतीं ॥ ५८ ॥ सर्वज्ञोऽप्यसतांशास्त्रेकृत्रिमश्रद्धयान्वितः॥ प्रतीक्षमाणःक्रौंचा
रिंमेलयामाससौगतान् ॥ ५९ ॥ ततःसतारकारातिरजनिष्टमहीतले॥ भट्टपादोऽभिधायस्यभूषादिक्सुदृशाम
भूत्॥ ६० ॥ स्फुटयन्वेदतात्पर्यमभाज्जैमिनिसूत्रितं॥ सहस्रांशुरिवानूरुव्यंजितंभासयन्जगत् ॥ ६१॥

यस्यभट्टपादइत्यभिधासंज्ञादिक्सुदृशां दिगंगनानांभूषाअलंक्रियाअभूत् ॥ ६०॥ अवतारकृत्यंदर्शयतिस्फुटयन्निति जैमिनिनासूत्रैःसूचितंवे दस्यतात्पर्यंस्फुटयन्नभात्अराजत् यथाऽनूरुणाऽरुणेनव्यंजितंकिंचित्प्रकाशितंजगत्सम्यक्भासयन्सहस्रांशुःसूर्योराजतेतद्वदित्यर्थः ॥६१॥

सभट्टपादः प्रत्युद्गम्य प्रत्युत्थानाभिगमने विधाय ऊर्ध्वंप्राणाह्युत्क्रामंतियूनः स्थविरआगते॥प्रत्युत्थानाभिवादाभ्यांपुनस्तान्प्रतिपद्यतेइतिशास्त्रम
नुसरन्निति भावः॥६२॥सुरभिः सुगंधिः वसंतोवा युवनींस्वर्गवनीं॥६३॥सभायां समीपे विटपिनं वृक्षं श्रितस्य कोकिलस्य कूजितं मधुरभाषितं श्रुत्वा
तद्व्याजात्तन्मिषेण राजानं प्रतिपंडिताग्रणीर्भट्टपादोजगाद बभाषे॥६४॥यदुक्तवान् तदुदाहरति पिकहेकोकिल मलिनैर्नीचैः श्रुतेः करणस्य दूषकः
पीडाकरोनिर्ह्रादः शब्दोयेषां तैः काककुलैस्तेतवसंगोनस्याच्चेत्तदाश्लाघनीयः स्तुत्योभवेः एतद्व्याजेन मलिनैर्नीचैः काकवृंदसदृशैर्नास्तिकैर्वेददू
षकनिर्ह्रादैस्तेसंगोनस्याच्चेत्तदात्वंश्लाघनीयोभवेरितिराजानंप्रयुक्तवानित्यर्थः गूढोक्तिरलंकारः गूढोक्तिरन्योद्देश्यं चेद्यदन्यंप्रतिकथ्यतेइत्यु

राज्ञः सुधन्वनः प्रापनगरींसजयन्दिशः॥ प्रत्युद्गम्य क्षितींद्रोऽपिविधिवत्तमपूजयत्॥६२॥ सोभिनंद्याशिषाभू
पमासीनः कांचनासने॥तांसभांशोभयामाससुरभिर्युवनीमिव॥६३॥ सभासमीपविटपिश्रितकोकिलकूजि
तं॥ श्रुत्वाजगादतद्व्याजाद्राजानंपंडिताग्रणीः॥६४॥ मलिनैश्चेन्नसंगस्तेनीचैः काककुलैः पिक॥ श्रुतिदूषकनि
र्ह्रादैः श्लाघनीयस्तदाभवेः॥६५॥ षडभिज्ञानिशम्येमांवाचंतात्पर्यगर्भितां॥ नितरांचरणस्पृष्टाभुजंगाइवचुक्रु
धुः॥६६॥ छित्वायुक्तिकुठारेणबुद्धसिद्धांतशाखिनं॥ सतद्ग्रंथेंधनैश्चीर्णैः क्रोधज्वालामवर्द्धयत्॥६७॥ सास
भावदनैस्तेषांरोपपाटलकांतिभिः॥ बभौबालातपाताम्रैः सरसीवसरोरुहैः॥६८॥ उपन्यस्यत्सुसाक्षेपंखंडयत्सु
परस्परं॥ तेषूदतिष्ठन्निर्घोषोभिंदन्निवरसातलं॥६९॥

क्तेः॥६५॥षडभिज्ञाः बौद्धाः निशम्य श्रुत्वा॥६६॥ बुद्धसिद्धांतएवशाखीवृक्षस्तंसभट्टपादः युक्तिकुठारेण छित्वा तेषांबुद्धानांग्रंथैरेवेंधनैश्चीर्णै
रुपचितैः क्रोधज्वालामवर्द्धयत्॥६७॥ सासभातेषांबुद्धानांवदनैर्मुखैरोषेण कोपेन पाटलाश्वेतरक्ताकांतिर्येषांतैर्बभौचकाशे बालातपेनाताम्रै
रीषद्रक्तैः सरोरुहैः कमलैः सरसीव॥६८॥तेषुभट्टपादादिषुसाक्षेपंयथास्यात्तथाप्रतिपादनंकुर्वत्सुतथापरस्परंखंडनंकुर्वत्सुसत्सुरसातलंविदारय
न्निवनिर्घोषोनादउदतिष्ठत्॥६९॥

4612

यथादेवानामिंद्रेणपक्षेषुपृथुलेनकर्कशेनवज्रेणक्षताःधराधराःपर्वताःअधःनिपेतुः तथादेवेंद्रस्थानीयेनबुधानांपंडितानामिंद्रेणभट्टपादेनतथा गताःसुगताः धर्मराजस्तथागतइत्यमरः तएवधराधराःतत्क्षणंतस्मिन्नेवक्षणेव्यूढाविन्यस्तःपृथुलोवासश्चासौकर्कशोदृढश्चसचासौतर्कश्चतेनप क्षेषुक्षताःखंडिताअधःपेतुः निकृष्टतांप्रापुरित्यर्थः ॥ ७० ॥ सविशेषेणसर्वंजानातीतिविज्ञःसर्वज्ञःभट्टपादःद्विषांशत्रूणांसुगतानांसर्वज्ञपद मसहमानइत्यन्वयः॥७१॥सभट्टपादः॥७२॥अथबौद्धानांपराजयानंतरंबभाषेउवाच विधायत्तौविधाधीनौजयपराजयौतर्हिकस्यमतंध्रुवंक

अधःपेतुर्बुधेंद्रेणक्षताःपक्षेषुतत्क्षणं ॥ व्यूढकर्कशतर्केणतथागतधराधराः ॥ ७० ॥ ससर्वज्ञपदंविज्ञोऽसहमान इवद्विषां ॥ चकारचित्रविन्यस्तानेतान्मौनविभूषितान् ॥ ७१ ॥ ततःप्रक्षीणदर्पेषुबौद्धेषुवसुधाधिपं ॥ बोध यन्बद्धधावेदवचांसिप्रशशंससः ॥ ७२ ॥ बभाषेऽथधराधीशोविधायत्तौजयाजयौ ॥ यःपतित्वागिरेःशृंगा दव्ययस्तन्मतंध्रुवं ॥ ७३ ॥ तदाकर्ण्यमुखान्यन्येपरस्परमलोकयन् ॥ द्विजाग्र्यस्तुस्मरन्वेदानारुरोहगिरेःशि रः॥ ७४ ॥ यदिवेदाःप्रमाणंस्युर्भूयात्काचिन्नमेक्षतिः ॥ इतिघोषयतातस्मान्न्यपातिसुमहात्मना ॥ ७५ ॥ कि मुदौहित्रदत्तेपिपुण्येविलयमास्थिते ॥ ययातिश्च्यवतेस्वर्गात्पुनरित्यूचिरेजनाः ॥ ७६ ॥

स्याध्रुवमितिनिर्णयःकथंस्यादितिचेत्तत्राह यःपर्वतस्यशृंगात्पतित्वाविनाशरहितःस्यात्तस्यमतंध्रुवमन्यस्याध्रुवमित्यर्थः॥७३॥तदाकर्ण्यराज्ञो क्तंश्रुत्वाऽन्येसौगताःपरस्परंमुखान्यलोकयन्इत्यन्वयः द्विजाग्र्यो द्विजोत्तमः भट्टपादस्तुस्वरक्षार्थंवेदान्स्मरन्पर्वतस्यशृंगंआरुरोह ॥७४॥ इत्येवंघोषयताशब्दंकुर्वतान्यपातिगिरेःशृंगान्निपतितं ॥ ७५ ॥ किमुवितर्केदौहित्रैरष्टकादिभिःदत्तेययातिधर्मस्यच्यवनस्यसंबंधनिमित्तेन तत्तादात्म्यसंभावनस्यरूपत्वादुत्प्रेक्षा संभावनास्यादुत्प्रेक्षावस्तुहेतुफलात्मनेत्युक्तेः ॥७६ ॥

श्रुतिरात्मास्वयमेवशरण्यंयेषांतेषांव्यसनंदुःखंकिंनोछिनत्तिअपितुच्छिनत्त्येव ॥ ७७ ॥ घनघोषंमेघगर्जितंनिकुंजेभ्योलतादिपिहितोदरेभ्यः शिखावलाःमयूराः ॥७८॥ खलानांदुर्जनानांसौगतानांसंसर्गेणदूषितं ॥ ७९॥ ८० ॥ दुर्विधैःखलैर्बौद्धैःप्रत्यक्षेऽर्थेऽपिअन्यथानीतेसति राजाभृकुट्याभीकरंभयंकरंमुखंयस्यसः प्रतिज्ञामुग्रतरांव्यधात्‌विहितवान्‌ ॥ ८१ ॥ तामेवाह ॥ पृच्छामीतिद्वाभ्यां ॥ यंत्रोपलेषुयंत्रा

अपिलोकगुरुःशैलात्तूलपिंडइवापतत्‌ ॥ श्रुतिरात्मशरण्यानांव्यसनंनोच्छिनत्तिकिं ॥ ७७॥ श्रुत्वातदद्भुतं कर्मद्विजादिभ्यःसमाययुः॥घनघोषमिवाकर्ण्यनिकुंजेभ्यःशिखावलाः॥७८॥ दृष्ट्वातमक्षतंराजाश्रद्धांश्रु तिषुसंदधे॥ निनिंदबहुधात्मानंखलसंसर्गदूषितं॥ ७९॥ सौगतास्त्वब्रुवन्नेदंप्रमाणंमन्त्रनिर्णये ॥ मणिमं त्रौषधैरेवंदेहरक्षाभवेदिति ॥ ८० ॥ दुर्विधैरन्यथानीतप्रत्यक्षेऽर्थेऽपिपार्थिवः॥ भृकुटीभीकरमुखःसंधा मुग्रतरांव्यधात्‌ ॥ ८१ ॥ पृच्छामिभवतःकिंचिद्वक्तुंनप्रभवंतिये॥ यंत्रोपलेषुसर्वांस्तान्‌घातयिष्याम्यसंश यं ॥ ८२ ॥इतिसंश्रुत्यगोत्रेशोघटमाशीविषान्वितं॥आनीयात्रकिमस्तीतिपप्रच्छद्विजसौगतान्‌॥८३॥ वक्ष्यामहेवयंभूपश्वःप्रभातेऽस्यनिर्णयं॥ इतिप्रसाद्यराजानंजग्मुर्भूसुरसौगताः॥८४॥पद्माइवतपस्तेपुःकं ठद्वयसपाथसि ॥ द्युमणिंप्रतिभूदेवाःसोऽपिप्रादुरभूत्ततः ॥ ८५ ॥

कारेषुपाषाणेषु ॥ ८२॥ इत्येवंसंश्रुत्यप्रतिज्ञांविधायगोत्रापृथ्वी गोत्राकुःपृथिवीत्यमरः ॥ तस्याःईशोराजाआशीविषःसर्पःद्विजाश्चसौगता श्चतान्‌ ॥ ८३ ॥ ८४ ॥ वापुंसिपद्मंनलिनमित्यमरात्‌ पद्माइतिपुंल्लिगप्रयोगः कंठप्रमाणेपाथसिजले प्रमाणेद्वयसजितिद्वयसच्प्रत्ययः द्युम णिंसूर्यंप्रतिभूदेवाब्राह्मणाःसःभानुः ॥ ८५ ॥

घटेशेषशायी विष्णुरस्तीतिकथनीयांशंसंदिश्योपदिश्यसौगताअपिघटस्थितंवस्तुनिश्चित्याजग्मुः॥ ८६ ॥ भुजंगःसर्पःअवादिषुःकथितवंतः भो
गीशस्यशेषस्यभागेशरीरेशयनंयस्यसः विष्णुरित्यर्थः ॥ ८७ ॥ श्रुतंभूसुराणांवाक्यंस्वेनघटेनिहितादन्यस्यार्थस्यप्रतिपादकंयेनतस्यभूपतेर्मुखं
 कासारस्तडागः पद्माकरस्तडागोऽस्त्रीकासारःसरसीसरइत्यमरः तस्यशोषणेनम्लानस्यसारसस्यकमलस्यश्रियमाददे ॥ ८८ ॥ अथानंतरमश
रीरिणीदिव्यावाणीतस्यराज्ञःशृण्वतांसर्वेषांसंशयंनाशयंतीराजानंप्रोवाच ॥ ८९ ॥ हेमहाराजब्राह्मणायदुक्तवंतस्तत्सत्यमेवतत्रतदुक्तेसंशयं

संदिश्यवचनीयांशमादित्यैंतर्हितद्विजाः॥ आजग्मुरपिनिश्चित्यसौगताःकलशस्थितं॥ ८६॥ ततस्तेसौग
ताःसर्वेभुजंगोऽस्तीत्यवादिषुः॥ भोगीशभोगशयनोभगवानितिभूसुराः॥ ८७॥ श्रुतभूसुरवाक्यस्यवदनं
पृथिवीपतेः॥ कासारशोषणम्लानसारसश्रियमाददे॥ ८८॥ अथप्रोवाचदिव्यावाक्सम्राजमशरीरिणी॥
तुदंतीसंशयंतस्यसर्वेषामपिशृण्वतां ॥ ८९ ॥ सत्यमेवमहाराजब्राह्मणायदभाषिरे॥ माकृथाःसंशयंतत्र
भवसत्यप्रतिश्रवः॥ ९०॥ श्रुत्वाशरीरिणींवाणींददर्शवसुधाधिपः॥ मूर्तिंमधुद्विषःकुंभेसुधामिवसुराधि
पः॥ ९१॥ निरस्ताखिलसंदेहोविन्यस्तेतरदर्शनात्॥ व्यधादाज्ञांततोराजावधायश्रुतिविद्विषां॥ ९२॥ आ
सेतोरातुषाराद्रेर्बौद्धानावृद्धबालकं॥ नहंतियःसहंतव्योभृत्यानित्यन्वशान्नृपः॥ ९३॥

माकुरुसत्यप्रतिश्रवःसत्यप्रतिज्ञोभव ॥ ९० ॥ मधुद्विषोविष्णोःसुराधिपःइंद्रः॥ ९१ ॥ विन्यस्तात्घटेस्थापितादाशीविषादितरस्यमधुद्विषोद
र्शनंतस्माद्धेतोर्निरस्ताअपगताअखिलाःसंदेहायस्यसः ॥ ९२ ॥ आसेतोःरामसेतुपर्यंतंतथाहिमालयपर्यंतमावृद्धंबालकंचाभिव्याप्ययोमह्
त्यःसौगतान्नहंतिसमयाहंतव्यइतिभृत्यानन्वशादाज्ञमवान् ॥ ९३ ॥

ननुस्वगुरुत्वेनस्वीकृतत्वादिष्टानांवधायकिमित्येवमाज्ञांकृतवानित्यतआह इष्टोऽपीति पित्रानियुक्तोभृगुनंदनःपरशुरामःसाक्षाज्जननीमपिकिं
नावधीदपितुहतवानेव अत्र पूर्वोक्तबौद्धवधाज्ञारूपस्यविशेषस्यसमर्थनायसामान्यमुपन्यस्यविशेषांतरोपन्यासाद्विकस्वरालंकारः यस्मिन्विशे
षस्तमान्यविशेषाःसविकस्वरइत्युक्तेः ॥ १४ ॥ भट्टपादानुसारिराजेनसुधन्वनाधर्मद्विषोबौद्धाविनाशिताः तत्त्वावलंबिनायोगींद्रेणयोगनाश
काविघ्नाव्याधिस्थानसंशयप्रमादालस्याविरतिभ्रांतिदर्शनालब्धभूमिकानवस्थितत्वादयोंतरायायोगशास्त्रोक्ताइवेत्यर्थः ॥ १५ ॥ तेषुदुष्टेषुबौ
द्धेषुहतेषुकोविदःपंडितोभट्टपादः श्रौतंमार्गंपरितस्तारसर्वतःप्रसारितवान् यथातमिस्रेषुअंधकारेषुनष्टेषुसूर्योमहस्तेजोविस्तारयतितद्वत्॥१६॥

इष्टोऽपिदृष्टदोषश्चेद्वध्यएवमहात्मनां॥ जननीमपिकिंसाक्षान्नावधीद्भृगुनंदनः॥१४॥ स्कंदानुसारिराजेनजैना
धर्मद्विषोहताः॥ योगींद्रेणवयोगघ्नाविघ्नास्तत्त्वावलंबिना ॥ १५ ॥ हतेषुतेषुदुष्टेषुपरितस्तारकोविदः॥श्रौतव
र्त्मतमिस्रेषुनष्टेष्विवरविर्महः॥१६॥ कुमारिलमृगेंद्रेणहतेषुजिनहस्तिषु॥ निष्प्रत्यूहमवर्द्धतश्रुतिशाखाःसमंततः
॥१७॥ प्रागित्थंज्वलनभुवाप्रवर्तितेऽस्मिन्कर्माध्वन्यखिलविदाकुमारिलेन॥उद्धर्तुंभुवनमिदंभवाब्धिमग्नंका
रुण्यांबुनिधिरियेषचंद्रचूडः॥१८॥ इतिश्रीमाधवीयेतदुपोद्घातपरःसंक्षेपशंकरविजयेसर्गोयंप्रथमोभवत्॥१॥

कुमारिलोभट्टपादएवमृगेंद्रःसिंहस्तेननिष्प्रत्यूहंनिर्विघ्नं ॥ १७ ॥ उपोद्घातरूपांस्कंदावतारकथांउपसंहरन्शिवावतारकथांग्रंथप्रतिपाद्यामुप
क्षिपति प्रागित्थमिति ज्वलनादनलाद्भवतीतिज्वलनभूस्तेनसर्वज्ञेनभट्टपादेनपूर्वमनेनप्रकारेणास्मिन्कर्ममार्गेप्रवर्तितेसति ततःसंसारसागरे
निमग्नंभुवनंअद्वैतशास्त्रप्लवेनोद्धर्तुंकारुण्यजलधिश्चंद्रशेखरोमहादेवइयेषइच्छतिस्म प्रहर्षणीवृत्तं म्नौज्रौगस्त्रिदशयतिःप्रहर्षणीयमितिलक्षणा
त् ॥ १८ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेश्रीमच्छंकरा
चार्यविजयडिंडिमेप्रथमःसर्गः ॥ १ ॥

श्री० ॥ शंकरावतारंविस्तरेणवर्णयितुंपीठिकांरचयति ततइति ततःकर्ममार्गप्रवृत्त्यनंतरंक…णासमुद्रःअनंगंकामंदहतीतिअनंगधङ्महेशःकेरलेषु देशविशेषेषुश्रीमद्वृषसंज्ञकेगिरौपूर्णानदीपुण्यतटेज्योतिर्लिंगात्मनाआविरासीत्प्रादुरभूत् उपजातिच्छंदः ॥ १ ॥ तेनलिंगात्मनाविर्भूतेनमहेशेन प्रेरितःकश्चनराजशेखराख्योमहीपःपुनःपुनःस्वप्नेदृष्टस्तदीयोवैभवोयेनसएकंप्रासादंदेवालयंपरिकल्प्यतस्यविभोःसंपूजनंप्रवर्तितवान् स्यादिंद्रवंशाततजैरसंयुतैः ॥ २ ॥ तस्यप्रणतार्तिहर्तुरीशस्यप्रसादात्प्रामःनिरीतिभावोयं ईतयस्तु अतिवृष्टिरनावृष्टिर्मूषिकाःशलभाःशुकाः अत्यासन्नाश्चराजानःषडेताईतयःस्मृताइत्युक्ताःषड्बाधाज्ञेयाः एवंविधस्तस्यप्रासादस्यसमीपगतःकश्चित्कालटिसंज्ञोऽतिरम्योऽग्रहारोब्राह्मणप्र

श्री० ॥ ततोमहेशःकिलकेरलेषुश्रीमद्वृपाद्रौकरुणासमुद्रः ॥ पूर्णानदीपुण्यतटेस्वयंभूर्लिंगात्मनानंगधगाविरासीत् ॥ १ ॥ तन्नोदितःकश्चनराजशेखरःस्वप्नेमुहुर्दृष्टतदीयवैभवः ॥ प्रासादमेकंपरिकल्प्यसुप्रभंप्रावर्तयत्तस्यसमर्हणंविभोः ॥ २ ॥ तस्येश्वरस्यप्रणतार्तिहर्तुःप्रसादतःप्रामनिरीतिभावः ॥ कश्चित्तदभ्याशगतोग्रहारःकालट्यभिख्योऽस्तिमहान्मनोज्ञः ॥ ३ ॥ कश्चिद्द्विपश्चिदिहनिश्चलधीर्विरेजेविद्याधिराजइतिविश्रुतनामधेयः ॥ रुद्रोवृषाद्रिनिलयोऽवतरीतुकामोयत्पुत्रमात्मपितरंसमरोचयत्सः ॥ ४ ॥ पुत्रोभवत्तस्यपुरात्तपुण्यैःसुब्रह्मतेजाःशिवगुर्वभिख्यः ॥ ज्ञानेशिवोयोवचनेगुरुस्तस्यान्वर्थनामाकृतलब्धवर्णः ॥ ५ ॥

धानोऽस्ति ॥ ३ ॥ इहास्मिन्नग्रहारेविद्याधिराजइतिविश्रुतनामधेयोनिश्चलमतिःकश्चित्पंडितोविरेजे सवृषाद्रिनिलयोऽवतरीतुकामोऽवतरणेच्छुर्यस्यपुत्रमात्मपितरंसमरोचयत्सविरेजेइतिवान्वयः उक्तंवसंततिलकंतभजाजगौगः ॥ ४ ॥ तस्यविद्याधिराजस्यपुरापूर्वमनेकजन्मस्वात्तैरर्जितैःपुण्यैःसुष्टुब्रह्मतेजोयस्यसशिवगुरुसंज्ञःपुत्रोऽभवत् योज्ञानेशिवोवचनेगुरुर्बृहस्पतिस्तस्यपुत्रस्यलब्धवर्णोविचक्षणोविद्याधिराजोन्वर्थनामार्थानुरूपंनामाकृतसंज्ञांकृतवान् धीमान्सूरिःकृतीकृष्टिर्लब्धवर्णोविचक्षणइत्यमरः स्यादिंद्रवज्रायदितौजगौगः ॥ ५ ॥

एवंशिवगुरोर्जन्मोक्त्वातच्चरितमाह सशिवगुरुःब्रह्मचारीगुरुगेहवासशीलस्तस्यगुरोःकार्यकारीविहितंभिक्षयालब्धंगुरवेनिवेदितमन्नंभोक्तुं शीलमस्यास्तीतितथाहुताशंहुतभुजंवह्निंसेवितुंशीलमस्यास्तीतितथा व्रतेनब्रह्मचर्यनियमेनस्वीयंवेदमध्यगीष्टअधीतवान् ॥ ६ ॥ यतःक्रिया अनुष्ठानंफलंयस्यसअर्थबोधोविचारंविनानैवजायते नन्वधीतस्वांगस्वाध्यायस्तदर्थंस्वयमेवकुतोनावबुद्धवानितिचेत्तत्राह हियस्माद्वेदोदु र्बोधतरोविचारंविनातिशयेनदुर्घटोयथार्थबोधोयस्यसःउपेंद्रवज्रातततजास्ततोगौ ॥ ७॥ वेदेष्वधीतेषुसत्सुतदर्थेच विचारितेसतिशिष्यानुरागी आचार्यस्तंशिवगुरुमाहस्मप्रोक्तवान्षड्भिः शिक्षाकल्पव्याकरणच्छंदोज्योतिर्निरुक्तसंज्ञैरंगैःसहितःसर्वोवेदोमत्तस्त्वयापठितोविचारितश्चकाल

सब्रह्मचारीगुरुगेहवासीतत्कार्यकारीविहितान्नभोजी ॥ सायंप्रभातंचहुताशसेवीव्रतेनवेदंनिजमध्यगीष्ट ॥६॥ क्रियाद्यनुष्ठानफलोर्थबोधःसनोपजायेतविनाविचारं ॥ अधीत्यवेदानथतद्विचारंचकारदुर्बोधतरोहि वेदः॥ ७ ॥ वेदेष्वधीतेषुविचारितेर्थेशिष्यानुरागीगुरुराहतंस्म॥ अपाठिमत्तःसषडंगवेदोव्यचारिकालोबहु रत्यगात्ते ॥८॥ भक्तोऽपिगेहंव्रजसंप्रतित्वंजनोपितेदर्शनलालसःस्यात् ॥ गत्वाकदाचित्स्वजनप्रमोदंविध हिमातातविलंबयस्व ॥९॥ विधातुमिष्टंयदिहापराह्णेविजानतातत्पुरुषेणपूर्वं ॥ विधेयमेवंयदिहश्वइष्टंकर्त्तुं तदद्येतिविनिश्चितोर्थः ॥ १० ॥

स्तेतवबहुरतिक्रांतः उपजातिच्छंदः ॥ ८॥ यद्यपित्वंभक्तस्तथापिसंप्रतिइदानींगेहंव्रज संबंधिजनोपितेतवदर्शनलालसःस्यात्तस्मात्कदाचिद्ग त्वास्वजनप्रमोदंविधेहि शिष्यस्यपुत्रतुल्यत्वात्संबोधनंहेतात माविलंबयस्व विलंबंमाकुरु आख्यानकीतौजगुरूगमोजेजतावनोंजेजगुरूगुरुं श्चेत् ॥९॥ विलंबोनकर्तव्यइत्युक्तंतत्रहेतुमाह यतइहास्मिन्लोकेयदपराह्णेविधातुमिष्टंतदायुरादेःक्षणभंगुरतांविजानतापुरुषेणपूर्वंपूर्वाह्णेएव विधेयमेवमिहयत्श्वःअनागतेऽह्निकर्तुमिष्टंतदद्यविधेयमितिविनिश्चितोर्थस्तस्मान्माविलंबयस्वेत्यर्थः ॥ १० ॥

किंचयथाकालउद्भवकालउप्तात्क्षेत्रेरोपिताद्बीजादिहयादृशसस्यंजायतेतादृशं विपरीतकालान्नैवजायते तथाविवाहादिरपि
लेयौवनाद्यवस्थायांकृतंफलायपुत्रोत्पत्त्यादिफलरूपायकल्पेतशक्तंभवेदन्यथातत्विवाहादिकृतंव्यर्थंस्यात् ॥ ११ ॥ किंवाजन्मनोजन्म
भृतिननुनिश्चयेनतवपरिणयंविवाहंकर्तुकामौमातापिताचतानृगतान्संवत्सरानृगणयतोगणनंकुरुतः यस्मात्कारणात्पित्रोरियंप्रकृतिःस्वभावए
वपुरापूर्वंतनुभवस्यात्मजस्योपनीतिमुपनयनंततस्तदनंतरंविवाहंयत्ध्यायतःकदाभविष्यतीतिर्याञ्चिंतनंकुरुतःसइत्यर्थः अत्रसामान्यविशेष
योरुक्तत्वादर्थांतरन्यासालंकारः उक्तिरर्थांतरन्यासःस्यात्सामान्यविशेषयोरित्युक्तेः ॥१२॥ अपिचतत्तत्कुलीनपितरस्तत्तत्कुलीनपुरुषस्यवि

कालोप्तबीजादिहयादृशंस्यात्सस्यंनतादृक्विपरीतकालात् ॥ तथाविवाहादिकृतंस्वकालेफलायकल्पेतनचेत्तथा
स्यात् ॥ ११ ॥ आजन्मनोगणयतोननुतान्गताब्दान्मातापितापरिणयंतवकर्तुकामौ ॥ पित्रोरियंप्रकृतिरेवपुरो
पनीतिंयद्ध्यायतस्तनुभवस्यततोविवाहं ॥ १२ ॥ तत्तत्कुलीनपितरःस्पृहयंतिकामंतत्तत्कुलीनपुरुषस्यविवाहक
र्म ॥ पिंडप्रदातृपुरुषस्यससंततित्वेपिंडाविलोपमुपरिस्फुटमीक्षमाणाः ॥ १३ ॥ अर्थाववोधनफलोहिविचारएष
तच्चापिचित्रबहुकर्मविधानहेतोः ॥ तत्राधिकारमधिगच्छतिसद्वितीयःकृत्वाविवाहमितिवेदविदांप्रवादः ॥ १४ ॥

वाहकर्मकामंस्पृहयंति परिणयकर्मगोचरांस्पृहामत्यंतंकुर्वंतियतस्तत्तत्कुलीनपितरःपिंडप्रदातृपुरुषस्यसंततित्वेसतिउपरिअग्रेपिंडाविलोपं
स्फुटंसमीक्षमाणाः ॥ १३ ॥ नकेवलमेतावदेवापितुसहोभौचरतांधर्ममित्यादिश्रुत्यासद्वितीयस्यकर्मविधानेऽधिकारश्रवणात्तदर्थमपिविवाह
आवश्यकइत्याह अर्थेति एषविचारोऽर्थाववोधनफलोर्थस्याववोधनंपरिज्ञानंफलंयस्यसएतस्यविचारस्यार्थपरिज्ञानंफलंतच्चार्थाववोध
नंविचित्राणांयज्ञानांविधानार्थं अत्रविचित्रयज्ञविधानेविवाहंकृत्वासद्वितीयःद्वितीययापत्न्यासहवर्तमानोधिकारंमच्छतिप्राप्नोतीतिवेदवि
दांप्रवादः ॥ १४ ॥

एवमुक्तः शिवगुरुरुवाच सत्यमित्यादिना सत्यमित्यर्धांगीकार हेगुरोगुरोःसकाशात् अधीतोवेदोयेनसगृहीएवभवति अन्यपदमन्याश्रमंनप्र
यातीतिनियमोनास्ति ननुब्रह्मचर्यंसमाप्यगृहीभवेद्गृहाद्वनीभूत्वाप्रव्रजेत् तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसानाशकेनस
हवाआत्मयाजीयोवेदइदंमेऽनेनांगंसंक्रियतइदंमेऽनेनांगमुपधीयतेविशुद्धसत्वस्तुतंपश्यतिनिष्कलंध्यायमानःजायमानोवैब्राह्मणस्त्रिभिर्ऋणै
ऋणवानित्याद्याःश्रुतयः महायज्ञैश्चयज्ञैश्चब्राह्मीयंक्रियतेतनुः यस्यैतेऽष्टाचत्वारिंशत्संस्काराः ऋणानित्रीण्यपाकृत्यमनोमोक्षेनिवेशयेत् ज्ञान
मुत्पद्यतेपुंसांक्षयात्पापस्यकर्मणइत्याद्याःस्मृतयश्चाश्रमादाश्रमांतरप्रवेशस्ययज्ञाद्यनुष्ठानाच्चित्तशुद्धौज्ञानप्राप्तेश्चक्रमनियमंप्रबोधयंतीतिचे
त्तत्राह वैराग्यवानिहामुत्रार्थभोगेषुविरक्तोविवेकीनित्यानित्यवस्तुविवेकवान् उपलक्षणमेतत्साधनचतुष्टयसंपन्नइत्यर्थश्चतुर्थाश्रमंगच्छति अ

**सत्यंगुरोननियमोऽस्तिगुरोरधीतवेदोगृहीभवतिनान्यपदंप्रयाति॥ वैराग्यवान्व्रजतिभिक्षुपदंविवेकीनो चेद्गृहीभवतिराजपदंतदेतत् ॥ १५॥ श्रीनैष्ठिकाश्रममहंपरिगृह्ययावज्जीवंवसामितवपार्श्वगतश्चिरायुः॥ दंडाजिनीसविनयोबुधजुह्वदग्नौवेदंपठन्पठितविस्मृतिहानिमिच्छन् ॥ १६ ॥**

यमर्थः यदिचेतरथाब्रह्मचर्यादेवप्रव्रजेद्गृहाद्वावनाद्वा प्लवाह्येतेह्यदृढायज्ञरूपाः नकर्मणानप्रजयाधनेनत्यागेनैकेऽमृतत्वमानशुरित्यादिश्रुत्यनु
रोधेनमध्यमाधिकारिणएवक्रमनियमोनतुशुद्धसत्वस्योत्कटवैराग्यवतोमुख्याधिकारिणोजायमानइत्यस्यापिगृहस्थःसंपद्यमानइत्यर्थः गृह
स्थस्यापिसत्वशुद्ध्यर्थमेवऋणापाकरणं तदिदमुक्तंनोचेदिति विवेकादिमान्नभवतिचेत्तर्हिगृहीभवतितदेतत्राजपदंराजमार्गः ॥ १५ ॥ त्वया
तर्हिकिंकर्त्तव्यमित्यपेक्षायामाह श्रीनैष्ठिकाश्रमंमरणांतब्रह्मचर्यंपरिगृह्यचिरायुरहंतवपार्श्वगतःसमीपेस्थितोदंडाजिनेऽस्यस्तइतिदंडाजिनी
विनयेनसहवर्त्ततइतिसविनयोहेबुधसर्वज्ञअग्नौजुह्वद्धोमंकुर्वन्वेदंपठन्पठितस्यविस्मृतेर्हानिमभावमिच्छन्वसामिवासंकरिष्यामि ॥ वर्त्त
मानसामीप्येवर्त्तमानवद्वेतिलट् ॥ १६ ॥

नन्वतिसुखकरंदारग्रहंविहायकथमतिदुःखदंनैष्ठिकाश्रममंगीकुरुषइतिचेत्तत्राह दारग्रहइति अयंदारग्रहस्तावत्सुखायभवति यावत्कृतःस
न्अनुभवगोचरतांगतःप्राप्तःस्यात् अनुभवविषयताप्राप्तिपर्यंतमित्यर्थः॥ पश्चादनुभवगोचरताप्राप्त्यनंतरंसोऽयंदारग्रहोविरसतांवैरस्यंउपयाति
प्राप्नोति हेमहात्मन्अक्षुद्रस्वभाव अनुभूतिपदमनुभवगम्यंकिंनिन्हुषेऽपलपसिअपलपितुमशक्यमित्यर्थः ॥ १७ ॥ नन्वैहिकसुखाभावेऽ
पिविवाहेकृतेयागाद्यनुष्ठानेनपारलौकिकंतत्सेत्स्यतीतिचेत्तत्राह यागोपीति यागोविधिनायथाविधिकृतश्चेत्स्वर्गफलदःनचतथाकर्तुंश
क्यतइत्याह प्रायस्तत्समग्रकरणंभुविदुर्लभं तद्विनातुफलंनैवलभ्यते हियस्मादादिपदेनचित्रादियागफलंपश्वादिकंगृह्यते वृष्ट्यादिवत्कर्म
णिफलंयदिनस्यात्तर्हिदैववशाद्यथोक्तविरहेफलदुर्गतत्वंभवति तत्कारीर्यादियागफलभूतवृष्टिः तथाचनपारलौकिकसुखप्राप्त्याशापीत्यर्थः

दारग्रहोभवतितावदयंसुखाययावत्कृतोऽनुभवगोचरतांगतःस्यात् ॥ पश्चाद्धनैर्विरसतामुपयातिसोयंकिंनि
ह्नुषेत्वमनुभूतिपदंमहात्मन् ॥ १७ ॥ यागोपिनाकफलदोविधिनाकृतश्चेत्प्रायःसमग्रकरणंभुविदुर्लभंतत् ॥ वृष्ट्या-
दिवन्नहिफलंयदिकर्मणिस्याद्दिष्ट्यायथोक्तविरहेफलदुर्विधत्वं ॥ १८ ॥ निःस्वोभवेद्यदिगृहीनिरयीसनूनंभोक्तुं
नदातुमपियःक्षमतेऽणुमात्रं ॥ पूर्णोऽपिपूर्त्तिमभिमंतुमशक्नुवन्योमोहनशंनमनुतेखलुतत्रतत्र ॥ १९ ॥

॥ १८ ॥ नकेवलंसुखाभावएवापित्वतिदुःखमपीत्याशयवानाह यदिगृहीनिःस्वोनिर्धनोभवेत्तर्हिनूनंनिश्चयेनसनिरयीनरकवान् निरयित्व
मेवस्फुटयति योऽणुमपिभोक्तुंदातुंचनक्षमतेसमर्थोनभवतिसनूनंनिरयीतिसंबंधः ननुश्रीमत्कुलोत्पन्नस्यतवनास्तिदुःखमितिचेत्तत्राह पूर्णोऽ
पीति पूर्णोऽपि पूर्त्तिपूर्णतामभिमंतुमशक्नुवन्योमोहेनाविवेकेनतस्मिन्तस्मिन्विषयेशंसुखंनमनुतेसोपिनूनंनिरयीत्यर्थः विषयसंपत्तेस्तृष्णानि
वर्त्तकत्वात्सर्वानर्थबीजभूततृष्णानुविद्धचेतसःसुखाप्राप्तिदुःखावाप्तिसत्त्वान्निरयित्वमेवेतिभावः ॥ तथाचोक्तं नजातुकामःकामानामुपभो
गेनशाम्यतिं हविषाकृष्णवर्त्मेवभूयएवाभिवर्धतेइति यान्येतानिदुरंतानिदुर्जराण्युन्नतानिच तृष्णावल्याःफलानीहतानिदुःखानिराघव
यावतीयावतीजंतोरिच्छोदेतियथायथा तावतीतावतीदुःखबीजमुष्टिःप्ररोहतीतिच ॥ १९ ॥

अथोअतःकारणात्हेसाधोगृहोपकरणेषुसदाविचारोभवति यावत्सुसत्सुअमीषांसंबंधिजनानांपरिपूर्त्तिःपरिपूर्णतास्यादमीषांगृहस्थानांइ
तिवा तथाचैवंविचार्यमाणस्यप्रयत्नेनैकत्रैकस्मिन्स्थानेसंहतवतःसंचयंकृतवतःस्थितपूर्वनाशएतत्संचयात्पूर्वंस्थितस्यसंचितस्यनाशोभवतिच
पुनस्तदीयंपश्चात्संचितमप्यपयातिनश्यति पुनरप्यपरेणयोगःसंयोगोभवति तथाचगृहस्थाश्रमेसर्वथादुःखमेवेतिभावः ॥ २० ॥ एवमु
क्तप्रकारेणशिवगुरौवदतिसतितस्यशिवगुरोर्जनकःपितागृहेशःसुतंगृहंप्रतिनिनीषुर्नेतुमिच्छुरागच्छत्आगतवान् आगत्ययदकरोत्तदाह बहु
लंबहुधानुनयंविनयंकृत्वातेनशिवगुरुणागुरवेबहुलंदक्षिणाद्रव्यंप्रदाप्यगृहीताविद्यायेनसशिवगुरुर्यत्नान्निकेतनमनायिआनीतइत्यर्थः॥२१॥

यावत्सुसत्सुपरिपूर्त्तिरथोअमीषांसाधोगृहोपकरणेषुसदाविचारः ॥ एकत्रसंहतवतःस्थितपूर्वनाशस्तच्चापया
तिपुनरप्यपरेणयोगः॥ २० ॥ एवंगुरौवदतितज्जनकोनिनीषुरागच्छदत्रतनयंस्वगृहंगृहेशः ॥ तेनानुनीयबहु
लंगुरवेप्रदाप्ययत्नान्निकेतनमनायिगृहीतविद्यः ॥२१॥गत्वानिकेतनमसौजननींववंदेसालिंग्यतद्विरहजंपरि.
तापमौज्झत्॥प्रायेणचंदनरसादपिशीतलंतद्यत्पुत्रगात्रपरिरंभणनामधेयं॥२२॥श्रुत्वागुरोःसदनतश्चिरमाग
तंतंतद्बंधुरागमदथत्वरितेक्षणाय॥प्रत्युद्गमादिभिरसावपिबंधुतायाःसंभावनांव्यधितवित्तकुलानुरूपां॥२३॥

असौशिवगुरुर्निकेतनंगत्वामातरंववंदे साजननीपुत्रमाश्लिष्यतस्यपुत्रस्यविरहाज्जातंपरितापमौज्झत्त्यक्तवती तत्रहेतुमाह ॥ यत्पुत्रगात्रा
लिंगननामधेयंतच्चंदनरसादपिप्रायेणशीतलमतइत्यर्थः ॥ अत्रार्थांतरन्यासः ॥ यद्वापरितापत्यागस्यप्रायेणेत्यादिनासमर्थनात्काव्यलिंगा
लंकारः ॥ समर्थनीयस्यार्थस्यकाव्यलिंगंसमर्थनमित्युक्तेः ॥ २२ ॥ अथानंतरंगुरोर्गृहाच्चिरादागतंशिवगुरुंश्रुत्वातद्बंधुस्तत्संबंधिवर्गःशीघ्रमव
लोकनायआगमत् असौशिवगुरुरपिबंधुतायाबंधुसमूहस्यप्रत्युद्गमप्रणामादिनावित्तकुलानुरूपांसंभावनांसपर्यांव्यधितविहितवान् धातोर्लु
ङितह्रस्याद्योरिच्चेतीकारःसिचःकित्वाद्गुणाभावः ह्रस्वादङ्गादितिसकारलोपः ॥ २३ ॥

ततोयद्वृत्तंतदाह ॥ वेदपदादिषुआदिपदेनशिखाघनादिषुतस्यबुद्धिंवीक्ष्यतस्यजनकःबहून्प्रश्नान्कृतवान् संगतंविद्याधिराजत[illegible]
द्विद्याधिराजइतिप्रथितंनामयस्यास्यवसुंधरायामभवत्सबहुशोप्यपृच्छदित्यर्थः ॥ २४ ॥ बहुशोप्यपृच्छदितिविवृणोति ॥ भाट्टेनयेभट्टपाद
सिद्धांते गुरुःप्रभाकरः कणभुक्कणादः आदिनागौतमसांख्यमतादिसंग्रहः तनयस्यमतिंबोद्धुमिच्छुःप्रश्नंकृतवान् ॥ एवंपित्रोदितःपृष्टःशि
ष्यस्तस्यपुत्रःशिवगुरुरपिसमाधानंमुवाच तंविशिनष्टि पूर्वंनतोनमस्कृतोगुरुर्येनेतिस्मितेनमंदहसितेनयुक्तंमुखंयस्यातएवहसितमीषद्विक

वेदपदक्रमजटादिषुतस्यबुद्धिंसंवीक्ष्यतज्जनयितावहुशोप्यपृच्छत् ॥ यस्याभवत्प्रथितनामवसुंधरायांविद्या
धिराजइतिसंगतवाच्यमस्य ॥ २४ ॥ भाट्टनयेगुरुमतेकणभुङ्मतादौप्रश्नंचकारतनयस्यमतिंवुभुत्सुः ॥ शिष्यो
प्युवाचनतपूर्वगुरुःसमाधिंपित्रोदितःस्मितमुखोहसितांवुजास्यः ॥ २५ ॥ वेदेचशास्त्रेचनिरीक्ष्यबुद्धिंप्रश्नोत्तरा
दावपिनैपुणींतां ॥ दृष्ट्वातुतोषातितरांपितास्यस्वतःसुखायाकिमुशास्त्रतोवाक् ॥ २६ ॥ कन्यांप्रदातुमनसोबहवो
ऽपिविप्रास्तन्मंदिरंप्रतिययुर्गुणपाशकृष्टाः ॥ पूर्वंविवाहसमयादपितस्यगेहंसंबंधवत्किलबभूववरीतुकामैः २७ ॥

स्मितंयदंबुजंतथाभूतमास्यंवदनंयस्यसः ॥ २५ ॥ प्रश्नोत्तरेस्वमतस्थापनेपरमतखंडनेचतांतथाभूतांनिपुणतांकुशलतांदृष्ट्वाऽस्यपिताऽत्यंततोषं
प्राप यापुत्रस्यवाक्वाणीस्वतःशास्त्रतोविहीनापिसुखरूपासाशास्त्रतःसुखरूपाइतिकिमुवक्तव्यं कैमुत्येनार्थसंसिद्धिःकाव्यार्थापत्तिरि
ष्यते ॥ २६ ॥ ततःकिंवृत्तमित्याकांक्षायामाह ॥ कन्यामिति ॥ गुणलक्षणपाशेनाकृष्टाःकन्यांप्रदातुमनसोबहवोऽपिविप्रास्तस्यमंदिरंप्रतिय
युर्जग्मुरतोविवाहकालात्पूर्वमपितस्यविद्याधिराजस्यशिवगुरोर्वागृहंवरीतुकामैःकुमारवरणार्थिभिःविप्रैःसंबंधवद्बभूव ॥ वसंत० ॥ २७ ॥

तस्मिन्देशेबह्वर्थदायिषुकन्याप्रदातृषुबहुष्वपिसत्सुविशिष्टंश्रेष्ठंजन्मपरीक्ष्यप्रख्यातानुभावःसविप्रवर्योविद्याधिराजोविप्रविशिष्टकुलोत्पन्नंम
घपंडिताभिधंकन्यामयाचत अकथितंचेतिकर्मसंज्ञा उक्तनामकाद्विप्रादित्यर्थः॥ २८॥ प्रख्यातावह्वीविभूतिर्ययोस्तयोःकुलवतोःकन्यापि
तुर्वरपितुश्चेत्थंविवादआसीत्तत्रकन्यापितुर्वचनमुदाहरति अस्मद्गृहेआगत्यपुत्रस्य विवाहस्त्वयाकार्यः वरपितुर्वचनमाह अस्मदीयंगृहं
पुत्रीमानीयमत्पुत्रायसुताप्रदेया ॥ २९॥ एवमुक्तोमघपंडितआहैतावद्धनंदास्यामीतिसंकल्पिताद्द्विगुणमर्थंधनंप्रदास्ये यदितुगेहमागत्यायंवि
वाहःकृतश्चेत् विद्याधिराजआह ॥ हेद्विजयदिकन्यकामेगृहंप्राप्तातर्ह्यर्थंविनैवपुत्रेणपरिणयंकारयिष्ये ॥ ३०॥ एवंविवदमानयोस्तयोर्मध्येत

बह्वर्थदायिषुबहुष्वपिसत्सुदेशेकन्याप्रदातृषुपरीक्ष्यविशिष्टजन्म॥ कन्यामयाचतसुतायसविप्रवर्योविप्रंविशि
ष्टकुलजंप्रथितानुभावः॥ २८॥ कन्यापितुर्वरपितुश्चविवादआसीदित्थंतयोःकुलजुषोःप्रथितोरुभूत्योः॥ कार्य
स्त्वयापरिणयोगृहमेत्यपुत्रीमानीयसद्मतनयायसुताप्रदेया॥ २९॥ संकल्पिताद्द्विगुणमर्थमहंप्रदास्यमद्गेहमेत्यप
रिणीतिरियंकृताचेत्॥ अर्थंविनापरिणयंद्विजकारयिष्येपुत्रेणमेगृहगतायदिकन्यकास्यात्॥ ३०॥ कश्चित्तुतस्याः
पितरंबभाणमिथःसमाहूयविशेषवादी॥ अस्मासुगेहंगतवत्स्वमुष्मैविगृह्यकन्यामपरःप्रदद्यात्॥ ३१॥ तेनानुनी
तोवरतातभाषितंद्विजोऽनुमेनेवररूपमोहितः॥ दृष्टोगुणःसंवरणायकल्पतेमंत्रोऽभिजापाच्चिरकालभावितः ३२

स्याःकन्यायाःपितरंसमाहूयकश्चित्तुविशेषवादीजगाद अस्मासुगेहंगतवत्सुअपरोमिथःपरस्परंविगृह्यविग्रहंभेदंविधायामुष्मैकन्यांप्रदद्यात् सं
भावनार्यांलिङ् मिथोरहसिसमाहूयेतिवा आख्यानकी० ॥ ३१॥ तेनविशेषवादिनाकेनचिदनुनीतोऽनुनयंप्रापितोमघपंडितःपुत्रीमानीयसद्म
तनयायसुताप्रदेयेत्येवंरूपंवरपितुर्भाषितमनुमेनेस्वीकृतवान् यतोवरस्यरूपेणमोहितः यस्माच्चदृष्टोगुणःसंवरणायकल्पतेयोग्योभवति यथा
भिजापाच्चिरकालभावितोबहुकालमभ्यस्तोमंत्रःसंवरणायकल्पतेतद्वत् ॥ वाचकलुप्तोपमालंकारः वंशस्थेंद्रवंशामिश्रितत्वादुपजातिस्तदुक्तं
इत्थंकिलान्यास्वपिमिश्रितासुस्मरंतिजातिष्विदमेवनामेति ॥ ३२ ॥

विद्याधिराजमघपंडितसंज्ञौसम्यक्मुहूर्त्तमवलंब्यदेवंगणपत्यादिकुलदेवंतंचसम्यगभिपूज्यवाग्दानरूपंसंप्रत्ययंव्यतनुतांविस्तारितवंतौ ॥ त
तश्चविवाहार्थंमौहूर्त्तिकाज्योतिर्विदोविचारणीयाइतिपरस्परमुक्तवंतौ वसंत० ॥ ३३ ॥ ततश्चविहितेमुहूर्त्तेशास्त्रविधिनातौविद्याधिराजमघ
पंडितौउद्वाह्यविवाहंकृत्वाबहुंविपुलांसंमुदंप्रमोदमवापतुःयतःप्राप्ताभिलाषौ तत्रागतोबंधुवर्गश्चात्यंतंमोदंप्राप्तवान्किंबहुनाकथितेनसर्वोऽपि
बंधुबंधुसमुदायोमुदंप्रापेत्यर्थः ॥ ३४ ॥ तौदंपतीसुवसनाविति तौसतीशिवगुरुसंज्ञौदंपतीसुवस्त्रौशुभादंतपंक्तिर्ययोस्तौसुष्ठ्वलंकृतौविकसित

विद्याधिराजमघपंडितनामधेयौसंप्रत्ययंव्यतनुतामभिपूज्यदेवं॥सम्यङ्मुहूर्त्तमवलंब्यविचारणीयामौहूर्त्तिका
इतिपरस्परमूचिवांसौ॥३३॥ उद्वाह्यशास्त्रविधिनाविहितेमुहूर्त्तेतौसंमुदंबहुमवापतुरात्तकामौ॥ तत्रागतोभृश
ममोदतबंधुवर्गःकिंभाषितेनबहुनामुदमापवर्गः॥ ३४॥ तौदंपतीसुवसनौशुभदंतपंक्तीसंभूषितौविकसितां
बुजरम्यवक्रौ॥सव्रीडहाससुखवीक्षणसंप्रहृष्टौदेवाविवापतुरनुत्तमशर्मनित्यं॥ ३५॥ अग्नीनथाधितमहोत्तर
यागजातंकर्तुंविशेषकुशलैःसहितोद्विजेशः॥तत्तत्फलंहियदनाहितहव्यवाहःस्यादुत्तरेषुविहितेष्वपिनाधिका
री॥ ३६॥

कमलवद्रम्यंमुखंययोस्तौव्रीडयालज्जयासहवर्त्तमानेनहासेनमंदहसितेनयुक्तयोर्मुखयोर्वीक्षणेनसम्यक्प्रकर्षेणहृष्टौदेवौपार्वतीमहादेवावि
वानुत्तमंसुखमवापतुः ॥ ३५॥ अथविवाहानंतरंतत्तद्यागकर्त्तव्यताविशेषेषुकुशलैर्ऋत्विग्भिःसहितोद्विजेशःशिवगुरुस्तत्तत्फलंमहतामुत्तरेषा
मावसथ्याधानादूर्ध्वानामत्युत्तमानांवायागानांसमूहंकर्तुमग्नीन्गार्हपत्याहवनीयदक्षिणाख्यानधितअग्न्याधानंकृतवान् हिप्रसिद्धं यद्यस्माद
नाहिताग्निःपुमान्विहितेष्वप्युत्तरेषुयागेष्वधिकारीनस्यात्तस्मादित्यर्थः ॥ ३६ ॥

भुवनानिस्वर्गादीनिजेतुकामोबहुवित्तसाध्यैरनेकैर्यागैरयष्टयजनंकृतवान् तेषांयागानामाशायेषांतैर्यतोदिनेदिनेसेवितायज्ञभागायैस्तैर्देवैरस्मृ
तंव्यस्मारि विस्मारितवंतः अत्रास्मृतसंबंधिस्मरणसंबंधेऽपितदसंबंधवर्णनात्संबंधातिशयोक्तिरलंकारः योगेप्ययोगःसंबंधातिशयोक्तिरितीर्यतइ
॥५॥ त्युक्तेः॥३७॥पितृदेवमानुषानभिवांछितैःसहतत्तत्पदार्थैःसंतर्पयंतं विशिष्टंविद्यादिलक्षणंवित्तंयेषांतैर्देवतास्थानीयैःसुमनोभिर्विद्वद्भिरंचितंपू
जितं यद्वाविशिष्टानिचनानिवित्तानितैरेवसुमनोभिःपुष्पैरंचितंव्याप्तंशिवगुरुं जंगमकल्पवृक्षंजनामेनिरे॥स्वर्गस्थःकल्पपादपःस्थावरइति ततो

यागैरनेकैर्बहुवित्तसाध्यैर्विजेतुकामोभुवनान्ययष्ट॥व्यस्मारिदेवैरस्मृतंतदाशैर्दिनेदिनेसेवितयज्ञभागैः॥३७॥
संतर्पयंतंपितृदेवमानुषांस्तत्तत्पदार्थैरभिवांछितैःसह ॥ विशिष्टवित्तैःसुमनोभिरंचितंतंमेनिरेजंगमकल्पपा
दपं॥३८॥ परोपकारव्रतिनोदिनेदिनेव्रतेनवेदंपठतोमहात्मनः॥श्रुतिस्मृतिप्रोदितकर्मकुर्वतःसमाव्यतीयुर्दिन
माससंमिताः॥३९॥ रूपेपुमारःक्षमयावसुंधराविद्यासुवृद्धोधनिनांपुरःसरः॥गर्वानभिज्ञोविनयीसदानतःस
नोपलेभेतनयाननंजरन्॥४०॥

ऽस्यव्यतिरेकाभिधानात्व्यतिरेकालंकृतिः॥व्यतिरेकोविशेषश्चेदुपमानोपमेययोरित्युक्तत्वात्॥३८॥दिनमासपरिमिताःसमाःसंवत्सराव्यतीयु
र्व्यतिक्रांताः जतौतुवंशस्थमुदीरितंजरौ ॥३९॥ मारःकामःवसुंधराभूमिःविद्यासुवृद्धःसर्वोत्तमःधनिनांपुरःसरोऽग्रगण्यः एवंभूतोऽपिगर्वा
नभिज्ञोगर्वरहितःयतोविनयीविनयवान् यतःसदानतोनम्रः एवंविधःशिवगुरुर्जरन्जरांगच्छन्पुत्रस्यमुखंनोपलेभेनप्राप ॥ अत्रविषयभेदेन ॥५॥
बहुधोल्लेखनादुल्लेखालंकारः॥ एकेनबहुधोल्लेखेप्यसौविषयभेदतइत्युक्तेः उ० ॥४०॥

चित्रपदमाश्चर्यास्पदंनिकेतनंगृहंबहुगुणैरयंसंपन्नइतिसंभावनाएतेबहवोपिमोहहेतवः पुत्रहीनंशिवगुरुंनामूमुहन्स्वस्मिन्नशक्त्यापादनेनमोहितंनकृतवंतः ॥ ४१ ॥ अस्यामृतौममसंततिरजाताचेदुपरिष्टादग्रेशरदिअवश्यंभविष्यति तस्यामप्यजाताचेत्ततउत्तरस्यांहेमंतऋतौभविष्यतीत्येवंमनोरथैर्व्याप्तांतःकरणःकालंनिनायनीतवान् ॥४२॥ खिदत्खेदयुक्तंमनोयस्य कृतःकार्यस्यशेषोयेनसशिवगुरुर्भार्यामचष्टोक्तवान् ॥ हे सुभगेअतःपरंकिंकर्त्तव्यंनौआवयोरंगेनेंद्रियसामर्थ्येनसहितंवयोऽर्द्धंअगमत् हेकुलजेपुत्राननंनदृष्टंयत्पुत्रमुखंइहलोक्यंइहलोकेहितमुदाह

गावोहिरण्यंबहुसस्यमालिनीवसुंधराचित्रपदंनिकेतनं ॥ संभावनाबंधुजनैश्चसंगमोनपुत्रहीनंबहवोप्यमूमुहन् ॥ ४१ ॥ अस्यामजाताममसंततिश्चेच्छरद्यवश्यंभवितोपरिष्टात् ॥ तत्राप्यजातातत उत्तरस्यामेवंसकालंमनसानिनाय ॥ ४२ ॥ खिदन्मनाःशिवगुरुःकृतकार्यशेषोजायामचष्टसुभगेकिमतःपरंनौ ॥ सांगंवयोर्द्धमगमत्कुलजेनदृष्टंपुत्राननंयदिहलोक्यमुदाहरंति ॥ ४३ ॥ एवंप्रियेगतवतोःसुतदर्शनंचेत्पंचत्वमैष्यदथनौशुभमापतिष्येत् ॥ अस्याभ्युपायमनिशंभुविवीक्षमाणोनेक्षेततःपितृजनिर्विफलाममाभूत् ॥ ४४ ॥ भद्रेसुतेनरहितौभुविकेवदंतिनौपुत्रपौत्रसरणिक्रमतःप्रसिद्धिः ॥ लोकेनपुष्पफलशून्यमुदाहरंतिवृक्षंप्रवालसमयेफलितंविहाय ॥ ४५ ॥

रंति पुत्रेणायंलोकइतिश्रुतेः ॥ वसंत० ॥ ४३॥ हेप्रियेएवंसुतदर्शनंगतवतोःप्राप्तवतोरावयोःपंचत्वंमरणमैष्यच्चेदथनौशुभमापतिष्येदागमिष्येदस्यपुत्रदर्शनस्याभ्युपायमनिशंभुविवीक्षमाणोऽन्विष्यमाणोनेक्षेनपश्यामि ततस्तस्मान्ममपितृतोजनिर्जन्मनिष्फलाऽभूत् ॥ ४४ ॥ किंचहे भद्रेसुतेनरहितौनावावांभुविकेवदंतिकेऽपिनवदिष्यंतीत्यर्थः ॥ वर्त्तमानसामीप्येवर्त्तमानवद्वेतिलट् ॥ यतःपुत्रपौत्रसरणिक्रमतःलोकेप्रसिद्धिर्भवति ॥ यथाप्रवालानांपल्लवानांसमयेफलितंवृक्षंविहायपुष्पफलशून्यंवृक्षंकेऽपिनोदाहरंतितद्वदित्यर्थः ॥ ४५ ॥

इत्यंवंभर्त्राईरितेकथितंसनितदीयाभार्यासतीप्राह जंगमरूपंशिवाभिधकल्पवृक्षंआश्रयावः ॥ तस्यसेवनात्सुनाथैशंमीश्वरसंबंधिस्थिरंफलं
नौआवयोर्भविताभविष्यति उ० ॥४६॥ इतोऽस्मात्कारणाद्भक्तेप्सितार्थपरिकल्पनेकल्पवृक्षंदेवंकंसुखंशिवमितियावत्सकलार्थसिद्ध्यैभजावः ॥
यद्वाइतोऽस्माद्देवादन्यंकमेवंभूतंदेवंभजावः॥ एवंभूतादन्यस्याभावात् शिवोपास्तितःसकलार्थसिद्धिर्भवतीत्यत्रप्रमाणाकांक्षायामाह ॥ तत्रोप
मन्योर्महिमामाहात्म्यंपरमंप्रमाणं एवंहिमहाभारतेश्रूयते ॥ उपमन्युःकिलपयःपिबतोमुनिबालकानवलोक्यात्याग्रहेणमातरंदुग्धंयाचितवान्
तन्माताचदारिद्र्यवशेनदुग्धाभावात्पिष्टेनतद्विधायायच्छत्सचतदेवपीत्वादुग्धंमयापीतमितिमन्यमानोननर्त्ततदेतत्सर्वंज्ञात्वाकुमाराजहसुस्त

इतीरितेप्राहतदीयभार्याशिवाख्यकल्पद्रुममाश्रयावः ॥ तत्सेवनान्नौभवितासुनाथफलंस्थिरंजंगमरूपमैशं ॥
॥४६॥ भक्तेप्सितार्थपरिकल्पनकल्पवृक्षंदेवंभजावकमितःसकलार्थसिद्ध्यै ॥ तत्रोपमन्युमहिमापरमंप्रमाणंनो
देवतासुजडिमाजडिमामनुष्ये ॥ ४७ ॥ इत्थंकलत्रोक्तिमनुत्तमांसश्रुत्वासुतार्थीप्रणतैकवश्यं ॥ इयेषसंतोष
यितुंतपोभिःसोमार्धमूर्धानमुमार्द्धमीशं ॥ ४८ ॥ तस्योपधामकिलसंनिहितापगैकास्नात्वासदाशिवमुपास्तज
लंसतस्याः ॥ कंदाशनःकतिचिदेवदिनानिपूर्वंपश्चात्तदासशिवपादयुगाब्जभृंगः ॥ ४९ ॥

तोहास्यकारणंपृच्छतेऽस्मैमातादारिद्र्यमावेदयत्तज्ज्ञात्वामहेश्वरमाराध्यक्षीराब्ध्यधिपतित्वंप्रापेति॥ ननुपाषाणाद्यात्मतयाजडाभ्योदेवताभ्यः
कथंनिखिलार्थसिद्धिरित्याशंक्याह॥ नहिदेवतासुजडिमाजाड्यंकिंतुश्रद्धाभक्तिर्हीनेदेवतास्वरूपात्तभिज्ञेमनुष्येसइत्यर्थः वसंत० ॥४७॥ एवंप्र
कारामनुत्तमांभार्योक्तिंश्रुत्वासःपुत्रार्थीसोमस्यचंद्रस्यार्द्धेनोपलक्षितोमूर्द्धायस्यतंप्रणतैकवश्यंउमार्द्धंउमासहायंईशंतपोभिःसंतोषयितुंइये
षइच्छतिस्म उ० ॥४८॥ तस्योपधामधाम्नःप्रासादस्यसमीपेस्थितापगाजलवहाएकानदीतस्याजलेस्नात्वासशिवगुरुःपूर्वंकतिचिद्दिनान्येवकं
दाशनःसन्सदाशिवमुपास्तपश्चात्सशिवचरणद्वंद्वकमलभृंगःसन्शिवपदाब्जमकरंदातिरिक्तकंदाद्यास्वादनवर्जितःसन्नुपास्तेत्यर्थः॥ वसंत० ४९॥

तस्यभर्तुर्जायापिविमलावृषस्यक्षेत्रेवसंतमजंस्वयमेवाविर्भूतंनतुकेनचित्स्थापितंशिवमर्च्चयंतीनियमकृतैरुपतापैर्नियमात्मकैरुपतापैरितिवा नियमैश्चोपतापैश्चेतिवाक्लायंदेहंचिक्लेशइत्येवंप्रकारेणतपतोस्तपःकुर्वतोस्तयोर्दंपत्योःसम्प्रसिद्धःकालोऽनेकोत्यगात् ॥ ५० ॥ कृपापरवशोदेवोमहादेवोद्विजवेषधारीप्रत्यक्षतांप्राप्तःप्राप्तनिद्रंशिवगुरुंप्रोवाच ॥ भोःशिवगुरोकिमभिवांछसिंकिमपिनेत्याशंक्याह ॥ किंतपस्तेनिष्कामस्यतवतपःकिंनकिमपितथाचतपसिप्रवृत्तस्यतेकामनाऽस्तीत्यनुमीयते एवमुक्तःसविप्रःशिवगुरुःपुत्रार्थितासुतस्यप्रार्थनेतिजगाद ॥ ५१ ॥ अथ

जायापितस्यविमलानियमोपतापैश्चिक्लेशकायमनिशंशिवमर्चयंती ॥ क्षेत्रेवृषस्यंनिवसंतमजंसभर्तुःकालो त्यगादिततियोस्तपतोरनेकः ॥ ५० ॥ देवःकृपापरवशोद्विजवेषधारीप्रत्यक्षतांशिवगुरुंगतआत्तनिद्रं ॥ प्रोवा चभोःकिमभिवांछसिकिंतपस्तेपुत्रार्थितेतिवचनंसजगादविप्रः ॥ ५१ ॥ देवोप्यपृच्छदथतंद्विजविद्धिसत्यंस र्वज्ञमेकमपिसर्वगुणोपपन्नं ॥ पुत्रंददाम्यथबहून्विपरीतकांस्तेभूर्यायुषस्तनुगुणानवदद्द्विजेशः ॥ ५२ ॥ पुत्रो स्तुमेबहुगुणःप्रथितानुभावःसर्वज्ञतापदमितीरितआबभाषे ॥ दद्यामुदीरितपदंतनयंतपोमापूर्णोभविष्यसिगृ हंद्विजगच्छदारैः ॥ ५३ ॥

देवोऽपितंशिवगुरुमपृच्छत् हेद्विजमदुक्तंसत्यंविद्धिजानीहि ॥ पाठांतरेतन्मदुक्तंसर्वज्ञंसर्वगुणोपपन्नमल्पायुषंएकमेवमुतंददामिकिंवाविपरीत कान्विपरीतान्असर्वज्ञान्अल्पगुणान्भूर्यायुषोबहून्पुत्रान्तेतुभ्यंददामिएवमुक्तोद्विजेशःशिवगुरुरवदत् ॥ ५२ ॥ यदुवाचतदुदाहरति ॥ बहु गुणःप्रथितानुभावःसर्वज्ञतायाआश्रयःपुत्रोमेऽस्तुइत्युक्तोदेवउवाच उदीरितानामुक्तानांगुणानांपदमाश्रयंपुत्रंदद्यांदास्यामितस्मात्तपोमाकुरु पुत्रोत्पत्त्यापूर्णोभविष्यसीत्यतोदारैर्भार्ययासहहेद्विजगृहंगच्छ ॥ ५३ ॥

इत्येवंप्रकारेणशृण्वन्सविप्रवर्यःशिवगुरुर्बुबोधप्रबुद्धश्चानिंदितात्मासस्वभार्यांतंस्वप्नमब्रवीत् पत्युक्तंश्रुत्वाचास्यविप्रवर्यस्यभार्यायोषिन्मणिः
शशंसउक्तवतीसत्यमावयोर्महात्मापुत्रोभविष्यत्येवसंशयोनास्तीत्यर्थः ॥ ५४ ॥ विप्रनिकरंब्राह्मणसमूहं ॥५५॥ भक्तेऽन्नेभुक्तमन्नंयैस्तेषांवि
प्राणांवचनात्तदुपभुक्तशेषंशिवतेजोयुक्तमन्नंसःशिवगुरुरभुंक्तभर्तृचरणारविंदभ्रमरीसासत्यपिअभुंक्त ॥ ५६ ॥ ततोयद्वृत्तंतदाह ॥ गर्भमिति
असौमृगाक्षीशिवःगर्भेमध्येयस्यतथाभूतंगर्भंदधार॥गर्भोऽपिशनैरवर्धतवर्द्धमानेचशनैःशरीरमभवत्तद्विशिनष्टि तेजसोतिरेकेणातिशयेनविनि

आकर्णयन्निति बुबोधसविप्रवर्यस्तंचाब्रवीन्निजकलत्रमनिंदितात्मा ॥ स्वप्नंशशंसवनितामणिरस्यभार्यास
त्यंभविष्यतितुनौतनयोमहात्मा ॥ ५४ ॥ तौदंपतीशिवपरौनियतौस्मरंतौस्वप्नेक्षितंगृहगतौवहुदक्षिणान्नैः॥ सं
तर्प्यविप्रनिकरंतदुदीरिताभिराशीर्भिरापतुरनल्पमुदंविशुद्धौ ॥ ५५ ॥ तस्मिन्दिनेशिवगुरोरुपभोक्ष्यमाणेभ
क्तेप्रविष्टमभवत्किलशैवतेजः॥ भुक्तान्नविप्रवचनादुपभुक्तशेषंसोभुंक्तसापिनिजभर्तृपदाब्जभृंगी ॥ ५६ ॥
गर्भंदधारशिवगर्भमसौमृगाक्षीगर्भोप्यवर्द्धतशनैरभवच्छरीरं॥ तेजोतिरेकविनिवारितदृष्टिपातविश्वंरवेर्दिव
समध्यइवोग्रतेजः ॥ ५७॥ गर्भालसाभगवतीगतिमांद्यमीषदापेतिनाद्भुतमिदंधरतेशिवंया ॥ योविष्टपानि
विभ्रतेहिचतुर्दशापियस्यापिमूर्तयइमावसुधाजलाद्याः॥ ५८॥

वारितोविश्वेषांदृष्टिपातोयेनतत् राजदंतादिषुपरमितिविश्वशब्दस्यपरनिपातः ॥ मध्यान्हेसूर्यस्योग्रतेजइव ॥५७॥ याशिवंधरतेसागर्भालसा
भगवतीकिंचिद्गतिमांद्यंप्रापेतीदमद्भुतंनभवति कथंभूतंशिवंयःपातालमहातलतलातलरसातलसुतलवितलभूतलभूर्भुवःस्वर्महर्जनस्तपःसत्या
ख्यानिचतुर्द्दशापिभुवनानिबिभ्रतेपुनश्चयस्यशिवस्येमावसुधाजलाद्यामूर्त्तयस्तदुक्तं क्षितिहुतवहक्षेत्रज्ञांभःप्रभंजनचंद्रमस्तपनवियदित्यष्टौ
मूर्त्तीर्नमोभवबिभ्रतेइति ॥ ५८ ॥

असौशिवः सर्वमेवशरीरंसंव्याप्तवानप्यत्रशरीरेकांचिदुपास्तिंकिंचिदुपक्षेपंअधिकप्रक्षेपंनाविरंकृतनैवप्रकटितवान् यद्यस्मादुरतिक्रमेणतेज साऽमुष्याःसत्याइदंशरीरंपूर्वमेवव्याप्तिममुष्यहेतोरस्मात्कारणादित्यर्थः निमित्तपर्यायप्रयोगेसर्वासांप्रायदर्शनमितिषष्ठी ॥ ५९ ॥ मनोज्ञानिगं धपुष्पाण्यप्यस्यैसत्यैकामनामाधातुंसमर्थानिनाभूवन् भूषणानिकिमुंकिंवक्तुंनाययत्पदार्थजातंगुरुत्वास्पदंतस्यतस्यविधारणविधौसाऽलसा कर्त्तव्येषुमंदोद्यमाबभूव ॥ ६० ॥ यद्यप्येवंतथापितांसतीं दोहदंदौहृदंश्रद्धालालसंचसमंस्मृतमितिहलायुधाद्दौहृदंगर्भिणीमनोरथोभृशमत्यंतंअ

संव्याप्तवानपिशरीरमशेषमेवनोपास्तिमाविरसकावकृतात्रकांचित् ॥ यत्पूर्वमेवमहसादुरतिक्रमेणव्याप्तंशरी रमदसीयममुष्यहेतोः ॥ ५९ ॥ रम्याणिगंधकुसुमान्यपिगर्द्धिमस्यैनाधातुमैशतभराल्किमुभूषणानि ॥ यद्यद्गुरुत्व पदमस्तिपदार्थजातंतत्तद्विधारणविधावलसाबभूव ॥ ६० ॥ तांदौहृदंभृशमबाधतदुःशरारिःप्रायःपरंकिलनमुं चतिमुंचतेऽपि ॥ आनीतदुर्लभमपोहतियाचतेऽन्यत्तच्चाप्यपोह्यपुनरर्हतिसान्यवस्तु ॥ ६१ ॥ तांबंधुतागमदुपश्रु तदोहदार्तिरादायदुर्लभमनर्घ्यमपूर्ववस्तु ॥ आस्वाद्यबंधुजनदत्तमसौजहर्षहाहंतगर्भधरणंखलुदुःखहेतुः ॥ ६२ ॥

बाधत शर्रंहिंसांऋच्छतिगच्छतीतिशरारिः पक्षिविशेषः अचइरितीःप्रत्ययः शरारिराटिराडिश्चेत्यमरः तथाचयथादुष्टःशरारिःप्रायःपरंनमुंचति मुंचतेपीतिप्रसिद्धंतद्वदित्यर्थः बाधप्रकारमाह आनीतंयद्दुर्लभंतदपोहतित्यजतिअन्यद्याचतेतच्चाप्यपोह्यपरित्यज्यपुनरन्यद्वस्तुसावांछतीत्यर्थः ॥ ६१ ॥ तांप्रतिदुर्लभमनर्घ्यममूल्यमपूर्ववस्तुसमादायबंधुसमूहआगमत् बंधुतांविशिनष्टि उपश्रुतादोहदस्यदौहृदस्यार्त्तिर्ययासांबधुजनदत्त मसौसतीआस्वाद्यजहर्षहाहंतगर्भधरणंखलुदुःखहेतुरितिजगादचेतिशेषः ॥ ६२ ॥

हाहंतेतीदंमयामानुष्यधर्ममनुसृत्योक्तं यतःशिवस्यमहसस्तेजसोभरणेधरणेवध्याममकापिव्यथापीडानास्तिएतदपिकुतइतिचेत्तत्राह सर्वपी
डासंपर्कंपरिहर्तुकामादेवंभजंतइतितत्वविदांप्रवादइत्यतइत्यर्थः ॥ ६३ ॥ निसर्गधवलेनस्वभावतःश्वेतेनातिशयेनमहतोक्ष्णावृषभेणसम्यग्गूढंपु
नश्चगीतविशारदैर्गंधर्वादिभिराढ्यैर्युक्तैस्तत्स्वामिभिर्वाविद्याधरप्रभृतिभिर्विनयेनोपसमीपेयातैःप्राप्तैःसंगीयमानमात्मानंप्राप्तनिद्रासासतीऐक्ष
त ॥६४॥ पुनश्चजयजयेतिरक्षेतिमामांदृशाकृपादृष्ट्याऽवलोकयेतिशब्दंवरंदधानाप्रयच्छंतीसतीआकर्णयत् श्रुत्वाविस्मयंप्राप्तोत्थितवतीतस्त

मानुष्यधर्ममनुसृत्यमयेदमुक्तंकापिव्यथाशिवमहोभरणेनवध्याः ॥ सर्वव्यथाव्यतिकरंपरिहर्तुकामादेवंभ
जंतइतितत्वविदांप्रवादः ॥ ६३ ॥ उक्ष्णानिसर्गधवलेनमहीयसास्वात्मानमैक्षतसमूढमुपात्तनिद्रा ॥ सं
गीयमानमपिगीतविशारदाढ्यैर्विद्याधरप्रभृतिभिर्विनयोपयातैः ॥ ६४॥ आकर्णयज्जयजयेतिवरंदधाना
रक्षेतिशब्दमवलोकयमादृशेति ॥ आकर्ण्यनोत्थितवतीपुनरुक्तशब्दंसाविस्मिताकिलशृणोतिनिरीक्षमा
णा ॥ ६५ ॥ नर्मोक्तिकृत्यामपिखिद्यमानाकिंचापिचंचत्तरमंचरोहे ॥ जित्वामुदान्यानतिहृद्यविद्यासिंहा
सनेसौस्थितिमीक्षतेस्म ॥ ६६ ॥ समानतासात्विकवृत्तिभाजांविरागतावैषयिकप्रवृत्तौ ॥ तस्याःस्त्रियो
गर्भगपुत्रचित्रचरित्रशंसिन्यजनिष्टचेष्टा ॥ ६७॥

तोनिरीक्षमाणासापुनरुक्तशब्दंनशृणोतिस्माकर्ण्यनोत्थितवतीतिवासंबंधः ॥ ६५ ॥ किंचचंचत्तरस्यस्फुरत्तरस्यमंचस्यशय्यायारोहेआरोहणे
ऽपिनर्मोक्तिकृत्यांपरिहासोक्तेर्यत्नेऽपिखिद्यमानाऽन्यान्जित्वाऽतिहृद्यविद्यायाःसरस्वत्याःसिंहासनेस्वस्यस्थितिमीक्षतेस्मप्रतिहृद्येविद्यासिंहा
सनेइतिवा इंद्र० ॥६६॥ सात्विकवृत्तिभाजांसतांसमानतातुल्यतावैषयिकवृत्तौविषयगोचरप्रवृत्तौविरागतावैराग्यंतस्याःस्त्रियःसत्याएतादृशी
चेष्टागर्भगतस्यपुत्रस्यचित्रमाश्चर्यरूपंयच्चरित्रंतच्छंसिनीतज्ज्ञापिकाऽजनिष्ट उ० ॥ ६७ ॥ ॥८॥

तद्रोमवल्लीकुचलक्षणावद्रीपर्वतावाटण्वतीयाप्रभासैवधुनीनदीतस्याउरुशैवलालिः महतीशैवालपंक्तिः रुरुचेरेजे अस्यशिशोःकृतेयत्नाद्विधा
त्रास्थापितःप्रशस्तोवेणुरिवेत्युत्प्रेक्षा इंद्र० ॥६८॥ अस्याःसत्याःपयोधरद्वंद्वमिषात्कुचयुग्मव्याजेनदुग्धंपिबत्यर्थस्यपानस्यविधानेयोग्यौनवी
नामृतपूरितौद्वौकुंभौपद्मयोनिर्ब्रह्माकलयांबभूवरचयामास कैतवापह्नुतिर्व्यक्तौव्याजाद्यैर्निह्नुतेःपदैः उपजातिः॥६९॥कुचकुंभमध्येद्वैतप्रवादं
तयोर्मध्येपुनर्माध्यमिकंमतंशून्यंमतंचसुभ्रूमणेर्गर्भंगएवसोऽर्भोबालकोद्राक्झटितिगर्हयामास यतोमहात्मभिर्गर्ह्योनियंभेदवादशून्यमतयोःप्र
तिषेधायगर्भगेणार्भेणस्तनयोरभेदस्यतन्मध्यगतावकाशाभावस्यचसंपादनमितिफलोत्प्रेक्षा इंद्र० ॥७०॥ लग्नेशुभेनग्रहेणयुतेयुक्तेशुभेनतेनदृ

तद्रोमवल्लीरुरुचेकुचाद्र्यावटण्वत्प्रभाधुन्युरुशैवलालिः॥ यत्नाद्विशोरस्यकृतेप्रशस्तोन्यस्तोविधात्रेवनवी
नवेणुः ॥६८॥ पयोधरद्वंद्वमिषादमुष्याःपयःपिबत्यर्थविधानयोग्यौ॥ कुंभौनवीनामृतपूरितौद्वावंभोजयो
निःकलयांबभूव॥६९॥ द्वैतप्रवादंकुचकुंभमध्येमध्येपुनर्माध्यमिकंमतंच ॥ सुभ्रूमणेर्गर्भगएवसोर्भोद्रा
ग्गर्हयामासमहात्मगर्ह्यं॥ ७०॥ लग्नेशुभेशुभयुतेसुषुवेकुमारंश्रीपार्वतीवसुखिनीशुभवीक्षितेच ॥ जाया
सतीशिवगुरोर्निजतुंगसंस्थेसूर्येकुजेरविसुतेचगुरौचकेंद्रे॥ ७१॥

ष्टेचपुनश्चसूर्यादौस्वतुंगस्थेनिजतुंगाउच्चस्थानानिसूर्यादीनांक्रमेणोक्तानि अजवृषभमृगांगनाकुलीराझषवणिजौचदिवाकरादितुंगाइति अ
जोमेषः मृगोमकरः अंगनाकन्या कुलीरःकर्कः झषोमीनः वणिक्तुला तथाचसूर्येमेषस्थेकुजेभौमेमकरस्थेरविसुतेमंदेतुलास्थेगुरौचकेंद्रेचतु
र्थाद्यन्यतमराशिस्थेचकारावुक्तानुक्तसमुच्चयार्थे शिवगुरोर्भार्यासतीसुखिनीसुखवतीनत्वन्यस्त्रीवत्पीडिता कुमारंशिशुंसुषुवेयथाश्रीपार्वतीकु
मारंस्कंदंसुषुवेतद्वत् अनेनगर्भप्रवेशादिकंमाययाप्रदर्श्यसदाशिवःशंकराचार्यरूपेणप्रादुरभूदितिदर्शितं वसंततिलकाछंदः ॥ ७१ ॥

सुतंदृष्ट्वाशिवगुरुःशिववारिराशौसुखसमुद्रेमग्नोऽपिशक्तिसामर्थ्यमनुसृत्यजलेन्यमांक्षीत्निमज्जितवान् तदनंतरंबहुधनंवसुधाश्वगाश्वपुत्रजन्म
न्युक्तस्यकर्मणोविधयेविधानायद्विजपुंगवेभ्योब्राह्मणवरेभ्यःशास्त्रज्ञेभ्यःपात्रेभ्यःव्यश्राणयद्दत्तवान् ॥ ७२ ॥ तरक्षुर्व्याघ्रःमृगादयोबहुजंतुग
णाःपरस्परंद्विषंतोपितस्मिन्दिनेवैरंविहायातीवहृष्टाःसहचेरुःपुनश्चसाधुतयानिघृष्टाःसम्यक्तयाऽन्योन्यंसंघर्षणंखर्जनंकुर्वंतःकंडूमपाकृषतकं
 डूपाकरणंकृतवंतः ॥ ७३ ॥ तस्मिन्दिनेवृक्षालताश्वपुष्पराशीन्फलानिचामुंचन् तथैवसकलानद्यःप्रसन्नजलाःजाताःजलधरोऽपिनि 

दृष्ट्वासुतंशिवगुरुःशिववारिराशौमग्नोऽपिशक्तिमनुसृत्यजलेन्यमांक्षीत् ॥ व्यश्राणयद्बहुधनंवसु
धाश्वगाश्वजन्मोक्तकर्मविधयेद्विजपुंगवेभ्यः ॥ ७२ ॥ तस्मिन्दिनेमृगकरींद्रतरक्षुसिंहसर्पाखुमु
ख्यबहुजंतुगणाद्विषंतः॥ वैरंविहायसहचेरुरतीवहृष्टाःकंडूमपाकृषतसाधुतयानिघृष्टाः॥७३॥वृक्षा
लताःकुसुमराशिफलान्यमुंचन्नद्यःप्रसन्नसलिलानिखिलास्तथैव ॥ जातामुहुर्जलधरोपिनिजंवि
कारंभूभृद्गणादपिजलंसहसात्पपात॥७४॥ अद्वैतवादिविपरीतमतावलंबिहस्ताग्रवर्तिवरपुस्तकम
प्यकस्मात्॥ उच्चैःपपातजहसुःश्रुतिमस्तकानिश्रीव्यासचित्तकमलंविकचीबभूव ॥ ७५ ॥

जंविकारंजलंमुहुरमुंचदितिवचनविपरिणामेनसंबंधनीयं भूभृद्गणात्पर्वतसमूहादपिजलंसहसोत्पपात ॥ ७४ ॥ किंचाद्वैतवादिभ्योविपरीतं
मतमवलंबितुंशीलंयेषांतेषांहस्ताग्रवर्त्तिवरपुस्तकमप्यकस्मादुच्चैःपपात श्रुतिमस्तकानिवेदांताःजहसुः श्रीव्यासस्यचित्तकमलंविकचीबभूव 
विकासंप्राप ॥ ७५ ॥

किंचसर्वाभिराशाभिर्दिग्भिरलंप्रसेदे कर्मणिप्रत्ययः सर्वादिशोऽतिशयेनप्रसन्नाःबभूवुरित्यर्थः अद्भुतोदिव्योगंधोयेषांते तैर्वातैरभाविवायवोऽद्भुतदिव्यगंधाश्चाभूवन् प्रदक्षिणीभूताःविचित्राःकीलाज्वालायेषांतैःज्वलनैरग्निहोत्राग्निभिरपितदानींप्रजज्वले तथाभूताअग्नयोविप्रज्वलिता बभूवुरत्रापिकर्मणिप्रत्ययः॥ ७६ ॥किंचतदातस्मिन्कालेसुमनोहरोगंधोऽस्यास्तीतितथासतांसुष्टुशुद्धंयन्मनस्तद्वद्विमलाशिवंसुखंकरोतीतितथा सुमनसांदेवानांनिकरैःसमूहैःप्रचोदिताप्रेरितासुमनसांपुष्पाणांवृष्टिरद्भुतंयथास्यात्तथाऽभूत् यमकालंकारः अर्थेसत्यर्थभिन्नानांवर्णानांसापुनःश्रुतिः यमकमित्युक्तेः विषमेससजागुरुःसमेसभरालोथगुरुर्वियोगिनी॥ ७७॥ लोकत्रयीलोकदृशालोकनेत्रेणभास्वतासूर्येणमहीसुमेरुणाप

सर्वाभिराशाभिरलंप्रसेदेवातैरभाव्यद्भुतदिव्यगंधैः॥प्रजज्वलेऽपिज्वलनैस्तदानींप्रदक्षिणीभूतविचित्रकीलैः॥ ७६ ॥ सुमनोहरगंधिनीसतांसुमनोवद्विमलाशिवंकरी ॥ सुमनोनिकरप्रचोदितासुमनोवृष्टिरभूत्तदाद्भुतं॥ ७७॥ लोकत्रयींलोकदृशेवभास्वतामहीधरेणेवमहीसुमेरुणा॥ विद्याविनीत्येनसतीसुतेनसारराजतत्तादृशराजतेजसा॥ ७८ ॥ सत्कारपूर्वमभियुक्तमुहूर्तवेदिविप्राःशशंसुरभिवीक्ष्यसुतस्यजन्म ॥ सर्वज्ञएवभवितारचयिष्यतेचशास्त्रंस्वतंत्रमथवागधिपांश्चजेता॥ ७९ ॥

र्वतेनेवविद्याविनयेनसासतीनुतेनसुतेनरराज सुतंविशिनष्टि तादृशानामतिप्रसिद्धानांरामचंद्रप्रभृतिराज्ञांतेजोयस्मिंस्तेन यद्वातेजसांराजेतिराजतेजस्तादृशंसूर्यादितुल्यंराजतेजोयस्मिंस्तेनेत्यर्थः ॥ अत्राभिन्नेदामिलक्षणेसाधारणेधर्मेएकस्यैवबहूपमानोपादानान्मालोपमा इंद्रवज्रा ॥७८॥सत्कारपूर्वमभियुक्ताविनियुक्तामुहूर्त्तवेदिनोविप्राःसुतस्यजन्मवीक्ष्यालोच्यशशंसुरेषतवपुत्रःसर्वज्ञोभविष्यति पुनश्चस्वतंत्रंशास्त्रंरचयिष्यते अथवागधिपांश्चजेताभविष्यति वसं० ॥ ७९ ॥

किंचयावदेषाभूस्तावत्स्वकांकीर्त्तिंभुविविधास्यति किंबहुनाबोधितेनैषतवशिशुःपूर्णोस्ति जीवितंचतेनशिवगुरुणानचपृष्टंनचैतैरुक्तंयतःप्रायो जानन्नप्यशुभंशुभज्ञःनैववक्ति ॥८०॥ अथोनंतरंतज्ज्ञातिबंधुसुहृदिष्टजनानामंगनाउपायनेनोपहारेणसहवर्त्तमानास्तास्तंसूतिकागृहनिविष्टं ददृशुस्तंसरोजमुखंअभिसमंताद्वीक्ष्यात्यंतंमुदंचययुः यथानिदाघेग्रीष्मर्त्तौसूर्यातपेनतप्ताश्चंद्रंवीक्ष्यात्यंतंमुदंप्रामुवंतितद्वत्॥८१॥ नविद्यतेप्रदी







कीर्तिंस्वकांभुविविधास्यतियावदेषाकिंबोधितेनबहुनाशिशुरेषपूर्णः॥ नापृच्छिजीवितमनेनचैतैर्नचोक्तं प्रायोविदन्नपिनवक्त्यशुभंशुभज्ञः॥८०॥तज्ज्ञातिबंधुसुहृदिष्टजनांगनास्तास्तंसूतिकागृहनिविष्टमथोनि दध्युः॥सोपायनास्तमभिवीक्ष्ययथानिदाघेचंद्रंमुदंययुरतीवसरोजवक्त्रं ॥ ८१ ॥ तत्सूतिकागृहमवैक्षतन प्रदीपंतत्तेजसायदवभातमभूत्क्षपायां॥आश्चर्यमेतदजनिष्टसमस्तजंतोस्तन्मंदिरंवितिमिरंयदभूददीपं ॥ ॥८२॥ यत्पश्यतांशिशुरसौकुरुतेशमग्र्यंतेनाकृतास्यजनकःकिलशंकराख्यां॥यद्वाचिरायकिलशंकरसंप्र सादाज्जातस्ततोव्यधितशंकरनामधेयं ॥ ८३ ॥ सर्वविदत्सकलशक्तियुतोऽपिबालोमानुष्यजातिमनुसृ त्यचचारतद्वत्॥ बालःशनैर्हसितुमारभतक्रमेणसप्तुंशशाकगमनायपदांबुजाभ्यां॥ ८४॥

पोयस्मिन् नैकधेत्यादिवन्नशब्देनसमासः नप्रदीपंसःक्षपायांरात्रौतस्यशिशोस्तेजसायदवभातमभूत्तत्सूतिकागृहंसर्वोजनोऽवैक्षत एतत्सर्वजं तोराश्चर्यमजनिष्टयददीपंसत्तस्यमंदिरमतिमिरमभूदित्यर्थः॥८२॥अथशंकरनामधेयप्रवृत्तिनिमित्तद्वयमाह यद्येनकारणेनासौबालकःपश्यतां जनानामुत्कृष्टंशंसुखंकुरुतेतेनास्यजनकःप्रसिद्धांशंकराख्यांअकृतकृतवान् यद्वा चिरंकालाच्छंकरप्रसादाज्जातस्तत्तस्माच्छंकरनामधेयंव्य धिताकृत ॥ ८३ ॥ तद्वत्बालवत्पादकमलाभ्यांगमनायादौसृप्तुमुदरेणसर्पणंकर्तुंसमर्थोबभूव ॥

अस्मिन्बालेमंचेशायितेसतिसतांहृदयंप्रसन्नंबभूव मणिगुच्छवर्य्येवीक्ष्यमाणेसतिविदुषांमुखंविगतनीलमभूत् यद्वादिपंडितानां मुखंविशे षेणनीलमभूत् उप० ॥ ८५ ॥ कमनीयासुंदरीशय्याशयनीयंयस्मिंस्तत्पर्य्यंकश्रेष्ठंशनैःपदाभ्यांसंताडयन्सन्विशेषेणभेदवादिनांयेइंद्रास्ते षांयेमनोरथास्तेषांसमूहाम्सद्यःशतधाबिभेदविददार अत्रताडनविभेदनयोर्हेतुकार्ययोर्विरुद्धभिन्नदेशत्वादसंगतिरलंकारः विरुद्धभिन्नदेशत्व कार्यहेत्वोरसंगतिरित्युक्तेः ॥ ८६ ॥ द्वित्राणिवर्णानिअमुष्मिन्बालेवदतिसतिद्वैतिप्रवीरामौनमेवदधुः चरणकमलाभ्यांमुदाचलतिसतितेसद्यःद

बालेथमंचेकिलशायितेऽस्मिन्सतांप्रसन्नंहृदयंबभूव ॥ संवीक्षमाणेमणिगुच्छवर्यंविद्वन्मुखंहंतविनील मासीत्॥८५॥संताडयन्हंतशनैःपदाभ्यांपर्यंकवर्यंकमनीयशय्यं॥ बिभेदसद्यःशतधासमूहान्विभेदवादीं द्रमनोरथानां॥८६॥द्वित्राणिवर्णानिवदत्यमुष्मिन्द्वैतिप्रवीरादधुरेवमौनं॥मुदाचलत्यंघ्रिसरोरुहाभ्यांदिशः पलायंतदशापिसद्यः॥८७॥ उदचारयदर्भकोगिरःपदचारानतनोदनंतरं ॥ विकलोऽभवदादिमात्तयोःपि कलोकश्चरमान्मरालकाः॥८८॥ नवविद्रुमपल्लवास्तृतामिवकाश्मीरपरागपाटलां॥ रचयन्नचलांपदत्वि षासचचारेंदुनिभःशनैःशनैः॥८९॥

शापिदिशःपलायंतपलायनंकृतवंतः चपलातिशयोक्तिस्तुकार्येहेतुप्रसक्तिजे ॥ ८७॥ अर्भकोगिरउद्चारयत्प्रवर्त्तितवान् अनंतरंपदचारानत नोत्विस्तारितवान् तयोर्वाणीप्रवर्त्तनपादचारविस्तारयोर्मध्येगिरःप्रवर्त्तनात्पिकलोकःसर्वोऽपिकोकिलोविकलोऽभवत् चरमादंत्यात्पादचार विस्तारान्मरालकोहंसोविकलोऽभवत् वियोगिनी ॥ ८८ ॥ अचलांभूमिपादत्विषाचरणकांत्यानवीनैर्विद्रुमस्यरत्नवृक्षस्यपल्लवैरास्तृतामिव विद्रुमोरत्नवृक्षेपिप्रवालेपिपुमानयमितिमेदिनी काश्मीरपरागैःपाटलांश्वेतरक्तांइवरचयन्चंद्रतुल्यःशिशुःशनैशनैश्चचार॥ ८९ ॥

मुर्द्धनिहिमकरस्यशीतकिरणस्यचंद्रस्यचिह्नंनिटलेललाटेनयनस्यनेत्रस्यांकंचिह्नमंसयोःस्कंधयोःशूलंवपुषिस्फटिकेनसमानवर्णप्राज्ञावी
क्ष्यशंभुंमेनिरे अनुमानालंकारः वृत्तंगीतिः आर्याप्रथमदलोक्तंयदिकथमपिलक्षणंभवेदुभयोः दलयोःकृतयतिशोभांतांगीतिंगीतवान्भुजंगे
शःइतिलक्षणात् लक्ष्यैतत्सप्तगणागोपेताभवतिनेहविषमेजः षष्टोयंनलघूवाप्रथमेऽर्द्धेनियतमार्यायाइत्यार्यापूर्वार्द्धलक्षणं॥ १०॥ राजनीति
कुशलस्यराज्यश्रीरिव व्यसनंत्वशुभेसक्तौपानस्त्रीमृगयादिषु दैवानिष्टफलेपापेविपत्तौविफलोद्यमइतिमेदिनी कोशाद्व्यसनादशुभादेर्दवीय

मूर्धनिहिमकरचिह्नंनिटलेनयनांकमंसयोःशूलं॥ वपुषिस्फटिकसवर्णप्राज्ञास्तंमेनिरेशंभुं॥ १०॥
राज्यश्रीरिवनयकोविदस्यराज्ञोविद्येवव्यसनदवीयसोबुधस्य॥शुभ्रांशोश्छविरिवशारदस्यपित्रोः
संतोषैःसहववृधेतदीयमूर्तिः॥ ११॥ नागेनोरसिचामरेणचरणेबालेंदुनाफालकेपाण्योश्चक्रगदा
धनुर्डमरुकैर्मूर्ध्नित्रिशूलेनच॥ तत्तस्याद्भुतमाकलय्यललितंलेखाकृतेलांछितंचित्रंगात्रममंस्ततत्र
जनतानेत्रैर्निमेषोज्झितैः॥ १२॥

सोदवीयांश्चदविष्ठश्चसुदूरेइत्यमरादतिदूरस्यबुद्धस्यविद्येवशरत्कालीनस्यचंद्रस्यच्छविरिवपित्रोःसंतोषैःसहतदीयामूर्त्तिर्ववृधे प्रहर्षणी॥ ११॥
उरसिनागेनचरणेचामरेणमस्तकेबालचंद्रेणहस्तयोश्चक्रादिभिर्मूर्द्धनित्रिशूलेनचाद्भुतंतस्यललितंगात्रंसुकुमारांगविन्यासंशरीरंनेत्रैर्निमेषरहितै
राकलय्यसम्यगवलोक्यरेखार्थैलांछितंचित्रंतत्रत्यजनसमुदायोऽमंस्त॥ शार्दू॰ ॥१२॥

प्राथमिकेसनकादिसर्गेविरतिंप्रयातिसतिमार्गेदौर्गतेदुर्गतिसंपादकेस्थितेसतिस्वर्गेदुर्गमतांदुष्प्राप्यतांउपेयुषिप्राप्तवतिसतिअपवर्गेमोक्षेभृशम त्यंतंदुर्गेदुष्प्रापेसतिदेहभृतांजीवानांवर्गेसमुदायेनिसर्गात्स्वभावादेवमलिनेसति तथाचविश्वकर्तुरखिलेऽपिसर्गेजाताउपसर्गानाशकराणिवि

सर्गेप्राथमिकेप्रयातिविरतिंमार्गेस्थितेदौर्गतेस्वर्गेदुर्गमतामुपेयुषिभृशंदुर्गेऽपवर्गेसति ॥ वर्गेदेहभृतांनिसर्गमलिनेजातोपसर्गेऽखिलेसर्गेविश्वसृजस्तदीयवपुषाभर्गोऽवतीर्णोभुवि ॥ ९३ ॥ इतिश्रीमाधवीयेतदवतारकथापरसंक्षेपशंकरजयेसर्गःपूर्णोद्वितीयकः ॥ २ ॥ मूलग्रंथसंख्या ॥ १४४ ॥

घ्न.नियस्यतथाभूतेसति तदीयवपुषाशंकराचार्यविग्रहात्मनाभर्गःसदाशिवःभूमाववतीर्णः ॥ ९३ ॥ इतिश्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेशंकरविजयडिंडिमेद्वितीयःसर्गः ॥ २ ॥ ॥ संख्या ॥ ३२५ ॥

श्रीगणेशायनमः ॥ ॥ एवांशेवावतारमुपवर्ण्यतत्तद्देवावतारमुपवर्णयितुमुपक्रमते इतीति एवंबालचंद्रशेखरेशिव [illegible]
रोत्तमाभुविषट्शास्त्रविदांसतांकुलेप्रजज्ञिरेप्रादुर्बभूवुः वैता० ॥ १ ॥ तत्रादौ विष्णोरवतारमाह कमलायाःलक्ष्म्यानिलयः श्रीविष्णुःसर्वासांकला
नांनिधेर्विमलाभिधात्भूसुरात्ब्राह्मणात्भुविअजनिष्टप्रादुरभूत् भुवीत्युत्तरान्वयि यंभुविपंद्मपदंवदंतियेन विवादिनांयशःसविपत्विपद्वासह्व
र्तमानमित्यर्थः ॥ २ ॥ पवनोऽपिप्रातःसवनादिनोन्मीलितंप्रस्फोरितंकीर्त्तिलक्षणंमंडलंयस्यतस्मात्प्रातःकालोन्मीलितमंडलःसूर्यस्तत्तुल्यात्प्र

श्री० अथतृतीयःसर्गः॥ इतिबालमृगांकशेखरेसतिबालत्वमुपागतेततः॥ दिविषत्प्रवराःप्रजज्ञिरेभुविषट्शा
स्त्रविदांसतांकुले॥ १ ॥ कमलानिलयःकलानिधेर्विमलाख्यादजनिष्टभूसुरात् ॥ भुविपद्मपदंवदंतियंसवि
पद्येनविवादिनांयशः॥ २ ॥ पवनोऽप्यजनिप्रभाकरात्सवनोन्मीलितकीर्तिमंडलात् ॥ गलहस्तितभेदवाद्य
सौकिलहस्तामलकाभिधामधात् ॥ ३ ॥ पवमानदशांशतोजनिप्लवमानांचतियद्यशोंबुधौ ॥ धरणीम
थिताविवादिवाक्तरणीयेनसतोटकाह्वयः॥ ४ ॥

भाकराभिधाद्भूसुरादजनिप्रादुरभूत् गलेहस्तिताःकंठेहस्तेनगृहीताइवरुद्धकंठाःकृताभेदवादिनोयेनासाववतीर्णोवायुःकिलप्रसिद्धंहस्तामल
केतिसंज्ञामधात् ॥ ३ ॥ वायोरेवदशांशावतारमाह पवमानस्यपवनस्यदशांशतःसतोटकाख्योऽजनि यस्ययशोलक्षणेजलधौप्लवमानाउत्तरंती
धरणीअंचतियेनविवादिवाक्तरणीमथिताइत्यर्थः ॥ ४ ॥

शिलादस्यसूनुनापुत्रेणनंदिसंज्ञकेनोदभाविशिलादसूनुः प्रादुरभूत् यंमदवद्वादिकदंबानांमदयुक्तवादिसमुदायानांनिग्रहैः समुल्लसंत्याकीर्त्याशोभतइतितथातंमहीतलेउदंकंवदंतीत्यर्थः ॥५॥ विधिर्ब्रह्मासुरेश्वरोमंडनापरसंज्ञआसबभूव गिरांनिधिर्वाचस्पतिरानंदगिरिरजायत अरुणोगरुडभ्रातासूर्योवा सनंदनसंज्ञः समभवत् यद्यपिविष्णुःपद्मपादसंज्ञोबभूवेत्युक्तंसएवचवक्ष्यमाणरीत्यासनंदनस्तथापिपक्षांतरमाश्रित्यैकत्रवोभयांशावतरणमाश्रित्याविरोधः संपादनीयः वरुणोजलाधीशश्चित्सुखसंज्ञोऽजायत ॥ ६ ॥ अपरेऽपिस्वीयैःपरैश्चसहयाईर्ष्यामत्सरस्तत्परानूदे

उदभाविशिलादसूनुनामदवद्वादिकदंबनिग्रहैः ॥ समुदंचितकीर्तिशालिनंयमुदंकंब्रुवतेमहीतले ॥ ५ ॥
विधिराससुरेश्वरोगिरांनिधिरानंदगिरिर्व्यजायत॥ अरुणःसमभूत्सनंदनोवरुणोजायतचित्सुखाह्वयः॥६॥
अपरेप्यभवन्दिवौकसःस्वपरेर्ष्यापरविद्विषःप्रभोः॥ चरणंपरिसेवितुंजगच्छरणंभूसुरपुंगवात्मजाः॥७॥ चार्वाकदर्शनविधानसरोषधातृशापेनगीष्पतिरभूद्भुविमंडनाख्यः ॥ नंदीश्वरःकरुणयेश्वरचोदितःसन्नानंदगिर्यभिधयाव्यजनीतिकेचित् ॥ ८ ॥

वानूस्वपरेषुयाईर्ष्यांनत्परानूवाविद्विषंतीतिते दिविषदःस्वपरेर्ष्यापरानूविद्वेष्टीतिवा तस्यप्रभोःश्रीशंकरस्यचरणंजगतांशरणंसेवितुंब्राह्मणोत्तमानांपुत्राअभवन् ॥ ७ ॥ विधिराससुरेश्वरोगिरांनिधिरानंदगिरिर्व्यजायतेत्युक्तमिति इदानींमतांतरमाह चार्वाकानांदेहात्मवादिनास्तिकानांदर्शनस्यशास्त्रस्यविधानेनसरोषस्यधातुर्ब्रह्मणःशापेनगीष्पतिर्देवगुरुर्भुविमंडनसंज्ञोऽभूत् नंदीश्वरःकरुणयाईश्वरेणमहादेवेनप्रेरितःसन्आनंदगिरिसंज्ञयाव्यजनीतिकेचित् वसतं० ॥ ८ ॥

अथतथाऽवतीर्णस्यविधेःपुरंध्रीकुटुंबिनीसाप्रसिद्धासरस्वतीप्रादुरभूत् काकाक्षिगोलकन्यायेनाभूत्पदमुभयत्रसंबध्यते यस्याःसंज्ञाउभयभार
तीत्यभूत् खलुप्रसिद्धं वस्तुटत्त्यापिसासरस्वतीलोकोऽपितांसरस्वतीत्येववदति जतौजगौगोविषमेसमेस्यात्तौज्गौगएषाविपरीतपूर्वा ॥ ९॥ सर
स्वत्यवतरणेनिमित्तमाह पुरापूर्वंकिलधातुरंतिकेब्रह्मणःसमीपेसर्वज्ञकल्पाईषदूनसर्वज्ञामुनयःस्वीयंस्वीयंवेदमध्यैषितपठितवंतस्तदातिकोपनो
दुर्वसनोदुर्वासामुनिर्वेदान्पठन्क्कचित्स्वरेऽस्वलत्स्वलनंप्राप उप०॥ १०॥तदातस्मिन्कालेचंद्रवन्मुखंयस्याःसासरस्वतीजहासहसितवती यतो
यदंगमर्णोद्भवशब्दसंततिः अर्णेभ्यःवर्णेभ्यउद्भवउत्पत्तिर्यस्याःसाचासौशब्दसंततिर्यस्याअंगंतस्यैहास्यंकृतवत्यैसरस्वत्यैचुकोपकोपंकृतवान् त

अथावतीर्णस्यविधेःपुरंध्रीसाभूद्यदाख्योभयभारतीति ॥ सरस्वतीसाखलुवस्तुटत्त्यालोकोऽपितांवक्तिसर
स्वतीति ॥ ९ ॥ पुराकिलाध्यैषितधातुरंतिकेसर्वज्ञकल्पामुनयोनिजंनिजं ॥ वेदंतदादुर्वसनोऽतिकोपनोवे
दानधीयन्क्कचिदस्खलत्स्वरे ॥ १० ॥ तदाजहासेंदुमुखीसरस्वतीयदंगमर्णोद्भवशब्दसंततिः ॥ चुकोपत
स्यैदहनानुकारिणानिरैक्षताक्ष्णामुनिरुग्रशासनः ॥ ११ ॥ शशापतांदुर्विनयेऽवनीतलेजायस्वमर्त्येष्वबि
भत्सरस्वती॥ प्रसादयामासनिसर्गकोपनंतत्पादमूलेपतिताविषादिनी॥ १२॥

न्मुद्रामेवदर्शयति दहनंवह्निमनुकरोतीतिदहनानुकारितेनाक्ष्णानेत्रेणोग्रशासनोमुनिर्निरैक्षतदृष्टवान् वंशस्थं॥ ११ ॥ततःकिंकृतवानित्याकांक्षा
यामाह तांशशापेति शापमेवदर्शयति हेदुर्विनयेभूतलेमर्त्येषुमनुष्येषुजायस्वजन्मलभस्व एवंशप्तासरस्वतीअबिभत्भयंप्राप भीताचसतीविषा
दिनीतत्प्रसादोपायाभावचिंतनेनचेतोभयवती तस्यदुर्वाससःपादस्यमूलेसमीपेपतितानिसर्गात्स्वभावादेवकोपनंमुनिंप्रसादयामासतत्प्रसन्नता
र्थंयत्नंकृतवतीत्यर्थः उप० ॥ १२ ॥

अथमुनयःखिन्नांसरस्वतींदृष्ट्वातमिमंदुर्वाससंआदरात्प्रसादयामासुः हेमुनेविहितापराधंपुत्रंपितायथाक्षमतेतथाहेभगवन्कृतापराधांतांसरस्व तींक्षमस्व ॥ १३ ॥ अथसरस्वत्यामुनींद्रैश्चप्रसादितःसंप्रसन्नोदुर्वासाःशापस्यमोक्षंददौ किंनदिति तत्राह यदामानुषशंकरस्यशंकराचार्यरूपे णावतीर्णस्यसम्यक्साक्ष्यपूर्वकंदर्शनंस्यात्तदाऽमर्त्याभविष्यसीत्यर्थः विपरी० ॥१४॥सासरस्वतीशोणाख्यनदस्यतीरेविप्रस्यविष्णुमित्रसंज्ञक स्यकन्याऽजनि तांविशिनष्टि सर्वानर्थान्वेत्तीतिसर्वार्थवित्साचासौसर्वैर्गुणैरुपपन्नायुक्ताच भिन्नंवापदं यस्याःपुनर्विद्याऋग्यजुःसामाथर्वसं

दृष्ट्वाविषण्णांमुनयःसरस्वतींप्रसादयांचक्रुरिमंतमादरात् ॥ कृतापराधांभगवन्क्षमस्वतांपितेवपुत्रंविहि तागसंमुने॥१३॥प्रसादितोभूदथसंप्रसन्नोवाण्यामुनींद्रैरपिशापमोक्षं॥ ददौयदामानुषशंकरस्यसंदर्शनं स्याद्भवितास्यमर्त्या ॥ १४॥ साशोणनीरेऽजनिविप्रकन्यासर्वार्थवित्सर्वगुणोपपन्ना ॥ यस्याबभूवुःसह जाश्चविद्याःशिरोगतंकपरिहर्तुमीशाः॥ १५ ॥सर्वाणिशास्त्राणिषडंगवेदान्काव्यादिकान्वेत्तिपरंचसर्वं॥ तन्नास्तिनोवेत्तियदत्रबालातस्मादभूच्चित्रपदंजनानां॥ १६ ॥

ज्ञाश्चत्वारोवेदाःशिक्षाकल्पोव्याकरणंछंदोज्योतिषंनिरुक्तिरितिषडंगानि मीमांसाधर्मशास्त्रंन्यायःपुराणमितिचतुर्दशसहजाःसहोत्पन्नाबभूवु र्यस्माच्छिरोगतंशिरसिस्थितंपरिहर्तुंकेसमर्थानकेऽपिदुर्वासादयइत्यर्थः उ० ॥ १५ ॥ सर्वाणिसांख्यपातंजलवैशेषिकन्यायमीमांसावेदांता ख्यानिशास्त्राणिव्याकरणादीनिषडंगानिऋगादीन्वेदान् काव्यनाटकादीन्परमन्यच्चसर्ववेत्ति किंबहुना अत्रजगतितन्नास्तियद्बालासरस्वती नजानाति यस्मादेवंतस्मात्साबालाऽत्रलोकेजनानामाश्चर्याश्रयभूताअभूत् इंद्रव० ॥ १६ ॥ ॥

एवंसरस्वत्याःप्रादुर्भावमुपवर्ण्यतस्याविवाहंवक्तुमुपक्रमते सागुणज्ञासरस्वती विश्वरूपमंडनापरनामधेयंगुणिनंमनोभिरामंद्विजश्रेष्ठेभ्यःश्रुतवती सगुणज्ञोविश्वरूपस्तामपिगुणवतींसरस्वतींमनोभिरामांद्विजपुंगवेभ्यःश्रुतवान् तस्मात्तयोर्मंडनसरस्वत्योर्दर्शनलालसाजाता टर्पं० ॥१७॥ एवंभूतयोस्तयोश्चिंतनप्रकर्षाल्लब्धस्वाप्निकसंदर्शनादिकयोःप्रबोधकालेविरहाग्निसंतापोजातःइत्याह अन्योन्येति ॥ १८॥ द्रष्टुमिच्छमानावपिनेक्षमाणौस्वाप्निकयाऽन्योन्यवार्त्तयाहृतमानसौयथोचिताहारविहाररहितौपरस्परस्मरणाच्छरीरेसूक्ष्मतामवापतुः ॥ १९ ॥ कदाचित्तदीयौपितरौपरिकर्शितशरीरौतौदृष्ट्वापृष्टवंतौकिंतदिनितत्राह शरीरेणकृशंमनसश्चागर्वमन्दतांकिनिमित्तमहंतुरोगंवाअन्यद्वैतन्निमित्तंनेक्षे ॥२०॥

सा विश्वरूपंगुणिनंगुणज्ञामनोभिरामंद्विजपुंगवेभ्यः ॥ शुश्रावतांचापिसविश्वरूपस्तस्मात्तयोर्दर्शनलालसाभूत् ॥१७॥ अन्योन्यसंदर्शनलालसौतौचिंताप्रकर्षादधिगम्यनिद्रां ॥ अवाप्यसंदर्शनमापणानिपुनःप्रबुद्धौविरहाग्नितप्तौ ॥१८॥ दिदृक्षमाणावपिनेक्षमाणावन्योन्यवार्ताहृतमानसौतौ ॥ यथोचिताहारविहारहीनौतनौतनुत्वंस्मरणादुपेतौ ॥१९॥ दृष्ट्वातदीयौपितरौकदाचित्पृच्छतांतौपरिकर्शितांगौ ॥ वपुःकृशंतेमनसोप्यगर्वोनव्याधिमीक्षेनचहेतुमन्यं ॥२०॥ इष्टस्यहानेरनभीष्टयोगाद्भवंतिदुःखानिशरीरभाजां ॥ वीक्ष्येनतौद्वावपिवीक्षमाणोविनानिदानंनहिकार्यजन्म ॥ २१ ॥ नतेत्यगादुद्वहनस्यकालःपरावमानोनचनिःस्वतावा ॥ कुटुंबभारोमयिदुःसहोयंकुमारवृत्तेस्तवकात्रपीडा ॥ २२ ॥

नचहेतुमन्यमित्युक्तंविवृणोति इष्टवियोगादनिष्टसंयोगाद्वादेहवतांदुःखानिभवंतितौद्वावपिवीक्षमाणोविचार्यमाणोहंनवीक्षे तर्हिनिदानंविनैवैतत्स्यादितिचेत्तत्राह निदानंकारणंविनाहिप्रसिद्धंकार्यस्यजन्मनभवतितस्मात्त्वदृश्यमेतन्निदानंवक्तव्यमित्यर्थः आख्या० ॥ २१ ॥ निदानांतरगण्यपिनसंतीत्याह नवविवाहस्यकालोऽपिनैवातिक्रांतःपरेभ्योऽपमानोऽपिनवनास्तिनिर्धनतापितेनभवति किंच कुटुंबदुःसहोभारोपिमयिवर्त्ततेऽतस्तवात्रलोकेकापीडानकापीत्यर्थः टर्पं० ॥ २२ ॥

किंचसंतापहेतुर्मूढभावोपितवनास्ति तथासंतापस्यकारणंपराजयोऽपितवनास्ति तत्रहेतुःविद्वत्सुतर्कविद्भिरपिसुदुर्गमोर्थोयस्यतस्मात्सुदुर्जया र्थादितिक्कचित्पाठः तथाभूताद्विस्पष्टतयायेपाठाद्धेतोःश्रेष्ठपाठादितिवा प्रपाठादितिक्कचित्पाठः ॥ २३ ॥ किंचजन्मप्रभृतितववेदविहितस्यकर्म णःसम्यक्सेवनमस्ति विहितादन्यस्यकर्मणःसेवातुस्वप्नेऽपितवनास्तितस्मान्नारकयातनाभ्योपिनत्वयाभेतव्यंतथाचलोकद्वितयदुःखविनिर्मुक्त स्यतेमुखंशोभारहितंकिमास्तेऽत्रकिंनिमित्तमित्यर्थः वसं॰॥२४॥ एवमत्यापहाद्बहुदिननिमित्तंवक्तुंकथ्यमानौस्नेहजन्यकृपातिशययुक्तौ ॥पि तरौकर्म मंडनसरस्वत्याविदंवक्ष्यमाणमूचतुःस्म किमित्यपेक्षायामादौमंडनवचनमुदाहरति यद्वाच्यंनवाच्यमितिमेलज्जांविस्तारयतितत्स्वमन

नमूढभावःपरितापहेतुःपराजितिर्वातवतान्निदानं॥ विद्वत्सुविस्पष्टतयाग्रपाठात्सुदुर्गमार्थादपितर्कविद्भिः ॥
॥ २३ ॥ आजन्मनोविहितकर्मनिषेवणंतेस्वप्नेऽपिनास्तिविहितेतरकर्मसेवा ॥ तस्मान्नभेयमपिनारकयातना
भ्यःकिंतेमुखंप्रतिदिनंगतशोभमास्ते ॥ २४ ॥ निर्बंधतोबहुदिनंप्रतिपाद्यमानौवक्तुंकृपाभरयुताविदमूचतुः
स्म ॥ निर्बंधतस्तववदामिमनोमतंमेवाच्यंनवाच्यमितियद्वितनोतिलज्जां ॥ २५॥ शोणाख्यपुन्नदतटेवसतो
द्विजस्यकन्याश्रुतिंगतवतीद्विजपुंगवेभ्यः ॥ सर्वज्ञतापदमनुत्तमरूपवेषांतामुद्विवक्षतिमनोभगवन्मदीयं ॥
॥ २६ ॥ पुत्रेणसोऽतिविनयंगदितोन्वशाद्द्वौविप्रौवधूवरणकर्मणिसंप्रवीणौ ॥ तावापतुर्द्विजगृहंद्विजसंदिदृक्षू
देशानतीत्यबहुलान्निजकार्यसिद्ध्यै॥२७॥

स्मिस्थितंतवात्यामहाद्वदामि ॥ २५॥ तद्दर्शयति शोणाख्यपुन्नदस्यतटेवासंकुर्वतोविष्णुमित्राख्यस्यविप्रस्यकन्यासर्वज्ञताश्रयभूताअनुत्तमरू पवेषवतीविप्रवरेभ्यःश्रवणंप्राप्तवतीअतोहेभगवन्मदीयंमनस्तामुद्वोढुमिच्छति ॥ २६ ॥ एवमतिविनयंयथाभवेत्तथापुत्रेणकथितः सहिममि त्रोवधूवरणकर्मण्यतिकुशलौद्वौविप्रौअन्वशात्प्रेषितवान् वधूवरणकर्मण्याज्ञप्तवानितिवा तौनिजकार्यसिद्ध्यर्थंविष्णुमित्रदर्शनेच्छूबहुलान्दे शानुल्लंघ्यविष्णुमित्रगेहमवापतुः ॥ २७ ॥

अथोभयभारतीवाक्यमुदाहरति राजस्थाननिवासीश्रुताखिलशास्त्रोयोविश्वरूपइतिभूमौप्रख्यातस्तस्यचरणरजसेस्पृहांकरोमि स्पृहेरीप्सितं इतिसंप्रदानं हेतातयद्यप्यत्रतत्पादपद्मरजःप्राप्नौभवान्सहाय्यंविदध्यात्तर्हिस्पृहासफलास्यादित्यर्थः॥२८॥एवंपुत्र्यावचनंतातेकर्णपुटेनपिबतिसतिद्विजानांगुरुणाविश्वरूपपित्राहिममित्रेणसुतस्योत्कृष्टविवाहक्रियार्थंसंप्रेषितौ विशदाभायुक्तयष्टिद्वययुक्तौसुवस्त्रौद्वौब्राह्मणावाजग्मतुः ॥ २९ ॥ सविष्णुमित्रस्तौविप्रवरौविहितोपचारैःसंपूज्याथानंतरंशनैरागमनकारणंपृष्टवान् श्रीविश्वरूपस्यपितुर्वाक्यात्कन्यायावरणकर्मार्थमागमनंकृतवंताविप्यूचतुः ॥ ३० ॥ श्रुतेनशास्त्रश्रवणेनकुलेनवृत्तैर्वृत्तिभिश्चरित्रैर्वाधर्मैश्चस्वसुतस्यसाधारणींसमानांतवसुतांश्रुतवतातेन श्रीविश्वरूपगुरुणातस्यश्रीविश्वरूपस्यहेतोस्तवसुतांयाचावहे हेद्विजहिममित्र मुखेनैवयाज्ञांकरवाव तस्मान्मणिद्वयंमन्योन्यसंघटनंपरस्परसंबंधमेतुप्राप्नोतु तस्यहेतोरित्यस्यतस्मात्कारणादितिवार्थः निमित्तपर्यायप्रयोगेसर्वासांप्रायदर्शनमितिवचनात्षष्ठी ॥ ३१ ॥

भूभृन्निकेतनगतःश्रुतविश्वशास्त्रःश्रीविश्वरूपइतियःप्रथितःपृथिव्यां॥ तत्पादपद्मरजसेस्पृहयामिनित्यंसाहाय्यमत्रयदितातभवान्विदध्यात्॥ २८ ॥ पुत्र्यावचःपिबतिकर्णपुटेनतातेश्रीविश्वरूपगुरुणागुरुणाद्विजानां॥ आजग्मतुःसुवसनौविशदाभयष्टीसंप्रेपितौसुतवरोद्वहनक्रियायै ॥२९॥ तावर्च्यसद्विजवरौविहितोपचारैरायानकारणमथोशनकैरपृच्छत् ॥ श्रीविश्वरूपगुरुवाक्यतआगतौस्वइत्यूचतुर्वरणकर्मणिकन्यकायाः॥ ३० ॥ संप्रेषितौश्रुतवयःकुलवृत्तधर्मैःसाधारणींश्रुतवतास्वसुतस्यतेन ॥ याचावहेतवसुतांद्विजतस्यहेतोरन्योन्यसंघटनमेतुमणिद्वयंतत्॥ ३१ ॥

एवमुक्तोविष्णुमित्रउवाच हेविप्रीयद्यपितेनहिममित्रेणोक्तंमह्यंरोचतएवतथापिनिजवधूंपृष्ट्वातदुक्तंकरवाणि यस्मादिदंकन्याप्रदानंवध्वधीन मेवनित्यंभवति नोचेत्तदनुमत्यभावेव्यसनप्राप्तिषुकन्यायादुःखप्राप्तिषुअमूर्वध्वःपीडयेयुरित्यर्थः॥३२॥ अथानंतरंभार्यांपृष्टवान् हेभद्रेतवया पुत्रतुल्याकन्यास्तितांवरीतुकामौखलुराजगेहादेतावागतौ एतयोरागमनंभद्रंकरमितिसंबोधनाशयः तत्रकिंकरवावकिंदेयानदेयावातस्मात्त्वं पक्षद्वयएकमनुमायसम्यक्ज्ञात्वाब्रूहि यतोदेयेत्युक्तानेतितदुक्तोदेयतिपुनर्नवक्तव्यं सकृत्कन्याप्रदीयतइत्यादिस्मृतेः॥ ३३॥ एवंपृष्टाविष्णु मित्रभार्योवाच प्रथमंस्थितिर्दूरेनथायच्चज्ञातव्यंश्रुतवयःकुलवृत्तजातंतदपिनज्ञायतेऽतस्तुभ्यमहंकिंप्रवदामि वित्तयुक्तायकुलेनवृत्तेनाधीतेन

मह्यंतदुक्तमभिरोचतएवविप्रौपृष्ट्वावधूंममपुनःकरवाणिनित्यं ॥ कन्याप्रदानमिदमापततेवधूषुनोचेदमूर्व्य सनसक्तिषुपीडयेयुः ॥ ३२ ॥ भार्यामपृच्छदथकिंकरवावभद्रेविप्रावरीतुमनसौखलुराजगेहात् ॥ एतांसुतां सुतनिभातवयास्तिकन्याब्रूहित्वमेकमनुमायपुनर्नवाच्यं ॥ ३३ ॥ दूरंस्थितिःश्रुतवयःकुलवित्तजातंनज्ञाय तेतदपिकिंप्रवदामितुभ्यं ॥ वित्तान्वितायकुलवृत्तसमन्वितायदेयासुतेतिविदितंश्रुतिलोकयोश्च ॥ ३४ ॥ नै वंनियंतुमनघेतवशक्यमेतत्तांरुक्मिणींयदुकुलायकुशस्थलीशे ॥ प्रादात्सभीष्मकनृपःखलुकुंडिनेशस्तीर्था पदेशमटतेत्वपरीक्षिताय॥ ३५॥

शीलेनवयस्याचसमन्वितायकन्याप्रदेयाइतितुकुलंचशीलंचवयश्चरूपंविद्याचवित्तंचसनाथताच एतान्गुणान्सप्तपरीक्ष्यदेयाकन्याबुधैःशेषम चिंतनीयमित्यादिस्मृतिमूलभूतश्रुतौ लोकेचविदितमेवेत्यर्थः ॥ ३४ ॥ एवमुक्तोविष्णुमित्रआह हेऽनघेतवैतन्नैवंनियंतुंशक्यंयतोयदुगोत्राय कुशस्थलींद्वारकामीष्टइतिकुशस्थलीटतस्मैतीर्थव्याजंयथास्यात्तथाअटतेअपरीक्षितायचेश्रीकृष्णायतांप्रसिद्धांरुक्मिणींकुंडिनाख्यनगरेशो भीष्मकाभिधोनृपःप्रादात् खलुप्रसिद्ध तथाचलोकप्रसिद्धायाप्यपरीक्षितायसुतानदेयेत्येतन्नियंतुंनशक्यमित्यर्थः॥ ३५ ॥

ननुश्रीकृष्णस्यपरमेश्वरत्वेनप्रख्यातत्वादस्यतुमनुष्यत्वेनएकत्वात्किंकेनसंगतमित्याशंक्याह हेसतिकिंकेनसंगतमिति [illegible] यतोयम
प्यतिप्रसिद्धभट्टपादमुख्यशिष्यत्वेनप्रसिद्धइत्याह यःसुगतानांमध्येयेदुर्जयास्तेषांनिर्जयेनवैदिकींसरणिंसमग्रांप्रयत्नात्प्रकर्षेणस्थापितवान् स
अतिप्रख्यातोभट्टपादोयमेनंविश्वरूपंशिक्षितुंयोग्यंशिक्षितवान् ॥ ३६ ॥ योविश्वरूपोनोऽस्माकंवरःकन्यार्थंवरणीयोभविताभविष्यतिसहेसुद
तिकिंवर्ण्यतेवर्णयितुमशक्यइत्यर्थः विद्यावतोविश्वरूपस्योत्कृष्टत्वबोधनार्थंविद्योत्कर्षंनिरूपयति यतोद्विजश्रेष्ठस्यविद्यैवधनंनतुबाह्यवित्तं
याविद्यादिगंतंभजतीतिदिगंतभाक्तंसततंनिरंतरंअन्वेति यांचराजचोरवनिताहर्तुंनसमर्थाः॥ ३७॥ हेवधु अर्जनपालनपरिव्ययगोचरीभूतानि

किंकेनसंगतमिदंसतिमाविचारीर्योवैदिकींसरणिमप्रहतांप्रयत्नात् ॥ प्रातिष्ठिपत्सुगतदुर्जयनिर्जयेनशिष्यंयमे
नमशिषत्सचभट्टपादः ॥ ३६॥ किंवर्ण्यतेसुदतियोभवितावरोनोविद्याधनंद्विजवरस्यनबाह्यवित्तं ॥ यान्वेत्तिसं
ततमनंतदिगंतभाजंयांराजचोरवनितानचहर्तुमीशाः ॥ ३७ ॥ वध्वर्जनावनपरिव्ययगानितानिवित्तानि
चित्तमनिशंपरिखेदयंति ॥ चौरान्नृपात्स्वजनतश्चभयंजनानांशर्मेतिजातुनगुणःखलुबालिशस्य ॥ ३८॥ केचि
द्धनंनिदधतेभुविनोपभोगंकुर्वंतिलोभवशगानविदंतिकेचित् ॥ अन्येनगोपितमथान्यजनाहरंतितच्चेन्नदीप
रिसरेजलमेवहर्तृ ॥ ३९ ॥

लोकप्रसिद्धानिवित्तानिचित्तंपरिखेदयंति खलुप्रसिद्धं यतोलौकिकवित्तानांचोरादिभ्योभयमतोबालिशस्यविद्याहीनस्यमूर्खस्यसुखसंज्ञको
गुणःकदापिनास्ति ॥ ३८॥ किंचकेचिल्लोभवशवर्त्तिनोधनंभूमौस्थापयंतिनतूपभोगंकुर्वंति केचित्तुभूमौस्थापितंधनंभोगेच्छाकालेनैवलभंते
किंचअन्येनगोपितंअन्यजनाहरंतितद्धनंनद्याःपरिसरेतीरेगोपितंचेत्तर्हिजलमेवहर्तृ तथाचानेकदुःखसंमिश्रबाह्यवित्तंततोऽपेक्षयाविद्याधन
वत्त्वमेवश्रेष्ठमितिभावः ॥ ३९ ॥

किंचसर्वात्मनासर्वप्रकारेणदुहितरोगृहेनैवस्थापनीयाविपक्षेदोषमाह तादुहितरोविवाहात्पूर्वंस्वस्मादुद्गतंरजःपश्येयुःचेत्तदादुःखेषुघोरनरकेषुस्वपितरौपातयंतीतिधर्मशास्त्रं तथाचोक्तं पितृगृहेतुयाकन्यारजःपश्येदसंस्कृता भ्रूणहातत्पिताज्ञेयोवृषलीसाचकन्यकेति ॥ ४०॥ माभूदयंकलहःकुमारीपृच्छाव साममसुतायंवदतिसतस्यावरोभविष्यतिएवंसंकेतंविधायपितरावस्मात्स्थानात्कुमार्याःसमीपमीयतुःजग्मतुः गदितंकथितमिष्टकार्यंयाभ्यांतौ ॥ ४१ ॥ गत्वायदुक्तवंतौतद्दर्शयति श्रीविश्वरूपगुरुणाहिममित्रेणकन्यार्थिनौद्वौविप्रौप्रेषितौ हेसुतनुसुदेहे किंकर

सर्वात्मनादुहितरोनगृहेविधेयास्ताश्चेत्पुरापरिणयाद्रजउद्गतंस्यात् ॥ पश्येयुरात्मपितरौबतपातयंतिदुःखेषुघोरनरकेष्वितिधर्मशास्त्रं ॥ ४० ॥ माभूदयंममसुताकलहःकुमारींपृच्छावसावदतियंभवितावरोस्याः ॥ एवंविधायसमयंपितरौकुमार्याअभ्याशमीयतुरितोगदितेष्टकार्यौ॥ ४१॥श्रीविश्वरूपगुरुणाप्रहितौद्विजातौकन्यार्थिनौसुतनुकिंकरवाववाच्यं॥ तस्याःप्रमोदनिचयोनममौशरीरेरोमांचपूरमिषतोबहिरुज्जगाम॥ ४२॥ तेनैवसाप्रतिवचःप्रददौपितृभ्यांतेनैवतावपितयोर्युगलायसत्यं॥ आदायविप्रमपरंपितृगेहतोस्यास्तौजग्मतुर्द्विजवरौस्वनिकेतनाय॥ ४३॥

वाववाच्यंयदावाभ्यांकर्त्तव्यंतत्त्वयैववक्तव्यमित्यर्थः एवंस्वेष्टंश्रुतवत्यास्तस्याःशरीरेप्रमोदसमुदायोनममौकितुरोमांचव्याजेनबहिरुज्जगाम ॥ ४२ ॥ तेनैवरोमांचमिषेणबहिरुद्गतेनप्रमोदनिचयेनसाउभयभारतीपित्रेमात्रेचप्रत्युत्तरंप्रददौ पितरांवपितेनैवरोमांचमिषेणोद्गतेनप्रमोदनिचयेनतयोर्विप्रयोर्युगलायसत्यंप्रत्युत्तरंददतुरितिविपरिणामेनसंबंधस्तदनंतरमस्याःपितृगेहादन्यंविप्रमादायतौद्विजवरौस्वगृहायजग्मतुः ॥ ४३॥

गणितादिषुकुशलमेवकौशलमास्यंमुखंयस्याःसासरस्वतीअस्माद्वर्त्तमानदिनाच्चतुर्द्दशदिनेदशम्यांतिथौयामित्रनक्षत्रंलग्ननक्षत्राच्चतुर्दशमादि पंदाच्चंद्राल्लग्नतोवासप्तमंस्थानंगृह्यते तस्मिन्शुभानांचंद्रादीनांयोगस्तेनयुक्तोमुहूर्त्तोभविष्यतीत्येवंविलिख्यव्याख्यापरायलग्नपत्रव्याख्या नकर्त्रेस्वब्राह्मणायदिशतिस्मउपदिदेश ॥ ४४ ॥ विहितेष्टकार्यौदृष्टपुष्टमनसौतौविप्रावुत्तमंविश्वरूपगुरुंदृष्टवंतौ अथानंतरंप्रथितःप्रख्यातो नुभावःप्रभावोयस्यसविश्वरूपगुरुस्तयोर्मुखंदृष्ट्वैवसमीहितमभिलषितंसिद्धमितिनिश्चयंकृतवान् ॥४५॥ अन्योद्वाभ्यांइतरोविष्णुमित्रप्रेषितो

अस्माच्चतुर्दशदिनेभवितादशम्यांयामित्रभादिशुभयोगयुतोमुहूर्तः ॥ एवंविलिख्यगणितादिषुकौशलास्या व्याख्यापरायदिशतिस्मसरस्वतीसा ॥ ४४ ॥ तौदृष्टपुष्टमनसौविहितष्टकार्यौश्रीविश्वरूपगुरुमुत्तममैक्षिषातां॥ सिद्धंसमीहितमितिप्रथितानुभावोदृष्ट्वैवतन्मुखमसावथनिश्चिकाय ॥ ४५ ॥ अन्यःस्वहस्तगतपत्रमदापिपत्रं दृष्ट्वाजहाससुखवारिनिधौममज्ज ॥ विप्रान्यथोचितमपूपुजदागतांस्तान्नत्वांशुकादिभिरयंबहुवित्तलभ्यैः ॥ ॥ ४६ ॥ पित्रानुशिष्टवसुधासुरशंसितेनविज्ञापितःसुखमवापसविश्वरूपः ॥ कार्याण्यथाहपृथगात्मजनान्स मेतान्बंधुप्रियःपरिणयोचितसाधनाय ॥ ४७ ॥ मौहूर्तिकैर्बहुभिरत्यमुहूर्तकालेसंदर्शितेद्विजवरैर्बहुविद्भिरिष्टैः ॥ मांगल्यवस्तुसहितोऽखिलभूषणाढ्यःसम्प्रापदक्षततनुःपृथुशोणतीरं ॥ ४८ ॥

ब्राह्मणःस्वहस्तेस्थितंपत्रंदत्तवान् हिममित्रःपत्रंदृष्ट्वाजहाससुखसमुद्रेममज्ज आगतांस्तान्विप्रान्नत्वाऽयंहिममित्रोबहुवित्तलभ्यैर्वस्त्रादिभिर्य थायोग्यंपूजितवान् ॥ ४६ ॥ अनुशिक्षितब्राह्मणकथितेनपित्राहिममित्रेणप्रबोधितोविश्वरूपःसुखमवापाथानंतरंविवाहेयदुचितंतस्यसाध नायसमेतान्समागतान्बंधुप्रियोविश्वरूपःकार्याण्यवश्यकर्त्तव्यानिपृथक्पृथक्यथायोग्यंप्राह॥ ४७॥ मुहूर्त्तशास्त्रविद्भिर्बहुज्ञैर्बहुभिरिष्टैर्द्विज वैरागत्यसंदर्शितेमुहूर्त्तकालेमांगल्यवस्तुयुतःसकलभूषणसंपन्नोऽविकलदेहोविश्वरूपोविशालंशोणतीरंप्रापवान् ॥ ४८ ॥

शोणतीरमुपागतंबहुप्रकारयुक्तंजामातरंसविष्णुमित्रउपाश्रृणोत् श्रुत्वाचप्रत्युज्जगाम प्रियदर्शनेनमोदंचप्राप॥ ततोऽमुंजामातरंबहुवाद्यघोषैर्गृहंप्रवेशितवान् ॥४९॥ आसनंदत्वाकोमलंवचनमुदीर्यतस्मैविश्वरूपायपाद्यंददौ मधुपर्कसहितमर्घ्यंचामूल्यपात्रेददौ अहमियंतनयातेगृहागावोहिरण्यमखिलंभवदीयमित्युक्तवान् ॥५०॥ अद्यास्माकंकुलंपवित्रितंवयंचादृताःस्मविवाहव्याजात्संदर्शनंजातं नोचेद्बहुज्ञामणीर्भवान्काहंचक्वतथापिपुण्यकर्मणांकल्याणंविपाकात्पुमानुपयाति ॥ ५१॥ किंबहुनायद्यदत्रगृहेहेभगवन्तवाभिरोचतेतत्तदेतत्अखिलंभवदीयंनिवे

शोणस्यतीरमुपयातमुपाश्रृणोत्सजामातरंबहुविधंकिलविष्णुमित्रः॥ प्रत्युज्जगाममुमुदेप्रियदर्शनेनप्रावीविविशद्गृहममुंबहुवाद्यघोषैः॥ ४९ ॥ दत्वासनंमृदुवचःसमुदीर्यतस्मैपाद्यंददौसमधुपर्कमनर्घ्यपात्रे॥ अर्घ्यंददावहमियंतनयागृहास्तेगावोहिरण्यमखिलंभवदीयमूचे॥ ५०॥ अस्माकमद्यपवितंकुलमादृताःस्मःसंदर्शनंपरिणयव्यपदेशतोऽभूत्॥ नोचेद्भवान्बहुविदग्रसरःक्वचाहंभद्रेणभद्रमुपयातिपुमान्विपाकात्॥ ५१॥ यद्यद्गृहेऽत्रभगवन्निहरोचतेतेतत्तन्निवेद्यमखिलंभवदीयमेतत्॥ वक्ष्यामिसर्वमभिलाषपदंत्वदीयंयुक्तंहिसंततमुपासितवृद्धपूगे॥ ५२॥ एवंमिथःपरिनिगद्यविशेषमृद्व्यावाचायुतौमुदमवापतुरुत्तमांतौ॥ अन्येचसंमुमुदिरेप्रियसत्कथाभिःस्वेच्छाविहारहसनैरुभयेविधेयाः॥ ५३॥

द्यमेवेद्यमेवमुक्तवतंविष्णुमित्रंहिममित्रउवाचसर्वंत्वदीयमेवममापियदभिलाषास्पदंभविष्यतितद्वक्ष्यामि भवतात्वहमित्यादिनायदुक्तंतत्निरंतरमुपासितावृद्धसमूहायेनतस्मिन्त्वयियुक्तमेवेत्यर्थः ॥ ५२ ॥ विशेषेणकोमलयावाचायुक्तौतौविष्णुमित्रहिममित्रौएवंपरस्परमुक्त्वोत्तमांमुदमवापतुः अन्येचोभयेनियोज्याःप्रियसत्कथाभिःस्वेच्छाविहारहसनैःसम्यक्मोदंप्रापुः ॥ ५३॥

स्वभावसिद्धस्वरूपवेषौकन्यावरौदृष्ट्वातद्दर्शनासक्तचित्तत्वात्कर्तुमप्यसमर्थाअप्यवश्यंविधेयमितिक [illegible]
सरेशोभाविशेषंचविलंबमानाःकृतवंतइत्यर्थः ॥ ५४ ॥ आकल्पजातमपिभूषणनिचयोऽप्यतिशयंनकृतवान् तत्रहेतुरेतयोःकन्यावरयोःप्रभ
याकांत्याप्रतिहतआत्मविभूतिभावोयस्यतस्मात् नन्वेवंतर्हिकिमर्थंतावलंकृतवंतइतिचेत्तत्राह लोकप्रसिद्धिमनुसृत्येदमवश्यंविधेयमितिबुध्यो
भयेतयोर्भूषांव्यधुरलंकारंचक्रुर्नतुभूषणैरेतयोःकश्चिद्विशेषोभविष्यतीतिबुद्ध्या ॥ ५५ ॥ बहुज्ञाअपिज्योतिर्विदोमुहूर्त्तकालमक्षतधियंसखी

कन्यावरौप्रकृतिसिद्धस्वरूपवेषौदृष्ट्वोभयेपिपरिकर्मविलंबमानाः॥ चक्रुर्विधेयमितिकर्तुमनीश्वरास्तेशोभावि
शेषमपिमंगलवासरेऽस्मिन् ॥ ५४ ॥ एतत्प्रभाप्रतिहतात्मविभूतिभावादाकल्पजातमपिनातिशयंवितेने ॥
लोकप्रसिद्धिमनुसृत्यविधेयबुद्ध्याभूषांव्यधुस्तदुभयेनविशेषबुद्ध्या ॥ ५५॥ मौहूर्तिकाबहुविदोऽपिमुहूर्तकाल
मप्राक्षुरक्षतधियंखिलतांसखीभिः॥ पश्चात्तदुक्तशुभयोगयुतंशुभांशेमौहूर्तिकाःस्वमतितोजगृहुर्मुहूर्तं॥५६॥
जग्राहपाणिकमलंहिममित्रसूनुःश्रीविष्णुमित्रदुहितुःकरपल्लवेन ॥ भेरीमृदंगपटहाध्ययनाब्जघोषैर्दिङ्मंडले
सुपरिमूर्छतिदिव्यकाले॥ ५७॥ यंयंपदार्थमभिकामयतेपुमान्यस्तंतंप्रदायसमतूतुषतांतदीड्यौ ॥ देवद्रुमावि
वमहासुमनस्त्वयुक्तौसंभूषितौसदसिचेरतुरात्मलाभौ॥ ५८ ॥

भिःक्रीडंतीमुभयआरर्तापृष्टवंतःपश्चात्तयोक्तेशुभयोगयुक्तेशुभग्रहस्यनवांशेमौहूर्त्तिकाःस्वबुद्धितोमुहूर्त्तंजगृहुः॥५६॥ भेरीमृदंगपटहवेदाध्य
यनशंखघोषैर्दिङ्मंडलेसुपरिमूर्छतिसुष्टुव्याप्तेसतिहिममित्रसूनुर्विश्वरूपोहस्तकिसलयेनश्रीविष्णुमित्रकन्यायाःसरस्वत्याहस्तकमलमुक्तलक्ष
णेदिव्यकालेजग्राह ॥ ५७ ॥ योयःपुमान्यंयंपदार्थंप्रार्थयतेतस्मैतंतंपदार्थंप्रदायतदीड्यौतैःपुरुषैःस्तुत्यौतयोःकन्यावरयोरीड्यौपूज्यौपितरा
वितिवा परितोषमवापतुः कल्पवृक्षाविवबृहदुदारतायुक्तावलंकृतौग्रामकामौसभायांचेरतुः ॥ ५८ ॥

अथानंतरंस्वगृह्यसूत्रोक्तमार्गमनुसृत्यविश्वरूपोवह्निमाधायतत्रसम्यक्होमंकृतवान् चपुनर्वधूर्लाजान्भर्जितधान्यानिजुहाव तद्धूमंचजिघ्रति स्माथविश्वरूपोऽपिपश्चादग्निप्रदक्षिणंकृतवान् अपिशब्दादग्रेऽग्निप्रदक्षिणंकुर्वत्यातयासहसोऽपितथाकृतवानित्यर्थः ॥ ५९ ॥ होमांतेपरितो षिताविप्रश्रेष्ठायेनप्रस्थापिताःसर्वेसमागताःबंधुवर्गायेनसविश्वरूपोऽनयासरस्वत्यासहदीक्षाधरोऽग्निसंरक्ष्यहृष्टःसन्नग्निगृहेदिनचतुष्टयमुवास ॥ ६० ॥ अस्मिन्विश्वरूपेप्रियेवरेप्रस्थानंकुर्वतिसतिवरायाःकन्यायामातापिताचागत्यप्रोचतुः सावधानोभूत्वाशृणु बालास्तनंधयायथाकिं





आधायवह्निमथतत्रजुहावसम्यग्गृह्योक्तमार्गमनुसृत्यसविश्वरूपः ॥ लाजान्जुहावचवधूःपरिजिघ्रतिस्मधूमं प्रदक्षिणमथाकृतसोऽपिचाग्निं ॥ ५९ ॥ होमावसानपरितोषितविप्रवर्यःप्रस्थापिताखिलसमागतबंधुवर्गः ॥ संरक्ष्यवह्निमनयासममग्निगेहेदीक्षाधरोदिनचतुष्कमुवासहृष्टः ॥ ६० ॥ प्रतिष्ठमानेदयितेवरेऽस्मिन्नुपेत्य मातापितरौवरायाः ॥ आभाषिषातांशृणुसावधानोबालेवबालानतुवेत्तिकिंचित् ॥ ६१ ॥ बालैरियंक्रीडतिकंदु काद्यैर्जातक्षुधागेहमुपैतिदुःखात् ॥ एकेतिबालागृहकर्मनोक्तासंरक्षणीयानिजपुत्रितुल्या ॥ ६२ ॥ बालेयमं गवचनैर्मृदुभिर्विधेयाकार्यानरुक्षवचनैर्नकरोतिरुष्टा ॥ केचिन्मृदूक्तिवशगाविपरीतभावाःकेचिद्धिहातुमन लंप्रकृतिंजनोहि ॥ ६३ ॥

चिन्नजानाति तथेयंबालासुकुमारांगीअस्मत्पुत्रीनतुंकिंचिज्जानाति उ० ॥ ६१ ॥ इयंकंदुकाद्यैःक्रीडोपस्करैर्बालैःसहक्रीडति जातक्षुधा दुःखाद्गेहमायाति ननुभवद्भ्यांगृहकर्मणिकुतोनानुशिष्टेतिचेत्तत्राहतुरेकेतिकत्वेयंबालागृहकर्मनोक्तातस्मान्निजपुत्रितुल्यासम्यक्रक्षणीया इंद्र० ॥ ६२ ॥ किंतर्हिसर्वथैवगृहकर्मणिननियोक्तव्याचेत्तत्राहतुरंगेतिसंबोधनं इयंबालामृदुभिर्वचनैर्नियोज्याकर्त्तव्या नतुरुक्षवचनैर्य तस्तैःकुपितानकरोति ननुरुक्षवचनैर्नकरोतिचेत्कथंमृदुवचनैःकरिष्यतीतिचेत्प्रकृतिवैचित्र्यादित्याहतुः केचिन्मृदूक्तिवशवर्त्तिनःकेचिद्विपरी तस्वभावारुक्षोक्तिवशगाहियस्मात्स्वभावंत्यक्तुंकोपिजनःसमर्थोन भवति व० ॥ ६३ ॥ ॥ ७॥

नन्वेकापिकन्याबालैःसहक्रीडनस्वभावारुक्षवचनैरपियशोधनैःशिक्षणीयातत्कुतोभवद्भ्यांनशिक्षितेतिचेत्तत्राहतुः कदाचित्कोप्य[illegible]
ह्मणआगत्यास्यालक्षणमुद्वीक्ष्यउक्तवान्मानुष्यमात्रजननंवस्तुतोनिजदेवभावानिजंनित्यंदेवभावोदेवत्वंनित्योदेवस्वभावोवायस्याः निजंस्वी
येचनित्येच भावःसत्तास्वभावाभिप्रायचेष्टात्मजन्मस्विति मेदिनी इत्यस्मात्कारणात्अस्यांवोयुष्माकंउपवचनमयोज्यंयोजनीयंनभवति
॥६४॥ किंचास्यांसर्वज्ञतायालक्षणंपूर्णमस्ति किंच कदाचिदेषावादंकुर्वतोर्वादिनोःकथायांतयोःसाक्षित्वंप्राप्स्यतीत्येवमावामुपदिश्यासौवि

कश्चिद्द्विजातिरधिगम्यकदाचिदेनामुद्वीक्ष्यलक्षणमवोचदनिंदितात्मा॥ मानुष्यमात्रजननंनिजदेवभावेत्य
स्माच्चवोवचनमुग्रमयोज्यमस्यां॥ ६४॥ सर्वज्ञतालक्षणमस्तिपूर्णमेषाकदाचिद्वदतोःकथायां॥ तत्साक्षि
भावंव्रजितानवद्यासंदिश्यनावेवमसौजगाम ॥ ६५ ॥ श्वश्रूर्वरायावचनेनवाच्यास्नुषाभिरक्षायततेहित
स्यां॥निक्षेपभूतातवसुंदरीयंकार्यागृहेकर्मशनैःशनैस्ते॥६६॥बाल्येषुबाल्यात्सुलभोऽपराधःसनेक्षणीयोगृ
हिणीजनेन॥ वयंसुधीभूयहिसर्वएवपश्चाद्गुरुत्वंशनकैःप्रयाताः॥६७॥दृष्ट्वाभिधातुमनलंचमनोऽस्मदीयं
देहाभिरक्षणविधौनहिदृश्यतेऽन्यः॥ दृष्ट्वाभिधानफलमेवयथाभवेन्नौब्रूयात्तथेष्टजनताजननींवरस्य॥६८॥

प्रोजगाम इंद्र०॥६५॥ वरायाःदोषविमुक्तकन्यायाःश्वश्रूरस्मद्वचनेनवाच्यायतःस्नुषायाअभिरक्षायततेदधीनास्तितद्वचनंदर्शयति इयंसुंद
रीतवन्यासभूतातस्मात्त्वयेयंगृहेकर्मशनैःकर्त्तव्याशनैःशनैरनयाकर्मकारयितव्यमित्यर्थः उप० ॥६६॥ वयंसर्वेऽपिसुबुद्धिमंतोभूत्वापश्चाच्छनै
रुत्कृष्टतांप्राप्ताः ॥६७॥ ननुवरस्यजननींदृष्ट्वाभवद्भ्यांवक्तव्यमितिचेत्तत्राहतुः वरस्यजननींदृष्ट्वाऽभिधातुंअस्मदीयंमनःशक्तंनभवति हियस्मा
देहाभिरक्षणविधावन्योनदृश्यते यद्यप्येवंतथापिदृष्ट्वाकथनस्यफलमेवयथावयोर्भवेत्तथेष्टजनसमुदायोवरस्यमातरंब्रूयात् व० ॥ ६८ ॥

अथेदानींस्वपुत्रींशिक्षयतः वत्सेइत्यादिना हेवत्सेऽद्यत्वमपूर्वांदशांप्राप्तासि हेसुभ्रु तद्रक्षणेतस्याअपूर्वदशायाःरक्षणेनित्यंनिपुणधीर्भव जनसमू
होपहासयोग्यंबालतोव्यवहारंनकुर्याः यतःसेयंतेबालविहृतिरावयोरिवापरंनपरितोषयेदितिनकारस्यानुषंगेणयोज्यं काकावा ॥ ६९ ॥
॥ ८ ॥ किंच पाणिग्रहणाद्विवाहात्पूर्वंकुमार्याःपितरौस्वाधिपतीसमीरितौ तस्मात्पाणिग्रहादूर्ध्वंपतिःस्वाधिपतिःसमीरितः यस्मादेवंतस्मात्त्वंपतिमेकं
शरणंव्रज येनशरणगमनेनपत्यावालोकद्वयंजेष्यसि उप० ॥ ७० ॥ किंच हेसुंदरि पत्यावभुक्तवतिमाभुंक्ष्वभोजनंत्वयानकर्त्तव्यं प्रयातंदी

वत्सेत्वमद्यगमितासिदशामपूर्वांतद्रक्षणेनिपुणधीर्भवसुभ्रुनित्यं ॥ कुर्यान्नबालविहृतिंजनतोपहास्यांसा
नाविवापरमियंपरितोषयेत्ते ॥ ६९ ॥ पाणिग्रहात्स्वाधिपतीसमीरितौपुराकुमार्याःपितरौततःपरं ॥ पतिस्त्व
मेकंशरणंव्रजानिशंलोकद्वयंजेष्यसियेनदुर्जयं ॥ ७० ॥ पत्यावभुक्तवतिसुंदरिमास्मभुंक्ष्वयातेप्रयातमपि
मास्मभवेद्विभूषा ॥ पूर्वापरादिनियमोऽस्तिनिमज्जनादौवृद्धांगनाचरितमेवपरंप्रमाणं ॥ ७१ ॥ रुष्टेधवेसति
रुषेहनवाच्यमेकंक्षंतव्यमेवसकलंसतुशाम्यतीत्थं ॥ तस्मिन्प्रसन्नवदनेचकितेववत्सेसिध्यत्यभीष्टमनघे
क्षमयैवसर्वं ॥ ७२ ॥

र्घाध्वानंपत्यौगतेसतितवविशेषेणालंक्रियामाभवतु निमज्जनादौपूर्वापरादिनियमोऽस्ति आदिपदेभोजनादिकंग्राह्यं तत्रनिमज्जनादिकंपत्युःपू
र्वंभोजनादिकंतुपश्चात्कर्त्तव्यमत्रवृद्धांगनानामरुंधतीलोपामुद्रादीनांचरितमेवपरंप्रमाणं एतदेवतवसौंदर्यमितिसंबोधनाशयः व० ॥ ७१ ॥
किंच पत्यौकोपाविष्टेसतित्वयारोषेणैकमपिनवाच्यं एकमितिक्षंतव्यमित्यनेनवासंबंधनीयं केवलंक्षंतव्यमेव सत्वित्थमनेनप्रकारेणस्वयमेव
शाम्यति प्रसन्नेचतस्मिन् हेवत्सेचकितेवस्याः किंबहुना हेअनघे सर्वमभीष्टंक्षमयैवसिध्यति नचेतरथा ॥ ७२ ॥

 ३ ॥ ८

तद्वदनंपुरुषांतरमुखंसमीक्ष्यदृष्ट्वा एषःपरपूरुषोरहस्येकाति यतःपरपुरुषस्नेहाभाववत्यामपिस्त्रियामियंपरपु[illegible]आंतरस्ने
हंनाशयेत् ॥७३॥ यथाभिरुचिअभिरुचिमनतिक्रम्यपादावनेकःपादप्रक्षालनं हेसति जीवनमणुमात्रमपीहलोकेकंसुखंवा तेतवनोपेक्षणीयं
॥७४॥ धवेपत्यौपरोक्षेबहिर्गतेसति उप०॥७५॥ पित्रोरिवश्वशुरयोरनुसरणंत्वयाकार्यं तथासहजातेषुसहोदरेषुदेवरेष्वपि हेमृगाक्षिअनुवर्त्ति

भर्तुःसमक्षमपितद्वदनंसमीक्ष्यवाच्योनजातुसुभगेपरपूरुषस्ते ॥ किंवाच्यएषरहसीतितवोपदेशःशंकावधूपुरुषयोःक्षपयेद्धिहार्दं॥ ७३ ॥ आयातिभर्तरितुपुत्रिविहायकार्यमुत्थायशीघ्रमुदकेनपदावनेकः ॥ कार्योयथाभिरुचितेसतिजीवनंवानोपेक्षणीयमणुमात्रमपीहकंते॥७४॥ धवेपरोक्षेऽपिकदाचिदेयुर्गृहंतदीयाअपिवामहांतः॥तेपूजनीयाबहुमानपूर्वंनोचेन्निराशाःकुलदाहकाःस्युः॥७५॥ पित्रोरिवश्वशुरयोरनुवर्तितव्यंतद्वन्मृगाक्षिसहजेष्वपिदेवरेषु॥ तेस्नेहिनोहिकुपिताइतरेतरस्ययोगंविभिद्युरितिमेमनसिप्रतर्कः॥७६॥ हितोपदेशेविनिविष्टमानसौवधूवरौराजगृहंसमीयतुः॥ लब्धानुमानौगुरुबंधुवर्गतोबभूवसंज्ञोभयभारतीति॥ ७७॥ साभारतीदुर्वाससनेनदत्तंपुनःप्रसन्नेनपुरात्तहर्षा॥ शापावधिंसंसदिवत्स्यंतेयत्सर्वज्ञतानिर्वहणायसाक्ष्यं॥ ७८ ॥

तव्यं यतःकुपितास्तेस्नेहवतोप्यन्योन्यस्यसंयोगंविभिद्युःनाशयेयुरितिमेमनसिप्रतर्कः सहजेष्वपीत्यत्रसहजेष्विवेतिवापाठः ॥ व० ॥ ७६ ॥
हितोपदेशेविनिविष्टमानसंययोस्तौवधूवरौभारतीमंडनौगुरुबंधुवर्गतोलब्धानुमानौप्राप्तसत्कारौराजगृहंसमीयतुः समागतौबभूवेत्यादेरुत्तरेण
संबंधः ॥ उप० ॥ ७७ ॥ याउभयभारतीतिसंज्ञाबभूवसाभारतीसरस्वतीपुरापूर्वंपुनःप्रसन्नेनदुर्वाससादत्तंशापावधिंसभायांसाक्ष्यंयस्यशंकरस्यसर्वज्ञताख्यानिर्वाहायवत्स्यंतेकरिष्यति ॥ ७८ ॥

सभारतीसाक्षिकंसर्वविस्त्वंयस्यतथाभूतोऽपिश्रीशंकरःस्वीयशक्त्यास्वाधीनयांमाययाशिशुवद्विभातःसन्स्वशैशवस्यबालभावस्योचितंक्रीडो
पस्करणादिकमाकांक्षितवान् तत्रदृष्टांतोयथोदारचरितःप्रसिद्धःकेशवःश्रीकृष्णःस्वमाययाशिशुवद्विभातःसन्स्वशैशवस्योचितमन्वकांक्षीत्त
थेत्यर्थः॥ ७९ ॥ चपलाआशायस्मिन्नेवंभूतेऽपिशैशवेबाल्येस्थितवताभाविभूतंचयदिदंखलुलोकेऽस्तितदखिलमात्मनिविलुलोकेसम्यगवलो
कितंकर्मणिलिट् तत्रदृष्टांतोयथावटवृक्षस्यपलाशेपत्रेस्थितवताशार्ङ्गिणाश्रीविष्णुनायदिदंतदखिलंआत्मनिअवलोकितंतद्वदित्यर्थः स्वागताव

सभारतीसाक्षिकसर्वविक्त्वोप्यात्मीयशक्त्याशिशुवद्विभातः॥ स्वशैशवस्योचितमन्वकांक्षीत्सकेशवोयद्वदु
दारवृत्तः॥ ७९ ॥ शैशवेस्थितवताचपलाशेशार्ङ्गिणेववटवृक्षपलाशे॥ आत्मनीदमखिलंविलुलोकेभावि
भूतमपियत्खलुलोके॥ ८० ॥ तंददर्शजनताद्भुतबालंलीलयाधिगतनूतनदोलं ॥ वासुदेवमिववामनली
लंलोचनैरनिमिषैरनुवेलं ॥ ८१ ॥ कोमलेननवनीरदराजिश्यामलेननितरांसमराजि ॥ केशपाशतमसा
धिकमस्यकेशवेशचतुरास्यसमस्य॥ ८२ ॥

त्तं स्वागतेतिरनभाद्गुरुयुग्ममितिलक्षणात्॥ ८० ॥लीलयाधिगतःप्राप्तोदोलोयेन वामनाकमनीयालीलायस्यतमद्भुतबालंश्रीशंकरंनिमेषोज्झितै
नेत्रैरनुवेलमनिशंजनसमूहोददर्श लीलयाधिगतदोलंवामनलीलमद्भुतबालंश्रीकृष्णमिव॥ ८१ ॥ केशवश्चईशश्चचतुरास्यश्चतैर्विष्णुशिववि ॥ १ ॥
धिभिःसमस्यतुल्यस्यास्यश्रीशंकरस्यकेशपाशतमसाअधिकंयथास्यात्तथासमराजिसम्यक्शोभितं तद्विशिनष्टि कोमलेनपुनश्चनवनीरदा
नांनवीनजलदानांयाराजिःपंक्तिस्तद्वत्श्यामलेनातिश्यामेनेत्यर्थः ॥ ८२ ॥

शाक्याबौद्धाः क्षपणकादिगंबराःसर्वैःशाक्यादिदुर्वादिभिःखलुप्रसिद्धंखिलमुच्छिन्नंवादकमार्गं [illegible]
तांभद्रंसर्वानर्थनिवृत्तिपुरस्सरपरमानंदप्राप्तिलक्षणमोक्षाख्यंकल्याणंकरोतीतिभद्रंकरः अन्वर्थसंज्ञःश्रीशंकरःक्रीडतस्म ॥ शार्दूल० ॥ ८३ ॥

शाक्यैःपाशुपतैरपिक्षपणकैःकापालिकैर्वैष्णवैरप्यन्यैरखिलैःखलैःखलुखिलंदुर्वादिभिर्वैदिकं॥ पंथानंप
रिरक्षितुंक्षितितलंप्राप्तःपरिक्रीडते घोरेसंसृतिकाननेविचरतांभद्रंकरःशंकरः ॥ ८३ ॥ इतिश्रीमाधवी
येतत्तद्देवावतारार्थकःसंक्षेपशंकरजयेतृतीयःसर्गः॥ ३॥ मूलसंख्या॥ १२६॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेश्रीमच्छंकराचार्यविजयडिंडि
मेतृतीयःसर्गः ॥ ३ ॥ संख्या ॥ २२५ ॥

प्राकृतशिशुविलक्षणंतस्यचरितंदर्शयितुमुपक्रमते अथेति शिवोनिजमाययामनुष्यःसन्विप्रगृहेद्विजस्यशिवगुरोःप्रीतिंसंपादयन्प्रथमवर्षएव सर्वमक्षरंनिजभाषांचसम्यग्गृहीतवान् द्रुतविलंबितमाहनभौभरौवसुयुगविरतिः ॥ १॥ ततोद्वितीयवर्षएवसबालकःसुबुद्धित्वादक्षरज्ञोलिखिताक्षरमुच्चारयितुंसमर्थोऽभूत् अथानंतरंतृतीयवर्षेसशिशुःकाव्यानिपुराणानिचश्रुतवान् किमपिश्रवणंविनास्वयमेवज्ञातवान् ॥ २ ॥ असौ शिशुर्गुरोर्दुःखकरोनाभूत् यतःसकृदेवश्रवणात्परिग्रहणशीलः सहाध्यायिजनस्यस्वयंगुरुः सचश्रवणादनंतरंगुरुणाविना पपाठ ॥ ३ ॥

श्री० अथचतुर्थसर्गः॥ अथशिवोमनुजोनिजमाययाद्विजगृहेद्विजमोदमुपावहन्॥प्रथमहायनएवसमग्रहीत्सकलवर्णमसौनिजभाषिकां॥१॥द्विसमएवशिशुर्लिखिताक्षरंगदितुमक्षमताक्षरवित्सुधीः॥अथसकाव्यपुराणमुपाशृणोत्स्वयमवैत्किमपिश्रवणंविना॥२॥अजनिदुःखकरोनगुरोरसौश्रवणतःसकृदेवपरिग्रही॥ सहनिपाठजनस्यगुरुःस्वयंसचपपाठततोगुरुणाविना ॥ ३॥ रजसातमसाप्यनाश्रितोरजसाखेलनकालएवहि॥सकलाधरसत्तमात्मजःसकलाश्चापिलिपीरविंदत ॥ ४ ॥ सुधियोस्यविदिद्युतेऽधिकंविधिवच्चौलविधानसंस्कृतं॥ ललितंकरणंघृताहुतिज्वलितंतेजइवाशुशुक्षणेः॥५॥

रजोगुणेनतमोगुणेनचानाश्रितोधूल्याखेलनकालएवहिप्रसिद्धंसशिशुःकलाधरेभ्यःश्रेष्ठस्यसुतःसर्वाअपिलिपीर्ज्ञातवान् ॥ वियो० ॥ ४ ॥ अस्यसुधियःश्रीशंकरस्यविधिवच्चूडाकर्मणोविधानेनसंस्कृतंसुंदरंकरणंगात्रंशरीरं करणंसाधकतमंक्षेत्रगात्रेंद्रियेष्वपीत्यमरः विदिद्युतेविशेषेणशुशुभे घृतस्य आहुतिभिर्ज्वलितमग्नेस्तेजइव ॥ ५

उपपादनेनिर्व्यपेक्षाऽपेक्षारहिताधीर्यस्यसश्रीशंकरःभूप्रभृतिव्याह्नतिपूर्वकान्वेदानूपपाठ किंचाऽधिकाव्यमरंस्त काव्येतुक्रीडांकृतवान् अपिचकर्कशेऽतिकठिनेऽपितर्कनयेयेऽधिकास्तानतिक्रांतवान् ॥ ६ ॥ नैजायाःस्वकीयायावाचोवैभवेनोत्सारितादूरीकृतावादिनोयैस्तेबुधाःपंडितावादजल्पवितंडासुकथासुप्रभवःसमर्थाअपिदेवानांपूज्यस्यगुरोर्वाचस्पतेश्चातुरींहरतस्तस्यशिवगुरोःकुमारस्यसम्मुखेवक्तुंप्रभवोनबभूवुरित्यर्थः ॥ ७ ॥ किंचसर्पाधीशस्यशेषस्यकथायाअप्यवधीरिर्णांतिरस्करिणीममुष्यक्रमेणोच्चारणस्यपरिपाटींश्रुत्वावादिनोमुमुहुःमोहंप्रापुःयतःप्रतिवचनस्यव्याह्नतौप्रमादवंतः ॥ ८ ॥ प्रख्यातेनबुद्धिमतातेनश्रीशंकरेणकानिकुमतानिनोन्मथितान्यपितुसर्वाण्येवोन्मथितानि तेनखं

उपपादननिर्व्यपेक्षधीःसपपाठाह्नतिपूर्वकागमान् ॥ अधिकाव्यमरंस्तकर्कशेप्यधिकांस्तर्कनयेत्यवर्तत ॥ ६ ॥
हरतस्त्रिदशेज्यचातुरींपुरतस्तस्यनवक्तुमीश्वराः ॥ प्रभवोपिकथासुनैजवाग्विभवोत्सारितवादिनोबुधाः ॥ ७ ॥
अमुकक्रमिकोक्तिधोरर्णीमुरगाधीशकथावधीरिर्णीं ॥ मुमुहुर्निशमय्यवादिनःप्रतिवाक्योपह्नतौप्रमादिनः ॥
॥ ८ ॥ कुमतानिचतेनकानिनोन्मथितानिप्रथितेनधीमता ॥ स्वमतान्यपितेनखंडितान्यतियत्नैरपिसाधितानिकैः ॥ ९ ॥ अमुनातनयेनभूपितंयमुनाताससमानवर्चसा ॥ तुलयारहितंनिजंकुलंकलयामाससपुत्रिणांवरः ॥ १० ॥ शिवगुरुःसजरन्त्रिसमेशिशावम्रतकर्मवशःसुतमोदितः ॥ उपनिनीषितसूनुरपिस्वयंनहियमोऽस्यकृताकृतमीक्षते ॥ ११ ॥

डितानिस्वमतान्यतिप्रयत्नैरपिकैःसाधितानिनकैरपीत्यर्थः ॥ ९ ॥ सपुत्रवतांमध्येश्रेष्ठःशिवगुरुःस्वीयंकुलंयमुनातातेनसूर्येणसमानंवर्चस्तेजोयस्यतेनामुनापुत्रेणालंकृतं तुलयोपमयारहितंकलयामासचकारददर्शेतिवा ॥ १० ॥ सशिवगुरुःसुतेनमोदंप्रापितःस्वयमुपनिनीषितउपनयंकर्त्तुमिच्छितःसूनुर्येनतथाभूतोऽपिजरांगच्छन्शिशौत्रिहायनेसतिकर्माधीनःअम्रतम्रतः हियस्मादस्यजंतोःकृताकृतमिदमनेनकृतमिदमनेनाकृतमितियमोनपश्यति ॥ द्रुत० ॥ ११ ॥

अस्मिन्संसारेसुतस्येक्षणंसुलभंनभवति सुतविभवस्येक्षणंतुसुतरांसुलभंनभवति इत्यस्मिन्नर्थेशिवगुरुरेवनिदर्शनंइत्याशयेनाहेहेति अयंद्विजःसु तंकथंचिदवाप परंतुसुतस्यवैभवंद्रष्टुंसमर्थोनैवाभूत् ॥ १२ ॥ तदनंतरमस्यशंकरस्यपितरंशिशोर्जननीस्वसपिंडैरदीदहत् ततोधवेनपत्याखंडि तांरहितांसतींस्वजनताम्रृंतिशोकहरैःपदैःतामत्यंतसंवासःकस्यचित्केनचित्क्वचिदपिस्वेनशरीरेणनकिंमुतान्यैःपृथग्जनैरित्यादिभिःसमाश्वासि तवती ॥ १३ ॥ मृतस्ययद्विहितंस्वेनकर्तुंशक्यंतत्स्वयंकृतवती यत्रासमर्थातत्स्वजनैरप्यसौसतीकारितवती किंच संवत्सरदीक्षांपरिसमाप्य

इहभवेत्सुलभंनसुतेक्षणंनसुतरांसुलभंविभवेक्षणं ॥ सुतमवापकथंचिदयंद्विजोनखलुवीक्षितुमैष्टसुतोदयं ॥ ॥१२॥ मृतमदीदहदात्मसनाभिभिःपितरमस्यशिशोर्जननीततः॥ समनुनीतवतीधवखंडितांस्वजनताम्रृतिशो कहरैःपदैः॥१३॥कृतवतीमृतचोदितमक्षमानिजजनैरपिकारितवत्यसौ॥ उपनिनीषुरभूत्सुतमात्मनःपरिसमा प्यचवत्सरदीक्षणं॥१४॥उपनयंकिलपंचमवत्सरेप्रवरयोगयुतेसुमुहूर्तके॥ द्विजवधूर्नियताजननीशिशोर्व्यधि ततुष्टमनाःसहबंधुभिः॥१५॥ अधिजगेनिगमांश्चतुरोऽपिसक्रमतएवगुरोःसषडंगकान्॥ अजनिविस्मितमत्र महामतौद्विजसुतेऽल्पतनौजनतामनः॥१६॥ सहनिपाठयुतावटवःसमंपठितुमैशतनद्विजसूनुना॥ अपिगुरुर्वि शयंप्रतिपेदिवान्कइवपाठयितुंसहसाक्षमः॥ १७॥

स्वस्यसुतमुपनिनीषुरभूत् ॥ १४ ॥ प्रवरयोगयुतेश्रेष्ठयोगयुक्तेनियतानियमयुक्ताउपनयंव्यधितकृतवती ॥ १५ ॥ शिक्षादिभिःषड्भिरंगैःसहि तान्चतुरोऽपिवेदान्क्रमेणसगुरोःसकाशादधिजगेऽध्ययनेनअवाप अत्रास्मिन्द्विजसुतेऽल्पशरीरेमहामतौसति जनतायाह्रदयंविस्मितमजाय त अत्रास्मिन्लोकइतिवा ॥ १६ ॥ सहनिपाठःसहाध्ययनंतेनयुक्तावटवोद्विजपुत्रेणसहपठितुंसमर्थानाभूवन् किंचसहसापाठयितुंकःसम र्थइतिसंशयंगुरुरपिप्राप्तवानिव ॥ १७ ॥

योद्वित्रिमासपठनात्तत्रतत्रशास्त्रेगुरुणातुल्यविद्योऽभवत्सगुरुमनुसृतोयत्सर्वानागमगणान्शिक्षितवानत्रकिंचित्रंनकिमपीत्यर्थः स्वागता० ॥ १८ ॥ वेदेब्रह्मसमश्चतुर्मुखतुल्यःआसीत् वेदांगसमुदायेशिक्षादौगार्ग्यसदृशआसीत् वेदतदंगकथातात्पर्यविवेचनेवाचस्पतितुल्यआसीत् वेदोक्तकर्मसंवर्णनेजैमिनिरेवआसीत् वेदवचनजन्यतत्त्वज्ञानस्यमूलेव्यासेनैवतुल्यः किंचसमूर्त्तिमान्नवीनोव्यासइववाणीविलासैर्वृतःसंयुतआसीत् ॥ शार्दू० ॥ १९ ॥ आन्वीक्षिकीतर्कविद्यातेनैक्षिसम्यगीक्षिता कापिलेतंत्रेकपिलप्रणीतेसांख्यशास्त्रेअनुपमाकापिपरिचितिःप



अत्रकिंसयदशिक्षतसर्वांश्चित्रमागमगणाननुवृत्तः ॥ द्वित्रिमासपठनादभवद्यस्तत्रतत्रगुरुणासमविद्यः ॥ ॥१८॥वेदेब्रह्मसमस्तदंगनिचयेगार्ग्योपमस्तत्कथातात्पर्यार्थविवेचनेगुरुसमस्तत्कर्मसंवर्णने॥आसीज्जैमिनिरेवतद्वचनजप्रोद्बोधकंदेसमोव्यासेनैवसमूर्तिमानिवनवोवाणीविलासैर्वृतः ॥ १९ ॥ आन्वीक्षिक्यैक्षितंत्रेपरिचितिरतुलाकापिलेकापिलेऽभेपीतंपातंजलांभःपरमपिविदितंभाट्टघट्टार्थतत्वं ॥ यत्नैःसौख्यंतदस्यांतरभवदमलाद्वैतविद्यासुखेऽस्मिन्कूपेपयोर्थःसतीर्थेसुपयसिविततेहंतनांतर्भवेत्किं ॥ २० ॥

रिचयोलेभे कर्मणिलिट् तेनलब्धेत्यर्थः पतंजलिप्रणीतशास्त्रात्मकंजलंतेनपीतं भाट्टस्यभट्टपादप्रणीतस्यवार्त्तिकस्यघट्टानांप्रघट्टकानां अर्थस्य तत्वंपरमपितेनविदितंपरपपीत्यस्यपूर्वेणवासंबंधः किंचयत्नैःतर्कशास्त्रादिभिःसुखंतदस्यश्रीशंकरस्यामलंचतदद्वैतंचतस्ययाविद्याअमलाचासावद्वैतविद्येतिवा तस्याःसुखेऽस्मिन्नपरोक्षेंतरभवत् कूपेपयोजलपानादिरूपोर्थःसशोभनंजलेविस्तृतेगंगादौतीर्थेकिमंतर्नभवेदपितुभवेदेव तथाचस्मृतिः यावानर्थउदपानेसर्वतःसंप्लुतोदके तावान्सर्वेषुवेदेषुब्राह्मणस्यविजानतइति स्र० ॥ २० ॥

एवंभूतः सभगवान्शंकरः गुरोः कुलेवसन्कदाचिद्भैक्ष्यप्राप्तीच्छयावयस्यैः सहधनहीनस्यकस्यचिद्विप्रस्यगृहंप्रविष्टवान् वियो॥ २१ ॥ येभ
वादृशेषुवरिवस्यांपरिचर्यांप्रतिपादयंतितेकृतिनः कृतार्थाः येपुण्यवंतः तेभवादृशेषुवरिवस्यांप्रतिपादयंतिइतिवा ॥ २२ ॥ वयंतुदैवेनवंचिताय
तोऽकिंचनत्वात्भैक्ष्यमपिबटवेदातुंनशक्नुमः ॥ २३ ॥ इत्येवंदीनंकथयंत्यसौगृहस्थस्यकुटुंबिनीव्रतिचंद्रायश्रीशंकरायामलकंप्रकर्षेणभक्ति
पूर्वकंददौ तदीयंकरुणंवचनंश्रुत्वाज्ञाननिधिः सोपिदयार्द्रबुद्धिरभवत् ॥ २४ ॥ समुनिः श्रीशंकरः पदचित्रैर्नवनीतवत्कोमलैर्मधुरैः स्तवैर्मुराख्या

सहिजातुगुरोः कुलेवसन्सवयोभिः सहभैक्ष्यलिप्सया ॥ भगवान्भवनंद्विजन्मनोधनहीनस्यविवेशकस्यचित् ॥
॥ २१ ॥ तमवोचततत्रसादरंवटुवर्यंगृहिणः कुटुंबिनी ॥ कृतिनोहिभवादृशेपुयेवरिवस्यांप्रतिपादयंतिते ॥ २२ ॥
विधिनाखलुवंचितावयंवितरीतुंवटवेनशक्नुमः ॥ अपिभैक्ष्यमकिंचनत्वतोधिगिदंजन्मनिरर्थकंगतं ॥ २३ ॥
इतिदीनमुदीरयंत्यसौप्रददावामलकंव्रतींदवे ॥ करुणंवचनंनिशम्यसोप्यभवज्ज्ञाननिधिर्दयार्द्रधीः ॥ २४ ॥ स
मुनिर्मुरभित्कुटुंबिनींपदचित्रैर्नवनीतकोमलैः ॥ मधुरैरुपतस्थिवांस्तवैर्द्विजदारिद्र्यदशानिवृत्तये ॥ २५ ॥ अथकै
टभजित्कुटुंबिनीतडिदुद्दामनिजांगकांतिभिः ॥ सकलाश्चदिशः प्रकाशयंत्यचिरादाविरभूत्तदग्रतः ॥ २६ ॥ अ
भिवंद्यसुरेंद्रवंदितंपदयुग्मंपुरतः कृतांजलिं ॥ ललितस्तुतिभिः प्रहर्षितातमुवाचस्मितपूर्वकंवचः ॥ २७ ॥

सुरविदारकस्यविष्णोः कुटुंबिनींलक्ष्मींद्विजदारिद्र्यदशानिवृत्तयेउपासितवान् ॥ २५ ॥ अथानंतरंकैटभाख्यासुरजितोविष्णोः कुटुंबिनीविद्यु
दुद्दामभिः स्वनेत्राभिः स्वांगानांकांतिभिर्वा सकलाअपिदिशः प्रकाशयंतीसद्यः श्रीशंकरायेप्रादुरभूत् ॥ २६ ॥ देवेंद्रवंदितंपदद्वंद्वंअभिवंद्यकृतांज
लिपुरतः स्थितंश्रीशंकरंललितस्तुतिभिः प्रहर्षंप्राप्तास्मितपूर्वकंवचनमुवाच ॥ २७ ॥

 पुराभवेपूर्वजन्मनि मदपांगस्यमदीयकृपाकटाक्षस्यपात्रतालक्षणांपूज्यतां ॥२८॥ इतितद्वचनंश्रुत्वासउवाच हेऽबयद्यप्येवंतथाप्ययेदमाम 
 लकाख्यंफलंमय्यर्पितंतस्यफलंददस्व हेइंदिरेयद्यहंतवानुकंप्यः॥ २९ ॥ अमुनातथाभूतेनवचनेनश्रीशंकरेणवातोषितालक्ष्मीःसुवर्णामलकैः
समंतात्द्विजगृहमपूरयत् जनसमुदायस्यहृदयंचविस्मयैरपूरयत् ॥ ३० ॥ अथचक्रधरस्यविष्णोर्वधूमयेपुण्येऽतर्धानंगतेसति तथाभूतंमहिमा 
नमवेक्ष्यविस्मयंप्राप्ताःजनाःश्रीशंकरमत्यंतंप्रशशंसुः ॥ ३१ ॥ स्वर्गेकल्पवृक्षोयथातथाभूमौकल्याणगुणःशंकरःइष्टानियानिश्रेष्ठानिवस्तूनि

विदितंतववत्सहृद्गतंकृतमेभिर्नपुराभवेशुभं॥ अधुनामदपांगपात्रतांकथमेतेमहितामवाप्नुयुः॥ २८॥ इतित
द्वचनंहिशुश्रुवान्निजगादांबमयीदमर्पितं॥ फलमघदद्स्वतत्फलंदयनीयोयदितेऽहमिंदिरे॥ २९॥अमुनावचने
नतोपिताकमलातद्भवनंसमंततः॥ कनकामलकैरपूरयज्जनतायाहृदयंचविस्मयैः॥३०॥अथचक्रभृतोवधूम
येसुकृतेंतर्द्धिमुपागतेसति॥ प्रशशंसुरतीवशंकरंमहिमानंतमवेक्ष्यविस्मिताः॥ ३१ ॥ दिविकल्पतरुर्यथातथा
भुविकल्याणगुणोहिशंकरः॥ सुरभूसुरयोरपिप्रियःसमभूदिष्टविशिष्टवस्तुदः॥ ३२ ॥ अमरस्पृहणीयसंपदंद्वि
जवर्यस्यनिवेशमात्मवान्॥ सविधाययथापुरंगुरोःसविधशास्त्रवराण्यशिक्षत ॥ ३३ ॥ वरमेनमवाप्यभेजिरे
परभागंसकलाःकलाअपि॥ समवाप्यनिजोचितंपतिंकमनीयाइववामलोचनाः॥ ३४॥

तानिददातीतितथाभूतःसमभूत् किंच सतुदेवप्रियोऽयंतुदेवस्यविप्रस्यचप्रियः॥ ३२ ॥ एवमप्राकृतंतच्चरितमुपवर्ण्योपसंहरति अमरैर्देवैःप्रार्थ
नीयासंपद्यस्मिन्नेतादृशंद्विजश्रेष्ठस्यगृहंविधायसआत्मवान्यथापूर्वंगुरोःसविधेसमीपेशास्त्रवराण्यशिक्षत॥ ३ ३॥वामलोचनाःकपटदृष्टयःस्त्रि 
यःकमनीयाःसुंदर्यःस्वोचितंपतिंप्राप्ययथापरंभागंभाग्यंप्राप्नुवंति तथासर्वाःकलाअपिएनंश्रीशंकरंवरंप्राप्यपरंभाग्यंप्रापुरित्यर्थः ॥३४॥

सरहस्यंसमंयथास्यात्तथाशिक्षिताअखिलाविद्यायेन तथाभूतस्ययशस्विनःश्रीशंकरस्यवपुःशरीरंउपमानकथायाःप्रसंगमप्यसहिष्णुअपूर्वांशोभांप्राप्नवत् ॥ ३५ ॥ अथश्रीशंकरस्यपादाद्यवयवंवर्णयिष्यन्नादौतदीयपदयुग्मंवर्णयति जयतिस्मेत्यादिना सरोरुहस्यकमलस्ययःप्रभामदस्तस्ययाकुंठीकरणंक्रियातयावित्तंप्रतीतं तेनवित्तश्चुंचुप्चणपाविनिसूत्रेणचणप्प्रत्ययः यतोद्विजराजस्यचंद्रस्यकरैःकिरणैःद्विजराजानांविप्राणांहस्तैश्चोपलालितंपरेषांवादिनांगर्वहर्तुंशीलमस्यास्तीतितथातस्यचरणयुग्मंजयतिस्म ॥ ३६ ॥ यदिजलंइंदुर्मणिचंद्रकांतमणिस्र

सरहस्यसमग्रशिक्षिताखिलविद्यस्ययशस्विनोवपुः ॥ उपमानकथाप्रसंगमप्यसहिष्णुश्रियमन्वपद्यत ॥
॥ ३५॥ जयतिस्मसरोरुहप्रभामदकुंठीकरणक्रियाचणं॥ द्विजराजकरोपलालितंपदयुग्मंपरगर्वहारिणः॥
॥ ३६॥ जलमिंदुमणिस्रवेद्यदियदिपद्मंदृपदस्ततःसरः ॥ यदितत्रभवेत्कुशेशयंतदमुष्यांघ्रितुलामवाप्नुयात् ॥ ३७॥ पादौपद्मसमौवदंतिकतिचिच्छ्रीशंकरस्यानघौवक्त्रंचद्विजराजमंडलनिभंनैतद्द्वयंसांप्रतं ॥ प्रेष्यःपद्मपदःकिलत्रिजगतिख्यातःपदंदत्तवानंभोजेद्विजराजमंडलशतैःप्रेष्यैरुपास्यंमुखं ॥ ३८ ॥

वेद्यदिचदृपदःकमलंभवेत् यदिचतस्मात्कमलात्सरस्तडागोभवेद्यदिचतस्मिन्सरसिकुशेशयंभवेत् तदातत्कमलंअमुष्यपादसादृश्यंप्राप्नुयात् संभावनंयदीत्थंस्यादित्यूहोन्यस्यसिद्धये ॥ ३७ ॥ केचिच्छ्रीशंकरस्यानघौपादौपद्मसमौवदंति मुखंचचंद्रमंडलसमंवदंति नैतद्द्वयंन्याय्यंयतःप्रेष्योऽनुचरोजगतिख्यातःपद्मपादःपद्मेपदंदत्तवान् यथामुखंब्राह्मणलक्षणचंद्रमंडलशतैःप्रेष्यैरुपास्यं अत्रनैतदित्यादिनोपमित्यनिष्पत्तेरुद्घाटनात्प्रतीपालंकारः वर्ण्येनान्यस्योपमायाअनिष्पत्तिवचश्चतदित्युक्तेः ॥ शार्दू० ॥ ३८ ॥

श्रीशंकरपादवदनयोःपद्मेंदुभ्यामुत्कृष्टतांप्रकारांतरेणदर्शयति मुहुरिति संतोयोगींद्राःस्वीयंहृदयकमलंनिर्मलतरंविधातुमस्मिन्नूहृदयकमलेश्री शंकरस्यपदकमलंनिदधतिस्थापयंति यद्यस्माच्चेंद्राद्यैर्दुरापांदुःप्रापांब्रह्मलक्षणांनव्यांसुधांमुखमुद्गिरतिउद्वमति यत्यस्येतिवा ततस्तस्मात्प द्मात्पदंचंद्राच्चमुखमुत्कृष्टंमन्ये ॥ शिख० ॥ ३९ ॥ तत्वज्ञानलक्षणंफलंगृह्णातीतितत्वज्ञानफलेग्रहिःफलेग्रहिरात्मंभरिश्चेत्युपपदस्येदंतत्वंग्रहे रिन्प्रत्ययश्चनिपात्यते पुनश्चघनतरोयोव्यामोहोऽकर्त्रात्मास्फुरणरूपस्तंमुष्ट्यानिष्पीड्यधयतिपिबतीतितथापुनश्चनिःशेषैर्व्यसनैर्भक्तानांसम

मुहुःसंतोनैजंहृदयकमलंनिर्मलतरंविधातुंयोगींद्राःपदकमलमस्मिन्निदधति ॥ दुरापांशक्राद्यैर्व
मतिवदनंयन्नवसुधांततोमन्येपद्मात्पदमधिकमिंदोश्चवदनं॥ ३९ ॥ तत्वज्ञानफलेग्रहिर्घनतरव्या
मोहमुष्टिंधयोनिःशेषव्यसनोदरंभरिरघप्राग्भारकूलंकषः ॥ लुंटाकोमदमत्सरादिविततेस्तापत्र
यारुंतुदःपादःस्यादमितंपचःकरुणयाभद्रंकरःशांकरः॥ ४० ॥

स्तदुःखैरुदरंबिभर्त्तीतितथासर्वव्यसनभक्षकःपुनश्चतेषामघस्यपापस्ययःप्राग्भारोऽतिशयस्तस्यकूलंतटंकषतिनाशयतीतितथाभूतनदीवत्मू लोन्मूलकःपुनश्चमदमत्सरदंभादिपंक्तेर्लुंटाकःअपहारकः तापानामाध्यात्मिकाधिदैविकाधिभौतिकानांत्रयंतस्यारुंतुदोमर्मस्पृक्विनाशकःत थामितंपचतीतिमितंपचःकदर्यः कदर्येकृपणक्षुद्रकिंपचानमितंपचाइत्यमरस्तद्विलक्षणोऽमितंपचोऽत्युदारःएवंविधःशांकरःपादःकल्याणकरः स्यात् ॥ शार्दूल० ॥ ४० ॥

यमकिंकरेभ्योमार्कंडेयस्यरक्षणसमयेपदाघातेनवामचरणप्रहारेणयःस्फोटस्तस्यव्रणेनकिणितौचिह्नितौकार्त्तांतिकौकृतांतस्ययमस्यसंबंधि
नौभुजौयेनतत्प्रघाणोद्वारबाह्यप्रकोष्टअगारैकदेशेप्रघाणःप्राघाणश्चेतिप्रघाणशब्दनिपातनात्व्युत्पत्तिस्तुप्रविशद्भिःजनैःपादैःप्रकर्षेणहन्यतइ
तिबोध्यतेतेनयोव्याघातःपादप्रहारःतेनप्रणतस्यदीर्घनमस्कारवत्प्रकर्षेणनतस्यनम्रीभूतस्ययेबाह्याभ्यंतराविमताःशत्रवस्तेषांद्रोहइतिविरुदःप्र
ख्यातिकरंनामधेयंयस्यबिरुदशब्दोदेशीयशब्दः तत्परंब्रह्मैवासौश्रीशंकरोभवतिततस्तस्मादेवास्यसुपदंशोभनंचरणंजगत्यद्यापिमहतोऽक्षुद्रस्व
भावानुगताय अज्ञाननिवृत्तयेशरणंप्राप्तायस्माराख्यास्मरसंबंधिनीयाआर्त्तिःयेभ्यस्तथाभूतान्कुरुते ॥ शि० ॥ ४१ ॥ नव्यमभ्युदयंप्राप्तस्य

पदाघातस्फोटव्रणकिणितकार्तांतिकभुजंप्रघाणव्याघातप्रणतविमतद्रोहबिरुदं॥परंब्रह्मैवासौभवतिततएवा
स्यसुपदंगतायस्मारार्तीन्जगतिमहतोद्यापितनुते ॥ ४१ ॥ प्राप्तस्याभ्युदयंनवंकलयतःसारस्वतोज्जृंभणंस्वा
लोकेनविधूतविश्वतिमिरस्यासन्नतारस्यच ॥ तापंनस्त्वरितंक्षिपंतिघनतापन्नंप्रसन्नामुनेराल्हादंचकलाधर
स्यमधुराःकुर्वंतिपादक्रमाः॥ ४२॥

सारस्वतंसामुद्रमुज्जृंभणमुल्लासंकुर्वतःस्वीयप्रकाशेनविधूतंविश्वस्यतिमिरंयेनतस्यासन्नाःसन्निधिप्राप्तास्तारायस्यतस्यकलाधरस्यषोडशकल
स्यचंद्रस्यपादक्रमाःकिरणप्रचाराःप्रसन्नाःस्वच्छायथाघनतांप्राप्तंतापंशीघ्रंक्षिपंतिनाशयंतिआल्हादंचकुर्वंति तथानवमभ्युदयंप्राप्तस्यसरस्व
तीप्रतिपाद्यंसारस्वतंब्रह्मतत्वंतस्यउद्दीपनंकुर्वतःस्वस्यप्रत्यक्चैतन्यस्यालोकेनप्रकाशेनविधूतंविश्वस्याज्ञानलक्षणंतिमिरंयेनतस्यसदैवोंकार
जपाद्यभ्यासशीलस्यसमस्तकलाधरस्यमुनेःश्रीशंकरस्यप्रसन्नाश्चरणन्यासानोऽस्माकंघनीभूतंसंसृतिलक्षणंतापंनाशयंतिआल्हादंब्रह्मानंद
लक्षणंचप्रकटयंतीत्यर्थः ॥ शार्दू० ॥ ४२ ॥

किंनतिर्नमस्कारोमुक्तिंददातिअथवानमस्कृतंभगवत्पादस्यपदमितिश्रुतिविदःप्रागल्भ्याज्जगतिविवादंकुर्वंतितत्रवयंत्वेवंब्रूमः तस्यश्रीशंकरचर 
णस्यभजनेसेवायांयोरतस्तस्यपादकमलस्यरजसःहृदयआलिंगनस्यारंभःतत्क्षणमेवमोक्षाश्रयभूतोमुक्तिप्रदइत्यर्थः ॥ शि० ॥ ४३ ॥ अथत
दीयमूरुयुगंवर्णयतिश्वेतवस्त्रलक्षणेनपल्लवेनावृतंविपश्चितऊरुद्वयंविललास शुशुभे तद्विशिनष्टि अमृतार्णवस्यक्षीरसमुद्रस्यफेनमंजर्याछुरि
 तस्यव्याप्तस्यऐरावतस्यहस्तस्यशुंडायाःशस्तिप्राशस्त्यंबिभ्रतीतितथा ॥ वियो० ॥ ४४ ॥ सुवर्णवल्लीत्रयीयुक्तास्फटिकमयस्यपर्वतस्यतटी 

नतिर्दत्तेमुक्तिंनतमुतपदंवेतिभगवत्पदस्यप्रागल्भ्याज्जगतिविवदंतेश्रुतिविदः॥ वयंतुब्रूमस्तद्भजनरतपा
दांबुजरजःपरीरंभारंभःसपदिहृदिनिर्वाणशरणं ॥ ४३ ॥ धवलांशुकपल्लवावृतंविललासोरुयुगंविपश्चि
तः॥ अमृतार्णवफेनमंजरीच्छुरितैरावतहस्तशस्तिभृत् ॥ ४४ ॥ यदिहाटकवल्लरीत्रयीघटितास्फाटिककूट
भृत्तटी॥ स्फुटमस्यतयाकटीतटीतुलितास्यात्कलितत्रिमेखला ॥ ४५ ॥ आदायपुस्तकवपुःश्रुतिसारमेकह
स्तेनवादिकृततद्गतकंटकानां ॥ उद्धारमारचयतीवविबोधमुद्रामुद्बिभ्रतोनिजकरेणपरेणयोगी ॥ ४६ ॥

यदिभवेत्तदातयाताहृशतयाकलितासंपादितात्रिमेखलायस्यांसाअस्यश्रीशंकरस्यकटीतटीतुलितास्यात् ॥ ४५ ॥ अथतदीयकरौवर्णयति 
आदायेतिद्वाभ्यां ॥ पुस्तकमेववपुःशरीरंयस्यतच्छ्रुतीनांसारंएकहस्तेनवामकरेणयोगीआदायज्ञानमुद्रांतर्जन्यंगुष्ठसंयोजनरूपांउद्बिभ्रताः
परेणदक्षिणेननिजहस्तेनवादिकृतानांतस्मिन्श्रुतिसारेस्थितानांकंटकानांउद्धारमारचयतीवेत्युत्प्रेक्षा वसं० ॥ ४६ ॥

सुर्थ। नामधेयेराजतइतिसुधीराट्तस्यश्रीशंकरस्यैतौकरवरौकल्पद्रुमपल्लवतुल्याविति यदायत्सहचरंयत्तुल्यममलकमलंचेतसिकरोतितदारुचेः
क्रांतेश्चोरावेतौतत्रापिदिनेकिंवारात्राविति भयेनरात्रौचौराणामवकाशइतिकृत्वांनिशादेःसूर्यास्तमारभ्यसूर्योदयपर्यंतंस्वदलात्मकंकपाटंघटय
तियोजयति ॥ शि०॥४७॥ अथतस्योरःस्थलंवर्णयति अररस्फालवत्कवाटफलिकवद्विशालाचासौमांसलामांसव्याप्ताचातिमनोहरातस्योरः
स्थलीवभौशुशुभे धरण्यांभूमौभ्रमणेनोदिताच्छ्रमात् जयलक्ष्म्याअश्रिताशय्येवेत्यर्थः ॥४८॥ अथतदीयभुजौवर्णयतिबहिरंतरशत्रुनिग्रहेपरि
घप्रख्यौततापहरणशीलौपरिघादधिकतरप्रख्यातिमंतौविजयस्तंभयुगलस्यधुरंधरतइतितौनत्तुल्यौशुभलक्षणयुक्तौश्रीशंकरस्यभुजौशुशुभा

सुधीराजःकल्पद्रुमकिसलयाभौकरवरौकरोत्येतौचतस्यमलकमलंयत्सहचरं ॥ रुचेश्चोरावेतावहनिकिमुरा
त्राविति भियानिशादेराप्रातर्निजदलकवाटंघटयति ॥ ४७॥ रुचिरानदुरःस्थलीबभावररस्फालविशालमांस
ला ॥ धरणीभ्रमणोदितश्रमात्पृथुशय्येवजयश्रियाश्रिता ॥ ४८॥ परिघप्रथिमापहारिणौशुशुभातेशुभलक्ष
णौभुजौ ॥ बहिरंतरशत्रुनिग्रहेविजयस्तंभयुगीधुरंधरौ ॥ ४९ ॥ उपवीतममुष्यदिद्युतेबिसतंतुक्रियमाणसौहृ
दं ॥ शरदिंदुमयूखपांडिमातिशयोल्लंघनजांघिकप्रभं ॥ ५० ॥ समराजतकंठकंबुराड्भगवत्पादमुनेर्यदुद्भवः ॥
निनदःप्रतिपक्षनिग्रहेजयशंखध्वनितामविंदत ॥ ५१ ॥

ते ॥ ४९॥ अथतदीयंयज्ञोपवीतंवर्णयतिबिसतंतुभिर्मृणालतंतुभिःक्रियमाणंसौहृदंयेनततशरच्चंद्रस्यकिरणानांपांडिम्नःश्वेततायाः अतिशय
स्योल्लंघनेजांघिकाःतिवेगवतीप्रभायस्य जंघालोऽतिजवस्तुल्यौजंघाकरिकजांघिकावित्यमरस्तदमुष्यश्रीशंकरस्ययज्ञोपवीतंदिद्युतेरेजे ॥
॥ ५० ॥ अथतस्यकंठंवर्णयतिभगवत्पादमुनेःकंठात्मकशंखराजःसमराजत तंविशिनष्टि यउद्भवःकारणमस्येतियदुद्भवोयत्कारणकःयस्माद्दु
द्भवउत्पत्तिर्यस्येतितथायदुत्पन्नइतिवा निनदोघोषःप्रतिपक्षाणांवादिरूपाणांशत्रूणांनिग्रहेजयशंखस्यध्वनितांप्राप्तवान् ॥ ५१ ॥

अथतस्यदंतपंक्तिवर्णयति हिप्रसिद्धमरुणाधरसंगतातस्यदंतचंद्रिकाधिकंशुशुभे तत्रदृष्टांतःनवविद्रुमोनवीनोरत्नवृक्षःविद्रुमोरत्नवृक्षेपिप्रवा लेपिपुमानयमितिमेदिनी तद्वल्लीगताहिमकिरणस्यशरत्कालिकाछविःकांतिर्यथाशोभतेतद्वदित्यर्थः ॥ ५२ ॥ अथतदीयकपोलतलेवर्णयति सितभानोःशुभ्रांशोश्चंद्रस्यवर्च्चइववर्च्चस्तेजोयस्यतस्ययशस्विनःशोभनेकपोलतलेशुशुभाते तथाभूतस्यवदनंमुखमाश्रितायासरस्वतीतस्याः कृतेतदर्थंब्रह्मणासंकल्पितौसंकल्पेनोत्पादितौदर्पणाविव ॥ ५३ ॥ अथतस्यमुखंवर्णयति सर्वजगतांपुण्यमेवसमुद्रस्तस्माद्बहुत्वेनाभिमतात्ब

अरुणाधरसंगताऽधिकंशुशुभेनस्यहिदंतचंद्रिका॥नवविद्रुमवल्लरीगतातुहिनांशोरिवशारदीच्छविः॥५२॥
सुकपोलतलेयशस्विनःशुशुभातेसितभानुवर्चसः ॥ वदनाश्रितभारतीकृतेविधिसंकल्पितदर्पणाविव ॥
॥ ५३ ॥ समासीत्तस्यास्यंसुकृतजलधेःसर्वजगतांपयःपारावाराद्जनिरजनीशोबहुमतात् ॥ सुधाधारो
द्गारःसुसदृगनयोःकिंतुशशभृत्सतांतेजःपुंजंहरतिवदनंतस्यदिशति॥ ५४॥

हुनामभिमताद्वातस्यश्रीशंकरस्यमुखंसमासीत् पयःपारावारात्क्षीरसमुद्राद्बहुमताद्रजनीशश्चंद्रोऽजायत अनयोरास्यचंद्रयोःसुधाधाराया उद्गारउद्गमनंसुसदृक्सुसदृशःपरंत्वयंविशेषःशशभृच्चंद्रःसतांनक्षत्राणांतेजःपुंजंहरतितस्यमुखंसतांसज्जनानांतद्ददातिउपमेयाधिक्याभिधाना द्व्यतिरेकःव्यतिरेकोविशेषश्चेदुपमानोपमेययोरित्युक्तेः ॥ शि॰ ॥ ५४ ॥

अथतदीयंनेत्रद्वंद्वंवर्णयति पुराअहहेत्याश्चर्ये यस्यमुनीशनेत्रस्यविषयतांगोचरतांजुषतेसेवतइतितथातस्यदीनस्यब्राह्मणकलत्रस्यापेक्षीरसमुद्रकन्यालक्ष्मीर्धनीभूतस्यामलकाकारस्यसुवर्णस्यधाराःसमकिरत् तदिदंकमलालयालक्ष्मीस्तस्याःप्रीतिसंततेःपात्रंमुनीशस्यनेत्रंस्तोतुंकृतपुण्यएवसमर्थोभवति ॥५५॥ अथमुनीशकटाक्षान्वर्णयति यथादुर्वारःप्रतिपक्षःशत्रुर्योदूषणाख्योराक्षसस्तत्समुन्मेषस्यसमुल्लासस्यक्षितौक्षयेक्षितिर्निवासेमेदिन्यांकालभेदेक्षयेत्रियामितिमेदिनीतन्निवासोयस्मिन्समुद्रेतत्रसेतोःकल्पनेचानघस्यदुःखरहितस्यतापसगणशशांकस्यतदाल्हादकस्यश्रीरामचंद्रस्यलंकायाराक्षसपुर्य्याअरयःअच्छक्षीराब्धितरंगवदलंकाराःअतिकायादिराक्षसजनितसाध्वसमुषःकटाक्षांकुराःआपन्नान्मृतप्रायान्शाखामृगान्वानरान्पुष्णंतिउज्जीवयंति तथादुर्वाराणांप्रतिपक्षाणांयानिदूषणानि दुर्वाराणिचतानिप्रतिपक्षदूषणानीतिवा ते

पुराक्षीरांभोधेरहहतनयापद्विपयताजुषोदीनस्याग्रेघनकनकधाराःसमकिरत् ॥ इदंनेत्रंपात्रंकमलनिलयाप्रीतिविततेर्मुनीशस्यस्तोतुंकृतसुकृतएवप्रभवति ॥ ५५ ॥ दुर्वारप्रतिपक्षदूषणसमुन्मेषक्षितौकल्पनेसेतोरप्यनघस्यतापसकुलैणांकस्यलंकारयः ॥ आपन्नानतिकायविभ्रममुषःसंसारिशाखामृगान्पुष्णंत्यच्छपयोब्धिवीचिवदलंकाराःकटाक्षांकुराः ॥ ५६ ॥

षांसमुन्मेषस्यक्षितौक्षयेतन्निवासोयत्रयस्मिन्स्थानेवादिदूषणानिप्रसरंतितत्रेतियावत् सेतोर्जलविधारकसेतुवत्तद्विधारकसेतोःसमाधानलक्षणस्यकल्पनेप्यनघस्यतापसकुलचंद्रस्यलंकानांशाकिनीनांकुलटानांवाअरयः लंकारक्षःपुरीशाखाशाकिनीकुलटासुचेतिमेदिनी तथाभूताःअतिकायेस्थूलादिदेहेयआत्माभिमानलक्षणोविभ्रमोभ्रांतिस्तंमुष्णंतीत्यतिकायस्ययोविभ्रमइतिवा अतिकायोमहांश्चासौविभ्रमइतिवा तथाभूताअच्छपयोब्धिवीचिवदलंकाराःकटाक्षांकुराःआपन्नान्जरामरणादिलक्षणापत्तिव्याप्तान् शरणागतानितिवा संसारिलक्षणान्शाखामृगान्पुष्णंति संसाराख्यदुःखनिवृत्तिपूर्वकानंदप्राप्तिलक्षणांपुष्टिंसंपादयंतीत्यर्थः ॥ शार्दू० ॥ ५६ ॥

नवसुधावृष्टिवद्ाचरंत्यःश्रीशंकरस्यदृष्टयआश्रिताःसत्यःसंसाराकारंश्रमंमुष्णंतितंविशिनष्टि निःशंकाआकस्मिकीःक्षतयएवहृक्षकंटकास्तेषां कुलानियस्मिन्पुनश्चकामलक्षणदावाग्निज्वालयाव्याप्तंआर्तिलक्षणकर्दमेनातिशयेनव्याप्तं विरुद्धोविकटोवाःधर्मलक्षणोःध्वामार्गोयस्मिन् धृतिध्वंसिनंधैर्यनाशकंआमयारोगास्तच्छलेनचलंतोदुर्वारावारणागजायस्मिन्तथाभूतंसंसाराकृतिंश्रममित्यर्थः ॥५७॥ अथत्रिपुंड्रंत्रिधोत्प्रे क्षति तस्यश्रीशंकरस्यसितभसितशोभिश्वेतभस्मनाशोभायमानंत्रिपुंड्रंत्रिरेखात्मकंविभूतितिलकंकृपापारसिधुंतंमुनिमाश्रितवतींत्रिमार्गगांगंगां केचनकविवर्याआहुर्वयंतुऋग्यजुःसामाख्यवेदत्रयीशिरसांउपनिषदांव्याकृतयोव्याख्यानानितान्येवोपकृतयउपकारास्ततोभवाजाताःसुरु

निःशंकक्षतिहृत्स्थकंटककुलंमीनांकदावानलज्वालासंकुलमार्तिपंकिलतरंव्यध्वधृतिध्वंसिनं ॥ संसाराकृतिमा मयच्छलचलद्दुर्वारदुर्वारणंमुष्णंतिश्रममाश्रितानवसुधावृष्ट्यर्पितादृष्टयः॥५७॥त्रिपुंड्रंतस्याहुःसितभसितशो भित्रिपथगांकृपापारावारंकतिचनमुनिंतंश्रितवतीं ॥ वयंत्वेतद्ब्रूमोजगतिकिलतिस्रःसुरुचिरास्त्रयीमौलिव्या कृत्युपकृतिभवाःकीर्तयइति॥५८॥ असौशंभोर्लीलावपुरितिभृशंसुंदरइतिद्वयंसंप्रत्येतज्जनमनसिसिद्धंचसु गमं॥यदंतःपश्यंतःकरणमदसीयंनिरुपमंतृणीकुर्वंत्येतेसुपममपिकामंसुमतयः॥५९॥

चिराअतिसुंदरास्तिस्रःकीर्त्तयइतिब्रूमइत्यर्थः ॥ शि० ॥ ५८ ॥ एवंप्रत्येकमंगान्युपवर्ण्यतद्वपुर्वर्णनमुपक्रमते असौश्रीशंकरःशंभोःकामविज यिनोलीलाविग्रहइतिभृशमतिशयेनसुंदरःइतिचैतद्द्वयमिदानींजनानांमनसिसुगमंयथास्यात्तथासिद्धं यद्यस्माददसीयममुष्यनिरुपमंकरणंवपु रंतःकरणेपश्यंतःजनाःसुपमंसुंदरमपिकामंमन्मथंतृणीकुर्वंतिकामविजयिशंभ्ववतारभूतंशंकरशरीरस्यातिसुंदरस्यांतःसंदर्शनेनतृणवदतिक्षुद्रं कुर्वंतीत्यर्थः ॥ ५९ ॥

किंचअज्ञानांतर्गहनेपतितान्भवःसंसारएवदवोदावाग्निस्तस्यशिखानांपुत्रस्त्रीधनादिवियोगरूपाणांतापेनपापच्यमानान्भृशंदंदह्यमानानात्म
विद्योपदेशैस्त्रातुंमौनंत्यक्त्वावटवृक्षस्यमूलान्निष्पतंतीअवतरंतीशंकराचार्यरूपाशंभोर्मूर्त्तिर्भुवनेविचरति।तियोजना मंदाक्रांता ॥६०॥ किंचदे
शिकशेखरेश्रीशंकरेउच्चंडानामतिकोपनानामहितानांवावदूकानांजल्पनशीलानांकुहनाअतत्त्वेआचारभेदस्यसंभावना कुहनालोभान्मिथ्ये
र्यापथकल्पनेत्यमरस्तस्यास्तयावायत्पांडित्यंतत्वितंडाम्यपक्षस्थापनहीनाविजिगीषुकथातस्यांभववैतंडिकंयथास्यात्तथापदसेविनांसंताप
चिंताविनाशकेजातेसतिवैभाषिकादेर्दर्दिकातर्य्यंभूयसाबाहुल्येनपदंस्थानमकृत तथाकलुषांतःकरणस्यवैशेषिकादेःकथाचातुर्य्यंलयमगा

अज्ञानांतर्गहनपतितानात्मविद्योपदेशैस्त्रातुंलोकान्भवदवशिखातापपापच्यमानान् ॥ मुक्त्वामौनंवटविट
पिनोमूलतोनिष्पतंतीशंभोर्मूर्तिश्चरतिभुवनेशंकराचार्यरूपा ॥ ६० ॥ उच्चंडाहितवावदूककुहनापांडित्यवैतंडि
कंजातेदेशिकशेखरेपदजुषांसंतापचिंतापहे॥ कातर्यंदर्दिभूयसाकृतपदंवैभाषिकादेःकथाचातुर्यंकलुषात्मनो
लयमगाद्वैशेषिकादेरपि ॥ ६१ ॥ अमुनाकृतवःप्रसाधिताःक्रतुविभ्रंशकरःसशंकरः ॥ इयमेवभिदानयो
र्जितस्मरयोःसर्वविदोर्बुधेज्ययोः॥ ६२॥

त् आदिपदंसौत्रांतिकयोगाचार्यमाध्यमिकजैनचार्वाकानाह द्वितीयंतत्सांख्यमीमांसकपातंजलनैयायिकादीनाह शार्दूल०॥६१॥ अमुनाशं
कराचार्यमूर्त्तिनाशंकरेणवैदिकपथस्थापनेनक्रतवःयज्ञाःप्रकर्षेणासाधिताः कैलासनिलयःशंकरोदक्षयज्ञध्वंसकरत्वेनक्रतुविभ्रंशकरः यज्ञना
शकरःइतीयमेवानयोर्भिदाअयमेवभेदः अन्यत्तुसर्वंसमानमित्येवकारव्यावर्त्यप्रदर्शनायाह जितकामयोःसर्वविदोःसर्वज्ञयोर्बुधैःपंडितैर्देवैश्च
स्तुत्ययोरित्यर्थः ॥ वियो० ॥ ६२ ॥

जगत्त्रयेयेविद्वांसस्तेषांमध्येकलयापितुलांसादृश्यमनुकरोतीतितुलानुकारी तथाभूतंवयंनकलयामोनचिंतयामोमन्यामहइतिवा रामरावण
योर्युद्धंरामरावणयोरिवेतिस्वयमेवस्वसदृशइतिचेत्तत्राह यदिस्वयंस्वसमःस्यात्तर्हितत्रनेतिकेवदंतिनकेपीत्यर्थः उपमानोपमेयत्वेएकस्यैवैकवा
क्यगे अनन्वयालंकारः ॥६३॥ स्वर्गवनमध्येयथादेवद्रुमाअमरद्रुषुदेववृक्षेषुयथापुष्पसंचयाःपुष्पसंचयेषुयथाभ्रमराएतेसर्वेसंख्यामतिक्रांता
स्तथाशंकरेगुणाःसंख्यारहिताः किलेतिप्रसिद्धं गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता ॥६४॥ कामंविषयाभिलाषंवस्तुविचारतःकाम्यवस्तुदो
षविचारेणायंश्रीशंकरोऽच्छिनत् तथापारुष्यंकठोरभाषणं हिंसावृत्तिछेदादिनापरपीडाक्रुधःक्रोधास्तान्क्षांत्यापरैराकुष्टेताडितेप्यविकृतचित्तं

कलयापितुलानुकारिणंकलयामोनवयंजगत्त्रये ॥ विदुषांस्वसमोयदिस्वयंभवितानेतिवदंतितत्रके ॥ ६३
द्युवनांतइवामरद्रुमाअमरद्रुष्विवपुष्पसंचयाः॥भ्रमराइवपुष्पसंचयेष्वतिसंख्याःकिलशंकरेगुणाः ॥६४॥
कामंवस्तुविचारतोऽथितदयंपारुष्यहिंसाक्रुधःक्षांत्यादैन्यपरिग्रहानृतकथालोभांस्तुसंतोषतः ॥मात्सर्यंत्वन
सूययामदमहामानौचिरंभावितस्वान्योत्कर्षगुणेनतांगुणतस्तृष्णांपिशाचीमपि ॥ ६५ ॥

ताक्षांतिस्तयाऽच्छिनत् दैन्यंपदार्थालाभेलब्धपरिक्षयेचदीनतापरिग्रहःसंचयः अनृतकथामृषाभाषणं लोभःपरद्रव्येषुलुब्धता तीर्थेषुधनात्या
गश्चतास्तुसंतोषेणाच्छिनत्परोत्कर्षासहनंमत्सरस्तस्यभावोमात्सर्यंतुअनसूययापरगुणेषुदोषाविष्करणमसूयातद्वर्जनेनाच्छिनत् मदोगर्वोधर्मा
तिक्रमहेतुर्महामानःस्वस्मिन्नतिपूज्यत्वाभिमानस्तौचिरंदीर्घकालंभावितश्चिंतितः स्वस्मादन्योत्कर्षएवगुणस्तेनाच्छिनत् इदंमेस्यादिदंमेस्यादि
त्येवंरूपांतृष्णालक्षणांपिशाचीमपिसम्यकृत्रामिलक्षणेनगुणेनाच्छिनत् ॥ शार्दू० ॥ ६५ ॥

शिष्याणामपिकामादीन्यःसमूलमुन्मूलयत्तस्मिंस्तेषांस्थितिःकथंस्यादित्याशयेनाह काममिति यस्तुस्वस्यांतेवसतांशिष्याणां[illegible]कामं[illegible]
क्षयोर्नाशकंसमूलघातमवधीत्समूलंनाशितवान् समूलाकृतजीवेषुहन्कृञ्ग्रहइत्यनेनणमुल् कषादिषुयथाविध्यनुप्रयोगइत्यनेनहंतेरनुप्रयो
गः तथायःखलुसमस्तदोषावहंरोषंक्रोधंचूर्णपेषमपिपत् चूर्णमपिषत्शुष्कचूर्णरूक्षेषुपिषंइत्यनेनणमुल् तथालोभादीनपिपरान्शत्रून्तृणसमु
च्छेदंसमुच्चिच्छिदेतृणवत्समुच्चिच्छिदे उपमानेकर्मणिचेतिणमुल् सएवंभूतःपूज्यपादःकथंवर्ण्यते केनापिप्रकारेणवर्णयितुंनशक्यतइत्यर्थः
॥ ६६ ॥ दिग्गजतद्वध्वोःप्रश्नोत्तरैर्वर्णयन्नादौवधूकर्तृकंप्रश्नमुदाहरतिकइति हेकांतदिवादिवसेघर्मस्यग्रीष्मदिनप्रयुक्तसंतापस्यमर्मणांछेद

कामंयस्तुसमूलघातमवधीत्स्वर्गापवर्गापहंरोषंयःखलुचूर्णपेषमपिपन्निःशेषदोषावहं॥लोभादीनपियःपरां
स्तृणसमुच्छेदंसमुच्चिच्छिदेस्वस्यांतेवसतांसतांसभगवत्पादःकथंवर्ण्यते॥ ६६ ॥ कोमीकांतदिवानिशाक
रकराघर्मस्यमर्मच्छिदोमुग्धेशंभुनवावतारसुगुरोरेतेगुणानांगणाः ॥ कस्माद्युत्पलसंततिर्विकसिताविं
स्मेरदिग्योषितामेषापांगझरीतिदिग्गजवधूप्रश्नोत्तरैरेजतुः॥ ६७॥

कानिशाकरस्यचंद्रस्यकराःकिरणाः अत्यंतासंभाविताःअमीउपलभ्यमानाःकेकिंनिशाकरकराएवोतान्यदेवकिंचित् एवंकांतयापृष्टोदिग्गज
उवाचहेमुग्धेशंभोर्नवावतारस्यसुगुरोःश्रीशंकराचार्यस्यगुणानांगणाः एवंदिग्गजकर्तृकमुत्तरमुपवर्ण्यपुनस्तत्कांताकृतंप्रश्नमाह यद्येवंतर्हि
निशाकरकरैर्विकसनशीलानामुत्पलानांनीलकमलानांसंततिःकस्माद्विकसिताविकासंप्राप्ता एवंपृष्टस्तत्कांतउवाच हेमुग्धेनेयंनीलोत्पलसं
ततिरपितुशंकराचार्यगुणगणैर्विस्मेराणांविस्मयशीलानांदिगंगनानामेषाकटाक्षाणांझरीइत्येवंलक्षणेदिग्गजवधूप्रश्नोत्तरैरेजतुरित्यर्थः भ्रांता
पन्हुतिरन्यस्यशंकायांभ्रांतिवारणे ॥ ६७ ॥

यथामाक्षिकंमधुक्षणमात्रमप्यक्ष्णानेत्रेणनेक्षितंनदृष्टं द्राक्षानुबहुवारंशिक्षिता क्षीरेक्षूतुभुविसम्यगुपेक्षितौ सानिर्भरमाधुर्याअत्यर्थंमधुरताया
मदेनधुराश्रेष्ठानिर्भरमाधुर्यामदोयेषांतेभ्योधुरेतिवा कांताचासावनंतदिगंतलंघनकलायांजंघालानामतिवेगवतांतत्तद्गुणानांश्रेणीपंक्तिश्चधन्ये



तिमन्यामहे तथाभूतगुणपंक्तिलक्षणाकांति.तवा॥६८॥मुनिशेखरस्यक्षांतिश्चेत्तर्हिवसुधाभूमिर्महतींसर्वंसहत्वख्यातिंजहातु तथातस्यविद्या
चेत्तर्हिस्कंदप्रमुखाःस्वामनल्पगर्वावलींत्यजंतुतथातस्यवैराग्यंचेत्तर्हिवादरायणेःशुकस्ययशःकार्श्यंपरंगाहतांकिंबहुजल्पैर्मुनिशेखरस्यश्री
शंकरस्यतुलामुपमांकुत्रापिनवीक्षामहे अत्रत्यागस्यसकृद्धर्मस्यप्रतिपादनात्तुल्ययोगितालंकारः नियतानांसकृद्धर्मःसपुनस्तुल्ययोगितेत्युक्तेः

नाक्ष्णामाक्षिकमीक्षितंक्षणमपिद्राक्षामुहुःशिक्षिताक्षीरेक्षूसमुपेक्षितौभुविययासाशंकरश्रीगुरोः ॥ कांतानं
तदिगंतलंघनकलाजंघालतत्तद्गुणश्रेणीनिर्भरमाधुरीमदधुराधन्येतिमन्यामहे ॥ ६८ ॥ क्षांतिश्चेद्वसुधाजहा
तुमहतींसर्वंसहत्वप्रथांविद्याचेद्गिरहंतुषण्मुखमुखाःस्वांसर्वगर्वावलीं ॥ वैराग्यंयदिबादरायणियशःकार्श्यंपरं
गाहतांकिंजल्पैर्मुनिशेखरस्यनतुलांकुत्रापिवीक्षामहे ॥ ६९ ॥ यामूर्तिःक्षमयामुनीश्वरमयीगोत्रासगोत्राय
तेविद्याभिर्निरवद्यकीर्तिभिरलंभाषाविभाषायते ॥ भक्ताभीप्सितकल्पनेननितरांकल्पादिकल्पायतेकस्तांनान्य
पृथक्जनैस्तुलयितुंमंदाक्षमंदायते ॥ ७० ॥

॥६९॥किंचयामुनीश्वरमयीमूर्त्तिःक्षमयागोत्रासगोत्रायते गोत्रायाभूमेःसगोत्रंसजातीयंतद्वदाचरतिभूमिसाम्यंलभते तथायामुनीश्वरमयी
मूर्त्तिर्निरवद्यानिर्दोषाकीर्त्तिर्याभिस्तथाभूताभिर्विद्याभिरलमत्यंतंभाषाविभाषायते भाषायाःसरस्वत्याःविभाषाविकल्पःतद्वदाचरतिविकल्पे
नसरस्वतीभावंप्राप्नोतीव तथायामुनीश्वरमयीमूर्त्तिर्भक्तानामभीप्सितस्यसाधनेनात्यंतंकल्पादिकल्पायतेकल्पवृक्षचिंतामण्यादिसदृशवदा
चरतितत्साम्यंप्राप्नोतितांमुनीश्वरमयींमूर्त्तिमन्यैःप्राकृतजनैस्तुलयितुंकोवानमंदाक्षमंदायतेमंदाक्षेणलज्जयामंदोमंदाक्षमंदस्तद्वदाचरति अपि
तुसर्वोपीत्यर्थः ॥ ७० ॥

पुरातनेष्वतीतेषुश्रीशंकरतुल्योनबभूवाद्यतनेषुवर्त्तमानेषुनैवदृश्यतेऽनागतेषुभाविष्यत्सुकिंवाभविताऽपितुनैवभविष्यति यथाकालत्रयेपिसुमेरोः
सदृशोगिरिर्नास्तितद्वत् वैतालीयं ०॥ ७१ ॥तेनश्रीशंकरेणतस्यकुलंसम्यक्शोभांप्राप्तवत्सचश्रीशंकरःशीलेनसाधुस्वभावेनशुचिचरितेनवाऽत्यं
तमशोभतशीलमपिविद्ययादीप्तिमद्भूत्विद्यापिविनयेननम्रभावेनशुशुभे ॥ ७२ ॥ किंचसूरिराट्पंडितराजःश्रीशंकरःकल्पवृक्षोयथाराजतेत
थाऽराजयतःशोभनयशोलक्षणपुष्पाणामुच्चयोनिचयोयस्मिन् श्रयंतश्चाश्रयंतोविबुधापंडिताएवालयोभ्रमरायस्मिन्श्रयतांपंडितलक्षणानां

नबभूवपुरातनेषुतत्सदृशोनाद्यतनेषुदृश्यते॥ भविताकिमनागतेष्वानसुमेरोःसदृशोयथागिरिः ॥ ७१ ॥
समशोभततेनतत्कुलंसचशीलेनपरंव्यरोचत॥अपिशीलमदीपिविद्ययाप्यपिविद्याविनयेनदिद्युते॥७२॥
सुयशःकुसुमोच्चयःश्रयद्विबुधालिर्गुणपल्लवोद्गमः ॥ अवबोधफलःक्षमारसःसुरशाखीवरराजसूरिराट् ॥
॥ ७३ ॥ नचशेषभवीनकापिलीगणिताकाणभुजीनगीरपि ॥ फणितिष्वितरासुकाकथाकविराजोगिरि
चातुरीजुषि॥ ७४॥

देवानामालिःपक्तिर्यत्रेतिवा गुणलक्षणानांपल्लवानामुद्गमउद्भवोयस्मात् अवबोधस्तत्त्वज्ञानमेवफलंयस्मिन्क्षमाएवरसोयस्मिन्नतइत्यर्थः॥ ७३
किंचकविराजःश्रीशंकरस्यगिरिवाण्यांचातुरींसेविनवत्यांसत्यां पातंजलीवाणीनचगणितानचकापिलीगीर्गणितानापिकाणादीगीर्गणिताअ
न्यासुनास्तिकानांगीर्षुकाकथा ॥ ७४ ॥

किंचभट्टभास्कराख्येनसर्वशंकरवादिनायोविमर्दस्तेनदुर्दशायांमज्जतामागमशिरसांवेदांतानांकरग्रहाहस्तावलंबिन्यउद्धारिकाइतियावत् एवंभूताःश्रीशंकरगुरोःगिरोहंतेत्याश्चर्येहर्षेवाकिमपिवक्तुमशक्यंतत्प्रख्यातंपरमरसाश्रयभूतमक्षरंक्षरंतिस्रवंति॥७५॥जाटाटीरस्यशिवस्यजटालक्षणेषुकुटीरेषुह्रस्वकुटीषुकुटीशर्मीशुंडाभ्योरइतिरः विहरंतीयानैर्लिपकल्लोलिनीनिर्लिपानांदेवानामिदंनैर्लिपंत्रिविष्टपंतत्तरंगिणीगंगातस्याःक्षोणीशस्यराज्ञोभगीरथस्यप्रियकृद्यदपूर्वमवतरणंतेनावष्टंभगुंफःस्तंभानांग्रंथनं तंछिंदंतीतितथाताः गर्जनांकुर्वंतःश्रीशंकरगुरुलक्षणस्यभूमिधरेंद्रस्यहिमालयस्योदराद्वाणीलक्षणायानिर्झरिण्यास्तरंगिण्यानद्याःझराःप्रवाहाअवतरंतियतएवमतोदुष्टभिक्षुलक्षणदुर्भिक्षतःक्वनुभयंक्वापि

भट्टभास्करविमर्ददुर्दशामज्जदागमशिरःकरग्रहाः ॥ हंतशंकरगुरोर्गिरःक्षरंत्यक्षरंकिमपितद्रसायनं ॥ ७५ ॥ जाटाटीरजटाकुटीरविहरन्नैर्लिपकल्लोलिनीक्षोणीशप्रियकृन्नवावतरणावष्टंभगुंफच्छिदः ॥ गर्जंत्योवतरंतिशंकरगुरुक्षोणीधरेंद्रोदराद्वाणीनिर्झरिणीझराःक्वनुभयंदुर्भिक्षुदुर्भिक्षतः ॥ ७६ ॥ वारीचित्तमतंगजस्यनगरीबोधात्मनोभूपतेर्दूरीभूतदुरंतदुर्वदझरीहारीकृतासूरिभिः ॥ चिंतासंततितूलवातलहरीवेदोल्लसच्चातुरीसंसाराब्धितरीरुदेतिभगवत्पादीयवाग्वैखरी॥ ७७॥

भयंनास्तीत्यर्थः॥शार्दू०॥७६॥किंचभगवत्पादीयावैखरीअकारादिक्षकारांतवर्णमालारूपावागुदेतिजयति तांविशिनष्टि चित्तलक्षणस्यमतंगजस्यहस्तिनोवारीबंधिनी वारीस्याद्गजबंधिन्यामितिमेदिनी तथाबोधात्मकस्यराज्ञोनगरीतथादूरीभूतादुरंतानांदुर्वदतांदुर्वादिनांझरीप्रवाहोयस्यास्तथा सूरिभिर्हारीकृताऽतिप्रेम्णाहारवत्कंठेकृतातथाचिंतासंततिलक्षणस्यतूलस्यकार्पासलवस्यापाकरणेवातस्यवायोर्लहरीप्रवाहः तथावेदस्योल्लसंतीचातुरीचित्तेतिपाठेचेतनायाइतिव्याख्येयंतथासंसारलक्षणसमुद्रस्यतरीउद्धारहेतुभूतानौकातथांचैवंभूताशंकरस्यवाणीसर्वोत्कर्षेणवर्त्ततइत्यर्थःअत्रजयादेर्भिन्नशब्दवाच्यमतंगजत्वाद्यारोपेणवैखर्यावारीत्वाद्यारोपबोधनाद्भेदभाजिरूपकंवाचकेभेदभाजिवेत्युक्तेः॥७७॥ ॥१०

किंचव्रतिपतेःश्रीशंकरस्यसूक्तीनांनिगुंफःप्रथनंजयतियः कथागर्वैर्णोत्सर्पतामुच्चलतांकथानांमध्येयेबुधास्तेषांकङ्कव्याप्रायाजिव्हातस्याना
भिस्थनालेनसहाधःपातेस्वयमुदयमंत्रोवेदवत्स्वयंप्रादुर्भूतोवादिजिव्हास्तंभनादौविनियुक्तःषड्त्रिंशद्वर्णात्मकोबगलामुख्याख्योमंत्रःपुनश्चनि
गमशिखराणिवेदांतास्तल्लक्षणकमलानांसुरभिःसुगंधिःपुनश्चाद्वैतलक्ष्म्याजयस्यविरुदघंटायाःप्रख्यातिकरायाःघंटायाःघणघणात्मकःशब्दइ
त्यर्थःनियतारोपणोपायःस्यादारोपःपरस्ययःतत्परंपरितंश्लिष्टइत्युक्तपरंपरितरूपकांतर्गतंमालारूपकमत्रद्रष्टव्यं ॥७८॥ किंचकस्तूरीघनसार

कथादर्पोत्सर्पत्कथकबुधकंठूलरसनासनालाधःपातस्वयमुदयमंत्रोव्रतिपतेः ॥ निगुंफःसूक्तीनांनिगम
शिखरांभोजसुरभिर्जयत्यद्वैतश्रीजयविरुदघंटाघणघणः॥ ७८ ॥ कस्तूरीघनसारसौरभपरीरंभप्रियंभावु
कास्तापोन्मेषमुषोनिशाकरकराहंकारकूलंकषाः ॥ द्राक्षामाक्षिकशर्करामधुरिमग्रामाविसंवादिनोव्याहा
रामुनिशेखरस्यनकथंकारंमुदंकुर्वते॥ ७९ ॥

योःकोरककर्पूरयोःसौरभंसुरभिस्तस्यपरीरंभःपरिष्वंगस्तद्वत्प्रियंभावुकाःप्रियंभविष्णवःतापस्याध्यात्मिकादितापत्रयस्योन्मेषमुल्लासंमुष्णंती
तितंथातेऽतएवबाह्यतापनिवारकाणांनिशाकरस्यचंद्रस्यकराणामंशूनांयस्तापविनाशनाहंकारस्तस्यकूलंकषाः समूलोन्मूलनसमर्थाःतथाद्रा
क्षादीनांमधुरिम्णांमाधुर्याणांग्रामेणसमुदायेनाविसंवादिनस्तत्तुल्यामुनिशेखरस्यश्रीशंकरस्यव्याहाराउक्तयः मुदंप्रीतिंकथंकारंकथंनकुर्वतेऽ
पितुकुर्वंत्येवअन्यथैवंकथमित्यप्रसिद्धप्रयोगश्चेदित्यनर्थकादेवकरोतेर्णमुल् ॥ शार्दू० ॥ ७९ ॥

किंचपरिमुक्तोविनिवृत्तोभेदवादिलक्षणःकंटकमार्गोयस्मात्तथाभूतेऽद्वैतएवकैवल्यघंटापथेकैवल्यस्यमोक्षस्यघंटापथेसंसरणेराजमार्गेअहंपू
र्वकैरहंकारपूर्वकैर्दुर्विकल्पैरहिताःप्राज्ञाःविद्वांसएवाध्वनीनाःपांथास्तैराकुलेव्याप्तेस्वयंनवसुधासिक्ताःशंकराचार्यस्यसूक्तयःप्रस्कंदतांप्रस्रव
तांमकरंदानांपुष्परसानांवृंदोनिचयोयेभ्यस्तथाभूतानांकुसुमानांपुष्पाणांयाःस्रजोमालास्तासांयानितोरणानितेषांप्रक्रियांरचनांवितन्वतेवि
स्तारयंति ॥ ८० ॥ किंचदूरमुत्सारितादुष्टानांपांसुपटलीतुल्यादुर्नीतयोदुष्टनयायाभिस्ताअनीतयोनविद्यंतेईतयोऽतिवृष्ट्यादिरूपाबाधायाभ्य

अद्वैतेपरिमुक्तकंटकपथेकैवल्यघंटापथेसाहंपूर्विकदुर्विकल्परहितप्राज्ञाध्वनीनाकुले॥प्रस्कंदन्मकरंदवृंदकु
सुमस्रक्तोरणप्रक्रियामाचार्यस्यवितन्वतेनवसुधासिक्ताःस्वयंसूक्तयः॥ ८० ॥ दूरोत्सारितदुष्टपांसुपटलीदु
र्नीतयोर्नीतयोवातादेशिकवाङ्मयाःशुभगुणग्रामालयामालयाः॥ मुष्णंतिश्रममुल्लसत्परिमलश्रीमेदुरामे
दुरायासस्याधिहविर्भुजोभवमयेधीप्रांतरेप्रांतरे॥८१॥

स्ताःशुभगुणाःप्रसादादयस्तल्लक्षणानांशैत्यादिशुभगुणानांग्रामस्यालयभूतामायालक्ष्म्याश्चालयभूताउल्लसत्परिमलश्रियाचमेदुराःस्निग्धादे
शिकवाङ्मयावाताभवमयेसंसारमयेप्रांतरेविपिनेकथंभूतेधीप्रांतरेबुद्धिलक्षणानिप्रांतराणिकोटराणिबुद्धिलक्षणोदूरःशून्योमार्गोवायस्मिंस्त
त्राधिर्मनःपीडाप्रत्याशावातल्लक्षणाद्धंविर्भुजोदावाग्नेर्हेतोर्यौमेममदूरायासस्तस्यश्रमंमुष्णंत्यपनयंतीत्यर्थः प्रांतरंविपिनेदूरशून्यमार्गेचकोटरे
आधिःपुमांश्चित्तपीडाप्रत्याशाबंधकेषुचेतिमेदिनी ॥ ८१ ॥

किंचश्रीशंकरजिव्हाग्रलक्षणेरंगेनृत्यंत्यागिरांदेव्याःशारदायाःकिमंघ्र्योश्चरणयोःक्वणतोःशब्दंकुर्वतोर्मंजीरयोर्नूपुरयोरूर्जितसिंजितानिउल्ल
सत्स्वनितानि किंवानितंबालंबिन्याःकट्याःपश्चाद्भागमालंबिन्याःकांच्यामेखलायारवाःशब्दाःकिंवावल्गतोरितस्ततश्चलतोःकरकमलकंक
णयोःझणत्काराइतिशंकांश्रीमतःशंकरस्यकवेःसमीचीनायुक्तयोयासुताःसुष्टुक्तयोंऽकुरयंतिजनयंतीत्यर्थः ॥ ८२ ॥ वर्षारंभेविजृंभमाणानां

नृत्यंत्यारसनाग्रसीमनिगिरांदेव्याःकिमंघ्रिक्वणन्मंजीरोर्जितसिंजितान्युतनितंबालंबिकांचीरवाः॥
किंवल्गत्करपद्मकंकणझणत्काराइतिश्रीमतःशंकामंकुरयंतिशंकरकवेःसद्युक्तयःसूक्तयः ॥ ८२ ॥
वर्षारंभविजृंभमाणजलमुग्गंभीरघोषोपमोवात्यातूर्णविघूर्णदर्णवपयःकल्लोलदर्पापहः ॥ उन्मील
न्नवमल्लिकापरिमलाहंतानिहंतानिरातंकःशंकरयोगिदेशिकगिरांगुंफःसमुज्जृंभते ॥ ८३ ॥

जलंमुचांमेघानांगंभीरघोषउपमायस्यसःपुनश्चवात्ययावायुसमुदायेनतूर्णमत्यंतंशीघ्रंवाविघूर्णतांसमुद्रपयसांकल्लोलानांबृहत्तरंगाणांदर्पा
पहःगर्वनाशकः पुनश्चोन्मीलंतीनांविकसंतीनांमालतीनांपरिमलाहंतायाविमर्द्दोत्थजनमनोहरगंधस्याहंभावस्यनिहंतानाशकः पुनश्चनिरातं
कोनिर्भयःशंकरयोगिदेशिकस्यगिरांगुंफःग्रंथनंसमुज्जृंभतेसमुल्लसति ॥ ८३ ॥

साप्रसिद्धाभाष्यादिरूपामुनिवागद्यानाद्यारुजोऽज्ञानादिलक्षणान्रोगाननुद्यान्नाशयतुतांविशिनष्टि पद्यविनाकृतागद्यरूपाल्द्यामनोज्ञा पाठांतरेदोषविनाकृता पुनश्चप्रशमिताऽविद्याययासाप्रशमिताविद्या पुनश्चमिथ्यावाच्यानभवतीत्यमृषोद्यायथार्थाइत्यर्थः राजसूयसूर्यमृषोद्येत्यादिनावदःक्यबंतोनिपातः प्रशमिताविद्यामृषोद्याययेतिवा पुनश्चसुधास्वाद्याऽमृतवदास्वादनीया पुनश्चमाद्यतांमदेनघूर्णतामरातीनांवादिलक्षणारीणांयानिचोद्यानिकुतर्कोद्भाविताःशंकास्तेषांभिदुराःनाशकाः स्वयंतुतैरभेद्याभेत्तुमशक्या पुनश्चसर्वासांविद्यानांनिपद्यापिताआपणवदाचरिताः पुनश्चानघोऽनवद्यउद्यमोयस्याःसापुनश्चशोभनंचरितंयस्याःसापुनश्चसादीनांजन्यानांसकारणानांवाआपदामाध्यात्मिकादिदुः

ल्द्यापद्यविनाकृताप्रशमिताविद्यामृषोद्यासुधास्वाद्यामाद्यदरातिचोद्यभिदुराऽभेद्यानिपद्यापिता ॥ विद्यानामनघोद्यमासुचरितासाद्यापदुद्यापिनीपद्यामुक्तिपदस्यसाद्यमुनिवाद्गद्यादनाद्यारुजः ॥ ८४ ॥ आयासस्यनवांकुरंघनमनस्तापस्यवीजंनिजंक्लेशानामपिपूर्वरंगमलघुप्रस्तावनाडिंडिमं ॥ दोषाणामनृतस्यकार्मणमसंचिंताततेर्निष्कुटंदेहादौमुनिशेखरोक्तिरतुलाहंकारमुत्कृंतति ॥ ८५ ॥

खानामुद्यापिनी उन्मूलनीपुनश्चमुक्तिपदस्यपद्यापद्धतिरेवंभूतासामुनिवागद्यानाद्यारुजोपनुद्यादित्यर्थः ॥ ८४ ॥ मुनिशेखरोक्तिरतुलादेहादौयोऽहंकारस्तमुत्कृंततिउन्मूलयति तंविशिनष्टि आयासस्यखेदस्यनव्यमकुरंपुनश्चघनीभूतोयोमनस्तापोमानसंदुःखंतस्यनिजमसाधारणंबीजंक्लेशानामपिपूर्वरंगंप्रथमंनर्त्तनस्थानंदोषाणांरागद्वेषादीनामलघ्वीमहतीयाप्रस्तावनानाटककथाप्रारंभस्तस्याःडिंडिमंअनृतस्यकार्मणंमूलकर्म मूलकर्मतुकार्मणमित्यमरः असच्चिंतासंततेर्निष्कुटंगृहोद्यानंकेदारंवा निष्कुटस्तुगृहोद्यानेस्यात्केदारकपाटयोरितिमेदिनी एवंभूतंदेहादिनिष्ठमहंकारमित्यर्थः ॥ ८५ ॥

तथागताबौद्धास्तेषांपथामार्गेणाहताः क्षपणकानांवैभाषिकाणांप्रख्यातिलक्षणेनप्रतारणेनवंचनेनहताश्चानुवर्त्तिनोवप्रादयाखिलाजीवास्ते
षांसंजीवनीपुनश्चानाधुनिकाअनादिभूतायावेदवाणीतल्लक्षणायाअतिप्राचीनशुक्तेर्मुक्तामणिरेवंभूतागुरोःश्रीशंकरस्योक्तिर्नराणांदुरत्ययंसं
सारभयंहरतीत्यर्थः पृथ्वी॥८६॥ सद्गुरोःश्रीशंकरस्यझंझामारुतेनबृहद्वायुनावेल्लितायाःकंपितायादेवधुन्यागंगायाःकल्लोलानांबृहत्तरंगाणांयः
कोलाहलस्तस्ययःप्राग्भारोऽतिशयस्तदेकसगर्भ्यनिर्भरातदेकातिसदृशाजरीजृंभंतोभृशमुल्लसंतोवचोलक्षणानिर्झरा.नैकान्यनेकानियान्यली
कान्यसत्यानिमतानितेषामालिःपंक्तिःसैवधूलीपटलीधूलीसमूहस्तस्याममर्मच्छिदोविनाशकानोऽस्माकमुग्रदुर्मतिलक्षणधर्मात्याद्दुःखिताबु

तथागतपथाहतक्षपणकप्रथालक्षणप्रतारणहतानुवर्त्यखिलजीवसंजीवनी ॥ हरत्यतिदुरत्ययंभवभयंगुरूक्ति
र्नृणामनाधुनिकभारतीजरठशुक्तिमुक्तामणिः ॥ ८६ ॥ झंझामारुतवेल्लितामरधुनीकल्लोलकोलाहलप्राग्भारै
कसगर्भ्यनिर्भरजरीजृंभद्वचोनिर्झराः ॥ नैकालीकमतालिधूलिपटलीमर्मच्छिदःसद्गुरोरुग्रदुर्मतिधर्मदुर्मतिकृ
ताशांतिनिकृंततितिनः ॥ ८७॥ उन्मीलन्नवमल्लिसौरभपरीरंभप्रियंभावुकामंदारद्रुमरंदवृंदविलुठन्माधुर्यधुर्या
गिरः॥ उद्गीर्णागुरुणाविपारकरुणावाराकरेणादरात्सच्चेतोरमयंतिहंतमदयंत्यामोदयंतिद्रुतं ॥ ८८ ॥

द्धिस्तत्कृतायाअशांतिस्तांनिकृंततिउन्मूलयंति ॥शार्दू०॥८७॥ उन्मीलंतीनांविकसंतीनांनवमालतीनांयत्सौरभंतस्यपरीरंभआलिंगनंतस्मादपि
तद्वद्वाप्रियंभावुकाःप्रियंभविष्णवस्तथामंदारद्रूणांमंदाराख्यद्रुमाणांमकरंदनिकायेलुठंतोमाधुर्यात्धुर्याःश्रेष्ठाःश्रीशंकराचार्येणगुरुणाआदरादु
द्गीर्णाउद्वमिताउच्चारिताःगिरःसतांचेतोरमयंतिहंतेतिहर्षेमदयंनितथाद्भुतमविलंबितमामोदयंतिप्रमोदयंति गुरुंविशिनष्टिविपारायाःपारविमुक्ता
याःकरुणायस्रवाराकरेणजलनिधिनासमुद्रेणदीपकालंकारःसैकवृत्तिः ॥ ८८ ॥

किंचधारावाहिअनवच्छिन्नंयत्सुखंतस्यानुभूतिरनुभवोयाभ्यस्तथाभूतमुनिवाग्धारालक्षणसुधाराशिषुक्रीडन्सनद्वैतिनांवचनेषुविषकल्पेषुपुन
मूर्खादन्यःकःक्रीडेदपितुमूढएवतत्रक्रीडांकुर्यात्तत्रदृष्टांतःचित्रंसुवर्णमयंवस्त्रंपरिदधत्पुनःकच्चराणांमलदूषितानांदुष्टानांपटच्चराणांजीर्णवस्त्रा
णांयाजर्जरीभूताकंथातस्यामनुबद्धोयआदरस्तंकश्चिन्मनसिधत्तेऽपितुनैवधत्तेइत्यर्थः सैवक्रियासुबह्वीषुकारकंस्येतिदीपकमित्युक्तेःसैवेतिपा
ठांतरेतामनुबत्धादरंयथास्यात्तथेतिव्याख्येयं कच्चरंमलदूषितंपटच्चरंजीर्णवस्त्रमित्यमरः॥८९॥ किंचतत्तादृक्षैस्तथाभूतैर्मुनिनिशाकरवचोभि
र्मुनिचंद्रवचनैर्याशिक्षातयासपक्षःअद्वैताख्यस्वपक्षःसहितस्तदवलंबीआशयोंऽतःकरणंयस्यशिक्षायाःसपक्षोधिकरणभूतआशयोवायस्यस

धारावाहिसुखानुभूतिमुनिवाग्धारासुधाराशिषुक्रीडन्नद्वैतिवचःसुकःपुनरनुक्रीडतमूढतरः॥ चित्रंकांचनमंव
रंपरिदधच्चित्तेविधत्तेमुहुःकच्चित्कच्चरदुष्पटच्चरजरत्कंथानुबद्धादरं॥८९॥ तत्तादृक्षमुनिक्षपाकरवचःशिक्षास
पक्षाशयःक्षारंक्षीरमुदीक्षतेबुधजनोनक्षौद्रमाकांक्षति ॥ रुक्षांक्षेपयतिक्षितौखलुसितांनेक्षुंक्षणंप्रेक्षतेद्राक्षां
नापिदिदृक्षतेनकदलींक्षुद्रांजिघृक्षत्यलं॥९०॥ विक्रीतामधुनानिजामधुरतादत्तामुदाद्राक्षयाक्षीरैःपात्रधि
यार्पितायुधिजिताल्लब्धावलादिक्षुतः ॥ न्यस्ताचोरभयेनहंतसुधयायस्मादतस्तद्गिरांमाधुर्यस्यसमृद्धिरद्भुतत
रानान्यत्रसावीक्ष्यते॥९१॥

बुधजनःक्षीरंपयःक्षारंपश्यतिक्षौद्रंमाक्षिकंनाकांक्षतितथासितांशर्करांरुक्षांवुध्वाभूमौक्षेपयतिपातयतितथेक्षुंक्षणमात्रमपिनप्रेक्षतेतथाक्षुद्रां
कदलींनजिघृक्षतिघ्रातुमपिनेच्छति॥९०॥ किंचयस्मान्मधुनामाक्षिकेणस्वकीयामधुरतायासुविक्रीतायस्माच्चद्राक्षयानिजामधुरतामुदाया
भ्योदत्तायस्माच्चदुग्धैर्निजामधुरतापात्रबुत्ध्यायास्वर्पितायस्माच्चयुधिजितादिक्षुतस्तदीयामधुरताबलाद्याभिर्लब्धाहंतेतिहर्षेयस्माच्चसुधया
ऽमृतेनचोरभयेननिजाम्धुरतायासुन्यस्तान्यासतयास्थापितातएतस्मात्तस्यश्रीशंकरस्यगिरांतथाभूतानांगिरांवामाधुर्यस्यसाद्भततरासमृद्धिर
न्यत्रनैवदृश्यतइत्यर्थः॥९१॥

किंचयदीयंसौरभंकर्पूरेणऋणीकृतंऋणतयागृहीतंतथायदीयंसौरभंमृगमदेनकस्तूरिकयाऽधीत्यसंपादितंतथामल्लीभिर्मालतीभिश्चिरसेवनादु पगतंप्राप्तंतथाकाश्मीरजैस्तुतदीयंसौरभंक्रीतंमौल्येनगृहीतंतथापटीरतरुणाचंदनवृक्षेणतत्सौरभंचौरतयाप्राप्तंतस्यश्रीशंकरस्यगिरांतथाभूता नांगिरांवाअक्षय्यंमहिअक्षयंमाहात्म्यंतस्मात्तस्यश्रीशंकरस्यतस्यगिरांसौरभस्यमहिमाऽयमन्यादृशःसर्वलोकविलक्षणोधन्यइत्यर्थः ॥१२॥ किंचसुलिपसंसुरुच्यंद्रप्सांघनेतरदधिअप्साभक्षणार्थस्यप्साधातोर्लङ्रूपंतत्तथाक्षीरंचिरतरंबहुकालमचरंभक्षणार्थस्यचरधातोर्लङ्रूपंतथेक्षु

कर्पूरेणऋणीकृतंमृगमदेनाधीत्यसंपादितंमल्लीभिश्चिरसेवनादुपगतंक्रीतंतुकाश्मीरजैः॥ प्राप्तंचौरतयाप टीरतरुणायत्सौरभंतद्गिरामक्षय्यंमहितस्यतस्यमहिमाधन्योयमन्यादृशः ॥१२॥ अप्सांद्रप्संसुलिप्संचिर तरमचरंक्षीरमद्राक्षमिक्षुंसाक्षाद्द्राक्षामजक्षंमधुरसमधयंप्रागविंदंमरंदं ॥ मोचामाचाममन्योमधुरिमग रिमाशंकराचार्यवाचामाचांतोहंतकिंतैरलमपिचसुधासारसीसारसीम्ना ॥१३॥

मद्राक्षंतथाप्रत्यक्षेणद्राक्षामजक्षंभक्षितवान्जक्षभक्षहसनयोरितिस्मरणात्तथामधुरसंमाक्षिकरसमधयंपीतवान्तथामरंदंमकरंदंप्रागविदंपूर्वं लब्धवान्तथामोचाकदली कदलीवारणबुसारंभामोचांशुमत्फलेत्यमरस्तामाचामंभक्षितवान्अदनार्थस्यचमुधातोराङ्चमादेशेलङिमिप मादेशेरूपं इदानींत्वन्योऽतिविलक्षणःश्रीशंकराचार्यवाचांमधुरिम्णोमाधुर्यस्यगरिमाआचांतोहंतेतिहर्षेतैर्द्रप्सादिभिःकियतःसुधायाअमृत स्यसारसीसारस्यंतस्याःसारस्यसीम्नाप्यलंकृत्यंनास्ति स्र० ॥ १३ ॥

 किंचदवथुःपरितापःस्यादित्यमराद्भवदवथुभिःसंसारपरितापैःसंतप्तानांस्फाराविशालाकर्पूरस्यवृष्टिःपुनश्चमोक्षलक्ष्म्यांमृगाक्ष्याअंगनायाःप्र 
कृतिनिर्मलास्वभावतोविमलामुक्तायष्टिःमुक्तामयीहारलतिकापुनश्चाद्वैतात्मैवानंतसुखस्यासारेणप्रसरणेनकासारस्तडागस्तस्यहंसीआसारः
स्यात्प्रसरणेवेगवृष्टौसुहृद्बलइतिमेदिनीएवंभूताभगवत्पादस्यश्रीशंकरस्यदिव्योक्तिधाराबुद्धेःशुध्यैभवतु ॥ १४ ॥ आम्नायांतावेदांताएवालव
॥१४॥ ४

संतप्तानांभवदवथुभिःस्फारकर्पूरवृष्टिर्मुक्तायष्टिःप्रकृतिविमलामोक्षलक्ष्मीमृगाक्ष्याः ॥ अद्वैतात्मानवधि
कसुखासारकासारहंसीबुद्धेःशुध्यैभवतुभगवत्पाददिव्योक्तिधारा॥ १४ ॥ आम्नायांतालवालाविमलत
रसुरेशादिसूक्तांबुसिक्ताकैवल्यांशापलाशाविबुधजनमनःसालजालाधिरूढा ॥ तत्वज्ञानप्रसूनास्फुरदमृ
तफलासेवनीयाद्विजैर्यासामेसोमावतंसावतरगुरुवचोवल्लिरस्तुप्रशस्त्यै॥ १५॥

लासर्वतोरक्षाभित्तिर्यस्याःपुनश्चसुरेश्वरपद्मपादादिसूक्तिलक्षणैर्जलैःसिक्ताकैवल्यस्यमोक्षस्याशाएवपलाशाःपत्राणियस्यांपुनश्चविबुधज
नोदेवजनःपंडितजनश्चतस्यमनएवसालाख्यवृक्षसमुदायस्तत्राधिरूढातत्वज्ञानलक्षणंप्रसूनंपुष्पंयस्यांस्फुरत्स्वयंप्रकाशमानममृतंब्रह्मानंदस्तदे ॥१४॥
वफलंयस्यांएवंभूतायाद्विजैःसेवनीयासोमावतंसस्यचंद्रशेखरस्यशिवस्यावतारस्यगुरोःश्रीशंकरस्यवचोलक्षणावल्लिर्मेममप्रशस्त्यैअस्तु॥ १५

नृत्यतोभूतेशस्यश्रीशंकरस्यवालात्स्फुरतिमुकुटतटेरटंतीयास्वर्णदीगंगातयास्पर्धिनीभिः पुनश्वनिर्भिन्नतटाउच्चलंत्यायाअमृतसरसःसारिण्यः
स्वल्पनद्यस्तद्धोरिणीवद्धोरिणीपरिपाटीयासांताभिः पुनश्चोद्वेलाउल्लंघितवेदमर्यादायेद्वैतवादिनस्तेषांस्वमतेनपरिणतायाअहंक्रियास्तासांहुं
क्रियाभिःतिरस्क्रियाभिःपुनश्वसततमुपनिषल्लक्षणामुनदीषुगाहिनीभिर्वाग्भिःश्रीशंकरार्योभातिराजते ॥ १६ ॥ साहंकाराणांसुरासुराणां
याआवलिःपंक्तिस्तस्याःकरैर्हस्तैराकृष्टेनभ्रमतामंदरेणक्षुब्धस्यक्षीरसमुद्रस्यवीचयस्तरंगास्तत्सचिवैस्तत्तुल्यैःसूक्तैरमृतवर्षणाज्जंघालैर्वेगवद्भिः
संसाराख्याग्निशिखाजालैर्जटालात्मनांव्याप्तात्मनांजंतूनांजलदोदेशिकोगुरुःश्रीशंकरःस्तुतिगिरांवैदेशिकोविदेशोगोचरःकथंनकथमपीत्य

नृत्यद्भूतेशवालान्मुकुटतटरटत्स्वर्धुनीस्पर्धिनीभिर्वाग्भिर्निर्भिन्नकूलोच्चलदमृतसरःसारिणीधोरणीभिः ॥ उद्वेल
द्वैतवादिस्वमतपरिणताहंक्रियाहुंक्रियाभिर्भातिश्रीशंकरार्यःसततमुपनिषद्वाहिनीगाहिनीभिः ॥ १६ ॥ साहं
कारसुरासुरावलिकराकृष्टभ्रमन्मंदरक्षुब्धक्षीरपयोब्धिवीचिसचिवैःसूक्तैःसुधावर्षणात् ॥ जंघालैर्भवदावपा
वकशिखाजालैर्जटालात्मनांजंतूनांजलदःकथंस्तुतिगिरांवैदेशिकोदेशिकः ॥ १७ ॥ कलशाब्धिकचाकचिक्ष
मंक्षणदाधीशगदागदिप्रियं ॥ रजताद्रिभुजाभुजिक्रियैंचतुरंवस्ययशःस्मराजते ॥ १८ ॥

र्थः ॥ शार्दू० ॥१७॥ अथश्रीशंकरस्ययशोवर्णयति कलशेति कचेषुकचेषुकेशषुकेशेषुगृहीत्वाइदंयुद्धंप्रवृत्तंकचाकचितत्रतेनेदमितिसरूप
इतिसमासःअन्येषामपिदृश्यतइतिपूर्वपदांतस्यदीर्घःइच्कर्मव्यतिहारइतीच्समासांतःकलशाब्धिःक्षीराब्धिस्तेनकचाकचियुद्धेक्षमंशक्तंपुन
श्वगदाभिश्वगदाभिश्वप्रवृत्त्येदंयुद्धंप्रवृत्तंगदागदिक्षणदाधीशेननिशार्धीश्वरेणचंद्रेणगदागदिप्रियंयस्यपुनश्वभुजैश्वभुजैश्वप्रवृत्त्येदंयुद्धंप्रवृत्तंभु
जाभुजिरजताद्रिणाकैलासगिरिणाभुजाभुजियुद्धलक्षणाक्रियायस्यतत्तस्यश्रीशंकरस्यचतुरंयशःराजतेस्म वैता० ॥ १८ ॥

कः परिशुद्ध इति परिशुद्धानां कथासु चंद्रः परिशुद्ध इति केनचित्कथिते सकलंकात्तस्मान्निष्कलंकं श्रीशंकरयशः परिशुद्धमित्यपरेणोक्ते तस्य यश सानितरां जितः कृतांकनः शशी सकलंकश्चंद्रः स्वकलंकनिवृत्तयेऽधुनाप्युदधौ समुद्रे मज्जति शिवं च सेवते ॥ ९९ ॥ नभःपूरका मुनीश्वरयशःपूरा दिक्सुदृशां दिगंगनानां धम्मिल्ले धम्मिल.संयताः कचास्तस्मिन्नूनवीनायामल्लिवल्लिर्मालतीलता तस्याः कुसुमानि तेषां स्रजां मालानां कल्पने शिल्पिनस्तथा दिक्सुदृशां कांतिललाटांतरे भद्रश्रीश्चंदनोऽस्त्रियामित्यमरस्तस्य रसेन चित्रमालेख्यं चित्रितं कुर्वंतीति भद्रश्रीरसचित्रितकृतस्तथा दिक्सुदृशां कंठे तारावली एकावल्येकयष्टिका सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैरित्यमरोक्ता नक्षत्रमालाख्या नुहारिणी मनोहरा हारलतिका

परिशुद्धकथासु निर्जितो यशसा तस्य कृतांकनः शशी॥ स्वकलंकनिवृत्तये ऽधुनाप्युदधौ मज्जति सेवते शिवं॥ ९९॥ धम्मिल्ले नवमल्लिवल्लिकुसुमस्रक्कल्पनाशिल्पिनो भद्रश्रीरसचित्रचित्रितकृतः कांतिललाटांतरे ॥ तारावल्यनुहारिहारलतिकानिर्माणकर्माणुकाः कंठे दिक्सुदृशां मुनीश्वरयशःपूरा नभःपूरकाः ॥ १०० ॥ उत्संगे पु दिगंगनानिदधते ताराः कराकर्षिका रागाद्यौरवलंब्य चुंबति वियद्गंगा समालिंगति ॥ लोकालोकदरी प्रसीदति फणी शेषोऽस्य दत्ते रतिं त्रैलोक्ये गुरुराजकीर्तिशशिनः सौंदर्यमत्यद्भुतं॥ १०१॥

स्तस्या निर्माणकर्मणि अणुका निपुणाः अणुके निपुणाल्पयोरिति मेदिनी ॥ शार्दू० ॥१००॥ गुरुराजस्य श्रीशंकरस्य कीर्तिर्यशस्तल्लक्षणस्य चंद्रस्य त्रैलोक्ये सौंदर्यमत्यद्भुतमस्ति यतो दिगंगना स्तत्कीर्तिचंद्रमुत्संगेऽके निदधते धारयंति प्रसिद्धचंद्रं तु सर्वा दिगंगना नैवं कुर्वंति तथा ताराः किरणास्तैर्हस्तैराकर्षिकाः प्रसिद्धश्चंद्रस्तु नैवंविधस्तस्य क्रमेण तारासु गमनप्रसिद्धेस्तथा द्यौस्तं रागादवलंब्य स्वैव चुंबति न तु प्रसिद्धं तं तस्य तत्र सर्वदा स्थित्य योगात् वियद्गंगा तं सम्यगालिंगति न तु प्रसिद्धं तं तथा लोकालोकाभिधपर्वतदरी तेन प्रसीदति न तु प्रसिद्धचंद्रेण तस्य तत्र गत्यभावात्तथा शेषाख्यः फणी सर्पोऽस्य रतिं प्रीतिं दत्ते न तु प्रसिद्धस्योक्तहेतोस्तथा चैवंभूतस्य तस्य लोकत्रये सौंदर्यमत्यद्भुतमित्यर्थः ॥ १०१ ॥

किंचमुनिशेखरस्ययशोलक्षणस्यक्षीरनिधेःकल्लोलाहरितांदिशामंतेषुसांकाशिनंसमंतात्प्रकाशंप्राप्ताःसंशब्दोऽभिविधिद्योतकः अभिविधौभा
वइनुणित्यनेनेनुण्प्रत्ययएवमग्रेपितथाशंशाककिरणानालक्ष्यसांहासिनंसमंताद्धासंकुर्वंतेतथादुर्मदायादुर्गर्ववत्याःसुधायावै दग्ध्यस्यचातुर्य
स्यसांलोपिनंसमंताल्लोपंप्रथयंतितथाविश्वजांघिकस्यजगतिव्याप्तस्याज्ञानलक्षणस्यतमसःसंघातस्यसांघ्यातिनंसमंतात्घातंसम्यग्घ्नंतिकुर्वंति
पाक्कंपचतीतिवत्सुनःप्रयोगः ॥ १०२ ॥ सोत्कंठंउत्कंठयासहवर्त्तमानःअकुंठोऽनिवार्यःकंठीरवःसिंहस्तस्य खरानखश्रेष्ठास्तैर्हतान्मत्तगज
कुंभात्प्रत्यग्रोन्मुक्तानांमुक्ताख्यमणिगणानांसुषमंसौंदर्यंतेनाबद्धाबाहुयुद्धलीलाययापुनश्चमथनाद्रिणामंदराचलेनक्षुब्धस्यक्षीरसमुद्रस्यनि

संप्रापमुनिशेखरस्यहरितामंतेषुसांकाशिनंकल्लोलायशसःशशांककिरणानालक्ष्यसांहासिनं ॥ कुर्वंतप्रथयं
तिदुर्मदसुधावैदग्ध्यसांलोपिनंसम्यग्घ्नंतिचविश्वजांघिकतमःसंघातसांघातिनं ॥ १०२ ॥ सोत्कंठाकुंठकंठी
रवनखरवरक्षुण्णमत्तेभकुंभप्रत्यग्रोन्मुक्तमुक्तामणिगणसुषमाबद्धदोर्युद्धलीला ॥ मंथाद्रिक्षुब्धदुग्धार्णवनिक
टसमुल्लोलकल्लोलमैत्रीपात्रीभूताप्रभूताजयतियतिपतेःकीर्तिमालाविशाला ॥ ३ ॥ लोकालोकदरिप्रसीद
सिचिरात्किंशंकरश्रीगुरुप्रोद्यत्कीर्तिनिशाकरंप्रियतमंसंश्लिष्यसंतुष्यसि॥ त्वंचाप्युत्पलिनिप्रहृष्यसिचिरात्क
स्तत्रहेतुस्तयोरित्थंप्रश्नगिरांपरस्परमभूत्स्मेरत्वमेवोत्तरं॥ ४॥

कटवर्त्तिनःसम्यक्चंचलायेबृहत्तरंगास्तैःसहयामैत्रीतस्याःपात्रीभूतानत्तुल्याप्रभूताविशालायतिपतेःकीर्त्तिमालाजयतिसर्वोत्कर्षेणवर्तते
॥ स्र० ॥ ३ ॥ कमलिनीलोकालोकाख्यपर्वतकंदरांपृच्छतिहेलोकालोकदरित्वंचिरात्प्रसीदसिकिंशंकराख्यश्रीगुरोःप्रोद्यत्कीर्त्तिलक्षणचंद्रमे
वप्रियतमंसम्यगालिंग्यसंतुष्यसिएवंपृष्टालोकालोकदरीकमलनींपृच्छतिहेउत्पलिनित्वंचापिचिरात्प्रहृष्यसितत्रप्रहर्षेकोहेतुरितीत्थंतयोर्दरी
कमलिन्योःप्रश्नगिरांस्मेरत्वंविकसितवदनत्वमेवोत्तरमभूत् ॥ ४ ॥

दुर्वारानल्पगर्वाहितापंडितजनताएवतूलःकार्पासकणस्तस्यवातूलवेगोवात्यावेगस्तथाबाधरहितोयोऽगाधोबोधस्तत्वज्ञानंसएवामृतकिरण श्चंद्रस्तदुन्मेषेक्षीरसमुद्रस्तथानिष्प्रत्यूहंनिर्विघ्नंप्रसर्पतःसंसारदावाग्नेरुद्भूतस्यसंतापस्यमेघएवंभूतास्फीताविशालाकीर्त्तिर्यस्यसशंकरश्चासा वाचार्यवर्यःयतिपतिर्जगतिजागर्ति ॥ स्र०॥ १०५॥ इतिहासानिमहाभारतादीनिपुराणानिब्राह्मादीनिभारतस्मृतयःसनत्सुजातीयगीतासह स्रनामाख्याःशास्त्राण्युत्तरमीमांसादीनिभारतस्मृतीनामितिहासग्रहणेनग्रहेपिपृथगुपादानंब्राह्मणपरिव्राजकन्यायेनसमाधेयं इतिहासादीनि

दुर्वाराखर्वगर्वाहितबुधजनतातूलवातूलवेगोनिर्बाधागाधबोधामृतकिरणसमुन्मेषदुग्धांबुराशिः॥ निष्प्र त्यूहंप्रसर्पद्भवदवदहनोद्भूतसंतापमेघोजागर्तिस्फीतकीर्तिर्जगतियतिपतिःशंकराचार्यवर्यः ॥ ५ ॥ इति हासपुराणभारतस्मृतिशास्त्राणिपुनःपुनर्मुदा ॥ विबुधैःसुबुधोविलोकयन्सकलज्ञत्वपदंप्रपेदिवान् ॥ ६ ॥ सपुनःपुनरैक्षतादराद्वरवैयासिकिशांतिवाक्ततीः॥ समगादुपशांतिसंभवांसकलज्ञत्ववदेवशुद्धतां॥ ७ ॥

पुनःपुनर्मुदाविबुधैःपंडितैःसहसुबुधःपंडिताग्रणीःश्रीशंकरोविलोकयन्सर्वज्ञत्वपदंप्राप्तवान्विबुधैःसकलज्ञत्वपदंप्राप्तवानितिवासंबंधः वैता० ॥ ६ ॥ सश्रीशंकरःपुनःपुनरादराद्वराःश्रेष्ठावैयासिकीःशांतिवाक्ततीःशांतिपर्वस्थावाक्पंक्तीरैक्षतसर्वज्ञत्वंयथाप्राप्तवांस्तद्वदेवोपशांतिसंभवां शुद्धतामपिसमगात्सम्यगाप्तवान्तथाचकेवलंसकलज्ञतैवनतेनाप्ताऽपितुमुख्यफलंशुद्धत्वमपीतिभावः ॥ १०७॥

किंचचतुरमाननंमुखंयस्यसचतुराननोपिसन्नसत्प्रपंचः यस्यप्रपंचरहितःप्रसिद्धश्चतुराननश्चतुर्मुखोहिरण्यगर्भस्तुसत्प्रपंचस्तथापुरुषेभ्यउत्तमो पिसन् विषयभोगसंबंधवान्नभवतिप्रसिद्धस्तुपुरुषोत्तमोविष्णुःशेषशरीरयोगित्वाद्भोगयोगीतथानंगस्यकामस्यजेतापिविरूपंदर्शनंयस्यसविरू पदर्शनोनभवतिप्रसिद्धस्त्वनंगजेतामहादेवोविरूपदर्शनःतथाचैवंभूतोऽपूर्वोऽद्वयीगुरुःश्रीशंकराचार्योजगज्जयतीत्यर्थः अत्रश्लेषमूलकोवि

असत्प्रपंचश्चतुराननोपिसन्नभोगयोगीपुरुषोत्तमोपिसन् ॥ अनंगजेताप्यविरूपदर्शनोजयत्यपूर्वोजगद द्वयीगुरुः ॥ ८ ॥ आलोक्याननपंकजेनदधतंवाणींसरोजासनंशश्वत्सन्निहितक्षमाश्रियममुंविश्वंभरंपूरु षं॥ आर्याराधितकोमलांघ्रिकमलंकामद्विषंकोविदाःशंकंतेभुविशंकरंव्रतिकुलालंकारमंकागताः॥ ९॥

रोधाभासअभासत्वेविरोधस्यविरोधाभासइष्यतइत्युक्तेः ॥ १०८ ॥ किंचमुखपंकजेनवाणींसरस्वतींदधतंब्रह्मचारिकुलालंकारंश्रीशंकरमा लोक्यांकमंतिकंसमीपमागताविद्वांसःकमलासनंब्रह्माणंशंकंते तथासततंसन्निहिताक्षमालक्ष्मीर्यस्यतथाभूतंतंदृष्ट्वाविश्वंभरंपुरुषंश्रीविष्णुंशं कंते तथाआर्यैराराधितेकोमलेचरणकमलेयस्यतंकामद्विषंतंमहादेवंशंकंते ॥ शार्दू० ॥ १०९॥

किंचैकस्मिन्पुरुषोत्तमेभगवतिरामचंद्रेरतिमतीमयोन्युद्भवांसीतालक्षणांएतांमायाभिक्षुणारावणेनहृतांतान्बुधवैरिणोदेवद्विषोराक्षसान्जि
त्वाअनेकपुरुषेऽश्रेष्ठपुरुषेराक्षसेरावणेआसक्तिभ्रमाद्रावणेऽस्याआसक्तिरितिरामचंद्रनिष्ठाद्भ्रमान्निष्ठुरांनैष्ठुर्येणवाङ्क्प्रविष्टामश्रेष्ठपुरुषस्यराव
॥ १७ ॥ णस्यस्वस्मिन्नासक्तिधर्मात्तंप्रतिनिष्ठुरामितिवाश्रेष्ठपुरुषस्यरामचंद्रस्यस्वस्मिन्नासक्त्यभावभ्रमान्निष्ठुरामितिवाथोरामचंद्रात्मनावतीर्णःशिव
श्चिरात्प्रियतयाप्रत्याहरत्सत्रिजगतांत्रातानोऽस्माकंसुखकरस्तापसकैतवाद्यतिवेषमिषादास्ते नत्रिजगतांत्राताशंकरइतिवाशिवस्यरामचंद्रात्म ४

एकस्मिन्पुरुषोत्तमेरतिमतींसीतामयोन्युद्भवांमायाभिक्षुह्रतामनेकपुरुषासक्तिभ्रमान्निष्ठुरां ॥ जित्वाता
न्बुधवैरिणःप्रियतयाप्रत्याहरद्यश्चिरादास्तेतापसकैतवात्रिजगतांत्रातासनःशंकरः ॥ ११० ॥ इतिश्री
माधवीयेतदाशुद्धाष्टमवृत्तगःसंक्षेपशंकरजयेचतुर्थःसर्गअभवत् ॥ ४ ॥ मूलसं० ॥ १९८ ॥

नावतरणप्रकारस्तुस्कंदपुराणादवगंतव्यः पक्षेएकस्मिन्नद्वितीयेपुरुषोत्तमेक्षराक्षरातीतेपरमात्मनिरतिमतींजन्मादिशून्यांसतांमायाभिक्षुभिःक्ष
णिकविज्ञानवादिभिर्हृतामनेकात्मप्रसक्तिभ्रमान्निष्ठुरांतान्विवेकिवैरिणोजित्वायश्चिरात्प्रत्याहरत्समानमन्यत् ॥ ११० ॥ इतिश्रीमत्प
रमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपूज्यपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेश्रीशंकराचार्यविजयडिंडिमेचतुर्थः ॥ १७
सर्गः ॥ ४ ॥ ॥ संख्या ॥ ४५० ॥

इति चतुर्थःसर्गःसमाप्तः

श्रीगणेशायनमः॥एवंप्राकृतजनविलक्षणंतस्यबालचरितमुपवर्ण्यतुर्याश्रमस्वीकृतिमुपवर्णयितुंप्रस्तौति॥इतीति॥इतिउक्तप्रकारेणसप्तमंवर्षेसर्ववेदपारं गततांप्राप्तोबटुर्ब्रह्मचारीगुरोःकुलात्परिवृत्यपरिवर्तनंसमावर्तनंविधायगुरुकुलवासंसमाप्यमहायशाःगृहेजननींपर्यचरत्सम्यक्सेवितवान् वि०॥१॥ मातरंपरिचरन्वेदंपठंश्चमनुश्रेष्ठैःस्वायंभुवादिभिरग्निसूर्यसंपूजायांनियमितंप्रातःसवनंतृतीयसवनमित्येवंरूपंसवनद्वयंवह्निसूर्योपरिपूजयन्सन्शिशुः भानुवदवर्तत मनुवरैर्मंत्रवरैर्नियतंयथास्यात्तथापरिपूजयन्नितिवा द्रुत० ॥ २ ॥ किंचशिशुंश्रीशंकरंदृष्ट्वाकोधाद्यालयोयुवापिकोपवान्नभवति त

श्री० अथपंचमःसर्गः॥ इतिसप्तमहायनेखिलश्रुतिपारंगततांगतोबटुः॥परिवृत्यगुरोःकुलाद्गृहेजननींपर्यचरन्म हायशाः॥ १॥परिचरञ्जननींनिगमंपठन्नपिहुताशरवीसवनद्वयं॥ मनुवरैर्नियतंपरिपूजयञ्छिशुरवर्ततसंस्तर णिर्यथा॥ २॥ शिशुमुदीक्ष्ययुवापिनमन्युमान्दिशतिवृद्धतमोपिनिजासनं॥ अपिकरोतिजनःकरयोर्युगंवश गतोविहितांजलितत्क्षणात् ॥ ३ ॥ मृदुवचश्चरितंकुशलांमतिंवपुरनुत्तममास्पदमोजसां ॥ सकलमेतदुदीक्ष्य सुतस्यसासुखमवापनिरर्गलमंबिका ॥ ४॥ जातुमंदगमनास्यहिमातास्नातुमंबुनिधिगांप्रतियाता ॥ आतपो ग्रकिरणेरविबिंबेसातपःकृशतनुर्विललंबे॥ ५॥

थावृद्धतमोत्यंतमादरणीयोपिस्वासनंददाति अपिचतत्क्षणाद्दर्शनक्षणएववशंप्राप्तःसर्वोपिजनोहस्तयोर्युगलंविहितांजलिकरोति ॥३ ॥ मृद्विति ॥ चरितस्यापिविशेषणंमृदुकोमलंवचोयस्मिंस्तत्चरितमितिवा ओजसांमनआदिबलानामास्पदमाश्रयभूतंवपुःशरीरंसुतस्यैतत्सर्वमवेक्ष्यसासतीकुमार जननीनिरर्गलमप्रतिबंधंसुखमवाप॥ ४॥ कदाचिदस्यश्रीशंकरस्यमाता हिप्रसिद्धंमंदंगमनंयस्याःसासमुद्रगांनदींप्रतिस्नानार्थंगता सूर्यमंडलेआतपे नोग्राःकिरणाःयस्यएतादृशेसति तपसाकृशातनुःशरीरंयस्याःसासतीविलंबंकृतवतीत्यर्थः स्वा० ॥ ५ ॥

तत्तदाविगतकर्दमेनजलेनार्द्रैःपंकजैर्वीजयन्नुपगतःजनेनजनसमुदायेनसहसदनंप्रतिनिन्ये ॥ ६ ॥ अथनयनानंतरंदोषरहितचरित्रःऋषीणामीश्वरस्यशिवगुरोःपुत्रःश्रीशंकरःगृहस्यसमीपंनेतुंसमुद्रगांनदींकवीनांमनोज्ञैर्वस्तुतःस्फुरंतिअलंकृतानिचतानिपद्यानिचतैर्नत्वापाततःस्फुरदलंकृतपद्यैः अस्तुवत्॥ ७ ॥ तेनस्तुतासंतुष्टानदीउवाच तवईहितमभिलषितंकलयतिचेष्टामितिकाल्येप्रातःकालेभविष्यति अद्यादयश्चेतिकलेर्यकितत:प्रज्ञाद्यणिरूपं प्रत्यूषोऽहर्मुखंकल्यमित्यमरः यस्त्वंबाल्यावस्थायांजगतोहितमिच्छसिइत्येवंप्रकारेणनदीतःवरंप्राप्यसत्यवचनःश्रीशंकरःसदनंप्राप एतादृशसा

शंकरस्तदनुशंकितचित्तःपंकजैर्विगतपंकजलार्द्रैः॥वीजयन्नुपगतोगतमोहांतांजननेनसदनंसहनिन्ये॥६॥
सोऽथनेतुमनवद्यचरित्रःसद्मनोंतिकमृषीश्वरपुत्रः॥अस्तुवज्जलधिगांकविहृद्यैर्वस्तुतःस्फुरदलंकृतपद्यैः॥७॥
ईहितंतवभविष्यतिकाल्येयोहितंजगतइच्छसिबाल्ये ॥ इत्यवाप्यसवरंतटिनीतःसत्यवाक्सदनमापविनी
तः॥ ८ ॥ प्रातरेवसमलोकतलोकःशीतवातहृतशीकरपूतः॥नूतनामिवधुनींप्रवहंतींमाधवस्यसमयासदनं
तां॥ ९ ॥ एवमेनमतिमर्त्यचरित्रंसेवमानजनदैन्यलवित्रं॥केरलक्षितिपतिर्हिदिदृक्षुःप्राहिणोत्सचिवमादृत
भिक्षुः॥ १० ॥

मर्थ्यवत्त्वेपिविनययुक्तः ॥८॥ शीतेनवायुनाआहृतैर्जलकणैःपवित्रितोलोकःप्रातरेवमाधवस्यलक्ष्मीपतेर्विष्णोःसमयासदनंमंदिरस्यसमीपेप्रवहंतींतांधुनींनदींनूतनामिवसमलोकत ॥ ९ ॥ एवमनेनप्रकारेणमर्त्यानतिक्रांतानिचरित्राणियस्यतंसेवमानानांजनानांमनोरथकरणेनदैन्यस्यलवित्रंछेदकमेनंश्रीशंकरंद्रष्टुमिच्छुरादृताभिक्षवोयेनसकेरलक्षितिपतिःराजशेखराख्यःसचिवममात्यंप्रेषितवान् ॥ १० ॥

सअमात्योपितंसममतंद्रित मनलसमतंद्रितंयथास्यात्तथेतिवाऽभीर्भयवर्जितउपदीयतइत्युपदाउपायनं डुदाञ्दाने आतश्चोपसर्गइत्यङ्‌ उपायनमुप
ग्राह्यमुपहारस्तथोपदेत्यमरः उपदाभिरुपायनभूताभिःसमीचीनाभिर्द्विरदाभिःकरेणुभिःसहतंश्रीशंकरंप्राप्यतदनुततःप्राप्तेःपश्चात्सरसानिमनोज्ञानि
पदानियासुसरसानामितिवा एवंविधाभिराभिरुक्तिभिःशक्तिशिवांसामर्थ्यंवाबिभर्तीतिशक्तिभृत्सचिवःसममजिज्ञपत्समंयथास्यात्तथाविज्ञापितवा
न् ॥ ११ ॥ ताएवदर्शयति यस्यसदृशोबोद्धारणमूर्धसुयुद्धकर्ताचभुविनैवदृश्यते तस्यकेरलदेशाधिपतेराज्ञातस्त्वंसर्वोत्तमोदृश्यसे ननुअन्यएवतन्नि
योगादागत्यमांकुतोनदृष्टवान्भवानेववापूर्वमित्याशंक्याह ममसत्कृतेःपुण्यस्ययोगात्ममेत्यन्यव्यावृत्तिः योगादितिपूर्वकालव्यावृत्तिः॥ १२ ॥ अ

सोप्यतंद्रितमभीरुपदाभिःप्राप्यतंतदनुसद्विरदाभिः॥ उक्तिभिःसरसमंजुपदाभिःशक्तिभृत्सममजिज्ञपदाभिः॥
॥ ११ ॥ यस्यनैवसदृशोभुविबोद्धादृश्यतेरणशिरःसुचयोद्धा॥ तस्यकेरलनृपस्यनियोगाद्दृश्यसेममचसत्कृतियो
गात्॥ १२ ॥ राजिताभ्रवसनैर्विलसंतःपूजिताःसदसियस्यवसंतः॥ पंडिताःसरसवादकथाभिःखंडितापरगिरो
वितथाभिः॥ १३ ॥ सोयमाजिजितसर्वमहीपःस्तूयमानचरणःकुलदीपः॥ पादरेणुमवनंभवभाजामादरेणतवविं
दतुराजा॥ १४॥

थराज्ञःप्रार्थितप्रदानपात्रतासूचनायतंस्तुवन्प्रार्थयते राजितेतिद्वाभ्यां ॥ राजितैर्दीप्तिमद्भिराभ्रैःसुवर्णमयैर्वस्त्रैःविलसंतःशोभंतःपूजिताःपूजांप्रा
प्ताः अवितथाभिःव्यर्थाभिःसरसारसयुक्ताश्चताःवादकथाश्चताभिःखंडिताअपरेषामन्येषांगिरोवाचोयैस्तेपंडितायस्यसदसिसभायांवसंतःसंतीत्य
र्थःअभ्रंमेघेचगगनेधातुभेदेचकांचनइतिमेदिनी॥ १३ ॥ आजौसंग्रामेजिताःसर्वेमहीपाभूमिपालायेन अतएवस्तूयमानौचरणौयस्यातएवकुलस्यदी
पोदीपवत्प्रकाशकः सोयंराजाभवभाजांसंसारंभजतामवनंपालकंतवचरणरेणुमादरेणविंदतुलभतां अभ्यर्थनायांलोट् ॥ १४॥

तत्रानीतास्वपदासुमुख्यमेकंगजंदर्शयति एषःसिंधुरपरोहस्तिश्रेष्ठोमदेनपूर्णःदोषस्यगंधेनापिवर्जितःप्रवितीर्णोराज्ञाप्रेम्णादत्तस्तस्माद्वस्तुतःशुचिभूतम
पितृपगृहंतवचरणरजसापरितआसमंतात्पूतंपवित्रमस्तु ॥ १५ ॥ एवंयुक्तियुक्तंसचिववाक्यमुदाहृत्यतदुत्तररूपंश्रीशंकरवाक्यमुदाहर्तुमाह इत्येवं 
॥२॥ प्रकारेणोदीर्योक्त्वापरिसाधितंदूतकृत्यंयेन प्रत्युदीरिताःप्रत्युच्चारिताःसतामुक्तयःसमीचीनाउक्तयोवायेनतममात्यंसचिवंप्रतिक्रमशःक्रमेणवचनमुवा
च॥ तद्विशिनष्टि अत्युदारमतएवऋषिभिःपरिशस्तंसंस्तुतं ॥ १६ ॥तदुदाहरति॥भैक्ष्यंभिक्षयालब्धमन्नंपरिधानमाच्छादनमजिनंमृगचर्मविधानंकर्त
व्यंनियमेनरूक्षमेवकष्टसाध्यमेवत्रिकालस्नानादिकर्मकर्मप्रतिपादकंवेदादिशास्त्रंहेदातृवरशर्मदायिनांदृष्टादृष्टसुखदायिनांवेदानांप्राप्तौपटूनांकुशला ५

एषसिंधुरपरोमदपूर्णोदोषगंधरहितःप्रवितीर्णः॥ अस्तुतेघ्ररजसापरिपूतंवस्तुतोनृपगृहंशुचिभूतं ॥ १५॥ इ
त्युदीर्यपरिसाधितदौत्यंप्रत्युदीरितसदुक्तिममात्यं ॥ अत्युदारमृषिभिःपरिशस्तंप्रत्युवाचवचनंक्रमशस्तं ॥
॥ १६॥ भैक्ष्यमन्नमजिनंपरिधानंरूक्षमेवनियमेनविधानं ॥ कर्मदातृवरशास्तिवटूनांशर्मदायिनिगमाप्ति
पटूनां॥ १७॥ कर्मनैजमपहायकुभोगैःकुर्महेहकिमुकुंभिपुरोगैः ॥ इच्छयासुखममात्ययथेतंगच्छनाथमस
कृत्कथयेत्थं॥ १८॥

नांबटूनांब्रह्मचारिणांशास्ति यद्वाविधानंश्रुतिस्मृत्यादिनियमेनरूक्षमेवकर्मतत्रापिनियमेनेतिवाशास्तीत्यर्थः शर्मदायीतिकर्मणोवाविशेषणं ॥ १७॥
तथाचैवंविधाब्रह्मचारिणोवयंनैजंस्वीयंकर्मविहायकुंभिपुरोगैःकुभोगैःभोग्यंतइतिभोगाविषयास्तैरिभपुरःसरैःकुत्सितैर्विषयसंभोगैःकिंकुर्महे हेति
प्रसिद्धार्थकमाश्चर्यार्थकंवाऽव्ययं तर्हिमयाकिंविधेयमित्याकांक्षायामाह॥हेसचिव॥इच्छयासुखंयथास्यात्तथा यथेतंयथागतंतथागच्छयतइत्थममु ॥ २
नाप्रकारेणासकृदर्थंनकथय॥ १८॥

यत्त्वयोक्तंतद्राज्ञः कर्तव्यंनभवति प्रत्युतभूमिपेनसर्वेवर्णाब्राह्मणाद्यावृत्त्युपाहरणतस्तत्तद्वृणांचतशुद्धजीविकासंपादनेनविगतानिदेवर्षिपितृऋणानिये भ्यस्तथाविधाधर्ममार्गेनिरतारचनीयाः स्वीयंकर्मवर्ज्यमितिनोवचनीयाःनैववक्तव्याः ॥ १९ ॥ ततःकिंवृत्तमित्याकांक्षायामाह इत्येवंविधादमुष्य शंकरस्यवचनादमात्यचंद्रश्चंद्राद्यतिरेकसूचकंविशेषणमकलंकःपुनःप्रत्यगात्स्वस्वामिनंप्रतिगमनंकृतवान् सभूमिंपोऽस्यवृत्तंश्रुत्वात्युत्कृष्टस्यश्रीशं करस्यसविधंसमीपंस्वयंप्राप॥२०॥इतःचतुर्थश्लोकस्थंमुनिवरस्यकुमारंविशिनष्टि॥भूसुराणांभूमिदेवानांब्राह्मणानामर्भकवरैर्बालकश्रेष्ठैःपरिवीतंप रितोव्याप्तं भासुरैर्देदीप्यमानैर्भास्वरस्येवोडुपस्यचंद्रस्यगभस्तिभिःकिरणैस्तुल्यमुपवीतंयज्ञोपवीतंयस्य अच्छास्वच्छायाजह्नुसुतागंगातयाविलसंतंद्रु

प्रत्युतक्षितिभृताखिलवर्णावृत्त्युपाहरणतोविगतर्णाः ॥ धर्मवर्त्मनिरतारचनीयाःकर्मवर्ज्यमितिनोवचनी याः ॥ १९ ॥ इत्यमुष्यवचनादकलंकःप्रत्यगात्पुनरमात्यमृगांकः ॥ वृत्तमस्यसनिशम्यधरापःसत्तमस्य सविधंस्वयमाप ॥ २० ॥ भूसुरार्भकवरैःपरिवीतंभास्वरोडुपगभस्त्युपवीतं ॥ अच्छजह्नुसुतयाविलसंतंसु च्छविंनगमिवद्रुमवंतं॥ २१॥ चर्मकृष्णहरिणस्यदधानंकर्मकृत्स्नमुचितंविदधानं॥ नूतनांबुदनिभांबरवंतंपू तनारिसहजंतुलयंतं ॥ २२ ॥ जातरूपरुचिमुंजिसुधाम्नाच्छातरूपकटिमद्भुतधाम्ना ॥ नाकभूजमिवसत्कृति लब्धंपाकपीतलतिकापरिरब्धं॥ २३॥

मवंतंनगंहिमालयमिवसुच्छविंसुष्ठुछविःकांतिर्यस्यतं॥ २१॥कृष्णहरिणस्यचर्मदधानंसर्वमुचितंकर्मविदधानंनूतनमेघतुल्यमंबरमस्यास्तीतितथातंपूत नायाःकंसप्रेषितायाअरिःशत्रुःकृष्णस्तस्यसहजंभ्रातरंबलभद्रंतुलयंतंतत्तुलांदधानं ॥ २२ ॥ जातरूपस्यसुवर्णस्यरुचिरिवरुचिर्यस्यतस्यमुंजिसंज्ञ कस्यतृणविशेषस्यसुधाम्नासुष्टुतेजसाआश्चर्यमंदिरेणच्छातंछन्नंरूपंयस्यास्तथाभूताकटिःश्रोणिर्यस्य सत्कृतिःसुकृतंतयालब्धंपाकेनपरिणत्यापीता यालतिकाःसूक्ष्मलतास्ताभिःपरिरब्धमालिंगितंस्वर्गभूमिजंकल्पद्रुममिव॥२३॥

स्मितेनमंदहसितेनसहितंमुनिवरस्यशिवगुरोःकुमारंनरपतिर्बहुवारंप्रणतिंविधायतंभुविवरदानेब्रह्मणासमंमेने भुवीत्यस्यविनतिमित्यनेनवासंबंधः ॥
॥ २४ ॥तेनश्रीशंकरेणपृष्टंकुशलंयस्मैसशात्रवस्यशत्रुसमुहस्यशत्रुसंबंधिनोवाकालोनकोभूमिपालःदशसहस्रसंख्याकसुवर्णमुद्रासमर्पणपूर्वकंस्वेनर
चिंतमपूर्वंनाटकानांत्रयमवोचत्॥ २५॥नाटकत्रयंविशिनष्टितदित्यर्धेन॥तन्नाटकत्रयं शृंगारहास्यकरुणारौद्रवीरभयानकाः ॥बीभत्साद्भुतसंज्ञौचेत्य
ष्टौनाट्येरसाःस्मृताइत्युक्तैरसैरार्द्रगुणैर्येरसस्यांगिनोधर्माःशौर्यादयइवात्मनः उत्कर्षहेतवस्तेस्युरचलस्थितयोगुणाः माधुर्यौजःप्रसादाख्यास्त्रयस्तेनपु
नर्दश ॥ आल्हादकत्वंमाधुर्यंशृंगारेद्रुतिकारणं ॥ करुणेविप्रलंभेतच्छांतेचातिशयान्वितं ॥ दीप्त्यात्मविस्तृतेर्हेतुरोजोवीररसस्थितिः ॥ बीभत्सरौद्रर
संयोस्तस्याधिक्यंक्रमेणच ॥ शुष्केंधनाग्निवत्स्वच्छजलवत्सहसैवयः ॥ व्याप्नोत्यन्यत्प्रसादोसौसर्वत्रविहितस्थितिरित्युक्तैर्गुणैः रीतिर्नामगुणाश्लि

सस्मितंमुनिवरस्यकुमारंविस्मितोनरपतिर्बहुवारं॥ संविधायविनतिंवरदानेतंविधातृसदृशंभुविमेने ॥ २४॥
तेनपृष्टकुशलःक्षितिपालःस्वेनसृष्टमथशात्रवकालः॥हाटकायुतसमर्पणपूर्वंनाटकत्रयमवोचदपूर्वं॥ २५॥तद्र
सार्द्रगुणरीतिविशिष्टंभद्रसंधिरुचिरंसुकवीष्टं॥ संग्रहेणसनिशम्यसुवाचंतंगृहाणवरमित्यमुमूचे ॥ २६ ॥

ष्टावर्णसंघट्टनामता॥ वैदर्भीगौडीपांचालीइत्युक्ताभीरीतिभिश्चविशिष्टंयुक्तंतथाभद्रसंधिभिःश्रेष्ठसंधिभिःसुंदरं संधिर्नामएकेनप्रयोजनेनान्वितानांक
थांशानामवांतरप्रयोजनसंबंधः तत्रपंचसंधयःतदुक्तंदशरूपके ॥ मुखंप्रतिमुखंगर्भःसावमर्शोपसंहृतिः ॥ मुखंबीजसमुत्पत्तिर्नानार्थरससंभवाः ल
क्ष्यालक्ष्यस्यबीजस्यशक्तिःप्रतिमुखंमतं॥गर्भस्त्वदृष्टदृष्टस्यबीजस्यान्वेषणंमुहुः ॥हेतुनायेनकेनापिविमर्शःसंधिरिष्यते॥बीजवंतोमुख्याद्यर्थाविप्रकी
र्णायथायथं ॥ऐक्यार्थमुपवर्ण्यंतेयत्रनिर्वहणंहितदित्यादि संधिषुभद्रत्वंग्राम्यचेष्टादिविनिर्मुक्तत्वं अतएवशोभनकवीनामिष्टंकविषुशोभनत्वंरसया
हित्वं एवंविधनाटकत्रयंसश्रीशंकरःसंग्रहेणाकर्ण्यसुष्टुवाक्यंतममुंराजानंवरंगृहाणेत्युवाच॥ २६॥

नितांतमत्यंतंहृदयंगमोमनोहरःसारोयस्यां तुलिताऽमृतधाराययातांगांवरंगृहाणे तिवाचंनिशम्यरचितोंऽजलिबंधोयेनसबद्धांजलिः सुष्ठुसंधाप्रतिज्ञा यस्यसभूपतिःस्वोपमंस्वसदृशंपुत्रमियेषइच्छतिस्म ॥ २७ ॥ एवंप्रार्थितःश्रीशंकरस्तंराजानमुवाच एतत्सहस्रसंख्याकंहाटकंमम हितायनास्तितर्हिक थंविधेयमितितत्राह नोस्माकंगृहवासिंजनायतुदेहि तवेहितंमनसाऽभिलषितंशीघ्रंभविष्यतितस्मात्पूर्णमनसाशीघ्रंयाहिगच्छेति मध्यमणिन्यायेनशी घ्रपदमुभयत्रसंबंधनीयं ॥ २८ ॥ एवंजनसमाजउक्त्वापुनारहसिएकांतेराजवर्यकुलस्यवृद्धेर्निमित्तभूतांश्रुतिप्रसिद्धां वित्तंक्लीबेधनेवाच्यलिंगंख्याते

तांनितांतहृदयंगमसारांगांनिशम्यतुलितामृतधारां॥ भूपतिःसरचितांजलिबंधःस्वोपमंसुतमियेषसुसंधः॥ ॥ २७॥ नोहितायममहाटकमेतद्देहिनस्तुगृहवासिजनाय ॥ ईहितंतवभविष्यतिंशीघ्रंयाहिपूर्णमनसेत्यवद त्तं॥ २८ ॥ राजवर्यकुलवृद्धिनिमित्तांव्याजहाररहसिश्रुतिवित्तां ॥ इष्टिमस्यसकलेष्टविधातुस्तुष्टिमापहित याक्षितिनेता ॥ ॥ २९ ॥ सविशेषविदासभाजितःकविमुख्येनकलाभृतांवरः ॥ अगमत्कृतकृत्यधीर्निजां नगरीमस्यगुणानुदीरयन् ॥ ३० ॥ बहवःश्रुतिपारदृश्वनःकवयोध्येषतशंकराद्गुरोः ॥ महतःसुमहांतिदर्श नान्यधिगंतुंफणिराजकौशलीं ॥ ३१ ॥

विचारितइतिमेदिनी ॥ अस्यराज्ञः सकलेष्टानांविधातापरमात्मातस्यइष्टिंपूजांव्याजहारतत्प्रकारमुक्तवान् तयाइष्ट्याभूमिनेताराजातुष्टिमापेत्यर्थः ॥ ॥ २९ ॥ विशेषज्ञेनकविमुख्येनश्रीशंकरेणसभाजितःपूजितःकलाभृतांमध्येश्रेष्ठः कृतंकृत्यंययासाबुद्धिर्यस्यसराजाऽस्यगुणान्वर्णयन्स्वीयांनगरीम गमत्गतवान् वि० ॥३० ॥ एवंकेरलभूमिपतेर्वरप्रदानादिकमुपवर्ण्यवृत्तांतांतरंवर्णयितुमुपक्रमते ॥ बहवःश्रुतिपारदृश्वनोवेदपारंदृष्टवंतःकवयःश्रीशं करान्महतःगुरोर्महांतिदर्शनानिशास्त्राणिफणिराजस्यशेषस्यकुशलतामधिगंतुमध्यैषताध्ययनंकृतवंतइत्यर्थः ॥ ३१ ॥

पठितंश्रुतमनूनकमखंडमादराद्रहस्येकांतआलोक्यप्रविभज्यचसारासारविभागंविधायनिजसुखेनिमज्जतःविधेयान्शिष्यान्ससुधीःश्रीशंकरोविदधेतमांसम्यक्कृतवान् ॥ ३२ ॥ विनीतशालीविनयवान् वसं० ॥ ३३ ॥ अन्योन्ययोगस्यसंयोगस्यविरहस्त्वनयोःशंकरतज्जनन्योरसह्योयद्यपितथापिवोढुंपरिणयंकर्तुंनोइच्छतिस्म तत्रहेतुमाह ॥ मनुष्यभावाद्देवाधिदेवत्वात् मेरुंप्राप्तःकिंदुष्प्रदेशंदुष्टस्थानमभिवांछतिनैववांछतीत्यर्थः ॥ ३४ ॥ आप्ताश्वबंधवश्चतेआप्ताश्चतेबंधवश्चेतिवा ॥ कृतासंपादिताविद्यायेनतममुंश्रितंगार्हस्थ्यंयेनएवंविधंचिकीर्षवःकर्तुमिच्छवोऽनुरूपागुणायस्यास्तथा

पठितंश्रुतमादरात्पुनःपुनरालोक्यरहस्यनूनकं॥ प्रविभज्यनिमज्जतःसुखेसविधेयान्विदधेतमांसुधीः॥ ३२॥ सर्वार्थतत्त्वविदपिप्रकृतोपचारैःशास्त्रोक्तभक्त्यतिशयेनविनीतशाली ॥ संतोषयन्सजननीमनयल्कियंतिसंमानितोद्विजवरैर्दिवसानिधन्यः ॥ ३३ ॥ साशंकरस्यशरणंसचतज्जनन्यात्यन्योन्ययोगविरहस्त्वनयोरसह्यः ॥ नोवोढुमिच्छतितथाप्यमनुष्यभावान्मेरुंगतःकिमभिवांछतिदुष्प्रदेशं ॥ ३४ ॥ कृतविद्यममुंचिकीर्षवःश्रितगार्हस्थ्यमथाप्तबंधवः॥ अनुरूपगुणामचिंतयन्ननवद्येपुकुलेपुकन्यकां ॥ ३५ ॥ अथजातुदिदृक्षवःकलाववतीर्णंमुनयःपुरद्विषं॥ उपमन्युदधीचिगौतमत्रितलागस्त्यमुखाःसमाययुः॥ ३६ ॥ प्रणिपत्यसभक्तिसन्नतःप्रसवित्र्यासहतान्विधानवित्॥ विधिवन्मधुपर्कपूर्वयाप्रतिजग्राहसपर्ययामुनीन्॥ ३७॥

भूतांकन्यकांदोषवर्जितेषुकुलेष्वचिंतयन् वि० ३५ ॥ अथानंतरंजातुकदाचित्त्रिपुरघ्नंमहादेवंकलियुगेश्रीशंकरात्मनाऽवतीर्णंद्रष्टुमिच्छवउपमन्युप्रमुखामुनयःसमाययुः ॥ ३६ ॥ भक्त्यासम्यक्नतोनम्रःप्रसवित्र्याजनन्यासहप्रणामपूजादिविधानवित्सश्रीशंकरस्तान्मुनीन्प्रणिपत्यप्रकर्षेणनत्वा मधुपर्कःपूर्वमादौयस्यास्तयासपर्ययापूजयाप्रतिजग्राह स्वागतंकृतवानित्यर्थः ॥ ३७॥

विहितांजलिनाविपश्चिताविदुषाश्रीशंकरेणभगवंतएतान्यासनानिपरिगृह्यतामितिविनयपूर्विकयोक्त्याऽर्पिताविष्टराआसनानियेभ्यस्तेपरमार्थस्यसंश्रयोयेषांतेमोक्षनिष्ठाअमीऋषयोऽमुनाश्रीशंकरेणसहकथाःकृतवंतः मोक्षसंश्रयायाइतिकथानांवाविशेषणं ॥ ३८ ॥कथानामतरेंतरालेतस्यसर्वज्ञस्यजननीमुनीनुवाच ॥ यदुवाचतदाह ॥ वयमद्यकृतार्थतांप्राप्तायद्यस्माद्भगवंतोगृहानुपागताः ॥३९॥ भवदागमनंनकेवलंकृतार्थतायाएवसंपादकमपितुजन्मांतरीयानंतसुकृतसूचकमपीत्याशयेनाह ॥क्वेति ॥ बहुदोषभाजनंकलिःक्व ॥ क्वचयुष्मच्चरणावलोकनं॥ तथाचसमस्तदोषाश्रयेकलियु

विहितांजलिनाविपश्चिताविनयोक्त्यार्पितविष्टराअमी ॥ ऋषयःपरमार्थसंश्रयाअमुनासाकमचीकरन्कथाः॥ ३८ ॥ निजगादकथांतरेमुनीन्जननीतस्यसमस्तदर्शिनः॥ वयमद्यकृतार्थतांगताभगवंतोयदुपागतागृहान्॥ ३९॥ क्वकलिर्बहुदोषभाजनंक्वचयुष्मच्चरणावलोकनं ॥ तदलभ्यतचेत्पुराकृतंसुकृतंनःकिमिति प्रपंचये॥ ४० ॥ शिशुरेषकिलातिशैशवेयदशेषागमपारगोभवत् ॥ महिमापियदद्भुतोस्यतद्द्वयमेतत्कुरुते कुतूहलं ॥ ४१ ॥ करुणार्द्रदृशानुगृह्यतेस्वयमागत्यभवद्भिरप्ययं॥ वदतास्यपुराकृतंतपःक्षममाकर्णयितुंमयायदि ॥ ४२ ॥

गेऽत्यंतालभ्यंतत्युष्मच्चरणावलोकनमलभ्यतचेत्तर्हिनोऽस्माकंपुराकृतंपुण्यंकिमितिप्रपंचयेतद्वर्णनमशक्यमित्यर्थः ॥ ४० ॥ एवंस्तुत्याऽभिमुखीकृतान्मुनीन्किंचित्प्रष्टुमारभतेशिशुरिति॥एषभवदग्रेस्थितःशिशुरतिबाल्येसर्वागमपारगोयदभवत्महिमाप्यस्ययदद्भुतोभवदेतद्द्वयंकुतूहलंकुरुते॥ ४१ ॥ भवदागमनमप्येतदद्भुतमाहात्म्यसूचकमित्याशयेनाह भवद्भिरप्यत्यंतालभ्यदर्शनैरपि॥तत्रापिस्वयमागत्य॥तत्रापिकरुणार्द्रदृशाऽयमनुगृह्यते ॥तस्मादस्यपुराकृतंतपोवदत मयाआकर्णयितुंयदिक्षमंयोग्यंतर्हिब्रूतेत्यर्थः ॥ ४२ ॥

इत्येवंप्रकारेणसादरंयथास्यात्तथासत्योच्चारितांवाचमाकर्ण्य ॥ सादरमाकर्ण्येतिवा ॥ महर्षीणांसंसदिसभायांतैरेवप्रेरितोऽतिवृद्धोऽगस्त्यःप्रतिवक्तुंप्रच
क्रमे ॥ ४३ ॥ साक्षाच्छिवएवतवपत्याऽतितपसासमाराध्यलब्धोनत्वयंकश्चित्तपस्वीत्याशयेनाह ॥ तनयायेतित्रिभिः ॥ हेपतिव्रतेपूर्वंतवपत्यापुत्रा
र्थंतपसाप्रसादितोरजनीवल्लभस्यचंद्रस्यखंडोमंडनमलंकारोयस्यसनिशाकरकलाशेखरोभगवान्शंकरोवचनमुपाददेप्रोक्तवान् ॥ त्वयासहैवतवप
त्यातपस्तप्तमितिद्योतनायसंबोधनं ॥ ४४॥ शैवंवचनमुदाहरति ॥ वरयस्वेति असर्वविदःशतायुषःसुतान्वरयस्वापिवासर्वज्ञमल्पायुषमेकंसुतंवरयस्वे

इतिसादरमीरितांतयागिरमाकर्ण्यमहर्षिसंसदि॥ प्रतिवक्तुमभिप्रचोदितोघटजन्माप्रवयाःप्रचक्रमे ॥
॥ ४३ ॥ तनयायपुरापतिव्रतेतवपत्यातपसाप्रसादितः॥ स्मितपूर्वमुपाददेवचोरजनीवल्लभखंडमंडनः
॥ ४४ ॥ वरयस्वशतायुषःसुतानपिवासर्वविदंमितायुषं ॥ सुतमेकमितीरितःशिवंसतिसर्वज्ञमयाचता
त्मजं॥ ४५ ॥ तदभीप्सितसिद्धयेशिवस्तवभाग्यात्तनयोयशस्विनि॥ स्वयमेवबभूवसर्वविन्नततोऽन्योऽ
स्तियतःसुरेष्वपि॥ ४६ ॥ इतितद्वचनंनिशम्यसामुनिवर्यंपुनरप्यवोचत ॥ कियदायुरमुष्यभोमुनेसकल
ज्ञोस्यनुकंपयावद॥ ४७॥

तिईरितस्तवपतिर्हेसतिसर्वज्ञमात्मजमयाचत ॥ ४५ ॥ तस्यतवपत्युरभिलषितस्यसिद्धयेस्वयमेवशिवोभाग्यात्तवतनयोबभूव ॥ हेयशस्विनीतिसं
बोधयन्तवयशःख्यापनार्थंबभूवेतिसूचयति ॥ ननुसर्वज्ञमन्यमेवपुत्रंकुतोनदत्तवानितिचेत्तत्राह ॥ यतःकारणाद्देवेष्वपितस्माच्छिवादन्यःसर्वज्ञो
नास्तिततइत्यर्थः ॥ ४६ ॥ इत्येवंप्रकारेणतस्यागस्त्यस्यवचनंमितायुषमित्यादिरूपंश्रुत्वा ॥ सासतीमुनिश्रेष्ठंपुनरप्युवाच ॥ भोमुनेयतःसकलज्ञोऽस्य
ऽतोऽमुष्यायुःकियत्परिमितमस्तितत्करुणयावद ॥ यतोमितायुषमितिश्रुत्वाममत्रासोजातइतिभावः ॥ ४७ ॥

एवंपृष्टोमुनिरुवाच ॥ शरदःसंवत्सराःअष्टतथापुनरष्टमिलित्वाषोडशेतियावत्अस्यतवपुत्रस्यायुर्यद्यपितथाप्यसौतेतनयःकारणांतरादस्मिन्भुवनेषोडशसंवत्सरान्पुनर्निवसिष्यतिवासंकरिष्यति ॥ ४८ ॥ इत्येवंप्रकारेणभाविनींभविष्यांकथांकुंभजेऽगस्त्येवादिनिसतिमुनयस्तंनिवार्यश्रीशंकरंसमुपामंत्र्यतेनघटजेनसहयथागतंजग्मुः ॥ ४९ ॥ अतिकष्टदांमुनिवाचंश्रुतवतींसतींवर्णयति ॥ सृणिनाअंकुशेनहस्तिनीवसामुनिवाचाऽर्दितापीडिताऽभवत् ॥ शुचिनाआषाढेनशैवलिनीशैवलंपद्मकाष्ठंतत्संबंधिनीपुष्करिणीवसाशोषिताऽभवत् ॥ वायुनाकदलीवकंपिताऽभवत् ॥ यतःपुत्रवत्सला ॥ ५० ॥ एवमतिकष्टवतींमातरंश्रीशंकरोयदुक्तवान्तद्वक्तुमुपक्रमते ॥ अथमातुर्मुनिवाचाऽतिदुःखप्राप्त्यनंतरंशोकेनपरीताव्याप्ताचेतनाबुद्धिर्यस्याः

शरदोष्टपुनस्तथाष्टतेतनयस्यास्यतथाप्यसौपुनः ॥ निवसिष्यतिकारणांतराद्भुवनेस्मिन्दशषट्चवत्सरान् ॥ ४८ ॥ इतिवादिनिभाविनींकथामृषिमुख्येघटजेनिवार्यतं ॥ ऋषयःसहतेनशंकरंसमुपामंत्र्यययुर्यथागतं ॥ ४९ ॥ सृणिनाकरिणीवसार्दिताशुचिनाशैवलिनीवशोषिता ॥ मरुताकदलीवकंपितामुनिवाचासुतवत्सलाभवत् ॥ ५० ॥ अथशोकपरीतचेतनांद्विजराडित्थमुवाचमातरं ॥ अवगम्यचसंसृतिस्थितिं किमकांडेपरिदेवनातव ॥ ५१ ॥ प्रबलानिलवेगवेल्लितध्वजचीनांशुककोटिचंचले ॥ अपिमूढमतिःकलेवरेकुरुतेकःस्थिरबुद्धिमंबिके ॥ ५२ ॥

तांसंसारस्यस्थितिंक्षणभंगुररूपामवगम्याकांडेऽसमयेपरिदेवनाशोकःतवकिमर्थमपार्थेत्यर्थः ॥ ५१ ॥ अतिचंचलेशरीरेमूढमतिरपिस्थिरबुद्धिंनकुरुते ॥ त्वंत्वतिसुज्ञातत्रतांकर्तुमित्ययोग्येतिबोधयन्नाह ॥ प्रबलोयोऽनिलोवायुस्तस्यवेगेनवेल्लितोतिकंपितोयोध्वजस्तस्ययच्चीनदेशीयमतिसूक्ष्मंवस्त्रंतस्यकोटिरग्रभागस्तद्वच्चंचलेकलेवरेशरीरेस्थिरबुद्धिंमूढमतिरपिकःकुरुतेनकोपीत्यर्थः ॥ उक्ताशयसूचकंसंबोधनमंबिकेति ॥ तथाचास्मदंबिकाऽतिसुज्ञाऽतिचंचलेकलेवरेस्थिरबुद्धित्वेनैवंशोचितुमनर्हासीत्यर्थः ॥ ५२ ॥

किंचतत्तज्जन्मस्वनुभूतानांपुत्रादीनामानंत्यात्सर्वेषांशोकासंभवादेतेशोच्याएतेनेत्यस्मिन्विनिगमकाभावान्नकेपिशोच्याइत्याशयेनाह ॥कतीति॥ इ
हास्मिन्संसारेकतिवधूर्ललनानाभुंजिहिनभुक्तातेसुताःक्व ॥तावधूश्चक्व॥ वयंचक्व॥ तथाचभवसंगःपांथानांतत्तद्दिग्भ्यआगतानांपथिकानामेकस्मिन्प्र
 पादौयथासंगमस्तद्वद्भवसंगोप्यनियतःक्षणभंगुरश्चेत्यर्थः ॥ प्रसिद्धंचेदमित्याह ॥ खल्विति॥ तस्मात्केपिशोच्यामभवंतीत्याशयः ॥ ५३ ॥ एवंशोका
पहारकैर्वाक्यैर्मातरंप्रबोध्यस्वेनयदवश्यंकर्तव्यंतदाह ॥ भ्रमतामिति संसारमार्गेभ्रमादज्ञानाद्भ्रमतांकिंचिदपिसुखंनलक्षयेऽपितुजननीजठरवासादिरू

कतिनामसुतानलालिताःकतिवानेहवधूरभुंजिहि॥क्वनुतेक्वचताःक्ववावयंभवसंगःखलुपांथसंगमः॥
॥५३॥भ्रमतांभववर्त्मनिभ्रमान्नहिकिंचित्सुखमंवलक्षये॥तदवाप्यचतुर्थमाश्रमंप्रयतिष्येभवबंध
मुक्तये॥ ५४ ॥इतिकर्णकठोरभाषणश्रवणाद्बाष्पपिनद्धकंठया॥ द्विगुणीकृतशोकयातयाजगदेगद्गद
वाक्ययामुनिः॥५५॥

पंदुःखमेवेतिसूचयन्संबोधयति हेंबेति हियस्मादेवंतत्तस्माच्चतुर्थसंन्यासाश्रममवाप्यसंसारलक्षणाद्बंधाद्विमुक्त्यर्थंप्रकर्षेणयत्नंकरिष्यामि ॥ ५४ ॥
एवंश्रीशंकरवाक्यमुदाहृत्यतद्वचनेनद्विगुणीकृतशोकायाःसत्यावचनमुदाहर्तुमाह ॥ इत्येवंप्रकारेणयत्कर्णयोःकठोरंदुःस्पर्शंभाषणंचतुर्थमाश्रममित्या
दिरूपंतस्यश्रवणात्बाष्पैरश्रुभिःपिनद्धोपिहितःकंठो ॥यस्याद्विगुणीकृतःशोकोयस्या ॥अतएवगद्गदंवाक्यंयस्यास्तयामुनिःश्रीशंकरोजगदे कर्मणिप्र
त्ययःएवंभूतासामुनिंजगादेत्यर्थः ॥५५ ॥ 

यदुवाचतदाह ॥ त्यजेति ॥ इदानीमेवचतुर्थाश्रमंप्राप्यप्रयतिष्यइतीमांबुद्धिंत्यज ॥ तर्हिकिंकर्तव्यमितिचेत्तत्राह ॥ मेममवचनंश्रृणु ॥ किंतदितित
त्राह ॥ गृहमेधीगृहस्थोभव किंततइत्यतआह ॥ पुत्रंप्रामुहि ॥ क्रतुभिर्यजनंचकुरु ॥ ततस्तदनंतरंयतिर्भविता सिभविष्यसि ॥ अंगहेपुत्रसतांशास्त्रो
क्तोऽयमेवक्रमइत्यर्थः तथाचस्मृतिः ॥ऋणानित्रीण्यपाकृत्यमनोमोक्षेनिवेशयेदिति ॥५६॥ किंचएकस्तनुभवःपुत्रोयस्यास्तथाविधाऽबलाऽहंत्वया
विरहिताशुचाशोकेनैवजीवितुंकथमुत्सहे ॥पुत्रस्यतवैवंविधदुःखदातृत्वमनुचितमितिसूचयंन्संबोधयति तनयेति॥पाठांतरेत्वयेत्यनेनसंबंधनीयं किंच
यदर्थंत्वमुत्पादितस्तदौर्ध्वदैहिकमपिप्रमृतायांकःकरिष्यतीत्यर्थः ॥ ५७ ॥ किंचाल्पविदापिवृद्धाजननीनपरित्यज्यते यदिकेनचिदतिमूढेनत्यज्यतेत

त्यजबुद्धिमिमांश्रृणुष्वमेगृहमेधीभवपुत्रमाप्नुहि ॥ यजचक्रतुभिस्ततोयतिर्भवितास्यंगसतामयंक्रमः ॥ ५६ ॥
कथमेकतनूभवात्वयारहिताजीवितुमुत्सहेऽबला ॥ तनयैवशुचौर्ध्वदैहिकंप्रमृतायांमयिकःकरिष्यति ॥ ५७ ॥ त्व
मशेषविदप्यपास्यमांजरठांवत्सकथंगमिष्यसि ॥ द्रवतेत्वद्दयंकथंनतेनकथंकारमुपैतिवादयां ॥ ५८ ॥ एवंव्यथां
तांबहुधाश्रयंतीमपास्तमोहैर्बहुभिर्वचोभिः ॥ अंबामशोकांविदधाद्विधिज्ञःशुद्धाष्टमेचिंतयदेतदंतः ॥ ५९ ॥

र्हित्यज्यतां त्वंत्वशेषज्ञोपिमांस्वमातरंतत्रापिवृद्धांत्यक्तुमत्ययोग्यांपरित्यज्यकथंगमिष्यसि मामपास्यगंतुमत्यंतायोग्योसीत्यर्थः वत्सगमनंयथागोःपी
डाकरंतथातवगमनंममेतिद्योतयन्संबोधयति ॥ वत्सेति एवमुक्तमप्यद्रवीभूतांतःकरणंपुत्रमालक्ष्याह ॥ द्रवतइति ननुवास्तवसंबंधाभावविदोममका
पिममत्वाभावात्स्नेहवशात्कथंमेत्वद्दयंद्रवीभूतंभवेदित्याशंक्यतत्त्वविदामतिदयालुत्वश्रवणात्तेत्वद्दयंदयांकथंनप्रामोतीत्याह नकथमितिवा॥ ५८॥ए
वंप्रकारेणबहुधाव्यथांपीडामाश्रयंतींतांमातरमपास्तःस्तिरस्कृतोमोहोऽविवेकोयैस्तैर्बहुभिर्वचोभिर्विधिशोकनिवृत्तिप्रकारंजानातीतिविधिज्ञः श्रीशं
करःशोकरहितांविदधादकृत॥ ततश्चशुद्धेऽष्टमवर्षेऽतर्मनसिएतद्वक्ष्यमाणमचिंतयत्॥ अष्टमवर्षात्मकस्यकालस्यशुद्धत्वंकलिमलशून्यत्वं उ०॥५९॥

यद्दर्शितयत्तद्दर्शयति ॥ ममेति॥ममममनःसंसृतिंसंसृतिसाधनंप्रवृत्तिमार्गंनेच्छति ॥ जननीपुनर्नचजिहासतिहातुंत्यक्तुंनैवेच्छति मामितिविपरिणामे नसंसृतिपदंवाऽनुषंजनीयं ननुजननीसंसृत्यनभिवांछितंत्वांतवमनसाऽनिष्ठितांसंसृतिंवाकुतोनजिहासतीत्याशंक्यतस्यास्तदीक्षणाभावादित्याह॥नचेति तत्त्वांसंसृतिंतन्मानसमितिवा ॥ ननुत्वयाप्रसह्यप्रबोधनीयेतिचेत्तत्राह॥ गुरुरिति ॥ अतएवसंन्यासाश्रयणेतस्याईषदनुशासनमाज्ञाऽपेक्षितं द्रुत॰ ॥६० ॥एवंमनसिश्रीशंकरकृतांचितामुपवर्ण्यईषदनुशासनंमहीतुंतत्कृतंचरित्रंवर्णयति इत्येवंप्रकारेणविचिंत्यसकदाचिन्मज्जनेच्छयाबहुजलांनदीं

ममनमानसमिच्छतिसंसृतिंनचपुनर्जननीविजिहासति॥ नचगुरुर्जननीतदुदीक्षतेतदनुशासनमीषदपेक्षितं॥ ६०॥ इतिविचिंत्यसजातुमिमंक्षयाबहुजलांसरितंसमुपाययौ॥ जलमगाहततत्रसमग्रहीज्जलचरश्चरणेजलमीयुषः॥६१॥सचरुरोदजलेजलचारिणाधृतपदोम्रियतेऽबकरोमिकिं॥चलितुमेकपदंनचपारयेबलवताविवृतोरुमुखेनह॥ ६२॥

समुपाययौ गत्वाजलमवगाहत तत्रनद्यांजलंप्राप्तवतश्चरणेजलचरःसम्यगग्रहीत् ॥ ६१ ॥सचरुरोदरोदनंकृतवान्बलवताविवृतमुरुबृहन्मुखंयस्यतेनजलचारिणाग्राहेणधृतोगृहीतःपादोयस्यसहंजलेम्रियेऽतःकिंकरोमि ॥ननुजलाद्बहिःकुतोनायासीत्याशंक्याह एकंपदंचलितुंनचपारये समर्थोनभवामि हेतिखेदे ॥ ६२ ॥

तत्सुतरोदनं गृहस्था जननी उपाशृणोत् श्रुत्वा च परवशाऽतिविकला द्रुतमाशु सरित्तटमवाप तीरंगता सा जनन्यपि जलगतस्य पुत्रस्य मुखं गते प्राप्ते ईक्षणे नेत्रे यस्याः सा इति शुशोच कथमित्यत आह ममम्रतेरिति मरणात् प्रथमं मम शरणं पतिस्ततः पतिमृत्यनंतरं पुत्रो मे शरणमभवत्॥ सचतनयो मरिष्यति यतो नक्रस्य जलजंतोर्वशंगतोऽहं तातिकष्टं हे शिवपुरा पूर्वमुचिता मम मृतिर्मरणं नाजनि नाभूत् शिवोपासकाया मम शिवप्राप्तिरत्यंतानुचितेति संबोधनाशयः इत्येवं शुशोचेत्यर्थः॥६३॥६४॥ एवमतिशोकपरीतां मातरमालक्ष्याह त्यजतीति हेऽब मे चरणमयं चंचलो जलचरस्तेऽनुमतेन सकले संन्यसने परिकल्पिते सति त्यजति तथा च यदि तवानुमतिस्तर्ह्यहं परिकल्पये सकलसंन्यासनमिति विपरिणामेन संबंधनीयं॥६५॥ इत्येवंप्रकारेण स्फुटं यथास्यात्तथा शिशौ वद

गृहगता जननी तदुपाश्रृणोत्परवशा द्रुतमाप सरित्तटं॥ मम मृतेः प्रथमं शरणं धवस्तदनु मे शरणं तनयोऽभवत्॥६३॥ सच मरिष्यति नक्रवशंगतः शिव न मेऽजनि हंत पुरा मृतिः॥ इति शुशोच जनन्यपि तीरगा जलगतात्मजवक्त्रगतेक्षणा॥६४॥ त्यजति नूनमयं चरणं चलो जलचरोऽब तवानुमतेन मे॥ सकलसंन्यसने परिकल्पिते यदि तवानुमतिः परिकल्पये॥६५॥ इति शिशौ चकिता वदति स्फुटं व्यधित सानुमतिं द्रुतमंबिका॥ सति सुते भविता मम दर्शनं मृतवतस्तदु नेति विनिश्चयः॥६६॥ तदनु संन्यसनं मनसा व्यधादथ मुमोच शिशुं खलनक्रकः॥ शिशुरुपेत्य सरित्तटमत्र सन्प्रसुवमेतदुवाच शुचावृतां॥६७॥

निश्चलित किता सा ऽबिका द्रुतं शीघ्रमनुमतिमनुमोदनं व्यधिताकृत स्फुटमिति मध्यमणिन्यायेनात्रापि संबंधनीयं शीघ्रानुमतिकरणे हेतुं तत्कृतं निश्चयं दर्शयति सति सुते सुतस्य दर्शनं मम भविष्यति मृतवतस्तु तद्दर्शनं न भविष्यतीति विशेषेण निश्चयोऽस्तीत्यर्थः॥६६॥ तस्या मातुरनुमतेः पश्चाच्छ्रीशंकरः मनसा संन्यसनं व्यधादथ संन्यसनानंतरं दुष्टजलचरः शिशुं मुमोच संसाराख्येनाज्ञानजलचरेण दुष्टनक्रेण गृहीतस्य संन्यासं विना न मोक्ष इत्याशयः ततः किंवृत्तमित्यपेक्षायामाह शिशुरत्र सन्नदीतटमुपेत्य शोकेन व्याप्तां जननीमेतद्वक्ष्यमाणमुवाच॥६७॥

यदुवाचतदाह हेमातर्विधेयमाज्ञापयात्रास्मिन्लोकेयत्संन्यासिनाकर्तुंयोग्यंतन्निश्चयेनकरोमि नाहंसंदिहेसंशययुक्तोनभवामि ननुसंन्यासिनासंग्रह शून्येनत्वयाऽकर्तव्यंभोजनाच्छादनप्रदानंकःकरिष्यतीतिचेत्तत्राह वस्त्रेति॥ येधनमिदंगृह्णंतिअमीवस्त्राशनेतवयथेष्टंप्रदेयुः यत्यस्मात्धनंममपितृसं बंधितस्मादित्यर्थः यन्ममपैतृकंतदिदमितिवा व० ॥६८॥ ननुसंन्यस्यत्वयिगतेरोगाधीनेमद्देहेसतिमरणप्राप्तौचकेद्रक्ष्यंतीतिचेत्तत्राह देहइति हेमात स्तवदेहेरोगवशगेचपुनर्मरणप्रसक्तौअमीसनाभयःसपिंडाःशक्तिमनुसृत्यदर्शनंकरिष्यंति मरणानंतरंदाहादिसंस्कारंयथाविधानंकुर्युस्तत्रहेतुद्वयमा हार्थस्यममपैतृकधनस्यग्रहणाज्जनानांभयाच्च तस्मादल्पमपिभयंत्वयानकर्तव्यमित्यर्थः ॥ ६९ ॥ संस्कृतिंचामीकुर्युरितिसुतोक्तमसहमानासत्युवा

मातर्विधेयमनुशाधियदत्रकार्यंसंन्यासिनातदुकरोमिनसंदिहेऽहं ॥ वस्त्राशनेतवयथेष्टममीप्रदेयुर्गृह्णंतिये
धनमिदंममपैतृकंयत्॥६८॥देहेंबरोगवशगेचसनाभयोऽमीद्रक्ष्यंतिशक्तिमनुसृत्यमृतिप्रसंगे॥अर्थग्रहाज्ज
नभयाच्चयथाविधानंकुर्युश्चसंस्कृतिममीनबिभेयमीषत् ॥ ६९ ॥ यज्जीवितंजलचरस्यमुखात्तदिष्टंसंन्यास
संगरवशान्ममदेहपाते॥ संस्कारमेत्यविधिवत्कुरुशंकरत्वंनोचेत्प्रसूयममकिंफलमीरयत्वं॥ ७० ॥

च्चयदिति संन्यासस्यसंगरोंऽगीकृतिस्तद्वशाज्जलचरस्यमुखाद्यज्जीवितंतवयज्जीवनंतदिष्टं संगरोंऽगीकृतौयुधीतिविश्वप्रकाशः तथापिममदेहस्यपाते सतियत्रक्कापिस्थितस्त्वमागत्यविधिवन्ममदाहादिसंस्कारंकुरु ननुसंन्यासिनोममदाहादिकर्मण्यधिकाराभावात्कथमेवंवदसीतिचेत्तत्राह हेशंकरपर मेश्वरस्यतवनकिंचिदपिदोषावहमितिभावः ॥ ननुतथापिलोकविरुद्धत्वात्किमर्थमेवंविधेयमितितत्राह नोचेदिति मरणानंतरंदाहसंस्कारस्याप्यला भेसतित्वामुत्पाद्यमयाकिंफलंलब्धमितित्वमेवकथय ॥ ७० ॥

एवंत्वदाहसंस्कारेऽतिंनिर्बंधवतीमतिदुःखितांमातरमालक्ष्यश्रीशंकरउवाच हेंऽबाह्निदिवसेस्ववशगास्वाधीनारोगादिनापराधीनावशगावामांचिंतय त
भतवर्चिंतनसमयेमर्वंसमयमाचारंविहायागमिष्यामि समयःशपथाचारसिद्धांतेष्वितिमेदिनी मदुक्तेविश्वासंप्रामुहि मृतावपिसंस्कारंकरिष्ये॥ ७१॥
संन्यासिनाकर्तुंमयाग्यमप्यंगीकुर्वतोममैकाप्रार्थनात्वयाप्यवश्यंस्वीकर्तव्येत्याशयवानाहायंशिशुर्विधवामनाथांमात्वक्त्कासंन्यासंकृतवानितिमांप्रति
कस्यांचिदप्यवस्थायांत्वयानचिंतनीयं ननुत्वयापरित्यक्तत्वादतिकष्टवत्यामयाकथंनचिंतनीयमितितत्राह स्थितवतामयायत्परिमितंफलंत्वयाप्राप्त
व्यंहेमातस्तस्माच्छतगुणंफलमहंप्रापयिष्ये ॥ ७२॥अनेनप्रकारेणमातरमुक्त्वासगोत्रजनमुवाचेत्याहेत्थमिति यदुवाचतदाह संन्यासेति संन्यासायक

अह्न्यंबरात्रिसमयेसमयांतरेवासंचिंतयस्ववशगावशगाथवामां॥ एष्यामितत्रसमयंसकलंविहायविश्वास
माप्नुहिमृतावपिसंस्करिष्ये ॥ ७१ ॥ संन्यस्तवान्शिशुरयंविधवामनाथांक्षिप्त्वेतिमांप्रतिकदापिनचिंतनी
यं॥ यावन्मयास्थितवताफलमापनीयंमातस्ततःशतगुणंफलमापयिष्ये॥ ७२॥ इत्थंसमातरमनुग्रहणेच्छुरु
क्त्वाप्रोचेसनाभिजनमेषविचक्षणाग्र्यः॥ संन्यासकल्पितमनाव्रजितोस्मिदूरंतांनिक्षिपामिजननीमधवांभ
वत्सु॥ ७३॥एवंसनाभिजनमुत्तममुत्तमाग्र्यःश्रीमातृकार्यमभिभाष्यकरद्वयेन॥संप्रार्थयन्स्वजननींविनयेन
तेषुनिक्षेपयन्नयनजांबुनिषिंचमानां॥ ७४॥आत्मीयमंदिरसमीपगतांयथासौचक्रेविदूरगनदींजननीहिता
य॥तत्तीरसंश्रितयदूद्वहधामकिंचित्सानिम्नगारभतताडयितुंतरंगैः॥ ७५॥

ल्पितंमनोयेनसोहंदूरंगंतुमुद्यतोस्मि तस्मात्पतिरहितांतांजननींभवत्सुरक्षार्थंस्थापयामि॥ ७३ ॥ एवंप्रकारेणोत्तमंसनाभिजनमुत्तमाग्र्यःश्रीशंकरःश्री
मातृकार्यंसम्यगुक्त्वा मुकुलितेनहस्तद्वयेनसम्यक्प्रार्थयन्सन्नेत्रजांबुभिर्निषिंचमानांमातरंसःविनयेनतेषुसनाभिजनेषुनिक्षेपयत् ॥ ७४ ॥ संन्यास
ग्रहणायश्रीशंकरस्यगमनंवर्णयिष्यन्गमनसमयेसयत्कृतवान्तद्वर्णयितुमारभते आत्मीयेति अथानंतरमसौयांविदूरगांमदींमातुर्हितायस्वीयमंदिरसमी
पगतांचक्रेतस्यास्तीरंसंश्रितस्ययदुश्रेष्ठस्यश्रीकृष्णस्यधामस्थानंकिंचित्सानदीतरंगैस्ताडयितुमारभत ॥ ७५॥

किंचवर्षासुहरौदेवेंद्रेवर्षतिसति इंद्रोदुश्च्यवनोहरिरितिहलायुधः किंचिज्जलंभगवतोविष्णोरंतःपुरमागत्यमृत्सांप्रशस्तांमृत्तिकामथनुनोद ततश्चानव
द्याकृष्णमूर्तिःक्रमेणचलितुमारब्धप्रवृत्ता ननुतज्जलंतद्धिंसांकुतोनमुक्तवदितितत्राह देवोऽबिभेदिवभयंप्रापइवाभवत् भीरुर्हिंसांचकोपिनत्यजतीत्यत
इत्यर्थः॥ ७६ ॥एवंनद्याक्लेशितोभगवान्श्रीकृष्णोऽनंगयाऽशरीरयावाचाश्रीशंकरमवदत्उक्तवान् तंविशिनष्टि मातुश्चरणकमलद्वंद्वंप्रणिपत्यकेनापिप्रका
रेणमातुराज्ञांचपरिगृह्यगंतुकामंसकलदोषविनिर्मुक्तं एतेनस्वस्याज्ञानादिदोषनिवृत्त्यर्थंतस्यगमनेच्छावारिता तर्हिकिमर्थंतस्यगमनेच्छेत्यतआह जना
नांहितंएकोमुख्योरसोयस्यतंतथाचलोकोपकारायतस्यगमनसंन्यासग्रहणादिकमितिभावः ॥ ७७ ॥ यदुवाचतदाह यांदूरगनदींभवान्कृपयाआनी

वर्षासुवर्षतिहरौजलमेत्याकिंचिदंतःपुरंभगवतोपनुनोदमृत्सां ॥ आरब्धमूर्तिरनघाचलितुंक्रमेणदेवोवि
भेदिवनमुंचतिभीरुर्हिंसां ॥ ७६ ॥ प्रस्थातुकाममनघंभगवाननंगवाचावदत्कथमपिप्रणिपत्यमातुः ॥
पादारविंदयुगलंपरिगृह्यचाज्ञांश्रीशंकरंजनहितैकरसंसकृष्णः ॥ ७७ ॥ आनेष्टदूरगनदींकृपयाभवान्यां
सामातिमात्रमनिशंबहुलोर्मिहस्तैः ॥ क्लिश्नातिताडनपरावदकोभ्युपायोवस्तुंक्षमेननितरांद्विजपुत्रया
सि ॥ ७८ ॥ आकर्ण्यवाचमितितामतनुंगुरुर्नःप्रोद्धृत्यकृष्णमचलंशनकैर्भुजाभ्यां ॥ प्रातिष्ठयन्निकटएवन
यत्रबाधानघेत्युदीर्यसुखमास्वचिरायचेति ॥ ७९ ॥

तवान्साऽत्यंतंनिरंतरमनंतोर्मिरूपैर्हस्तैस्ताडनपरामांक्लिश्नाति क्लेशनिवृत्तौवदकोभ्युपायोयतोवस्तुंनसमर्थोभवामि हेद्विजपुत्र त्वंयास्यतःसुतरांवस्तुंन
क्षमेइत्यर्थः ॥ ७८ ॥ श्रीकृष्णोक्तंश्रुत्वाकिंकृतवानित्यपेक्षायामाहाकर्ण्येति इत्येवंतामतनुमशरीरांवाचंश्रुत्वा नोऽस्माकंगुरुरितिग्रंथकारोक्तिः अ
चलंमपिकृष्णंशनकैर्भुजाभ्यांप्रकर्षेणांगभंगादिकंविनैवोद्धृत्यसमीपएवप्रकर्षेणपुनश्चलनंयथानस्यात्तथास्थापितवान् ननुनिकटस्थापनेनपुनरपि
नदीबाधाभविष्यतीतिचेतत्राह यस्मिन्स्थानेनबाधानास्तितत्रेत्यर्थः चिरकालंसुखमुपविशेत्युक्त्वाचप्रातिष्ठयदित्यन्वयः ॥ ७९ ॥

तस्माच्छ्रीकृष्णात् भक्तिवशात्स्वमातुरप्यनुज्ञां गृहीत्वा संसारमहासमुद्राद्विरक्तिमान्संन्यसनाय दूरं गंतुं मनोऽकृत किमर्थमित्यत आह किमिति नौकायां स्थितः समुद्रे किं पतितुमिच्छति नैवेच्छतीति तद्वद्वैराग्यादिलक्षणनौस्थितः संसारसमुद्रे पतितुं नैवेच्छतीत्यर्थः ॥ ८०॥ इत्थमनेन प्रकारेण स सुधीः निशांतात्सदनान्निरगात् निर्गतवानिति योजना निशांतपस्त्यसदनं भवनागारमंदिरमित्यमरः॥ तं विशिनष्टि माता च लक्ष्मीशश्च मातृलक्ष्मीशौ निरवग्रहो निरवधिर्मातृविष्णोरनुग्रहो यस्मिन् एतेन मातृश्रीकृष्णाभ्यां प्रसन्नतापूर्वकं प्रेषित इति बोधितं नन्वतिशीघ्रं किमर्थं गतवानित्यत आह घटजेनागस्त्येन बोधितं भविष्यं

तस्मात्स मातुरपि भक्तिवशादनुज्ञामादाय संसृतिमहाब्धिविरक्तिमान्सः ॥ गंतुं मनो व्यधित संन्यसनाय दूरं किं नौस्थितः पतितुमिच्छति वारिराशौ ॥ ८० ॥ इत्थं सुधीः स निरवग्रहमातृलक्ष्मीशानुग्रहो घटजबोधितभाविवेदी ॥ एकांततो विगतभोग्यपदार्थतृष्णः कृष्णे प्रतीचि निरतो निरगान्निशांतात् ॥ ८१ ॥ यस्य त्रिनेत्रापरविग्रहस्य कामेन नास्थीयत तद्दृक्पथेपि ॥ तन्मूलकः संसृतिपाशबंधः कथं प्रसज्येत महानुभावे ॥ ८२ ॥

जानातीति तथा ननु जीवनोपायमेव कुतो न कृतवानित्यत आहात्यंतं विगता निवृत्ता भोग्यपदार्थेभ्यो देहादिभ्यस्तृष्णा यस्य स यतो कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकस्तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत इत्युक्तत्वात्कृष्णे प्रतीचि प्रत्यगभिन्ने ब्रह्मणि नितरां रत इत्यर्थः ॥ ८१ ॥ तस्मिन्नैतच्चित्रमित्याह यस्य त्रीणि नेत्राणि कामदाहकाग्निसोमसूर्यात्मकानि यस्य स अपरो विग्रहो यस्य तस्यापरविग्रहस्येति वा दृष्टिपथेपि कामेन नास्थीयत कामः स्थातुं न शक्तस्तस्मिन्महानुभावे काममूलकः संसृतिपाशबंधः कथं प्रसज्येत ॥ ८२ ॥

ननु नित्यमुक्तस्य शिवस्य संन्यासेन किमाधिक्यमिति चेत्तत्राह ॥ स्मरेणेति ॥ विधिर्ब्रह्मा विधुश्चंद्रस्तौ कामेन मोहितौ जातु कदाचिदुत्पथौ च सुतानुधावने
नतारायहेण चोन्मार्गौ च तथाऽहं शिवोपि कामेन मोहितो मोहिन्याः केशस्तनादिनिरीक्षणपरोऽहहेत्यत्यंताश्चर्ये मोहिनीमगामनुगतवानिति विचार्य सः शि
वो यतीशस्य वपुषा कामेन कृतायाः पीडायाः वार्त्तयाप्युज्झितोऽजागरीदतिशयेन जागर्तिस्मेत्यर्थः पृथ्वी ॥ ८३ ॥ किंच योधानुष्कवरो धनुष्मच्छ्रेष्ठो मारः
कामोऽसुरान् निष्पत्राकुरुत सपुंखानां शराणामपरपार्श्वेषु निर्गमनान्निष्पत्रान्कृतवान् तथा सुरानपि सपत्राकरोत् सपुंखशरप्रवेशनेन सपत्रान्कृतवान् स

स्मरेण किल मोहितौ विधिविधू च जातूत्पथौ तथाहमपि मोहिनीकचकुचादिवीक्षापरः ॥ अगामहहमो
हिनीमिति विमृश्य सोऽजागरीद्यतीशवपुषा शिवः स्मरकृतार्तिवार्तोज्झितः ॥ ८३ ॥ निष्पत्राकुरुतासुरा
नपि सुरान्मारः सपत्राकरोदप्यन्यानिह निष्कुलाकृततरां गंधर्वविद्याधरान् ॥ योधानुष्कवरो नराननल
सात्कृत्योदलासीदलं यस्तस्मिन्नशुशूरतैष मुनिभिर्वर्ण्यः कथं शंकरः ॥ ८४ ॥

पत्र निष्पत्रादतिव्यथन इति डाच् तथाऽन्यानपि गंधर्वविद्याधरानिह जगति निष्कुलाकृततरां निर्गतं कुलमंतरवयवानां समूहो येभ्यस्तथाभूतानत्यंतं कृतवा
न् निष्कुलान्निष्कोषणे इति डाच् तथा नराननलसात्साकल्येनाग्निरूपान्कृत्वा भृशं दग्ध्वालमुदलासीत् सम्यग्दीप्तिमान भूत्तस्मिन्कामे यः अशुशूरत शूर
तां कृतवान्सैषः श्रीशंकरो मुनिभिः कथं वर्ण्यो न कथमपीत्यर्थः शार्दू० ॥ ८४ ॥

किंचास्यश्रीशंकरस्यकुतोवैराग्यतःकस्मात्वैराग्यात्परवैराग्यादपरवैराग्याद्वाशांतिः श्रवणाद्यतिरिक्ताखिलबुद्धिव्यापारेभ्यःस्वाधिकारानुपयुक्तेभ्यो फलत्वज्ञानपूर्वकश्चित्तनिरोधःसामनोवशयत्वशमनयत् तथादांतिस्तथाभूतबाह्यव्यापारेभ्योबाह्यकरणनिरोधःसागतिमुखाःक्रियान्यरुंधत्गमना दानवदनविसर्गानंदस्पर्शनदर्शनास्वादनंघ्राणात्मिकाःक्रियावाक्पाणिपादपायूपस्थश्रोत्रत्वक्चक्षूरसनघ्राणाख्येंद्रियव्यापारान्यरुंधत् सरुद्धवतीत थोपरतिः सत्वशुद्धौनित्यानामपिविधितएवत्यागः साविषयांतराच्छ्रवणादिव्यतिरिक्तविषयाताउक्तक्रियाआधातासाधारणंस्तंभनंकृतवतीतथाक्षांतिः स्वाधिकारापेक्षितजीवनविच्छेदकातिरिक्तानांशीतोष्णादिद्वंद्वानांसहिष्णुतासामृदुत्वंकोमलतांव्यधात्विहितवती तथासमाधिवितर्तिर्विधित्सिश्रव

शांतिश्चावशयन्मनोगतिमुखादांतिर्न्यरुंधक्रियाआधाताविषयांतरादुपरतिःक्षांतिर्मृदुत्वंव्यधात्॥
ध्यानैकोत्सुकतांसमाधिविततिश्चक्रेतथासप्रियाश्रद्धाहंतवसुप्रथास्यतुकुतोवैराग्यतोवेद्म्निनो ॥
॥ ८५ ॥ विजनतावनितापरितोषितोविधिवितीर्णकृतात्मतनुस्थितिः॥ परिहरन्ममतांगृहगोचरां
हृदयगेनशिवेनसमंययौ ॥ ८६॥

णादिविरोधिनिद्रादिनिरोधेनचेतसोऽवस्थानंसमाधिस्तस्यसंततिध्यानैकोत्सुकतांचक्रे आत्मेतिवापाठः तथाश्रद्धान्वितोभूत्वेतिश्रुतौवसुवित्तमितिप्र थायस्याःसाश्रद्धागुरुवेदांतवाक्येषुविश्वासरूपाप्रियाआसबभूवेतिनोवेद्मि एतत्सर्वंकस्माद्वैराग्याज्जातमितिनजानामीत्यर्थः ॥ ८५ ॥ एवंश्रीशंकर मुपवर्ण्यतस्यगमनंवर्णयति ॥ विजनतेति ॥ जनसमूहशून्यतालक्षणयावनितयांगनयातोषंप्रापितोविधिनादैवेनवितीर्णेनदत्तेनभोगेनकृतात्स्वशरी रस्यस्थितिर्येनसगृहविषयांममतांपरिहरन्हृदयगेनशिवेनसमंययौ परमात्मानंहृदिध्यायन्ययावित्यर्थः द्रुत० ॥ ८६ ॥

सगच्छन्वनादीनिपश्यन्नपियथेंद्रजालिकोमायाव्यद्भुतमिंद्रजालंदर्शयत्येवमेवमायावच्छिन्नंब्रह्मवनादिरूपमिदमद्भुतमिंद्रजालंदर्शयतीतिमेने व० ॥ ॥ ८७ ॥ कुत्सितोऽध्वामार्गोयेषांदंडितंसर्वेषांकदध्वनांमंडलंसमुदायोयेन॥सजगद्गुरुर्वादिभिःस्वेस्वेमार्गेकर्शितांजरद्गवींकर्शितत्वाच्छिथिलावयवां श्रुतिलक्षणांवृद्धांगांनिजेऽद्वैतलक्षणेपथिप्रवर्तयन्दंडमेकमवहत् तस्यदंडधारणमेतदर्थमित्यर्थः ॥ रोनराविहरथोद्धुताल्गौ ॥ ८८ ॥ किंचाहंकुर्व द्भिश्छृंखलारहितैर्जल्पनशीलैःपरमर्मभेदनकलालक्षणयाकंड्वाव्याप्तंजिह्वांचलंजिह्वाग्रांतभागोयेषांतैः ॥ विश्वकद्रुभिःखेटसारमेयैर्भयद्रुतमनसःसारं

गच्छन्वनानिसरितोनगराणिशैलान्ग्रामान्जनानपिपशून्पथिसोऽप्यपश्यन्॥ नन्वैंद्रजालिकइवाद्भुतमिंद्र जालंब्रह्मैवमेवपरिदर्शयतीतिमेने ॥ ८७ ॥ वादिभिर्निजनिजाध्वकर्शितांवर्तयन्पथिजरद्गवींनिजे ॥ दंडमे कमवहज्जगद्गुरुर्दंडिताखिलकदध्वमंडलः ॥ ८८ ॥ सारंगाइवविश्वकद्रुभिरहंकुर्वद्भिरुच्छृंखलैर्जल्पाकैःपर मर्मभेदनकलाकंडूलजिह्वांचलैः ॥ पाखंडैरिहकांदिशीकमनसःकंनाप्नुयुर्वैदिकाःक्लेशंदंडधरोयदिस्मनमुनि स्त्राताजगद्देशिकः ॥ ८९ ॥ दंडान्वितेनधृतरागनवांबरेणगोविंदनाथवनमिंदुभवातटस्थं ॥ तेनप्रविष्टमज निष्टदिनावसानेचंडत्विषाचशिखरंचरमाचलस्य ॥ ९० ॥

गाम्मृगाइवविश्वकद्रुभिःखलैरहंकुर्वद्भिस्तथाभूतैःपाखंडैरिहभयद्रुतमनसोवैदिकाःकंक्लेशंनाप्नुयुरपितुसर्वमपिप्राप्नुयुर्यदिजगद्देशिकोदंडधरोमुनिर्नत्रा तास्मत्राणंनकुर्यात् ॥ विश्वकद्रुस्त्रिषुखलेध्वानखेटशुनोःपुमान् सारंगःपुंसिहरिणइतिमेदिनी शा० ॥ ८९ ॥ एवंभूतःश्रीशंकरोगोविंदनाथस्यवनं प्रविष्टइत्याह ॥ दंडसंयुक्तेनधृतरागंरंजितंनवीनमंबरंवस्त्रंयस्य ॥ धृतानुरागश्चासौनवांबरश्चेतिवा तेनश्रीशंकरेणेंदुभवायानर्मदाख्यायानद्यास्तटेस्थि तंगोविंदनाथवनंदिनांतेप्रविष्टमजनिष्टाभूत् अस्ताचलस्यशिखरंचचंडप्रभेणभानुनाप्रविष्टमभूदित्यर्थः व० ॥ ९० ॥

तीरवृक्षेष्वागतेनवायुना विशेषेणापगतःश्रमोयस्यसतथा विधःसन्गोविंदनाथवनस्यमध्यतलंलुलोकेददर्श ॥ दर्शनार्थस्यलोकृधातोर्लिटिअभ्यास
ह्रस्वेरूपं ॥ यत्रयस्मिन्नुज्ज्वलानिमृगचर्मकौपीनाच्छादनानियासुताभिःशाखाभिर्मननशीलानांयतीनांनिवासंबोधयंतितदित्यर्थः ॥ ९१ ॥ आ
देशमुपदेशमेकमनुयोक्तुंप्रष्टुमयंश्रीशंकरोव्यवस्यन्निश्चयंकुर्वन्प्रादेशमात्रंछिद्रमेवद्वारपालंभजतीतितथातांयमिनांसमूहेनकथितांगोविंदनाथगुहां
कौतुकयुक्तःसन्ददर्श ॥ ९२ ॥ दृष्ट्वायत्कृतवान्तदाह ॥ तस्यप्रपन्नानांशरणागतानांसंतोषंदोग्धिपूरयतीतितथातस्यशरणागतसंतोषप्रदस्यश्रीगोवि

तीरद्रुमागतमरुद्विगतश्रमःसन्गोविंदनाथवनमध्यतलंलुलोके ॥ शंसंतियत्रतरवोवसतिंमुनीनांशाखाभि
रुज्ज्वलमृगाजिनवल्कलाभिः ॥ ९१ ॥ आदेशमेकमनुयोक्तुमयंव्यवस्यन्प्रादेशमात्रविवरप्रतिहारभाजं ॥
तत्रस्थितेनकथितांयमिनांगणेनगोविंददेशिकगुहांकुतुकीददर्श ॥ ९२ ॥ तस्यप्रपन्नपरितोपदुहोगुहायाः
सत्रिप्रदक्षिणपरिक्रमणंविधाय ॥ द्वारंप्रतिप्रणिपतज्जनतापुरोगंतुष्टावतुष्टहृदयस्तमपास्तशोकं ॥ ९३ ॥
पर्यंकतांभजतियःपतगेंद्रकेतोःपादांगदत्वमथवापरमेश्वरस्य ॥ तस्यैवमूर्ध्निधृतसाब्धिमहीध्रभूमेःशेषस्यवि
ग्रहमशेपमहंभजेत्वां ॥ ९४ ॥

दनाथस्यगुहायाःवारत्रयंप्रदक्षिणंपरिक्रमणंविधायद्वारंप्रतिप्रणिपातंदीर्घनमस्कारंकुर्वन्जनसमूहस्यसमक्षंतुष्टहृदयःश्रीशंकरोऽपास्तःशोकोपलक्षि
तःसंसारोयस्मात्तंनिरस्तसंसृतिचक्रंअपास्तोदूरीकृतःशिष्याणांवाशोकोयेनतं श्रीगोविंदनाथंतुष्टाव ॥ ९३ ॥ स्तुतिमेववर्णयति चतुर्भिर्यःगरुडध्व
जस्यश्रीविष्णोःपर्यंकतांभजतिअथवेत्यस्यतथैवेत्यर्थः परमेश्वरस्यमहादेवस्ययःपादांगदत्वंभजति पुनश्चशिरसिधृतासमुद्रपर्वतैःसहिताभूमिर्येन त
स्यैवशेषस्याशेषंसर्वंविग्रहमनुपत्वाद्वाशेषविलक्षणंअशेषंसर्वात्मत्वाद्वाऽशेषंत्वामहंभजे ॥ ९४ ॥

एवंशेषात्मकत्ववर्णनेनश्रीगोविंदनाथंस्तुत्वातदवतारभूतपतंजल्यात्मनातंस्तौति ॥ दृष्ट्वेति यःपूर्वंस्वीयांसहस्रमुखींमूर्तिंदृष्ट्वांतेसमीपेपयेवसंतोंतेवासिनः शिष्याअभीषुर्भयमापुरितिहेतोस्तांभयजनकांमूर्तिंपरित्यज्यशांतोनिर्विषःसन्नेकमुखेनभुव्यवतीर्यशिष्यानन्वग्रहीदनुगृहीतवान्सपतंजलिर्ननुनिश्च येनत्वमेवेत्यर्थः ॥ ९५ ॥ जगदुपकारकतांवर्णयन्नाह ॥ स्वयंभूमेःपातालंछिद्रंप्रविश्योरगपतेःशेषस्यमुखात्साक्षादधीत्यजगदुपकारपरेणयेनयोग शास्त्रेणसहितंव्याकरणभाष्यंभूमितलेप्रकटितंतमित्युत्तरेणसंबंधः अयुजिनयुगरेफतोयकारोयुजिचनजौजरगाश्चपुष्पिताग्रा ॥ ९६ ॥ तंसर्वगुणैः





दृष्ट्वापुरानिजसहस्रमुखीमभीषुरंतेवसंतइतितामपहायशांतः ॥ एकाननेनभुवियस्त्ववतीर्यशिष्यानन्वग्रही
न्ननुसएवपतंजलिस्त्वं ॥ ९५ ॥ उरगपतिमुखादधीत्यसाक्षात्स्वयमवनेर्विवरंप्रविश्ययेन ॥ प्रकटितमचलात
लेसयोगंजगदुपकारपरेणशब्दभाष्यं ॥ ९६ ॥ तमखिलगुणपूर्णंव्यासपुत्रस्यशिष्याद‌धिगतपरमार्थंगौडपा
दान्महर्षेः ॥ अधिजिगमिषुरेषब्रह्मसंस्थामहंत्वांप्रसृमरमहिमानंप्रापमेकांतभक्त्या ॥ ९७ ॥ तस्मिन्निति स्तव
तिकस्त्वमितिब्रुवंतंदिष्ट्यासमाधिपदरुद्धविसृष्टचित्तं ॥ गोविंददेशिकमुवाचतदावचोभिःप्राचीनपुण्यज
नितात्मविबोधचिन्हैः ॥ ९८ ॥

पूर्णंव्यासपुत्रस्यशुकाचार्यस्यशिष्याद्गौडपादान्महर्षेरधिगतोलब्धोपरमार्थोयेनतंप्रसृमरःप्रसरणशीलोमहिमायस्यतंत्वांब्रह्मनिष्ठामधिजिगमिषुरधि गंतुमिच्छुरेषोहमनन्ययाभक्त्याप्रापंप्राप्तोऽस्मि ॥ ननमयययुतेयंमालिनीभोगिलोकैः ॥ ९७ ॥ तस्मिञ्छ्रीशंकरेएवंस्तुवतिस्तुतिंकुर्वतिसतिकस्त्वमिति ब्रुवंतंभाग्यवशात्समाधिपदेनिरुद्धमपिविसृष्टंव्युत्थापितंचित्तंयेनतंगोविंददेशिकंप्राचीनैःपुण्यैर्जनितस्यात्मविबोधस्यचिह्नंयेषुतैर्वचोभिस्तस्मिन्का लेश्रीशंकरउवाचेत्यर्थः ॥ ९८ ॥

तद्वचनमुदाहरति॥ स्वामिन्निति॥उपनिषत्प्रतिपाद्यमात्मानंदर्शयितुमितरवाद्यभिमतंतंनिराकरोत्यहंनपृथिवीत्यादिना तत्रस्थूलोऽहंजानामीत्यादिप्रतीत्यास्थूलस्यैवज्ञातृत्वप्रतीतेर्देहाकारेणपरिणतंभूम्यादिभूतचतुष्टयमात्मेतिचार्वाकेषुकेषांचिदभिमतमात्मानंनिराकरोति यापृथिवीसाऽहंनभवामियोऽहंसापृथिवीनभवतीतिपरस्परतादात्म्यनिषेधएवमग्रेपि ननुवादिनासंघातस्यैवात्मत्वाभ्युपगमात्प्रत्येकंपृथिव्यादेस्तत्त्वनिराकरणंकोपयुज्यतइतिचेत् वादिनाद्विगुणगुरुत्वभियातिरिक्तावयवानभ्युपगमात्भूम्यादीनिचत्वारितत्त्वानीतिवदतापंचमतत्त्वाभ्युपगमप्रसक्तिभियासंयोगादिसंबंधानभ्युपगमासंघातकर्तुरभावाच्च संघातानुपपत्त्याप्रत्येकभूतनिराकरणंभौतिकेदेहात्मत्ववादनिरासइतिगृहाण स्पर्शनोवायुःतथाचात्मनोदेशकालाद्यपरिच्छिन्नत्वात्तत्परिच्छिन्नानांघटादिवदनात्मत्वात्पृथिव्यादिरहंनेत्यर्थः ॥ एवंदेहात्मवादंनिराकृत्यशून्यवादिमाध्यमिकस्यमतंनिराचष्टेनगगनंयच्छून्यंतदहंनभवामियोहंसशून्यंनभवति अस्तीत्येवोपलब्धव्यइत्यादिश्रुतेः निरधिष्ठानकभ्रमानुपपत्तेःस्तनपानादिप्रवर्तकंजन्मांतरीयसंस्कारोपलब्धेश्चभूतनिरा

स्वामिन्नहंनपृथिवीनजलंनतेजोनस्पर्शनोनगगनंनचतद्गुणावा ॥ नापींद्रियाण्यपितुविद्धिततोविशिष्टोयःकेवलोस्तिपरमःसशिवोऽहमस्मि॥९९॥

करणेनआपोमयःप्राणःअन्नमयंहिसोम्यमनइतिश्रुत्याभूतकार्यत्वेनांगीकृतयोःप्राणमनसोःक्रियाशक्तिज्ञानशक्तिप्रधानयोर्निरासः मनोनिराकरणेनचमनोवृत्तेःक्षणिकविज्ञानस्यनतावत्प्राणात्मवादःसाधुः सुषुप्तौतस्यभोक्तृत्वादर्शनात्नापिमनआत्मवादस्तस्यकरणत्वानुभवात्नापिक्षणिकविज्ञानात्मवादः सौगताभिमतकर्तृत्वभोक्तृत्वयोर्वैय्यधिकरण्यापत्तेः ॥यद्वानगगनमित्यनेनाकाशस्यपंचमभूतस्यनिरासः यद्यपिभूतचतुष्टयतत्त्ववादिनोमतेआवरणाभावत्वेनाभिमतस्यस्थिरस्यासतआकाशस्यदेहानुपादानत्वंतथापितस्यसिद्धांतिभावत्वदेहोपादानत्वाद्यभ्युपगमात्तत्राप्यात्मत्वप्रसक्त्यातन्निराकृतं एवंदेहोपादानानांभूतानामात्मत्वंनिराकृत्यतदुपादानभूतानांगंधरसरूपस्पर्शशब्दाख्यानांतद्गुणत्वेनप्रसिद्धानांपंचतन्मात्राणामात्मत्वंनिराचष्टेनचतद्गुणावावाशब्दस्तथाशब्दार्थेइदानींपश्यामिश्रृणोमीत्याद्यनुभवात्प्रत्येकमिंद्रियाण्यात्मेनिकेचित्विनिगमकाभावात् मिलितानीत्यपरेतान्निराचष्टे

शं० वि० नार्पींद्रियाणीतिप्रत्येकमिंद्रियाणामात्मत्वेयोहमश्रौषंसोहंपश्यामीतिप्रत्यभिज्ञानुपपत्तिर्मिलितानांतथात्वेएकेंद्रियनाशेआत्मनिनाशापातः तस्मादिंद्रि ॥ टी०
याण्यप्यहंनापितुततस्तस्मात्सर्वेषांबाधात्योऽवशिष्टः सर्वद्वैतबाधेप्यबाधितःकेवलःकर्तृत्वभोक्तृत्वादिविनिर्मुक्तःपरमःसर्वोत्तमःशिवश्चिदानंदोस्ति
सोऽहमस्मिअवशिष्टइत्यनेनशून्यमतनिरासःकर्त्ताभोक्ताचेतिवैशेषिकतार्किकप्राभाकराभोक्तैवेतिसांख्याश्चकेवलपदेननिराकृताः शिवइत्यनेनवैशे
॥१३॥ षिकाद्यभिमतमात्मनःसुखादिगुणकत्वंपराकृतंपरमइत्यनेन निरतिशयत्वेनपरमपुरुषार्थत्वंतस्यबोधितं यद्वापदार्थशोधनपुरस्सरोऽखंडार्थोऽत्रोक्तःतत्र ५
पृथिव्यादिनिषेधेनत्वंपदार्थःशोधितःकेवलःपरमःशिवोयोऽस्तीतिशोधिततत्पदार्थानुवादःसोहमस्मीत्यखंडार्थः व०॥९९॥इत्थमेवंभूतमद्वैतसाक्षात्का
रात्समुत्थितंशंकरमुनेर्वचनंश्रुत्वासंप्राप्तहर्षःसगोविंदनाथःप्रोवाच हेशंकर प्रसिद्धःशंकरएवसाक्षात्त्वंप्रादुर्भूतइत्याह ॥ जानामिकथमित्यतआह ॥

आकर्ण्यशंकरमुनेर्वचनंतदित्थमद्वैतदर्शनसमुत्थमुपात्तहर्षः ॥ सप्राहशंकरसशंकरएवसाक्षाज्जातस्त्वमि
त्यहमवैमिसमाधिदृष्ट्या॥ १०० ॥ तस्योपदर्शितवतश्चरणौगुहायाद्वारेन्यपूजयदुपेत्यसशंकरार्यः॥ आचा
रइत्युपदिदेशसतत्रतस्मैगोविंदपादगुरवेसगुरुर्यतीनां॥ १०१ ॥ शंकरःसविनयैरुपचारैरभ्यतोषयदसौगु
रुमेनं॥ ब्रह्मतद्विदितमप्युपलिप्सुःसंप्रदायपरिपालनबुद्ध्या॥ १०२ ॥

समाधिदृष्ट्येति ॥ १०० ॥ तस्यैवमुक्तवतउक्त्वाचचरणौगुहायाद्वारेदर्शितवतोगोविंदनाथस्यसशंकराचार्यःसमीपंआगत्यचरणौन्यपूजयत्किमर्थं
न्यपूजयदित्यतआह सशंकराचार्यः तत्रतेषुयतिषु तस्मिन्कालइतिवा गुरुचरणपूजनमाचारइत्युपदिदेश गोविंदपादोगुरुर्यस्यतस्मैशंकराचार्यायस
गोविंदनाथउपदिदेशेत्यनुषंगः ॥ १०१ ॥ असौशंकरोविनयसहितैरुपचारैरेनंगोविंदनाथंगुरुमभ्यतोषयत् किमिच्छन्नित्यतआह ॥ तदुपनिषत्प्र
सिद्धमखंडैकरसंब्रह्मसम्यक्ज्ञातमप्युपलब्धुमिच्छुः ननुविदितोपलिप्सायांकोहेतुरितितत्राह ॥ संप्रदायेति ॥ तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत् आ ॥१३
चार्यवान्पुरुषोवेदेत्यादिश्रुत्युक्तगुरूपसदनादिलक्षणसंप्रदायस्यपरिपालनबुद्ध्येत्यर्थः स्वागता ॥ १०२ ॥

भक्तिपूर्वंकृतायातस्यपरिचर्यातत्कृतासेवातयाऽधिकतरंयथास्यात्तथापरितोषितोयतिश्रेष्ठोगोविंदनाथोवेदानांऋग्यजुःसामाथर्वणाख्यानांयानिशिरांस्युपनिषदस्तेषांवचोभिःक्रमेणप्रज्ञानंब्रह्मअहंब्रह्मास्मितत्त्वमसिअयमात्माब्रह्मेतिचतुर्भिर्वचनैरमुष्मैश्रीशंकरायब्रह्मभावमुपदिदेश ॥ १०३ ॥ एवंगुरुणोपदिष्टःसकलंविज्ञातवानित्याह ॥ संप्रदायेभवेनपराशरपुत्रेणव्यासेनप्रोक्तेषुअथातोब्रह्मजिज्ञासेत्यादिसूत्रेषुयन्मतंब्रह्माद्वैतलक्षणंतस्यगतिःस्मृतिस्तस्याअनुरोधात्दयालोर्व्यासस्यशास्त्रेगूढंयत्हृदयमभिप्रायस्तत्सर्वमपिसुबुद्धिरयंश्रीशंकरोविज्ञातवान् ॥ १०४ ॥ संप्रदायबोधनायगुरुपरंपरांदर्शयति ॥ व्यासइति ॥ सत्यवत्यांपराशरमुनेःपुत्रोव्यासस्तस्यप्रथितानुभावः शुकमुनिःसुतस्तस्यशिष्यतांप्राप्तः गौडपादोस्यगोविंदनाथमुनिःशिष्यभूतः व० ॥ १०५ ॥ तस्यगोविंदनाथमुनेःसमीपेशास्त्रकदंबंश्रीशंकरःशुश्राव यश्चगोविंदनाथःशेषालयंगतोभवदीयंशास्त्रंभूतलेप्रवर्तयिष्यइतिसंकेतंविधायशब्दशास्त्रसमुद्रंशेषादश्रृणोत् यश्चानंतोनिखिलानिभुवनानिशिरसाधारयति ॥ १०६ ॥ एवंप्राप्तसंन्यासंश्रीशंकरंवर्णयितुमुपक्रमते ॥ सइति पूर्वपुण्यसमूहैःप्राप्यंसर्वोत्कृष्टंयतिप्रमुखैरप्यर्च्यमंत्यंसंन्यासाश्रमंसआर्यःश्रीशंकरोलब्ध्वा तथाभूतंसूर्यप्रमुखैरप्यर्च्यमुन्नतंस्थानमागत्यध्रुवइवरराज स्वा० ॥ १०७ ॥

भक्तिपूर्वकृततत्परिचर्यातोषितोऽधिकतरंयतिवर्यः ॥ ब्रह्मतामुपदिदेशचतुर्भिर्वेदशेखरवचोभिरमुष्मै १०३
सांप्रदायिकपराशरपुत्रप्रोक्तसूत्रमतगत्यनुरोधात् ॥ शास्त्रगूढहृदयंहिदयालोःकृत्स्नमप्ययमबुद्धसुबुद्धिः ॥
१०४ व्यासःपराशरसुतःकिलसत्यवत्यांतस्यात्मजःशुकमुनिःप्रथितानुभावः ॥ तच्छिष्यतामुपगतःकिलगौडपादोगोविंदनाथमुनिरस्यचशिष्यभूतः ॥ १०५ ॥ शुश्रावतस्यनिकटेकिलशास्त्रजालंयश्चाश्रृणोद्धुजगसद्मगतस्त्वनंतात् ॥ शब्दांबुराशिमखिलंसमयंविधाययश्चाखिलानिभुवनानिविभर्तिमूर्ध्ना ॥ १०६ ॥ सोऽधिगम्यचरमाश्रममार्यःपूर्वपुण्यनिचयैरधिगम्यं ॥ स्थानमर्च्यमपिहंसपुरोगैरुन्नतंध्रुवइवैत्यचकाशे ॥ १०७ ॥

अत्यंतपाटलाश्वेतरक्तायाशाटीपटीतल्लक्षणेनपल्लवेन च्छिन्नाआच्छादितामूर्तिर्यस्यसयतिराजोरुरुचेशुशुभे॥ तत्रदृष्टांतमाह॥ वासरस्यदिवसस्योपर
मेउपरमाद्वारक्तोयोमेघस्तेनच्छादितोहिमगिरेःकूटःशृंगमिव ॥ १०८ ॥ यथासधूर्जटिःशिवोगजासुरंनिहत्यरुधिराप्लुतंतदीयंचर्मबिभर्तिस्मतथैषशं
करोऽज्ञानात्मकंमहागजंनिहत्योद्यत्सूर्यवदरुणशाटीपल्लवस्यव्याजेनरुधिराप्लुतंमहेभस्यचर्मबिभर्ति ॥ ९ ॥ ब्रह्मविष्णुशिवेभ्योव्यतिरेकप्रदर्शनपूर्व
 कंश्रीशंकरस्यनिगमप्रतिपाद्यत्वंदर्शयति॥ श्रुतीनामित्यादिना श्रुतीनांमध्येआसमंतात्क्रीडायस्यप्रथितैःप्रख्यातैःपरमहंसैःपरमहंसपरिव्राजकैःसहो
चितागतिर्गमनंयस्यनिजेस्वस्वरूपभूतेसत्येअबाध्येधाम्नितेजसित्रिजगदतिवर्तिनिसर्वबाधावधिभूतेअभिरतःसदैवरतोऽसौश्रीशंकरोब्रह्मैवयतःपरब्र
ह्मापिसर्वेवेदायत्पदमामनंतीत्यादिश्रुतेःश्रुतीनामासमंतात्क्रीडायस्मिन्प्रथितानांपरमहंसानांतत्त्वविदामुचितामोक्षाख्यागतिः ब्रह्मविदाप्नोतिपरमित्या

छन्नमूर्त्तिरतिपाटलशाटीपल्लवेनरुरुचेयतिराजः ॥ वासरोपरमरक्तपयोदाच्छादितोहिमगिरेरिवकूटः ॥
॥ १०८ ॥ एषधूर्जटिरिवोधमहेभंसन्निहत्यरुधिराप्लुतचर्म ॥ उद्यदुष्णकिरणारुणशाटीपल्लवस्यकपटेनबिभ
र्त्ति ॥ ९ ॥ श्रुतीनामाक्रीडःप्रथितपरहंसोचितगतिर्निजेसत्येधाम्नित्रिजगदतिवर्तिन्यभिरतः ॥ असौब्रह्मै
वास्मिन्नखलुविशयेकिंतुकलयेबृहेरर्थंसाक्षादनुपचरितंकेवलतया॥ ११० ॥

दिश्रुतेः प्रथितेतिगतेर्वाविशेषणं सभूमाकप्रतिष्ठितःस्वेमहिम्नीतिश्रुतेरुक्तथाप्यभिरतंहिरण्यगर्भस्तुनैवंविधोयतस्तस्योपवनादौक्रीडातथाहंसैर्गतिस्त
थात्रिलोकीपक्षाश्रयणेनत्रिजगतश्चतुर्दशभुवनात्मकस्यब्रह्मांडस्यांतर्वर्तिनिबाध्येस्वीयेजडेलोकेभिरतस्तस्मादस्मिञ्छ्रीशंकरेकिलबृहिधातोरर्थमन
वच्छिन्नबृहत्त्वरूपंसाक्षादुपचाररहितंकेवलतयानिर्णीततयाकलयेजानामिनतुसंदिहे केवलःकुहनेपिचनपुंसकंतुनिर्णीतेवाच्यवच्चैककृत्स्नयोरिति
मेदिनी ॥ तथाचब्रह्मविद्ब्रह्मैवभवतीत्यादिनिगमगतब्रह्मशब्दप्रतिपाद्यत्वंश्रीशंकरस्यनिरुपचारेणेत्यर्थः शि०॥ ११० ॥ 

एवंतद्विष्णोःपरमंपदमितिनिगमोपिनिरुपचारेणश्रीशंकरेववर्त्ततइत्याह ॥ मितमिति ॥ एतावानस्यमहिमातोज्यायांश्चपूरुषः ॥ पादोस्यसर्वाभूतानि अथयदतःपरोदिवोज्योतिर्दीप्यतेविश्वतःपृष्ठेष्वित्यादिश्रुतेरेकेनैवमहसाज्योतीरूपेणयद्यस्यपादेनेदंत्रिभुवनंमितंमापितंविष्णोस्तुपादद्वयेनत्रिभुवनं मापितंतथायस्यसत्वमबाधितस्वरूपंस्थित्युत्पत्तिलयेष्वप्यनुस्यूतंविष्णोस्तुसत्वंसत्वगुणस्थिताववानुगतं सत्वंविशिनष्टि ॥ दशाकारातीतमवस्थाकाराभ्यांविनिर्मुक्तंविष्णोस्तुतद्दशभिराकारैर्मत्स्यादिभिरतीतंनभवति ततस्तस्मात्स्वमहिम्निनिर्वेदेनवैराग्येणसम्यग्बोधेनवारमणंयस्यतंश्रीशंकरंवैकुंठे लक्ष्म्याक्रीडतोविष्णोःसकाशात्परमंविष्णुसंबंधिवापरमंपदमित्यर्थकउक्तनिगमोनिरुपचारेणाख्यातिवक्तीत्यर्थः ॥ ११ ॥ तथाशिवपदप्रवृत्ति

मितंपादेनैवत्रिभुवनमिहैकेनमहसाविशुद्धंयत्सत्त्वंस्थितिजनिलयेष्वप्यनुगतं॥दशाकारातीतंस्वमहिम
निनिर्वेदरमणंततस्तंतद्विष्णोःपरमपदमाख्यातिनिगमः॥ ११ ॥ नभूतेष्वासंगःक्वचननगवाचाविहरणं
नभूत्यासंसर्गोनपरिचिततिताभोगिभिरपि ॥ तदप्याम्नायांतस्त्रिपुरदहनात्केवलदशातुरीयंनिर्द्वंद्वंशिवम
तितरांवर्णयतितं ॥ १२ ॥

मपितस्मिन्दर्शयति॥ नेतिप्रसिद्धशिवस्यभूतप्रेतादिष्वासमंतात्संगोऽस्यतुक्वचनकस्मिंश्चिद्देशेकालेवाभूतेषुप्राणिष्वाकाशादिषुवासंगआसक्तिर्नास्ति प्रसिद्धशिवस्यगवावृषेणविहरणमस्यतुक्वापिगवाइंद्रियेणविहरणंनास्ति तस्यविभूत्यासंसर्गःसंबंधःप्रसिद्धोऽस्यतुभूत्याऐश्वर्येणसंसर्गोनास्ति तस्य भोगिभिःसर्पैःपरिचिततिताप्रसिद्धाऽस्यतुविषयसंभोगवद्भिःपरिचयोनास्ति यद्यप्येववैलक्षण्यंतथापिशिवंशांतमद्वैतंचतुर्थंमन्यंतइतिवेदांतःकेवलस्य विशुद्धस्यब्रह्मणोदर्शनेनपरमार्थदृष्ट्यावात्रयाणांस्थूलसूक्ष्मकारणाख्यानांपुराणांदहनान्निर्द्वंद्वंसुखदुःखादिद्वंद्वशून्यंचतुर्थसंज्ञंशिवंसम्यक्तंशंकरंवर्णयतीत्यर्थः ॥ १२ ॥

शं० वि० यःप्रसिद्धःशिवोधनुंषादिसहकृतःत्रिपुरंविजितवान् तंयदिनिगमसमूहःप्रतिपादयतितर्हिसहायंविनैवपुर्यष्टकविजयकर्तारंश्रीशंकरंकथंनब्रूयादित्या
ह नेतिप्रसिद्धशिवस्यतुसौवर्णःसुवर्णगिरिमयोधर्मोधनुःधर्मोस्त्रीपुण्यआचारेनाधनुर्यमसोमयोरितिमेदिनी अस्यतुब्राह्मणादिशोभनवर्णसंबंधिधर्मो डिं०
नास्ति तस्यतुपुरुषोविष्णुःसएवफलंफलकंयस्येषोर्बाणस्यतत्प्रवणतातदासक्तताअस्यतुपुरुषाणांफलेषुऐहिकामुष्मिकेषुप्रवणतानास्ति तस्यत्वहोरा
॥१५॥ त्रेस्फुरंतावरौचंद्रसूर्यौताभ्यांचक्ररूपेणस्थिताभ्यांयुक्तःपृथिवीमयोरथोऽस्यत्वहोरात्रंस्फुरंतोहंकारादिलक्षणाअरयस्तैर्युतःपार्थिवोदेहलक्षणोरथो
नचैवास्तितथाचैवंप्रकारेणसहायवर्जितेनयेनविस्तृतंयत्पुर्यष्टकंतस्यप्राणपंचककर्मेंद्रियपंचकज्ञानेंद्रियपंचकांतःकरणचतुष्टयाविद्याकामकर्मवास ५

नधर्मःसौवर्णोनपुरुषफलेषुप्रवणतानचैवाहोरात्रस्फुरदरियुतःपार्थिवरथः॥ असाहाय्येनैवंसतिवि
ततपुर्यष्टकजयेकथंतंनब्रुयान्निगमनिकुरंबःपरशिवं॥ १३॥ दुःखासारदुरंतदुष्कृतघनांदुःसंस्तृतिप्रा
वृषंदुर्वारामिहदारुणांपरिहरन्दूरादुदाराशयः ॥ उच्चंडप्रतिपक्षपंडितयशोनालीकनालांकुरग्रासो
हंसकुलावतंसपदभाक्सन्मानसक्रीडति ॥ ११४ ॥

नालक्षणस्यजयेसतितंश्रीशंकराख्यंपरशिवंवेदसमुदायःकथंनप्रतिपादयेदित्यर्थः॥ १३॥अथतस्यपरमहंसत्वंबहुधावर्णयति॥ दुःखान्येवासारोवेगव
ष्टिर्यस्यांदुरंतानिदुष्कृतानिपापान्येवमेघायस्यांदुःखासाराचासौदुरंतदुष्कृतघनाचतामिहलोकेदुर्वारांदारुणांदुःसंस्तृतिलक्षणांप्रावृषंवर्षाऋतुंदूरादे
वपरिहरन्हंसकुलशिरोभूषणपदभाक्सतांहृदिमानससरोवरस्थानीयेक्रीडतीतिसंबंधः शुद्धेस्वहृदीतिवा तंविशिनष्टि उदाराशयःपुनश्चउच्चंडायेप्रति
पक्षपंडितास्तेषांयशएवनालीकस्याब्जखंडस्यनालानांदंडानामंकुरःग्रासोयस्यसः ॥नालीकःशरशल्याज्ञेष्वब्जखंडेनपुंसकं ॥ नालोनालंपद्मदंडेइ ॥१५
तिमेदिनी शार्दूलवि० ॥ ११४ ॥

क्षीरनीरयोर्ब्रह्मजगतोर्विवेचकत्वादप्ययंपरमहंसइत्याह ॥ क्षीरंदुग्धंपरमानंदघनंब्रह्म जगत्पुनर्नीरमानंदवर्जितंदुःखात्मकंतदुभयंयोगंपरस्परतादा
त्म्यंप्राप्तं ॥ पुनश्चेतरंभेत्तुं विलक्षणीकर्त्तुंदुर्घटंयेनसम्यक्‌विभक्तीकृतं सोऽयंद्विजातीनांद्विजानामग्रणीःपरमहंसःश्रीशंकरोऽशेषायेविशेषेणदोषाउ
त्कृष्टदोषारागद्वेषादयस्तेषांलहरीमासेदुषीमासमंतात्सेवितवतींशेमुषींशीलवतांबुद्धिंपुनाति पक्षेद्विजातयःपक्षिणः ॥ १५ ॥ श्रीशंकरस्यपरमहं
सत्वंप्रकारांतरेणप्रतिपादयति नीरक्षीरनयेनजलदुग्धेयथासंमिश्रितेतद्वीत्यातथ्यंब्रह्म वितथंमिथ्याभूतमज्ञानादितेसंम्यक्‌पिंडितेतादात्म्यंप्राप्तेसमस्तैःपं

क्षीरंब्रह्मजगच्चनीरमुभयंतद्योगमभ्यागतंदुर्भेदंत्वितरेतरंचिरतरंसम्यक्‌विभक्तीकृतं॥येनाशेषविशे
षदोषलहरीमासेदुषींशेमुषींसोयंशीलवतांपुनातिपरमोहंसोद्विजात्यग्रणीः॥ १५ ॥ नीरक्षीरनये
नतथ्यवितथेसंपिंडितेपंडितैर्दुर्बोधंसकलैर्विवेचयतियःश्रीशंकराख्योमुनिः॥ हंसोयंपरमोस्तुयेपुन
रिहाशक्तास्समस्तास्थिताजृंभान्निवफलाशनैकरसिकान्काकानमून्मन्महे ॥ १६ ॥

डितैरितरपक्षिस्थानीयैरिदंतथ्यमिदंवितथमितिबोद्धुंबोधयितुंचदुर्घटेयःश्रीशंकराख्योमुनिर्विवेचयतिविविच्यस्थापयति सोयंविवेचकत्वात्परमोहं
सोस्तु येपुनरिहविवेचनेऽशक्ताःसर्वेस्थितास्तान्‌जृंभात्‌श्लेष्मजनितरोगविशेषस्थानीयरागादेर्हेतोर्निंबफलस्थानीयविषयसंभोगरसिकास्तान्‌का
कान्मन्महेजानीमः ॥ १६ ॥

प्रकारांतरेणापिहंसत्वमाह ॥ दृष्टिमिति ॥ हंसःसूर्योवाह्येनतमसामंदीकृतांदृष्टिंप्रगुणीकरोतिप्रकृष्टांतमोनिवारणेनापावृतांकरोति अयंतुअबाह्येनांतरे
णात्मनोबाह्येनवाऽज्ञानलक्षणेनतमसामंदीकृतामात्मदृष्टिंप्रगुणीकरोतिप्रकृष्टगुणयुक्तांयथाभूतात्मदर्शनयोग्यांकरोति सतुकमलप्रियतांयाति अयंतु
अलीकभूर्ताविषयादिप्रियतांनप्रयाति सउपकारायजगतोमित्रत्वमव्याहतंभजते तथाऽयमपिपरोपकारायसर्वस्याव्याहतंमित्रत्वंभजते ससुहृदश्चक्र
स्यचक्रवाकस्यघनीभूतांरात्रिप्रयुक्तांप्रियाविरहप्रजनितांपीडांविलुंपतिनाशयति तथायमपिसुहृदांसमूहस्यघनीभूतांसंसृतिलक्षणामार्तिविलुंपतिस
ज्ञातुमिष्टंघटपटादिरूपमर्थमुहुरभिव्यनक्तिप्रकाशयति तथासोऽयमपिमहतांविशुद्धचेतसांमुमुक्षूणांजिज्ञास्यंपरमार्थभूतंब्रह्मैक्यलक्षणमर्थमुहुरभि

दृष्टिंयंप्रगुणीकरोतितमसावाह्येनमंदीकृतांनालीकप्रियतांप्रयातिभजतेमित्रत्वमव्याहतं ॥ विश्वस्योपकृतेर्वि
लुंपतिसुहृच्चक्रस्यचार्तिंघनांहंसःसोयमभिव्यनक्तिमहतांजिज्ञास्यमर्थंमुहुः ॥ १७ ॥ हंसभावमधिगत्यसुधीं
द्रेतंसमर्चतिचसंसृतिमुक्त्यै ॥ संचचालकथयन्निवमेघश्चंचलाचपलतांविषयेषु ॥ १८ ॥ एषनःस्पृशतिनिष्ठुर
पादैस्तत्तुतिष्ठतुवितीर्णमवन्यै ॥ अस्मदीयमपिपुष्पमनैषीदित्यरोधिनलिनीपतिरब्दैः ॥ १९ ॥ वारिवाहनिवहेक्ष
णलक्ष्यश्रीररोचतकिलाचिररोचिः ॥ अंतरंगगतबोधकलेवव्यावृतस्यविदुषोविषयेषु ॥ २० ॥

व्यनक्ति ॥ १७ ॥ सुधींद्रिश्रीशंकरेहंसभावंयतित्वमधिगत्यसंसृतिमुक्त्यर्थंतंहंसंपरमात्मानंसमर्चतिसतिविषयेषुविद्युद्वच्चपलतांकथयन्निवमेघःसंच
चाल स्वा० ॥ १८ ॥ मेघकर्तृकादित्यरोधनस्यहेतुमुत्प्रेक्षते ॥ एषसूर्योनोऽस्मान्मेघान्निष्ठुरपादैःपरुषकिरणैःस्पृशतितत्स्पर्शनंतुतिष्ठतुपरंभूम्यैविती
र्णंदत्तमस्मदीयपुष्पंमेघपुष्पमंभोब्व्यप्यनैषीदपनीतवानिति विचार्यकमलिनीपतिरब्दैररोधि कमलिनीपतिरित्यनेनास्मद्भार्यादुःखदातृरविरोधनेनत
द्भार्यायाःकमलिन्याःदुःखंप्रदेयमितिध्वनितं स्वा० ॥१९ ॥ किंचमेघनिचयेक्षणमात्रंलक्ष्याश्रीर्यस्याःसाऽचिररोचिःक्षणप्रभाविद्युदरोचत यथावि
षयेषुव्यावृतस्यविदुषोंतःकरणगताज्ञानकलाशोभतेतद्वत् ॥ ॥ २० ॥ ॥१६

मेघा विष्णुपदसंश्रयात्सुहृद्भ्यः किंब्रह्मतामुपदिशंति नुर्वितर्के यद्यस्मादेषामब्दानांस्वनंनादंश्रुत्वानिखिलाः सर्वैनिर्भरमोदान्‌बिभ्रतिस्म किलेतिप्रसिद्धं ॥ २१ ॥ ज्ञानगर्वेणभरितातिशयिताअमीयतयोदेवराजमपिमानयजंतीत्यमर्षवशगेनपयोदोजलदएवस्यंदनोरथोयस्यतेनदेवराजेनेदंधनुराविष्कृतं॥२२॥कुटजोगिरिमल्लिका कुटजःशक्रोवत्सकोगिरिमल्लिकेत्यमरः॥कंदलंनवांकुरः कंदलंतुकपालेस्यादुपरागेनवांकुरेइतिविश्वप्रकाशः बाणानीलझिंटी नीलीझिंटीद्वयोर्बाणेत्यमरः तथाचकुटजानांनवांकुरैर्बाणानां विशालरेणुभिश्चकलिताव्याप्तावनवात्यावनसंबंधिवायुसमूहाः सत्वरजस्तमो

किन्नुविष्णुपदसंश्रयतोऽब्दाब्रह्मतामुपदिशंतिसुहृद्भ्यः ॥ यन्निशम्यनिखिलाःस्वनमेषांबिभ्रतिस्मकिल निर्भरमोदान् ॥ २१ ॥ देवराजमपिमांनयजंतिज्ञानगर्वभरितायतयोमी ॥ इत्यमर्षवशगेनपयोदस्यंदनेन धनुराविरकारि ॥ २२ ॥ आववुःकुटजकंदलबाणास्फीतरेणुकलितावनवाताः ॥ सत्वमध्यमतमोगुणमिश्रा मायिकाइवजगत्सुविलासाः ॥ २३ ॥ बभ्रमुस्तिमिरसच्छविगात्राश्चित्रकार्मुकभृतःखरघोषाः॥ ध्यानयज्ञमथनाययतीनांविद्युदुज्ज्वलदृशोघनदैत्याः ॥ २४ ॥ उत्ससर्जुरसकृज्जलधारांवारिदागगनधामपिधाय॥ शंकरोहृदयमात्मनिकृत्वासंजहारसकलेंद्रियवृत्तीः॥ २५ ॥

गुणैर्मिश्रिताजगत्सुमायिकाविलासाःपरिणामाइवाववुःप्रचलिताः॥२३॥ तिमिरेणतमसासमानाछविःकांतिर्यस्यतथाभूतंगात्रंशरीरंयेषांतेचित्रानिंद्रचापलक्षणान्कार्मुकान्धनूंषिबिभ्रतीति तथाखरोनिष्ठुरोगर्जनलक्षणोघोषोयेषांते विद्युल्लक्षणान्युज्ज्वलानिदृशोनेत्राणियेषांतेमेघलक्षणादैत्यायतीनध्यानलक्षणस्ययज्ञस्यमथनायबभ्रमुः॥२४॥ एवंभूतावारिदाआकाशधामावृत्त्यजलधारांमुहुरुत्ससर्जुःसम्यकृतत्यजुस्तस्मिन्कालेश्रीशंकरःकिंकृतवानित्यपेक्षायामाह ॥ श्रीशंकरोंऽतःकरणमात्मनिकृत्वासमस्तेंद्रियवृत्तीःसम्यगुपसंहृतवान् ॥ २५ ॥

एवंनिरुद्धांतःकरणादेस्तस्यबुद्धिर्लयमवापेत्याह ॥ नयैर्न्यासमूत्रैःसहितंयथास्यात्तथोपनिषदांशनैःसांत्वालापैरत्यर्थमधुराभाषणैरुपनीतासमीपं 
प्रापिताचिरकालमारभ्यात्तंस्वीकृतंसहजमनादिसिद्धंदृढतरमभिमानंत्यक्त्वातत्क्षणमेवतंश्रुत्यादिप्रसिद्धंपरप्रेमास्पदंपरहंसंपरमात्मानंप्राप्यपुनरसौ
॥१७॥ तस्यबुद्धिःसंस्प्रष्टुमधीराकचिदपितत्क्षणमेवलयमगात् यथाकाचिन्मानिनीसमीपस्थानांसखीनांयुक्तिसहितंयथाभवेत्तथासांत्वालापैरनुनयवा
क्यैःकांतसमीपंनीताचिरायात्तंस्याभाविकंदृढतरमभिमानंविहायसपदिसमुत्कृष्टंतंप्रेयांसंकांतंप्राप्यपुनरसौसंस्प्रष्टुमधीराकस्मिंश्चिदंगेसपदिलयमामो
तितथेत्यर्थः ॥ अत्रप्रस्तुतवृत्तांतेवर्ण्यमानेविशेषणसामान्यबलादप्रस्तुतवृत्तांतस्यापिपरिस्फुरणात्समासोक्तिरलंकारः समासोक्तिःपरिस्फूर्तिःप्रस्तुतेप्र

शनैःसांत्वालापैःसनयमुपनीतोपनिषदांचिरायात्तंत्यक्त्वासहजमभिमानंदृढतरं ॥ तमेत्यप्रेयांसंसपदिपरहं
संपुनरसावधीरासंस्प्रष्टुंक्कनुसपदितद्धीर्लयमगात्॥ २६ ॥ नसूर्योनैवेंदुःस्फुरतिनचतारातितिरियंकुतोविद्यु
ल्लेखाकियदिहकृशानोर्विलसितं॥ नविद्योरोदस्यौनचसमयमस्मिन्नजलदेचिदाकाशेसांद्रस्वसुखरसवर्ष्म
ण्यविरतं॥ २७॥ किमादेयंहेयंकिमितिसहजानंदजलधावतिस्वच्छेतुच्छीकृतसकलमायेपरशिवे ॥ तदेत
स्मिन्नेवस्वमहिमनिविस्मापनपदेस्वतःसत्येनित्येरहसिपरमेसोकृतकृती॥ २८ ॥

स्तुतस्यचेदित्युक्तेः शि॰ ॥२६ ॥ यत्रसूर्यादीनामपिस्फुरणंनसंभवतितत्रबुद्धिस्फुरणस्यकाप्रत्याशेत्याशयेनाह ॥नेति कृशानुरग्निःरोदस्यौद्यावा
भूम्यौअविरतंसततंघनीभूतस्वसुखरसविग्रहेचिदाकाशेसूर्यादयोनस्फुरंतीत्यर्थः ॥ तथाचश्रुतिर्नयत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतो
यमग्निरित्याद्याः ॥ २७ ॥ किंचसहजानंदसमुद्रेऽतिस्वच्छेऽतएवतुच्छीकृतासकलासकार्यामायायस्मिन्पुनश्चस्वमहिमनिविस्मापनपदेस्वतःसत्येनतु
कार्यापेक्षयामृदादिवत्सत्येपरमेरहस्यत्यंतगुह्येतदेतस्मिन्नेवप्रत्यगभिन्नेपरशिवेसःकृतीश्रीशंकरःकिमादेयंहेयंचकिमितिनित्यमकृतैवमनुसंधानंसदैव
कृतवान् ॥ २८ ॥ 

पुनः वर्षर्तुंवर्णयति ॥ विष्णुपदभागपिविद्युदुज्वलकांत्यानुसृतश्चमेघः प्रावृडागमनतोमलिनत्वंप्रापातोध्यवन्यपिभूमावपिविरागंकोनभजेदपितुसर्वो पिवैराग्यमाप्नुयादेव स्वा० ॥ २९ ॥ सलिलानांजलानामाशयेकलुषितेसतिमानससरोवरंप्रत्युत्कमुत्कंठितंत्हृदयंयेषांतथाभूताःकलहंसाअभवन् आश्रयेऽन्यथाभवतिसतिकोजीवनलिप्सुर्मानसचिंतांनभजति किंतुसर्वोपिभजत्येव ॥ ३० ॥ अनल्पाजलदायस्मिन्तथाभूतेव्योममार्गेपरिभ्रममिच्छन्शुभ्रांशुश्चंद्रःकलावान्षोडशकलापूर्णोयतोमलिनाकाशवासीतस्मात्प्रकाशनंनप्राप्तवान् शुभ्रकांतिःसकलकलासंपन्नोपिमलिनवसनश्चेत्कःप्रकाशतेनकोपीत्यर्थः ॥ ३१ ॥ अनल्पापिपासाजलपानेच्छायस्याःसाचातकानांपंक्तिश्चिरंजलस्यतृप्तिमवापघनंदृढमाश्रयंकरोतीतितथाऽ

प्रापविष्णुपदभागपिमेघःप्रावृडागमनतोमलिनत्वं ॥ विद्युदुज्वलरुचानुसृतश्चकोध्यवन्यपिभजेन्नविरागं ॥ ॥ २९ ॥ आशयेकलुषितेसलिलानांमानसोत्कहृदयाःकलहंसाः ॥ कोन्यथाभवतिजीवनलिप्सुर्नाश्रयेभजतिमानसचिंतां ॥ ३० ॥ अत्रवर्त्मनिपरिभ्रममिच्छञ्छुभ्रदीधितिरदभ्रपयोदे ॥ नप्रकाशनमवापकलावान्कश्चकास्तिमलिनांबरवासी ॥ ३१ ॥ चातकावलिरनल्पपिपासाप्रापतृप्तिमुदकस्यचिराय ॥ प्राप्नुयादमृतमप्यभिवांछन्कालतोव्रतघनाश्रयकारी ॥ ३२ ॥ इत्युदीर्णजलवाहविनीलेस्फीतवातपरिधूततमाले ॥ प्राणभृत्स्वचरणप्रतिकूलेनीडनीलघनशालिनिकाले ॥ ३३ ॥ अग्रहारशतसंभृतशोभेसुग्रहाक्षतुरगःसमहात्मा ॥ अध्युवासतटमिंदुभवायाःसुध्युपास्यचरणंगुरुमर्चन् ॥ ३४ ॥

मृतमप्यभिवांछन्कालात्प्राप्नुयात्व्रतप्रसिद्धं ॥ ३२ ॥ इत्येवंप्रकारेणोक्तैःपयोदैर्विशेषेणनीलेस्फीतेनविशालेनवायुनापरिकंपिता तमालावृक्षविशेषायस्मिन्प्राणिनांविचरणेप्रतिकूलेनिबिडनीलघनैर्युक्तेवर्षाकाले ॥ ३३ ॥ अग्रहाराणांब्राह्मणग्रामाणांशतेनसंभृताशोभायस्मिन्तथाभूतेवर्षाकालेसुधीभिरुपास्यौचरणौयस्यतथाभूतंगुरुंसम्यक्पूजयन्सुखेनग्रहोविषयलक्षणमार्गेभ्यःस्तंभनंयेषांतथाभूताअक्षलक्षणाअश्वायस्यसनिगृहीतसर्वकरणोमहात्माक्षुद्रस्वभावइंदुभवसंज्ञिकायानद्यास्तटमध्युवासनिवासंकृतवानितिद्वयोरर्थः ॥ ३४ ॥

त्रस्तमर्त्यगणमस्तमिताशंचयथास्यात्तथाऽहिशत्रुर्वृत्रारिरिंद्रःसमुदंचलतीसमुल्लसंतोविद्युद्यस्मिंस्तत्पंचरात्रमजस्रंहस्तिशुंडावत्पृथुलाविशालाजल
धारामुंचतिस्म २ ५ ॥अथानंतरंतीरभूरुहाणांततीरपहारसमूहैःसहतत्सहितास्तीरस्थवृक्षपंक्तीराकर्षंस्तटिन्यानद्याअनल्पःपूरोजलप्रवाहःप्रलयसमुद्रप्र
वाहवदधिकंनादमाययौप्राप ॥ २ ६॥ सएषश्रीशंकरोघोषसहितजलझरेभ्योभीरूणांनराणांकलुषंघोषंश्रुत्वाउपदेष्टारंश्रीगोविंदनाथंध्रुवंनिश्चलंसमाधे
र्विधानंयस्यध्रुवस्यसमाधेरिवेतिवा तथाभूतंवीक्ष्यचक्षणमात्रंकथनेच्छारहितस्तूष्णीमभूत् ॥ ३ ७ ॥ पश्चात्सश्रीशंकरस्त्वरमाणःकरकंकुंभमभिमंत्र्य

त्रस्तमर्त्यगणमस्तमिताशंहस्तिहस्तपृथुलोदकधाराः॥ मुंचतिस्मसमुदंचलद्विद्युत्पंचरात्रमहिशत्रुरजस्रं॥
॥ ३५ ॥ तीरभूरुहततीरपकर्षन्नग्रहारनिकरैःसहपूरः ॥ आययावधिकघोषमनल्पःकल्पवार्धिलहरीवत
टिन्याः ॥ ३६ ॥ घोषवारिझरभीरुनराणांघोषमेषकलुषंसनिशम्य ॥ दैशिकंध्रुवसमाधिविधानंवीक्ष्य
चक्षणमभूदविवक्षुः॥३७॥ सोऽभिमंत्र्यकरकंत्वरमाणस्तत्प्रवाहपुरतःप्रणिधाय॥ कृत्स्नमत्रसमवेशय
दंभःकुंभसंभवइवस्वकरेऽब्धिं॥ ३८ ॥ तंनिशम्यनिखिलैरपिलोकैरुत्थितोस्यगुरुरुक्तमुदंतं ॥ योगसिद्धि
मचिरादयमापेत्यभ्यपद्यततरांपरितोषं॥ ३९॥

सचासौप्रवाहश्चतस्याःप्रवाहइतिवा तस्याग्रेप्रस्थाप्यत्रिकरकेसर्वंजलंप्रवेशयत् अगस्त्योयथासमुद्रंस्वहस्तआवेशयत्तथेत्यर्थः ॥ ३८ ॥ तमुदंतंवृ
त्तांतंनिखिलैरपिलोकैरुक्तंसमाधितोव्युत्थितोऽस्यश्रीशंकरस्यगुरुःश्रुत्वाऽचिराच्छीघ्रमेवायंयोगसिद्धिमवापेतिपरितोषमभ्यपद्यततरामतिशयेनप
रितोषंप्राप्तवानित्यर्थः ॥ ३९ ॥

कियद्भिर्दिवसैर्गतघनेगगनेसतिशिष्याग्र्यममुंश्रीशंकरंसःगुरुराह ॥ यदुवाचतदाह ॥ हेसौम्यप्रियदर्शनशरत्कालेनविमलंगगनंपश्य तत्रदृष्टांतः यथा ब्रह्मविषयाविशदमनवच्छिन्नंब्रह्मात्मैक्यलक्षणंतत्त्वंतद्वत्॥ ४० ॥जलदाःसुजलस्यधारयाओषधीःकृतार्थीकृत्य यतिवराश्चसदुपदेशवाचापुनरनुचरांश्चकृतार्थीकृत्यसंप्रतियथेच्छंगच्छंति॥ ४१ ॥ असौशीतदीधितिश्चंद्रोजलमुग्भिर्मेघैस्त्यक्तआकाशमार्गोयस्यसअतिस्फुटकांतिर्भाति मायिकस्यावरणस्यनिर्गमेनशुभ्रःशुद्धस्तत्त्वविदांबोधोयथाप्रकाशतेतद्वत् ॥ ४२ ॥ वारिवाहानांमेघानांनिवहेसमूहेप्रतियातेसति शुचिभानिशुद्धप्रभाणिशुभानि

छात्रमुख्यममुमाहकियद्भिर्वासरैर्गतघनेगगनेसः ॥ पश्यसौम्यशरदाविमलंखंविद्धियेवविशदंपरतत्वं ॥ ॥ ४० ॥ वारिदायतिवराश्चसुपाथोधारयासदुपदेशगिराच ॥ ओषधीरनुचरांश्चकृतार्थीकृत्यसंप्रतिहियांतियथेच्छं॥ ४१ ॥ शीतदीधितिरसौजलमुग्भिर्मुक्तपद्धतिरितिस्फुटकांतिः॥ भातितत्वविदुषामिवबोधोमायिकावरणनिर्गमशुभ्रः॥ ४२ ॥ वारिवाहनिवहेप्रतियातेभांतिभानिशुचिभानिशुभानि॥ मत्सरादिविगमेसतिमैत्रीपूर्वकाइवगुणाःपरिशुद्धाः ॥ ४३ ॥ मत्स्यकच्छपमयीधृतचक्रागर्भवर्त्तिभुवनानलिनाढ्या॥ श्रीयुताद्यतटिनीपरहंसैःसेव्यतेमधुरिपोरिवमूर्त्तिः॥ ४४ ॥

भानिनक्षत्राणिभांति यथारागद्वेषादिविगमेसतिमैत्रीपूर्वकागुणाःकरुणामुदितादयःपरिशुद्धाःप्रकाशंतेतद्वत् ॥ ४३ ॥ मत्स्यकच्छपमयीपुनश्चधृतं चक्रंसुदर्शनाख्यंययागर्भवर्तीनिचतुर्दशभुवनानियस्याः नलिनैःकमलैराढ्य लक्ष्म्यासंयुता मधुरिपोर्विष्णोर्मूर्तिर्यथापरहंसैःपरमहंसपरिव्राजकैर्यतिभिःसेव्यतेतद्वत् अयमत्स्यादिप्रचुरा धृतानिचक्राणिपुटभेदाययया गर्भवर्तीनिभुवनानिजलानियस्याः कमलैराढ्याशोभायुक्ता तटिनीइयंनदी परहंसैरुत्कृष्टैर्हंसाख्यपक्षिभिः परमहंसैरितिवा ॥ ४४॥

एतेजलदाः सुचिरसंभृतंजीवनंजलंद्विजानांब्राह्मणादीनांपक्षिणांचगणायवितीर्यदत्वा त्यक्ताविद्युल्लक्षणाअबलांगनायैः परिशुद्धाआसमंताच्छुभा मेघवीथिलक्षणेभ्योगृहेभ्यःप्रव्रजंतिप्रयांति पक्षेनीरदानिर्गतदंताजरांप्राप्ताएतेचिरसंभृतंचिरपर्यंतंसंचितंजीवनंधनधान्यादिब्राह्मणगणायप्रदत्वात्य क्ताविद्युदिवातिचंचलाअवलायैःयतःपरिशुद्धांतःकरणाः घनीभूतावीथयोयेषुतेभ्योगृहेभ्यःप्रव्रजंति संन्यस्यगच्छंतीत्यर्थः ॥ ४५ ॥ भस्मलिप्त गात्रःकमंडलुशोभीकषायवस्त्रसंवृतोयथायतिस्तद्वदयमनेहाःशरत्कालः चंद्रज्योत्स्नालक्षणेनभस्मनास्वर्चितंलिप्तंगात्रंशरीरंयस्य चंद्रमंडललक्ष णेनकमंडलुनाशोभाऽस्यास्तीतितथा बंधूकपुष्पसमूहलक्षणयाशाट्यासंवृतइत्यर्थः॥ ४६ ॥ वारिसारसंस्तरःसंबंधिजलंतावकंत्वदीयंमनइवप्रतिभाति

नीरदाःसुचिरसंभृतमेतेजीवनंद्विजगणायवितीर्य ॥ त्यक्तविद्युदवलाःपरिशुद्धाःप्रव्रजंतिघनवीथिगृहेभ्यः ॥ ॥ ४५ ॥ चंद्रिकाभसितचर्चितगात्रश्चंद्रमंडलकमंडलुशोभी ॥ बंधुजीवकुसुमोत्करशाटीसंवृतोयतिरिवायमनेहाः ॥ ४६ ॥ हंससंगतिलसद्विरजस्कंक्षोभवर्जितमपन्हुतपंकं ॥ वारिसारसमतीवगभीरंतावकंमनइवप्रतिभाति ॥ ४७ ॥ शारदांवुधरजालपरीतंभ्राजतेगगनमुज्वलभानु ॥ लिप्तचंदनरजःसमुदंचत्कौस्तुभंमुररिपोरिववक्षः ॥ ४८ ॥ पंकजानिसम्यगूढहरीणिप्रोद्गतानिविकचानिकनंति ॥ सौम्ययोगकलयेवविफुल्लान्युन्मुखानिहृदयानिमुनीनां ॥ ४९ ॥

हंसाख्यपक्षिसंगेनविलसच्चतद्विगतपांसुकंचपक्षेपरमहंसानांसंगेनविलसच्चतत्विगतरजोगुणंच निरस्तकर्दमं पक्षेनिरस्तपापमलंशुद्धमितियावदन्य त्समानं ॥ ॥४७ ॥ शरत्कालीनानांजलधराणांजालैर्व्याप्तं मेघावरणविनिर्मुक्तत्वादुज्वलोभानुर्यस्मिन्तथाभूतंव्योमशोभते तत्रदृष्टांतःलिप्तानि चंदनरजांसियस्मिन् समुदंचन्संस्फुरन्कौस्तुभाख्योमणिर्यस्मिन् तथाविधंमुररिपोःश्रीविष्णोर्वक्षइवेत्यर्थः ॥ ४८ ॥ योगकलयाऊर्ध्वमुखानिप्र फुल्लानिसम्यगूढआरूढोहरिर्विष्णुर्येषुतानिप्रकर्षेणोद्गतानिऊर्ध्वतांप्राप्तानिमुनीनांहृदयानिकमलानियथाकनंतिप्रकाशंते तथाप्रोद्गतानिप्रकंचानिवि कासंप्राप्तानिसम्यगूढाहरयःसूर्यांशवोयेषुतानिपंकजानिकनंतीत्यर्थः॥ ४९ ॥

रेणुलक्षणेन भस्मना शोभितैः पत्रलक्षणया शाट्या संवृतैः कुसुमलिहो भ्रमरास्तल्लक्षणा जपमाला येषां वृंते प्रसवबंधे कुड्मलानि कलिकास्तल्लक्षणकमंडलुयुक्तैः क्षितिरुहैर्वृक्षैर्यतिसाम्यं धार्यते ॥ ५० ॥ धारणाध्यानसमाधिभिः श्रवणमनननिदिध्यासनैश्च वार्षिकाणि दिवसान्यपनीयाद्य पादपद्मरजसा जगंति पुनंतो महांतः संचरंति ॥ ५१ ॥ यस्मादेवं तत्तस्माद्भवान् वेदसमूहादुद्भूतां जन्ममरणलक्षणसंसारात्मकस्य दवस्य वनाग्नेः मेघमालां तत्वपद्धतिमविविक्तां विवेकुं इयं तत्वपद्धतिरियं नेति विवेचनं कर्तुं शीघ्रं शिवपुरीं काशीं गच्छतु ॥ ५२ अथ शारीरकसूत्रभाष्यकरणाय प्रेरयिष्यन् वृत्तांतमावेदयति

रेणुभस्मकलितैर्दलशाटीसंवृतैः कुसुमलिट्जपमालैः ॥ वृंतकुड्मलकमंडलुयुक्तैर्धार्यते क्षितिरुहैर्यतितौल्यं ॥ ५० ॥ धारणादिभिरपि श्रवणाद्यैर्वार्षिकाणि दिवसान्यपनीय ॥ पादपद्मरजसाद्य पुनंतः संचरंति हि जगंति महांतः ॥ ५१ ॥ तद्भवान्व्रजतु वेदकदंबादुद्भवां भवदवांबुदमालां ॥ तत्वपद्धतिमभिज्ञ विवेक्तुं सत्वरं हरपुरीमविविक्तां ॥ ५२ ॥ अत्र कृष्णमुनिना कथितं मे पुत्र तच्छृणु पुरा तुहिनाद्रौ ॥ वृत्रशत्रुमुखदैवतजुष्टं सत्रमत्रिमुनिकर्तृकमास ॥ ॥ ५३ ॥ संसदि श्रुतिशिरोर्थमुदारं शंसति स्म स पराशरसूनुः ॥ इत्यपृच्छमहमत्र भवंतं सत्यवाचमभियुक्ततमं तं ॥ ५४ ॥ आर्य वेदनिकरः प्रविभक्तो भारतं कृतमकारि पुराणं ॥ योगशास्त्रमपि सम्यगभापि ब्रह्मसूत्रमपि सूत्रितमासीत् ॥ ५५ ॥

अत्रास्मिन्पद्धतिविवेचने कृष्णमुनिना वेदव्यासेन यन्मे कथितं हे पुत्र तच्छृणु ॥ पूर्वं हिमाद्रौ वृत्रशत्रुमुखैरिंद्रप्रभृतिभिर्देवतैर्जुष्टमत्रिमुनिकर्तृकं सत्रमास बभूव ॥ ५३ ॥ तत्र सभायां स पराशरसूनुः श्रुतिशिरसामर्थमुदारं शंसति स्म ॥ तमभियुक्ततमं सत्यवाचमत्रभवंतं पूज्यं श्रीव्यासमिति वक्ष्यमाणमहमपृच्छं पृष्टवान् ॥ ५४ ॥ यत्पृष्टं तदाह ॥ हे आर्य वेदनिकरो वेदनिचयः प्रकर्षेण विभक्तो विलक्षणीकृतस्त्वयेति शेष एवमग्रेपि ॥ ५५ ॥

अथब्रह्मसूत्रेइहास्मिन्लोकेकेचिद्विप्रतिपन्नाविप्रतिपत्तिप्राप्ताःस्वमतानुसारेणयथायोग्यमर्थान्कल्पयंति ॥ तस्मात्हेभगवन् अन्यथार्थग्रहणनि ग्रहेदक्षमस्यब्रह्मसूत्रस्यभाष्यंत्वयाकरणीयं ॥ ५६ ॥ ममवचनंसचपराशरसूनुःश्रुत्वासभायांहेविद्वदग्रचरवाचमुक्तवान् तांदर्शयति दिविषद्भिर्दै वैरयंत्वदुक्तोऽर्थःशिवस्यसभायामुक्तः ॥ ५७ ॥ तस्मात्हेवत्सत्वंशृणु समस्तवित्सर्वज्ञः ॥ ५८ ॥ सुखप्रदंभाष्यंकरिष्यति येनशिष्येणतत्कर्तृ





अत्रकेचिदिहविप्रतिपन्नाःकल्पयंतिहियथायथमर्थान् ॥ अन्यथाग्रहणनिग्रहदक्षंभाष्यमस्यभगवन्करणीयं ॥ ५६ ॥ मद्वचःसचनिशम्यसभायांविद्वदग्रचरवाचमवोचत् ॥ पूर्वमेवदिविषद्भिरुदीर्णःपार्वतीपतिसदस्ययमर्थः ॥ ५७ ॥ वत्सकश्शृणुसमस्तविदेकोमत्समस्तवभविष्यतिशिष्यः ॥ कुंभएवसरितःसकलंयःसंहरिष्यतिमहात्वर्णमंभः ॥ ५८ ॥ दुर्मतानिनिरसिष्यतिसोयंशर्मदायिचकरिष्यतिभाष्यं ॥ कीर्तयिष्यतियशस्तवलोकःकार्तिकेंदुकरकौतुकियेन ॥ ५९ ॥ इत्युदीर्यमुनिराट्सवनांतेपत्युरापससुगिरिंगिरिजायाः ॥ तन्मुखाच्छ्रुतमशेषमिदानींसन्मुनिप्रियमयात्वयिदृष्टं ॥ ६० ॥ सत्वमुत्तमपुमानसिकश्चित्तत्वविस्त्रवरनान्यसमानः ॥ तद्यतस्वनिरवद्यनिबंधैःसद्यएवजगदुद्धरणाय ॥ ६१ ॥

केणभाष्येणचकार्तिकचंद्रकिरणवत्कौतुकमस्यास्तीतितवयशोलोकःकीर्तयिष्यति ॥ ५९ ॥ इत्येवंप्रकारेणसमुनिराट्वेदव्यासोवनमध्येउक्त्वापार्वत्याःपत्युःशिवस्यगिरिंकैलासंप्राप तस्यव्यासस्यमुखाच्छ्रुतंसर्वंमयाहेसन्मुनिप्रियत्वयिदृष्टं ॥ ६० ॥ हेतत्वविच्छ्रेष्ठत्तत्तस्मान्निर्दुष्टग्रंथैर्यतस्व ॥ ६१ ॥

शशिमौलेश्चंद्रशेखरस्य नगरं स्वच्छरूपया देवनद्या गंगया कमनीयं सुंदरं तावता गमनमात्रेणैव तस्मिन्नगरे आद्या शिवाख्या देवता तव परमनुग्रहं करिष्य ति ॥ ६२ ॥ एवमेनं श्रीशंकरं दयालुरनुशासनं कृत्वा दृशा कृपादृष्ट्या पवित्रीकुर्वन् भावान् भक्त्यतिशयेन स्वचरणांबुजसेवामेव सदैवाभिकामयमानं वि ससर्ज ॥ ६३ ॥ अस्य श्रीगोविंदनाथस्य गुरोः पंकजप्रतिभटं पदद्वंद्वमभिवंद्य तस्य पदयुग्मस्य वियोगमसहिष्णुरपि तस्य विलोकनं हृदयाब्जे अयन्प्रामु वन्कथंचिन्निरगात् ॥ ६४ ॥ स हि तापसश्रेष्ठः श्रीशंकरः काशीं प्राप ॥ तां विशिनष्टि ॥ नीपानां कदंबानां वनेन व्याप्तं समीपं यस्याः आपगायानद्यानि

गच्छ वत्स नगरं शशिमौलेः स्वच्छदेवतटिनीकमनीयं ॥ तावता परमनुग्रहमाद्या देवता तव करिष्यति तस्मिन् ॥
॥ ६२ ॥ एवमेनमनुशास्य दयालुः पावयन्निजदृशा विससर्ज ॥ भावतः स्वचरणांबुजसेवामेव शश्वदभिकामय
मानं ॥ ६३ ॥ पंकजप्रतिभटं पदयुग्मं शंकरोऽस्य निरगादसहिष्णुः ॥ तद्वियोगमभिवंद्य कथंचित्तद्विलोकनमय
न्हृदयाब्जे ॥ ॥ ६४ ॥ प्राप तापसवरः स हि काशीं नीपकाननपरीतसमीपां ॥ आपगानिकटहाटकचंचद्यूपपंक्ति
समुदंचितशोभां ॥ ६५ ॥ संददर्श स भगीरथतन्नामंदतीव्रतपसः फलभूतां ॥ योगिराडुचिततीरनिकुंजां भोगिभू
षणजटातटभूषां ॥ ६६ ॥ विष्णुपादनखराज्जननाद्वा शंभुमौलिशशिसंगमनाद्वा ॥ या हिमाद्रिशिखरात्पतना
द्वा स्फाटिकोपमजला प्रतिभाति ॥ ६७ ॥ गायतीव कलषट्पदनादैर्नृत्यतीव पवनोच्चलिताब्जैः ॥ मुंचतीव हसितं
सितफेनैः श्लिष्यतीव चपलोर्मिकरैर्या ॥ ६८ ॥

कटानां सुवर्णेन चंचतां यूपानां यज्ञस्तंभानां पंक्तिभिः समुदंचिता शोभा यस्यां सा तां ॥ ६५ ॥ एवं काशीमुपवर्ण्य गंगां वर्णयति ॥ स योगिराट् भगीरथेन त तस्यामंदतीव्रस्यात्यंततीक्ष्णस्य तपसः फलभूतां उचिताः तीरे निकुंजा यस्याः सर्पभूषणस्य शिवस्य जटानां तटस्य भूषामलंकृतिं गंगां संददर्श ॥ ६६ ॥ स्फटिकमणिसदृशजलां गंगां त्रिधोत्प्रेक्षति ॥ विष्णोश्चरणनखाज्जननाद्वा संगमनं समागमः हिमाद्रिर्हिमाचलः ॥ ६७ ॥ अव्यक्ताक्षरैर्मधुरैर्भ्रमरनादै र्गायतीव वायुनोर्ध्वं चलितैः कमलैर्नृत्यतीव श्वेतैः फेनैर्हासं मुंचतीव चपलोर्मिलक्षणहस्तैरालिंगनं कुर्वतीव ॥ ६८ ॥

दिव्यवधूनांकटाक्षकिरणैःक्वचिदतिश्यामा तासांभूषणदीप्तिभिःक्वचनचित्रिता विचित्रभूषणभानांविचित्रत्वात् तासांस्तनतटीभ्योगलितैःकुंकुमैः क्वचित्पाटलांश्वेतरक्तां एवंभूतांसंददर्शेतिपूर्वेणान्वयः ॥ ६९ ॥ सःश्रीशंकरःसुरनद्यागंगायाजलमवगाह्यशितिकंठस्यशिवस्यजटाभ्योजाह्नवीसलिलवेगेनहृतस्तस्याजाह्नव्याःसंयोगेनपुण्येनपरिपूर्णश्चंद्रइवउत्ततारोत्प्लुतः ॥ ७० ॥ स्वःसिंधोर्जलकणैराहिताशोभायस्याःसाऽस्यशंकरस्यमू

श्यामलाक्वचिदपांगमयूखैश्चित्रिताक्वचनभूषणभाभिः ॥ पाटलाकुचतटीगलितैर्याकुंकुमैःक्वचनदिव्यवधूनां ॥ ६९ ॥ सोवगाह्यसलिलंसुरसिंधोरुत्ततारशितिकंठजटाभ्यः ॥ जाह्नवीसलिलवेगहृतस्तद्योगपुण्यपरिपूर्णइवेंदुः ॥ ७० ॥ स्वर्णदीजलकणाहितशोभामूर्तिरस्यसुतरांविललास ॥ चंद्रपादगलदंबुकणांकापुत्तिकाशशिशिलारचितेव ॥ ७१ ॥ विश्वेशश्चरणयुगंप्रणम्यभक्त्याहर्याद्यैस्त्रिदशवरैःसमर्चितस्य ॥ सोनैषीत्प्रयतमनाजगत्पवित्रेक्षेत्रेसाविहसमयंकियंतमार्यः ॥ १७२ ॥ इतिश्रीमाधवीयेतत्सुखाश्रमनिवासगः ॥ संक्षेपशंकरजयेसर्गोऽयंपंचमोऽभवत् ॥ मूलसंख्या ॥ २५२ ॥

र्तिःसुतरांशुशुभे तत्रदृष्टांतः चंद्रकिरणैर्गलतांजलकणानामंकाश्चिन्हानियस्याःसाचंद्रकांतशिलारचिताप्रतिमायथातद्वत् ॥ ७१ ॥ विश्वमीष्टइति विश्वेट्तस्यविश्वनियंतुर्विष्ण्वादिदेववरैःसंपूजितस्यचरणद्वयंभक्त्याप्रणम्य प्रयतमनाःसोसावार्यःकियंतंकालंजगत्पवित्रेस्मिनक्षेत्रेऽनैषीत्नीतवानित्यर्थः प्रहर्षिणीवृत्तं ॥ १७२ ॥ इतिश्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेशंकरविजयडिंडिमेपंचमःसर्गः ॥ ५ ॥

॥ इति पंचमः सर्गः ॥

एवंसपरिकरंजीवन्मुक्तिसुखप्रापकंश्रीशंकरकर्तृकंचतुर्थाश्रमनिवासमुपवर्ण्याथेदानींतत्कर्तृकांब्रह्मविद्याप्रतिष्ठितिंसपरिकरांवर्णयितुमुपक्र
मते अथेत्यादिना अथकाशीप्राप्त्याद्यनंतरं कश्चित्कमलेक्षणोब्राह्मणसुतोऽधीतवेदोदेशिकेंद्रं दिदृक्षमाणःस्वभासातेजांसिदलयन् आदरादा
गमदितियोजना उपजातिः ॥ १ ॥ दृढांदुःप्रापांगुरुकारुण्यनावमधिरुह्यदुरुत्तरंसंसारसमुद्रमुत्तितीर्षुःवैराग्यवान्नकृतःस्त्रीपरिग्रहोयेन स
आगत्य श्रीशंकरस्योपदेष्टुश्चरणकमलयोरपप्तत्पतितवान् वसंततिलका ॥ २ ॥ तंब्राह्मणकुमारमुत्थाप्यद्विजानांगुरुर्दैशिकउवाच त्वं

अथषष्ठःसर्गः अथागमद्ब्राह्मणसूनुरादरादधीतवेदोदलयन्स्वभासा ॥ तेजांसिकश्चित्सरसीरुहाक्षोदिदृक्षमाणः किलदेशिकेंद्रं ॥ १ ॥ आगत्यदेशिकपदांबुजयोरपप्तत्संसारवारिधिमनुत्तरमुत्तितीर्षुः ॥ वैराग्यवानकृतदारपरिग्रहश्चकारुण्यनावमधिरुह्यदृढांदुरापां ॥ २ ॥ उत्थाप्यतंगुरुरुवाचगुरुर्द्विजानांकस्त्वंकधामकुतआगतआत्तधैर्यः ॥ बालोऽप्यबालधिषणःप्रतिभासिमेत्वमेकोप्यनेकइवनैकशरीरभावः ॥ ३ ॥ पृष्टोवभाणगुरुमुत्तरमुत्तरज्ञो विप्रोगुरोममगृहंबुधचोलदेशे ॥ यत्रापगावहतितत्रकवेरकन्यायस्याःपयोहरिपदांबुजभक्तिमूलं ॥ ४ ॥

कः ब्राह्मणोवाक्षत्रियादिर्वा धामगृहंत्वदीयंक इदानींत्वंकस्माद्देशादागतः यतआत्तंगृहीतंधैर्यंयेनसः अतोबालोप्यबालबुद्धिस्त्वंमेप्रति
भासि पुनश्चैकोप्यनेकइवप्रतिभासि निर्भयत्वात् ॥ पुनश्चनविद्यतेएकस्मिन्नपिशरीरेऽहंभावोयस्यसः पाठांतरेतुनविद्यतएकस्यशरीरस्या
पिभानंयस्येतिव्याख्येयं ॥३॥ एवंपृष्टउत्तरज्ञोगुरुंप्रतिजगाद हेगुरोऽहंविप्रइतिप्रथमप्रश्नस्योत्तरं द्वितीयस्योत्तरमाह हेबुध यस्याजलंहरिप
दांबुजभक्तेःकारणंसाकावेरीनदीयत्रचलतितस्मिन्चोलाख्येदेशेममगृहमस्तीत्यर्थः सर्वज्ञस्यतवनकिंचिदप्यऽविदितमितिसंबोधनाशयः॥४॥

स्योत्तरमाह महतोदर्शनेच्छुरटाट्यमानोभृशमटमानः सूचिसूत्रिमूत्र्यट्यत्यर्थश्णोतिभ्योयङ्वाच्यइतियङ् क्रमादिमंदेशमुपाग

[illegible] एवंपृष्टमावेद्यस्वप्रयोजनमावेदयति संसारसमुद्रेमज्जन्बिभेमि तस्मात्कृपयासंसारसमुद्रात्पारगंमांविधेहि उपजातिः ॥५॥ हेपरम

 गुरोममगुणंवादोषंवाअविचारयन्अत्युच्चैःकटाक्षलक्षणैरमृतझरभंगैःसुधाप्रवाहतरंगैर्दययाशोकेनखिन्नमतएवदीनंमांकलयावलोकय गुण 

अटाट्यमानोमहतोदिदृक्षुःक्रमादिमंदेशमुपागतोऽस्मि ॥ बिभेमिमज्जन्भववारिराशौतत्पारगंमांकृपयाविधे
हि॥ ५ ॥ अपांगैरुत्तुंगैरमृतझरभंगैःपरगुरोशुचादूनंदीनंकलयदययामामविमृशन्॥ गुणंवादोषंवाममकिम
पिसंचिंतयसिचेत्तदाकैवश्लाघानिरवधिकृपानीरधिरिति॥ ६ ॥ स्यात्तेदीनदयालुताकृतयशोराशिस्त्रिलोकिगु
रोतूर्णंचेद्दयसेममाद्यनतथाकारुण्यतःश्रीमति॥ वर्षन्भूरिमरुस्थलीषुजलभृत्सद्भिर्यथापूज्यतेनैवंवर्षशतंपयो
निधिजलेवर्षन्नपिस्तूयते॥ ७॥

दोषविचारणेबाधकमाह गुणंवादोषंवाकिमपिममचिंतयसिचेत्तदाश्रीशंकरोनिरवधिकृपासमुद्रइतिकैवश्लाघा नकापीत्यर्थः ॥ शिखरिणी

॥ ६ ॥एतदेवद्रढयन्सदृष्टांतमाह हेत्रिलोकीगुरो शीघ्रंगुणदोषविचारंविनैवाद्यममोपरिदयांकरोषिचेत्तर्हितेदीनदयालुतासंपादितयशोराशि 

र्यथास्यात्तथाश्रीमतिकारुण्यतोजनितयशोराशिर्नस्यात् यतोमरुस्थलीषुभूरिवर्षन्जलभृन्मेघःसद्भिर्यथापूज्यतेसमुद्रजलेवर्षशतंवर्षन्नपित

थानस्तूयतइत्यर्थः शार्दूलविक्रीडितं ॥ ७ ॥

त्वदीयसरस्वत्याःसारएवसारससुधाकूपारश्चंद्रसंबंध्यमृतसमुद्रस्तस्ययत्तत्सारसस्रोतोभिःसल्लक्षणानांसारसानांपक्षिणांकमलानांवास्रोतोभिः प्रवाहैःसंभृतंसंमिश्रितंसंश्रितंवासंततमुज्वलंजलंतस्मिन्क्रीडायस्यास्तथाभूतासतीमेमतिर्हेमुनेचंचत्स्फुरन्यःपंचशरः उन्मादनस्तापनश्चशोषणःस्तोभनस्तथा संमोहनश्चकामस्यपंचबाणाःप्रकीर्तिताइत्युक्तःपंचसायकःकामआदिर्येषांक्रोधादीनां तत्कर्तृकेनवंचनेनहतंअतएवन्यंचंनीचंपुनश्चस्वहितज्ञानेऽकिंचनमशक्तमाब्रह्मलोकंसर्वप्रपंचमालोकयन्न्यंचतुविचरतु सारसःपक्षिभेदेंद्वोःसारसंसरसीरुहइतिविश्वप्रकाशः॥ ॥ ८ ॥ सूरस्यसूर्यस्यइदंधामसुधाकिरणस्यचंद्रस्यनगरंपुरंदरस्येंद्रस्यमंदिरं कुबेरस्यशिबिरंहुताशनस्याग्नेःपुरं समीरस्यवायोःसद्म विधेर्ब्र

त्वत्सारस्वतसारसारससुधाकूपारसत्सारसस्रोतःसंभृतसंततोज्वलजलक्रीडामतिर्मेमुने॥ चंचत्पंचशरादिवंचनहतंन्यंचंप्रपंचंहितज्ञानाकिंचनमाविरिंचिमखिलंचालोचयन्न्यंचतु॥८॥सौरंधामसुधामरीचिनगरंपौरंदरंमंदिरंकौबेरंशिबिरंहुताशनपुरंसामीरसद्मोत्तरं॥वैधंचावसथंत्वदीयफणितिश्रद्धासमिद्धात्मनःशुद्धाद्वैतविदोनदोग्धिविरतिश्रीघातुकंकौतुकं ॥ ९ ॥ नभौमारामाद्याःसुषुमविषवल्लीफलसमाःसमारंभंतेनःकिमपिकुतुकंजातुविषयाः॥ नगण्यंनःपुण्यंरुचिरतररंभाकुचतटीपरीरंभारंभोज्वलमपिचपौरंदरपदं॥ १० ॥

ह्मणश्चसर्वोत्तरमावसथंगृहं त्वदीयायांफणितावुक्तौयाश्रद्धातयासमिद्धआत्मायस्यतस्यशुद्धाद्वैतविदोयावैराग्यलक्षणाश्रीस्तस्याघातुकंनाशकंकौतुकंनदोग्धिनप्रपूरयतीतिप्रत्येकंक्रियान्वयः ॥ ९ ॥ भौमाभूमौभवारामाद्यावनिताद्याविषयाःसुषमाशोभनायाविषवल्लीतस्याःफलेनतुल्याः सुंदरंयद्विषवल्ल्याःफलंतेनेतिवा नोऽस्माकंकिमपिकौतुकंजातुकदापिनसमारभंते नापिपुण्यंसुंदरतरायारंभाख्याऽप्सरास्तस्याःकुचतट्याःपरिरंभस्यालिंगनस्यारंभेनोज्वलंपुरंदरस्यदेवेंद्रस्यपुरमपिनोऽस्माकंगणनीयं शि० ॥ १० ॥

तर्हिब्रह्मपदंभवतामादरपदंस्यान्नेत्याह नेति अनेनेहामुत्रार्थभोगविरागोदर्शितः अथश्रवणौत्सुक्यंदर्शयति कृतीशंकरगुरुर्यद्भव्यंकल्याणा त्मकंनव्यंनवीनंवचनमकृत तत्विरहातुरचकोरपंक्तीनांचंचूपुटैर्दलितात्पूर्णचंद्राद्गलितायाःसुधाधारायाआकारंपुनःपुनर्वयमीहेमहिइच्छा मः ॥ ११ ॥ द्यावाभूम्योःशिवंसुखंकुर्वंतीतितथातैः नवीनस्यासाधारणस्ययशसःप्रस्तावस्यप्रसंगस्यसौवस्तिकैःस्वस्तिवाचकैः स्वस्तीत्याहे त्यर्थेतदाहेतिमाशब्दादिभ्यठग्वाच्यइत्यनेनठक्प्रत्ययः पूर्वस्यपूर्वार्जितस्यानल्पतपसःपक्कफलैःसर्वेषामाधीनांमुष्टिंधयैःसाराकर्षकैः सर्वे चतआधयश्चेतिवा दीनानामाढ्यंकरणैर्भवायसंसारायनित्यंवैरायमाणैर्वैरंकुर्वद्भिः शब्दवैरेत्यादिनाकरोत्यर्थेक्यप् त्वदीयभजनैरलंकर्मी

नचंचद्वैरिंच्यंपदमपिभवेदादरपदंवचोभव्यंनव्यंयदकृतकृतीशंकरगुरुः ॥ चकोरालीचंचूपुटदलितपूर्णे
दुविगलत्सुधाधाराकारंतदिहवयमीहेमहिमुहुः ॥ ११ ॥ द्यावाभूमिशिवंकरैर्नवयशःप्रस्तावसौवस्तिकैः
पूर्वाखर्वतपःपचेलिमफलैःसर्वाधिमुष्टिंधयैः॥ दीनाढ्यंकरणैर्भवायनितरांवैरायमाणैरलंकर्माणंप्रसि
तंत्वदीयभजनैःस्यान्मामकीनंमनः ॥ १२ ॥ संसारबंधामयदुःखशांत्यैसएवनस्त्वंभगवानुपास्यः ॥
भिषक्तमंत्वांभिषजांशृणोमीत्युक्तस्ययोभूदुदितावतारः॥ १३॥

णंकर्मक्षमं कर्मक्षमोलंकर्मीणइत्यमरः मदीयंमनःप्रसितंस्यात्तथाभूतेषुत्वदीयभजनेषुतत्परंस्यादितिप्रार्थना प्रसितोत्सुकाभ्यांतृतीयाचेति तृतीया तत्परेप्रसितासक्तावित्यमरः कःप्रसितोनामयस्तत्रनित्यंप्रतिबद्धःकुतएतत्.॥ सुनोतिरयंबध्नात्यर्थेवर्ततइतिमहाभाष्यं अनेनगुरुशुश्रूषा करणौत्सुक्यंस्वस्यदर्शितं शा० ॥ १२ ॥ ननुतर्हियःकश्चिदेवगुरुस्त्वयास्वाभीष्टसिद्धयेसंसेव्यइतिचेत्तत्राह ॥ भिषक्तमंत्वाभिषजांशृणोमी तिश्रुत्युक्तस्यसदाशिवस्ययउदितःउक्तोऽवतारोभूत् उदयंप्राप्तोऽवतारउदितावतारइतिवा सएववैद्यानांमध्येसद्वैद्यस्यावतारभूतस्त्वंभगवान्नो ऽस्माकंसंसारबंधलक्षणरोगदुःखशांत्यर्थमुपास्यइत्यर्थः उ० ॥ १३ ॥

उत्सुकवंतंब्राह्मणसूनुंमहात्माश्रीशंकराचार्यःकरुणयाविधिवत्संन्यसनंव्यदीपयत् तंसनंदनसंज्ञंदेशिकेंद्रस्याद्यंशिष्यंमहांतःप्राहुः ॥ १४ ॥ तदिष्टंसम्यक्साधितवानित्याह संसारलक्षणस्यघोरसमुद्रस्यतरणायानारतंसांयात्रिकीभवनमर्दयमानंपोतवणिक्त्वंभवेतियाच्यमानमेनंसनंदनंहंततदानीमेवोत्तमाश्रमतरींसंन्यासाश्रमलक्षणांनौकामधिरोप्यपारंनीतवान् यतोनितरांशिष्येषुस्थापितायाःकृपायारसएवकेनिपातोनौकादंडोयस्य नौकादंडःक्षेपणीस्यादरित्रंकेनिपातकइत्यमरः निपातितःकृपारसएवकेनिपातोयेनेतिवा ॥ १५ ॥ एवंप्रथमविनेयवृत्तांतंविस्तरेणाभिधायेतरेषांसंक्षेपेणतमाह येप्यन्येचित्सुखानंदगिर्यादयोदेवतांशाअमुंश्रीशंकरंसेवितुंयातास्तेऽपिसनंदनवत्प्रा

इत्युक्तवंतंकृपयामहात्माव्यदीपयत्संन्यसनंयथावत् ॥ प्राहुर्महांतःप्रथमंविनेयंतंदेशिकेंद्रस्यसनंदनाख्यं ॥
॥ १४ ॥ संसारघोरजलधेस्तरणायशश्वत्सांयात्रिकीभवनमर्दयमानमेनं ॥ हंतोत्तमाश्रमतरीमधिरोप्यपारंनिन्येनिपातितकृपारसकेनिपातः ॥ १५ ॥ येप्यन्येऽमुंसेवितुंदेवतांशायातास्तेपिप्रायएवंविरक्ताः ॥ क्षेत्रेतस्मिन्नेवशिष्यत्वमस्यप्रापुःस्पष्टंलोकरीत्यापिगंतुं ॥ १६ ॥ व्याख्यामौनमनुत्तराःपरिदलच्छंकाकलंकांकुराश्छात्राविश्वपवित्रचित्रचरितास्तेवामदेवादयः ॥ तस्यैतस्यविनीतलोकततिमुद्धर्तुंधरित्रीतलंप्राप्तस्यात्रविनेयतामुपगताधन्याःकिलान्यादृशाः ॥ १७ ॥

योविरक्तास्तस्मिन्नविमुक्तक्षेत्रेएववटमूलस्थमहादेवशिष्याअपिलोकरीत्यापिस्पष्टंशंकराचार्यशिष्याइतिप्रसिद्धिंप्राप्तुमस्यशिष्यत्वमापुःशालिन्युक्तामौतगौगोब्धिलोकैः ॥ १६ ॥ एतदेवस्फुटयति व्याख्येति मौनमेवव्याख्या शिष्याश्वशुकवामदेवादयोविश्वस्यपवित्रंचतच्चित्रंचतच्चरितंयेषांतेऽनुत्तराउत्तररहिताः यतःपरिदलंतोविनाशंगच्छंतःशंकाकलंकानामंकुरायेभ्यस्ते ॥ चित्रंवटतरोर्मूलेवृद्धाःशिष्यागुरुर्युवा गुरोस्तुमौनंव्याख्यानंशिष्यास्तुच्छिन्नसंशयाइत्युक्तत्वात्तेएवयस्यशिवस्यशिष्यास्तस्यैतस्यश्रीशंकरस्यविनीतलोकपंक्तिमुद्धर्तुमस्मिन्मर्त्यलोकेप्राप्तस्येदानींशिष्यतांप्राप्ताधन्याःकिल यतोअन्यादृशाःसर्वतोविलक्षणाः ॥ शा० ॥ १७ ॥

शेषादिभ्यस्तस्याधिक्यंवर्णयति शेषनागः साधुभिः शब्दैरेवपुरुषार्थार्थिनोनरान्तोषयति नतुपुमर्थप्रदानेनसद्यःकृतार्थान्कुरुते तथाएषः कविराजोवाल्मीकिरपिवितथैरयथार्थैर्मुहुःकल्पितैरर्थैरेवनॄन्तोषयति तथादीर्घासूत्राणांसरणिर्यस्यसव्यासोपिचिरादतिविलंबेनार्थंपुमर्थं चददातीति तांवाचंव्याचष्टे शंकरश्चासौदेशिकस्त्वहोनॄन्सद्यःकृतार्थान्कुरुते ॥ १८ ॥ विष्णुतुल्यमहिमानंतंश्रीशंकरमविमुक्तेशिवेनकदाप्य निर्मुक्तेवासोयेषांतेसेवांचक्रुः तदुपासनायाःफलंचलेभुरित्याह वक्रमार्गमनुसृतामपिस्वीयांबुद्धितस्योपासनयासाध्वींकृतवंतः ॥ स्वागता०

शेषःसाधुभिरवतोपयतिनॄन्शब्दैःपुमर्थार्थिनोवाल्मीकिःकविराजएषवितथैरर्थैर्मुहुःकल्पितैः ॥ व्याचष्टेकिलदीर्घसूत्रसरणिर्वाचंचिरादर्थदांव्यासःशंकरदेशिकस्तुकुरुतेसद्यःकृतार्थानहो ॥ १८ ॥ चक्रितुल्यमहिमानमुपासांचक्रिरेतमविमुक्तनिवासाः ॥ वक्रसृत्यनुसृतामपिसाध्वींचक्रुरात्मधिषणांतदुपास्त्या ॥ १९ ॥ चंडभानुरिवभानुमंडलैःपारिजातइवपुष्पजातितः ॥ वृत्रशत्रुरिवनेत्रवारिजैश्छात्रपंक्तिभिरलंसललास ॥ २० ॥ एकदाखलुविपत्त्रिपुरद्विट्भाललोचनहुताशनभानोः ॥ विस्फुलिंगपदवींदधतीषुप्रज्वलत्तपनकांतशिलासु ॥ २१ ॥

॥ १९ ॥ भानुमंडलैःकिरणमंडलैःयथाचंडभानुःसूर्यःशोभते यथाचपुष्पजातितःपारिजातः यथाचनेत्रवारिजैःसहस्रसंख्याकनेत्रकमलैर्वृत्रशत्रुरिंद्रस्तद्वत् शिष्यपंक्तिभिःश्रीशंकरोऽलमत्यर्थंललासबभासे ॥ २० ॥ अथेदानींशिवसंगमंवर्णयितुंप्रस्तौति एकस्मिन्कालेप्रज्वलत्सूर्यकांतशिलासुवियत्त्रिपुरद्विषोमहादेवस्यभालनेत्रभूतोयोहुताशनोवह्निस्तस्यभानोःकिरणस्यविस्फुलिंगपदवींदधतीषुसत्स्वित्यादिसप्तम्यंतानांशंकरोजाह्नवीमभिययावितिव्यवहितेनान्वयः ॥ २१ ॥

उरुभिर्मरीचिभिः सरस्वत्पूरस्य समुद्रपूरस्य स्तजिस्रष्टरि पुनश्च समीचीनानेकमणिभिः कुट्टिमो निबद्धभूमिः कुट्टिमोस्तीनिबद्धाभू... स्मिन्मूर्छताव्यामेनरश्मिजालकेन शिखावलस्य मयूरस्य पिच्छं दर्शयति भानावपरमायिन्यपरस्मिन्नैंद्रजालिकेसति ॥ २२॥ पंकजावलिषुवि लीनेषु मरालेषु हंसेषु सत्सु पुष्करांतर्जलमध्यमभिगत्वरे अभिगतवति मीने मत्स्ये सति शाखिनां वृक्षाणांछिद्रेषु शयालुषु सम्यक् निद्रां कुर्वत्सु पक्षि षु सत्सु पर्वतानां कंदराशरण्यायस्य तथाभूते मयूरे सति ॥ २३॥ दिनस्य मध्यमभागे विधिवदान्हिकं विधातुमिच्छुः शिष्यैः सह शंकरः पंकजोत्पला

दर्शयत्युरुमरीचिसरस्वत्पूरसृज्यपरमायिनिभानौ ॥ साधुनैकमणिकुट्टिममूर्च्छद्रश्मिजालकशिखावल पिच्छं ॥ २२ ॥ पंकजावलिविलीनमरालेपुष्करांतरभिगत्वरमीने ॥ शाखिकोटरशयालुशकुंतेशैल कंदरशरण्यमयूरे ॥ २३ ॥ शंकरोदिवसमध्यमभागेपंकजोत्पलपरागकषायां ॥ जाह्नवीमभिययौसह शिष्यैराह्निकंविधिवदेषविधित्सुः ॥ २४ ॥ सोंत्यजंपथिनिरीक्ष्यचतुर्भिर्भीषणैःश्वभिरनुव्रतमारात् ॥ गच्छ दूरमितितंनिजगादप्रत्युवाचचसशंकरमेनं ॥ २५ ॥ अद्वितीयमनवद्यमसंगंसत्यबोधसुखरूपमखंडं ॥ आमनंतिशतशोनिगमांतास्तत्रभेदकलनातबचित्रं ॥ २६ ॥

नांपरागेणकषायवर्णांजान्हवीमभिययौ ॥ २४ ॥ सः श्रीशंकरश्च चतुर्भिर्भीषणैः श्वभिरनुव्रतं मंत्यजं चांडालं मार्गमध्ये समीपे निरीक्ष्य दूरंग च्छेति तमंत्यजं स्पष्टमुक्तवान्स चांत्यज एनं शंकरं प्रत्युवाच ॥ २५॥ यदुवाच तदाहाद्वितीयमिति तच्चदूरंगच्छेत्युक्तिरसंगताभेदाभावादित्याशये नाह एकमेवाद्वितीयं एष आत्मापहतपाप्मा निरवद्यं निरंजनं असंगोह्ययं पुरुषः सत्यं ज्ञानमनंतं ब्रह्म विज्ञानमानंदमित्यादि शतशो वेदांता अद्वितीयादिरूपमात्मानमामनंति तस्मिन्नात्मनि तव वेदांतित्वेन प्रसिद्धस्य भेदकल्पनास्तीत्यहोऽत्याश्चर्यमित्यर्थः ॥ २६ ॥

 

तथाच भेदकलनावांस्त्वमप्येवंविधयतिपंक्तौ निविष्टोसीतियोतयन्नाह दंडेनमंडिताःअलंकृताहस्तायेषांतेधृतनकमंडलवःपाटलाआभायेषां तथाभूतानिवस्त्राणियेषां पटूयोवाचोयेषांतेज्ञानलेशेनविरहिताःकिलकेचनयतयोगृहसंस्थान्वंचयंति ॥ २७ ॥ गच्छदूरमितिशरीरंपरित्य क्तुमिच्छसिउतात्मानमितिविकल्पंदूषयति गच्छदूरमितिविदुषस्तवनैतदुचितमितिध्वनयन्संबोधयति हेविद्वन्निति तत्राद्यंप्रत्याहान्नमया

॥ ४ ॥ दन्नमयंकिंभिद्यतेनैवभिद्यतइत्यर्थःद्वितीयंप्रत्याह साक्षिणश्चसाक्षीनहिभिद्यतेत्वमेतज्ज्ञातुंयोग्योसीत्याशयेनाह हेयतिपुंगवेति ॥ २८ ॥ प्रत्यगात्मनिभेदंदृष्टांतेनापिनिराचष्टे ब्राह्मणश्वपचभेदविचारःदेहेंद्रियादिभ्योऽनेकेभ्योजडेभ्यश्चप्रतिलोमेनांचतीतिप्रत्यक् सचासावात्मा

दंडमंडितकराधृतकुंडाःपाटलांबरवसनाःपटुवाचः ॥ ज्ञानगंधरहितागृहसंस्थान्वंचयंतिकिलकेचनवेषैः ॥ ॥ २७ ॥ गच्छदूरमितिदेहमुताहोदेहिनंपरिजिहीर्षसिविद्वन् ॥ भिद्यतेऽन्नमयतान्नमयंकिंसाक्षिणश्चयति पुंगवसाक्षी ॥ २८ ॥ ब्राह्मणश्वपचभेदविचारःप्रत्यगात्मनिकथंतवयुक्तः ॥ बिंबितेंऽबरमणौसुरनद्यामंतरं किमपिचास्तिसुरायां ॥ २९ ॥ शुचिर्द्विजोहंश्वपचव्रजेतिमिथ्याग्रहस्तेमुनिवर्यकोयं ॥ संतंशरीरेष्वशरीर मेकमुपेक्ष्यपूर्णंपुरुषंपुराणं ॥ ३० ॥

चतस्मिन्तवाद्वैतवादिनःकथंयुक्तःनकथमपीत्यर्थः यथागंगायांमदिरायांचप्रतिबिंबितेंबरमणौसूर्येऽनरंकिमपिनास्तितद्वदित्यर्थः ॥ २९ ॥ नन्वात्मनोभेदशून्यत्वेप्यतिपवित्रस्यब्राह्मणशरीरस्यातिपापिष्ठस्यांत्यजशरीरस्यचकथमभेदइतिचेत्तत्राह शुचिर्द्विजोऽहंहेश्वपचत्वंदूरंगच्छे ॥ ४ ॥
तिशरीरेष्वनेकेष्वप्येकमशरीरंकालत्रयेशरीरसंबंधविनिर्मुक्तमतएवपुराणंपुराप्यभिनवंपूर्णंसदेकरसंपुरुषंसंतमुपेक्ष्यायंमिथ्याभूतआग्रहस्त वकः नायंतवोचितोयतोमुनिश्रेष्ठस्त्वमित्याशयवानाहहेमुनिवर्येति ३० ॥ ३० ॥

स्वस्वरूपंविस्मृत्यक्षणभंगुरेदेहेऽहंतातीवानुचितेतिबोधयन्नाहाचिंत्यमतःकेनापिकरणेनन्नव्यज्यतइत्यव्यक्तमतएवानंतमतएवाद्यं यतउपाधि मलशून्यंस्वंस्वरूपंमोहादविवेकाद्विस्मृत्य गजकर्णवच्चंचलाकारेऽस्मिन्ननुभूयमानेकलेवरेऽहंभावःकथमाविरास्तेप्रकटोभवति विवेकिनांके नापिप्रकारेणास्याविर्भावोनयुक्तइत्यर्थः ॥ ३१ ॥ ननुयद्यप्येवंतथापिलोकसंग्रहेच्छयेदंमयोक्तमितिचेत्तत्राह ॥ विमुक्तिपद्यांविमुक्ति मार्गभूतांविद्यांप्राप्यापितुच्छाजनसंग्रहेच्छाकिंजागर्त्ति अहोइत्याश्चर्यं मायाविनांवरस्यश्रेष्ठस्यतस्यपरमात्मनोमहतींद्रजालेभवदादयो महांतोपिमज्जंतीत्यर्थः ॥ ३२ ॥ एवमंत्यजवचनमुदाहृत्यशंकरवाक्यमुदाहर्त्तुमाह इतिवचनमुक्त्वाऽस्मिन्नंत्यजेविरामंगतेसति ततःपश्चाद्विप्र

अचिंत्यमव्यक्तमनंतमाद्यंविस्मृत्यरूपंविमलंविमोहात्॥ कलेवरेऽस्मिन्करिकर्णलोलाकृतिन्यहंताकथमावि
मारास्ते॥ ३१॥ विद्यामवाप्यापिविमुक्तिपद्यांजागर्तितुच्छाजनसंग्रहेच्छा॥ अहोमहांतोपिमहेंद्रजालेमज्जं
तिमायाविवरस्यतस्य॥ ३२॥ इत्युदीर्यवचनंविरतेऽस्मिन्सत्यवाक्तदनुविप्रतिपन्नः॥ अत्युदारचरितोंत्यज
मेनंप्रत्युवाचसचविस्मितचेताः॥ ३३॥ सत्यमेवभवतायदिदानींप्रत्यवादितनुभृत्प्रवरैतत्॥ अंत्यजोयमि
तिसंप्रतिबुद्धिंसंत्यजामिवचसात्मविदस्ते॥ ३४॥ जानतेश्रुतिशिरांस्यपिसर्वेमन्वतेचविजितेंद्रियवर्गाः॥
युंजतेहृदयमात्मनिनित्यंकुर्वतेनधिषणामपभेदां॥ ३५॥

तिपन्नोऽयमंत्यजोभवतिनभवतीतिविप्रतिपन्नःसत्यवचनोऽत्युदारचरितोविस्मितचित्तःसचश्रीशंकरःएनमंत्यजंप्रत्युवाच ॥स्वा०॥३३॥ यदुवा चतदाह सत्यमिति नत्वमंत्यजः किंतुदेहभृत्प्रवरइतिसूचनायसंबोधनं ॥ ३४ ॥ भेदशून्यबुद्धेरतिदुर्लभत्वान्नकोप्युपलंभनीयइत्याशये नाह सर्वेऽनेकेश्रुतिशिरांसिश्रवणेनजानंति तथाऽनेकेविजितेंद्रियवर्गाःतानिमन्वतेचमननंकुर्वंति तथांऽतःकरणमात्मनिनित्यंयुंजते निदि ध्यासनंकुर्वंति तथापिप्रतिबंधकसद्भावाद्भेदशून्यांबुद्धिंकेपिनकुर्वंतीत्यर्थः ॥ ३५ ॥

ननु तिष्ठत्वन्येषांवार्तातवबुद्धिरभेदास्तिनवेत्याशंक्याह ममाभेदबुद्धिरित्युत्तरमनुचितंमन्यमानोनमोवयंब्राह्मिष्ठायकुर्मइतियाज्ञवल्क्योक्तिमनुसृत्यव्याजेनसमाधत्ते यस्यतुदृढबुद्धेःसर्वमपिजगत्सदैवात्माव्यतिरिक्तंभाति सब्राह्मणोऽस्तुश्वपचोवाभवतु वंदनीयइतिममदृढानिष्ठा ॥ ॥ ३६ ॥ नकेवलंवंदनीयएव किंत्वेवंविधःसम्यक्ज्ञानवान्साक्षान्ममगुरुरेवेत्याह विष्णुशिवादौयाचितिश्चेतनंस्फुरति सैवपुत्तिकापतङ्गिकांतदवधिषुजंतुषुस्फुरति सैवकालत्रयेप्यहंदृश्यंतुनैवास्तीतियस्यमनीषासचांडालोवाभवतुनथापिममगुरुः ॥ ३७ ॥ किंबहुनातत्त्ववित्सर्वोऽपिममगुरुरित्याहाऽस्मिन्लोकेतत्तद्विषयानुभवकालेयत्रयत्रविषयेज्ञानंभवेत्तत्सर्वंमिथ्याभूतंसर्वोपाधिबाधेनावशिष्टंज्ञानमात्रमहमेव.

भातियस्यतुजगद्दृढबुद्धेःसर्वमप्यनिशमात्मतयैव ॥ सद्विजोऽस्तुभवतुश्वपचोवावंदनीयइतिमेदृढनिष्ठा ॥ ॥ ३६ ॥ याचितिःस्फुरतिविष्णुमुखेसापुत्तिकावधिषुसैवसदाहं ॥ नैवदृश्यमितियस्यमनीषापुल्कसोभवतुवासगुरुर्मे ॥ ३७ ॥ यत्रयत्रचभवेदिहबोधस्तत्तदर्थसमवेक्षणकाले ॥ बोधमात्रमवशिष्टमहंतद्यस्यधीरितिगुरुःसनरोमे ॥ ३८ ॥ भाषमाणइतितेनकलावानेषनैक्षततमंत्यजमग्रे ॥ धूर्जटिंतुसमुदैक्षतमौलिस्फूर्जदिंदुवकलंसहवेदैः ॥ ३९ ॥

नमत्तःकिमपिव्यतिरिक्तमस्तीतियस्यबुद्धिःसयःकश्चिदपिनरोममगुरुः एतेनगच्छदूरमितिमयादेहजिहीर्षयानोक्तं नाप्यात्मजिहीर्षयाऽपितूभयतादात्म्याध्यासवजिहीर्षया सचतवनास्तिचेत्त्वंममगुरुरेवेत्याक्षेपोऽपिपरिहृतोवेदितव्यः ॥ ३८ ॥ एवंनिर्व्यलीकंभाषमाणस्त्यक्तांत्यजविग्रहंप्रकटितस्वस्वरूपंमहादेवंददर्शेत्याहेत्येवंप्रकारेणतेनसहभाषमाणएषश्रीशंकरःतमंत्यजमग्रेनददर्श किंतुमौलौशिरसिस्फुरंतीचंद्रकलायस्यतंचतुर्भिर्वेदैःसहितंधूर्जटिंमहादेवंसंदृष्टवान् ननुश्रीशंकरादन्यस्यशिवस्याभावात्कथमेवमुच्यतइतिचेत्तत्राह कलावान्ज्ञानकलावतारस्यशंकरस्यावतारिपुरुषेणसहव्यासस्यविष्णुनेवसंवादादिकंसंभवत्येवेतिभावः ॥ ३९ ॥

दृष्ट्वायथाभूतोयत्कृतवानृतदाह तंदृष्ट्वाभयेनभक्त्याविनयेनधैर्येणहर्षेणविस्मयेनचयुक्तःशिष्टानुमतःश्रीशंकरोनेत्रयोर्विषयमष्टौमूर्त्याद्या
मूर्त्तयोयस्यतंमहादेवंस्तवैस्तुष्टाव उ० ॥ ४० ॥ देहदृष्ट्यात्वदासोऽहमस्मि यतःशंसुखंभवत्यस्मादितिशंभुस्त्वमेवस्वामित्वगुणयुक्तइति
सूचयन्नाह शंभोइति जीवदृष्ट्याहंतवांशोजातः ननुकथंनिरवयवस्यममांशस्त्वमितिचेद्यथासर्वेंद्रियशून्यस्यापितवसूर्यचंद्रवह्निलक्षण
त्रिनेत्रविग्रहवत्त्वं तथामाययातवांशस्यापिसंभवादित्याशयेनसंबोधयति त्रिदृष्टइति शुद्धात्मदृष्ट्यातुत्वमेवत्वदनन्यएवाहं तत्त्वमस्यादिश्रु

भयेनभक्त्याविनयेनधृत्यायुक्तःसहर्षेणचविस्मयेन॥तुष्टावशिष्टानुमतस्तवैस्तंदृष्ट्वादृशोर्गोचरमष्ट
मूर्तिं॥ ४० ॥ दासस्तेहंदेहदृष्ट्यास्मिशंभोजातस्तेंशोजीवदृष्ट्यात्रिदृष्टे ॥ सर्वस्यात्मन्नात्मदृष्ट्यात्वमे
वेत्येवंमेधीर्निश्चितासर्वशास्त्रैः ॥ ४१ ॥ यदालोकादंतर्बहिरपिचलोकोवितिमिरोनमंजूषायस्य
त्रिजगतिनशाणोनचखनिः ॥ यतंतेचैकांतंरहसियतयोयत्प्रणयिनोनमस्तस्मैस्वस्मैनिखिलनिग
मोत्तंसमणये॥ ४२ ॥

तेः तत्रयोग्यंसंबोधनंसर्वस्यात्मन्नितीत्येवंप्रकारेणसर्वशास्त्रैर्मेबुद्धिर्निश्चयंप्राप्ता शालिनी ॥ ४१ ॥ प्रसिद्धशिरोभूषणमणितोव्यतिरेकंद
र्शयन्स्वाभिन्नंशिवंनमस्करोति यदिति प्रसिद्धस्यतादृशमणेरालोकाद्बहिरवलोकोवितिमिरोमंजूषापेटा शाणोनिकषः खनिश्च यतिभिर
प्रार्थना प्रसिद्धस्यमणेःप्रसिद्धा अतएतस्मादत्युत्कृष्टायतस्मैतत्पदलक्ष्यायनिखिलनिगमशिरोभूषणमणयेत्वस्मैत्वंपदलक्ष्याभिन्नायनमःप्रह्वी
भावोऽस्तु यस्यप्रकाशादंतर्बहिरपिचलोकोवितिमिरोयस्यभासासर्वमिदंविभातीतिश्रुतेःत्रिजगतियस्यमंजूषानास्तिनापिशाणो नापिखनिः
यत्प्रणयिनोयस्मिन्प्रीतिमंतश्चयतयोरहस्येकांतिभृशंयतंतेतस्मैइत्यर्थः शि० ॥ ४२ ॥

गुरुकृपयाशास्त्राद्धुभ्यस्यतत्त्वज्ञानस्यालंबनमखंडैकरसंत्वतत्त्वंनमस्यति अहोशास्त्रं परमतत्त्वबाधकत्वाद्धन्यतमं यद्यप्येवंविधंशास्त्रंतथा पियदिश्रीगुरुकृपाऽस्मिन्लोकेशिष्येवानस्यात्तर्हिशास्त्रात्किं नकिमपीत्यर्थः चितासंचितासंपादितासागुरुकृपाकिंकुयात् किंफलंदास्यति यदितत्त्वज्ञानस्यविशेषेणोद्भवोनास्ति बोधानुत्पादिकासापिनिष्फलैवेत्यर्थः तथाऽसौबोधश्च किमालंबआलंबनशून्यएव यदिममपरतत्त्वं नस्यात्तस्मात्तत्त्वज्ञानालंबनभूतायपरतत्त्वायस्वाभिन्नायतस्मैपरमात्मनेनमः तथेत्यस्यतस्मादित्यर्थोवा इहजगत्याश्चर्यंबुद्धिर्यत्पर्यंताय स्मात्परआश्चर्यंबुद्धिविषयोनास्तीत्यर्थः ॥ ४३ ॥ एवंस्तुवंतंश्रीशंकरंप्रतिमहादेवोयदुक्तवांस्तद्दर्शयितुमाह॰ इतीति ॥ स्वा॰ ॥

अहोशास्त्रंशास्त्रात्किमिहयदिनश्रीगुरुकृपाविनासाकिंकुर्यान्ननुयदिनबोधस्यविभवः ॥ किमालंबश्चासौ नयदिपरतत्त्वंममतथानमःस्वस्मैतस्मैयदवधिरिहाश्चर्यधिषणा ॥ ४३ ॥ इत्युदारवचनैर्भगवंतंसंस्तुवंतम थचप्रणमंतं ॥ वाष्पपूर्णनयनंमुनिवर्यंशंकरंसबहुमानमुवाच ॥ ४४ ॥ अस्मदादिपदवीमभजस्त्वंशोधि तातवतपोधननिष्ठा ॥ बादरायणइवत्वमपिस्याःसद्वरेण्यमदनुग्रहपात्रं ॥ ४५ ॥ संविभज्यसकलश्रुतिजा लंब्रह्मसूत्रमकरोदनुशिष्टः ॥ यत्रकाणभुजसांख्यपुरोगाण्युद्धृतानिकुमतानिसमूलं ॥ ४६ ॥

॥ ४४ ॥ यदुवाचतदाहास्मदादीति अभजःप्राप्तवानसि हेसतांमध्येश्रेष्ठ व्यासइवत्वमपिमदनुग्रहपात्रंस्याइत्याशीर्वादः ॥ ४५ ॥ सूत्रभाष्यरचनेनियोक्तुमुपक्रमते अनुशिष्टःसम्यक्शिक्षितः अनुपश्चात्शिष्टायस्मादितिवा ससर्वशिष्टाग्रणीर्वेदव्यासोवेदकदंबंसम्यग्विभ ज्यब्रह्माखंडैकरसंसूच्यतेयेनतत्तथा आथतोब्रह्मजिज्ञासा जन्माद्यस्ययतः शास्त्रयोनित्वात् तत्तुसमन्वयादित्येवमादिरूपमकरोच्छिष्टोऽनुप श्चादकरोदितिवा यत्रब्रह्मसूत्रे काणादसांख्यपातंजलप्रभृतीनिमतानिसमूलमुन्मूलितानितत्रेतिपरेणान्वयः ॥ ४६ ॥

तत्रब्रह्मसूत्रेमूढमतयः कलिदोषाद्द्वाभ्यांत्रिभिर्वावेदवचनैरुद्दलितानिउपकृतानिभाष्यकाणिकुत्सितभाष्याणि अरचयन्कृतवंतः काश्चत् बहुबुद्धंज्ञातंयैस्तैर्दूष्यतांचोपगतानि ॥ ४७ ॥ तत्तस्माद्विदितोवेदांतानामर्थोयेनतथाभूतोभवान्तानिकुबुद्धीनांमतानिनिरस्यसूत्रभाष्यंवि दधातु विधौलोट् भाष्यलक्षणंतु सूत्रार्थोवर्ण्यतेयत्रवाक्यैःसूत्रानुकारिभिः स्वपदानिचवर्ण्यंतेभाष्यंभाष्यविदोविदुरिति सागरादिवर्ण नस्यभाष्यत्वव्यावृत्तयेसूत्रमित्युक्तंवार्तिकस्यतत्त्वनिरासायसूत्रानुकारिभिरितिस्तेस्तत्त्वव्यावृत्यर्थमुक्तं स्वपदानीति इतरभाष्येभ्यउत्कृष्ट

तत्रमूढमतयःकलिदोषाद्द्वित्रिवेदवचनोद्दलितानि॥भाष्यकाण्यरचयन्बहुबुद्धैर्दूष्यतामुपगतानिच कैश्चित्॥ ४७ ॥ तद्भवान्विदितवेदशिखार्थस्तानिदुर्मतिमतानिनिरस्य॥ सूत्रभाष्यमधुनाविद धातुश्रुत्युपोद्दलितयुक्त्यभियुक्तं॥४८॥ एतदेवविबुधैरपिसेंद्रैरर्चनीयमनवद्यमुदारं॥ तावकंकमल योनिसभायामप्यवाप्स्यतिवरांवरिवस्यां॥ ४९ ॥ भास्कराभिनवगुप्तपुरोगान्नीलकंठगुरुमंडनमु ख्यान्॥ पंडितानथविजित्यजगत्यांख्यापयाद्वयमतेपरतत्त्वं॥ ५० ॥

ताबोधनायविशिनष्टि समयश्रुतिभिरुद्दलिताभिर्युक्तिभिरासमंतायुक्तं ॥ ४८ ॥ ननुमयाक्रियमाणंभाष्यमपिकेषांचिदनादरास्पदंस्या च्चेत्तर्हिकिमर्थंकर्त्तव्यमितिचेत्तत्राह एतदेवतावकंभाष्यमिंद्रसहितैर्देवैरप्यर्चनीयंभविष्यति अपिशब्दान्मनुष्यैरर्चनीयंभविष्यतीतिकिमुवक्त व्यं यतोनिर्दोषमुदारंचनकेवलंसेंद्रैर्देवैरेवार्चनीयंभविष्यत्यपितुचतुर्मुखसभायामपिश्रेष्ठांपूजांप्राप्स्यतीत्यर्थः ॥ ४९ ॥ किंचभास्करोभेदाभे दवादी अभिनवगुप्तःशाक्तोनीलकंठोभेदवादीशैवःगुरुःप्रभाकरोमंडनमिश्रोभाट्टमतानुयायी एतदादीन्पंडितानथभाष्यकरणानंतरंविजि त्यपृथिव्यामद्वयमतेपरतत्त्वंख्यापयाद्वयबुद्धेइतिसंबोधनंवा ॥ ५० ॥

 किंचमोहलक्षणसंतमसभानून्शिष्यान्तस्मिन्नस्मिन्देशेपरतत्वसरण्याःपालनायसंस्थाप्यतदनंतरंकृतमवतारकृत्यंयेनसमामुपैष्यसि ॥ ५१ ॥ 
एवमेनंश्रीशंकरमनुगृह्यकृपावान्शिवोवेदैःसहांतर्धानमगात्   शंकरोपिविस्मययुक्तेनमनसाशिष्यैःसहस्वर्णदींगगांप्रत्यगच्छत् ॥ ५२ ॥ आ
 न्हिकविधिंसन्निवर्त्यगुरुमीशंमहादेवंध्यायतोगुणसमुद्रस्यश्रीशंकरस्यमानसंसर्वलोकहितायसम्यगुद्यतमुद्युक्तमभूत् ॥ ५३ ॥ सविश्वनाथात्क 

मोहसंतमसवासरनाथांस्तत्रतत्रविनिवेश्यविनेयान् ॥ पालनायपरतत्त्वसरण्यामामुपैष्यसिततःकृत
कृत्यः ॥ ५१ ॥ एवमेनमनुगृह्यकृपावानागमैःसहशिवोंतरधत्त ॥ विस्मितेनमनसासहशिष्यैःशंकरो
ऽपिसुरसिंधुमयासीत् ॥ ५२ ॥ सन्निवर्त्त्यविधिमाह्निकमीशंध्यायतोगुरुमथाखिलभाष्यं ॥ कर्तुमुद्यतम
भूद्गुणसिंधोर्मानसंनिखिललोकहिताय ॥ ५३ ॥ कर्तृत्वशक्तिमधिगम्यसविश्वनाथात्काशीपुरान्निरगम
त्स्वविकासभाजः ॥ प्रीतःसरोजमुकुलादिवचंचरीकनिर्बंधतःसुखमवापयथाद्विजेंद्रः ॥ ५४ ॥ अद्वैतद
र्शनविदांभुविसार्वभौमोयात्येषइत्युडुपबिंबसितातपत्रं ॥ अस्ताचलेवहतिचारुपुरःप्रकाशव्याजेन
चामरमधादिवदिक्सुकांता ॥ ५५ ॥

र्तृत्वशक्तिंप्राप्यप्रीतःसन्अविकासभाजःकाशीपुरान्निरगमत्   चंचरीकनिर्बंधतोगंधलुब्धभ्रमरनिर्बंधनरूपात्सरोजमुकुलादिवेतिपुरोपमा
यथापक्षिणामिंद्रोहंसोनिर्गत्यसुखमाप्नोति तथाऽयंब्राह्मणेंद्रःसुखंप्राप प्रत्यवयवमुपमावाचकोपादानादनेकैवेयमुपमा ॥ व० ॥ ५४ ॥ 
भुविअद्वैतशास्त्रविदांसार्वभौमोयश्चक्रवर्त्ती एषश्रीशंकरोगच्छतीत्यतश्चंद्रबिंबात्मकंश्वेतच्छत्रमस्ताचलेवहतिसति पुरःप्रकाशव्याजेनदिक्सु
कांतादिग्लक्षणाशोभनाकांताचामरंव्यधादिव पाठांतरेसुखेनदिग्व्यधादितिव्याख्येयं ॥ ५५ ॥

देवनराणांशांतामुत्तरांदिशंविहायान्यादिगस्मैसाक्षान्नसमरोचत उदीचउत्तरजत्येषावैदेवमनुष्यणाऽशांतादिगितिश्रुतेः तस्मात्तत्रत्यतीर्थानिनिषेवमाणःक्रमाद्बदरींगंतुंसमनोऽधात् इंद्रवज्रा० ॥ ५६ ॥ क्वचिदुष्णशालिकचित्शीतंक्वचिदृजुकचित्कुटिलं. अरालंकुटिलेसर्जरसेसमददंतिनीतिमेदिनी क्वचित्ऊर्ध्वमुखकंटकयुक्तं क्वचिच्चकंटकविनिर्मुक्तं मूर्खजनचित्तवत्व्यवस्थावर्जितंवर्त्मपंथास्तेनमहताऽन्वव

शांतांदिशंदेवनृणांविहायनान्यादिगस्मैसमरोचताद्धा॥ तत्रत्यतीर्थानिनिषेवमाणोगंतुंमनोधाद्बदरींक्रमात्सः॥५६॥ तेनान्ववर्तिमहताक्वचिदुष्णशालिशीतंक्वचित्क्वचिदृजुक्वचिदप्यरालं॥उत्कंटकंक्वचिदकंटकवत्क्वचिच्चतद्वर्त्ममूर्खजनचित्तमिवाव्यवस्थं ॥ ५७ ॥ आत्मानमक्रियमपव्ययमीक्षितापिपांथैःसमंविचलितःपथिलोकरीत्या॥ आदत्फलानिमधुराण्यपिबत्पयांसिप्रायादुपाविशदशेततथोदतिष्ठत् ॥ ५८ ॥ तेनव्यनीयततदापदवीदवीयस्यासादिताचबदरीवनपुण्यभूमिः ॥ गौरीगुरुस्रवदमंदझरीपरीताखेलत्सुरीयुतदरीपरिभातियस्यां॥ ५९ ॥

र्त्तिअनुसृतं व० ॥ ५७ ॥ अक्रियमव्ययमात्मानमीक्षितापिपांथैःसहविचलितःसन् मार्गेलोकरीत्यामधुराणिफलानिआदत्भक्षणार्थस्यादधातोर्लङिअदःसर्वेषामित्यपृक्तसार्वधातुकस्याडागमेरूपं मधुराणिजलानिअपिबत् प्रायात्गमनंकृतवान् उपाविशदुपविष्टवान्अशेतशयनंकृतवान् तथोदतिष्ठत्उत्थानंकृतवानित्यर्थः ॥ ५८ ॥ दवीयसीपदवीतेनव्यनीयतसुदूरंवर्त्मातिक्रांतवान् वनपुण्यभूमिर्बदरीआसादिताच गौरीगुरोर्हिमालयात्स्रवंतीभिरमदझरीभिर्व्याप्तायस्यांबदर्यांखेलंतीभिःसुरांगनाभिर्युक्तादरीपरिभाति ॥ ५९ ॥

सश्रीशंकरोद्वादशेवयसितत्रवदर्यांसमाधिनिष्ठैःषड्भिःक्षुत्पिपासेजरामृत्यूशोकमोहौषड्र्मयइत्युक्तषडूर्मिभिस्तथात्वक्चर्ममांसास्थिमेदोमज्जा
रेतोभिःसप्तधातुभिःपंचज्ञानेंद्रियाणिचत्वार्यंतःकरणानीतिनवभिश्चज्ञानेंद्रियपंचकंकर्मेंद्रियपंचकंप्राणपंचकंमंतःकरणचतुष्टयंसगुणभूतपं
चकंप्रकृत्यष्टकंवाविद्याकामःकर्मोपासनाचेतिनवभिरितिवाद्वारैर्वानवभिर्येखिन्नास्तैर्ब्रह्मर्षिभिर्वेदांतंबहुधाविचार्यभव्यंशुभंगंभीरंचतन्मधुरं
चसूत्रभाष्यंफणितिस्म षड्भिश्चसप्तभिरथोनवभिश्चखिन्नैर्भव्यंयोग्यमितिवा भव्यंशुभेचसत्येचयोग्येभाविनिचत्रिष्वितिमेदिनी ॥ ६० ॥

सद्वादशेवयसितत्रसमाधिनिष्ठैर्ब्रह्मर्षिभिःश्रुतिशिरोबहुधाविचार्य ॥ षड्भिश्चसप्तभिरथोनवभिश्चखिन्नैर्भ
व्यंगभीरमधुरंफणितिस्मभाष्यं ॥ ६० ॥ करतलकलिताद्वयात्मतत्त्वंक्षपितदुरंतचिरंतनप्रमोहं ॥ उपचित
मुदितोदितैर्गुणौघैरुपनिषदामयमुज्जहारभाष्यं ॥ ६१ ॥ ततोमहाभारतसारभूताःसव्याकरोद्भागवतीश्च
गीताः ॥ सनत्सुजातीयमसत्सुदूरंततोनृसिंहस्यचतापनीयं ॥ ६२ ॥

उपनिषदामपिभाष्यंकृतवानित्याह करतलेकलितंप्रकाशितमात्मतत्त्वंयेनक्षपितोदुरंतश्चिरंतनोऽनादिभूतोमोहोयेन उदयंप्राप्तैरुक्तगुणौघैरुप
चितंयुक्तं ॥ देहाभिमानादिदुःखानिनिश्चयेनउपनिषदयतिविसारयतिशिथिलयतिपरंचब्रह्मप्रत्यगात्मत्वेननितरांगमयतिसर्वानर्थमूलभूताम
विद्यामत्यंतमवसादयत्युन्मूलयतीत्युपनिषद्ब्रह्मविद्या तत्प्रतिपादकानांईशकेनकठप्रश्नमुंडकमांडूक्यतैत्तिरेयैतरेयछांदोग्यबृहदारण्याख्यानांवे
दांतानांभाष्यमुज्जहारकृतवान् पुष्पिताग्रा ॥ ६१ ॥ ततस्तदनंतरंमहाभारतस्यनिखिलवेदार्थप्रकाशकस्यसारभूताःभगवद्गीताःसव्याख्या
तवान् ततोभारतस्यसनत्सुजातीयमसतांसुदूरमलभ्यंततश्चोत्तरनृसिंहतापनीयंव्याकरोत् उ० ॥ ६२ ॥

तदनुततःपश्चादुपदेशसहस्रिकादीनसंख्यातान्ग्रंथान्सुधीभिःस्तुत्यःपरमार्थज्ञःश्रीशंकरोव्यदधात् यान्ग्रंथान्श्रुत्वाविरक्तायतयोऽविवेकपाशान्मुक्ताभवंति ॥ ६३ ॥ श्रीशंकराचार्यसूर्येउदयंप्राप्यप्रकाशमानेसतिदुर्वादिचंद्रप्रभयाअवियुक्ताःसहिताःकुबुद्धिभिःप्रणीताव्याख्यांधकाराःसम्यग्लयंप्रापुः ॥ ६४ ॥ अथानंतरंपरेषांवादिनांतर्कैस्तरुणैसूर्यकिरणैःसमुद्रवत्शोषयितुमशक्यंस्वीयंभाष्यंसव्रतींद्रुर्विधिवच्छि

ग्रंथानसंख्यांस्तदनूपदेशसहस्रिकादीन्व्यदधात्सुधीड्यः॥ श्रुत्वार्थविधानविवेकपाशान्मुक्ताविरक्तायतयो भवंति ॥६३॥ श्रीशंकराचार्यरवावुदेत्यप्रकाशमानेकुमतिप्रणीताः॥ व्याख्यांधकाराःप्रलयंसमीयुर्दुर्वादिचंद्रप्रभयावियुक्ताः॥ ६४ ॥ अथव्रतींद्रुर्विधिवद्विनेयानध्यापयामाससनैजभाष्यं॥ तर्कैःपरेषांतरुणैर्विवस्वन्मरीचिभिःसिंधुवदप्रशोष्यं॥ ६५ ॥ निजशिष्यहृदब्जभास्वतोगुरुवर्यस्यसनंदनादयः॥ शमपूर्वगुणैरशुश्रुवन्कतिचिच्छिष्यगणेषुमुख्यतां ॥ ६६ ॥ सनितरामितराश्रवतालसन्नियममद्भुतमाप्यसनंदनः॥ श्रुतनिजश्रुतिकोप्यभवत्पुनःपिपठिषुर्गहनार्थविवित्सया ॥ ६७॥

ष्यानध्यापयामास ॥ ६५ ॥ निजशिष्यहृदयकमलभानोर्गुरुवर्यस्यशिष्यगणेषुमुख्यतांकेचित्सनंदनादयःशमादिगुणैरशुश्रुवन्अभ्यस्तवंतः वियोगिनी ॥ ६६ ॥ ससनंदनइतराश्रवतोइतरेभ्यआश्रवेभ्योवचनस्थितेभ्यःशिष्येभ्यः आंश्रवोंगीकृतौक्लेशेनान्यवद्वचनस्थितइतिमेदिनी नितरांलसन्सन्श्रुतानिजश्रुतिःस्ववेदोयेनसतथाविधोपिगहनार्थस्यविज्ञानेच्छयाद्भुतंनियमंप्राप्यपुनःपठनेच्छुरभवत् इतराश्रवतोद्भुतं लसंतं नियममाप्येतिवा द्रुतविलंबितवृत्तं ॥६७ ॥

आत्मपदारविंदयुगलेऽद्वंद्वारागद्वेषादिद्वंद्वविनिर्मुक्ताभक्तिर्यस्यतममुंसनंदनंनितांतमत्यंतंदयमानंदयांकुर्वाणंमनोयस्यसमुनींद्रःवेदांतरहस्यनि
धानस्यनिधेःकोशंपात्रमात्मीयपंथंसर्वंत्रिरपाठयत् त्रिवारंपाठितवान् व॰॥६८॥ईर्ष्याभरेणाकुलंहृदयंयेषामितराश्रवाणांसतांमध्येवानुपमा
ममुष्यसनंदनस्यभक्तिप्रख्यापयन्नभ्रापगाआकाशनदीगंगा अभ्रंमेघेचगगनेधातुभेदेचकांचनइतिमेदिनी तस्याःपरतटस्थममुंसनंदनं



अद्वंद्वभक्तिममुमात्मपदारविंदद्वंद्वेनितांतदयमानमनामुनींद्रः ॥ आम्नायशेखररहस्यनिधानकोश
मात्मीयकोशमखिलंत्रिरपाठयत्तं ॥ ६८ ॥ ईर्ष्याभराकुलहृदामितराश्रवाणांप्रख्यापयन्ननुपमाम
दर्शायभक्तिं ॥ अभ्रापगापरतटस्थममुंकदाचिदाकारयन्निगमशेखरदेशिकेंद्रः ॥ ६९ ॥ संतारि
काऽनवधिसंसृतिसागरस्यकिंतारयेन्नसरितंगुरुपादभक्तिः ॥ इत्यंजसाप्रविशतःसलिलंद्युसिंधुःपद्मा
न्युदंचयतितस्यपदेपदेस्म ॥ ७० ॥ पाथोरुहेषुविनिवेश्यपदंक्रमेणप्राप्तोपकंठममुमप्रतिमानभ
क्तिः ॥ आनंदविस्मयनिरंतनिरंतरोसावाश्लिष्यपद्मपदनामपदंव्यतानीत् ॥ ७१ ॥

कदाचिद्वेदांतदेशिकेंद्रआहूतवान् ॥ ६९ ॥ अनवधिसंसारसागरस्यसंतारिकागुरुचरणभक्तिःनदींकिंनसंतारयेदपितुतारयेदेवेतिविचार्यशी
घ्रमेवजलंप्रविशतस्तस्यगुरुभक्तस्यपदेपदेगंगापद्मानिउदंचयतिस्मोज्जृंभयामास ॥ ७० ॥ जलरुहेषुक्रमेणपदंविनिवेश्यप्राप्तसमीपंतममु
मनुपमभक्तिंआनंदविस्मयाभ्यांनिरंतनिरंतरोऽत्यंतंपरिपूर्णोऽसावालिंग्यपद्मपादेतिनामपदंव्यतानीद्विस्तारितवान् ॥ ७१ ॥

अनवद्यतमामात्मविद्यांपाठयंतंश्रीशंकरंतत्त्वविदांसदसियेतुकेचित्सगर्वाः कुमतेपाशुपतेऽभिमानोयेषां विवेकलक्षणस्यद्रक्षस्योपदावाग्निव दाचरंतःस्थितास्तेचिक्षिपुराक्षेपानूकृतवंतस्तथाहि कार्यकारणयोगविधिदुःखांताःपंचपदार्थाःपशुपतिनेश्वरेणमोक्षायोपदिष्टाःतत्रकार्यम हदादि कारणंप्रधानं योगःसमाधिः विधिस्त्रिषवणस्नानादिः दुःखांतोमोक्षः प्रधानमुपादानकारणं पशुपतिरीश्वरोनिमित्तकारणं सईक्षांचक्रे सप्राणमसृजतेत्यादिश्रुतिषुईक्षापूर्वककर्तृत्वश्रवणात् ईक्षापूर्वकंकर्तृत्वंनिमित्तकारणेष्वेवकुलालादिषुदृष्टं अनेककारकपूर्विकायाश्चक्रिया

तंपाठयंतमनवद्यतमात्मविद्यांयेतुस्थिताःसदसितत्त्वविदांसगर्वाः॥आचि
क्षिपुःकुमतपाशुपताभिमानाःकेचिद्विवेकविटपोग्रदवायमानाः ॥ ७२ ॥

याःफलसिद्धिर्लोकेदृष्टा सचन्यायआदिकर्त्तर्यपिसंक्रामयितुंयुक्तः किंचयथेश्वराणांराजवैवस्वतादीनांनिमित्तकारणत्वमेवकेवलंप्रतीयते तद्वत्परमेश्वरस्यापिनिमित्तकारणत्वमेव किंचसावयवमचेतनमशुद्धमिदंजगल्लक्षणंनानेवंलक्षणब्रह्मोपादानकंसंभवतिरुचकादीनांमृद्विकार त्वदर्शनात् अपिचयदिदुःखमोहाद्यात्मकंकार्यंब्रह्मोपादानकंस्यात्तर्हिप्रलयेस्वोपादानेनब्रह्मणाविभागमापद्यमानंकारणमात्मीयेनदोषेण दूषयेदतोऽसमंजसमिदंजगतोब्रह्मोपादानकत्वकल्पनं तस्मात्कारणश्रुतयःपशुपतेरीश्वरस्यनिमित्तकारणत्वबोधिकाइत्यवश्यमास्थेयमिति व० ॥ ७२ ॥

नैतत्सारंब्रह्मणोभिन्ननिमित्तोपादानत्वस्वीकारेप्रतिज्ञादृष्टांतयोरनुपरोधात् प्रतिज्ञातावदुततमादेशमप्राक्षोयेनाश्रुतंश्रुतंभवतिअमतंमतमविज्ञातंविज्ञातमिति यदिब्रह्मोपादानंनस्यात्तर्हीयंप्रतिज्ञोपरुध्येत कार्यव्यतिरिक्तनिमित्तकारणविज्ञानेनतत्कार्यज्ञानादर्शनात् दृष्टांतोपियथासौम्यैकेनमृत्पिंडेनसर्वंमृन्मयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यमित्युपादानगोचरएवाम्नायते निमित्तत्वंत्वधिष्ठात्रंतराभावादधिगंतव्यं प्रागुत्पत्तेरेकमेवाद्वितीयमित्यवधारणादन्यथाप्रतिज्ञादृष्टांतोपरोधस्यस्पष्टत्वात् किंच सोऽकामयत बहुस्यांप्रजायेयेति तदैक्षत बहुस्यां प्रजायेयेतिच श्रुत्यापरमात्मनएवकर्तृत्वंप्रकृतित्वंचनिश्चीयते अत्यंतसादृश्यंतूपादानोपादेययोर्नापेक्षितंगोमयवृश्चिकयोर्देहकेशयोश्चनददर्शनात् नापिकार्यस्यब्रह्मरूपकता घटादिविकाराणांकारणेनाविभागमापन्नानांरूपकत्वादर्शनात् किंचकार्य

**तद्विकल्पनमनल्पमनीषःश्रुत्युदाहरणतःसनिरस्य ॥ ईषदस्तमितगर्वभराणामागमानपिममंथपरेषां॥७३॥**

स्यकारणानन्यत्वंनप्रलयेएवापितुत्रिष्वपिकालेष्वात्मैवेदंसर्वंब्रह्मैवसर्वमित्यादिश्रुतेः कार्यस्यकारणानन्यत्वेऽपियथामरीच्युदकेनोखरदेशःकदापिनसंस्पृश्यते तथापरमात्मापीत्येवंश्रुतीनामुदाहरणतस्तेषांविकल्पनमनल्पबुद्धिःसश्रीशंकरःनिरस्य किंचिच्छांतगर्वातिशयानांपरेषांपाशुपतानामागमानपिमथितवान् तथाहि पशुपतेरीश्वरस्यप्रधानपुरुषयोरधिष्ठातृत्वेनजगत्कारणत्वंनोपपद्यते हीनमध्यमोत्तमभावेनप्राणिभेदान्विदधतःपशुपतेःरागद्वेषादिप्रसंगात् प्रधानपुरुषाभ्यांसंबधानुपपत्तेश्च नतावत्संयोगलक्षणःसंबंधःसंभवति त्रयाणामपिसर्वगतत्वान्निरयवत्वाच्च नापिसमवायः आश्रयाश्रितभावानिरूपणात् नाप्यन्यःकार्यगम्यःकश्चित्संबंधःशक्यतेकल्पयितुं कार्यकारणभावस्यैवाद्याप्यसिद्धत्वात् स्वा० ॥ ७३ ॥

एवमादिरूपंतदागममथनप्रकारंस्ममंथेत्यनेनसूचयित्वातदभिमतमुक्तेर्मथनप्रकारंदर्शयति अद्वितीयेनिरतापर्यवसन्नाभवत्संमताईशसमानतालक्षणायामुक्तिःसैवभेदेसतिभेदेसत्येसतिकथंस्यात्सत्यस्यतस्यनिवृत्त्ययोगान्नकेनापिप्रकारेणेत्यर्थः ननुपशुपतिध्यानाद्भविष्यतीतिचेत्तत्राह ध्यानाज्जातासामुक्तिःकुतोहेतोर्नविनश्येत् तस्याःविनाशाभावेहेतुर्नास्तीत्यर्थः हियस्माद्भावत्वेसतियत्कार्यंतत्सर्वमपिनित्यंनभवति प्रध्वंसेव्यभिचारवारणायभावेति ॥ ७४ ॥ किंचमोक्षावस्थायांपशुषुजीवेषुपशुपतेरीशस्यगुणानांसंक्रमणंयदिष्यते तन्नसाधु

अद्वितीयनिरतासतिभेदेमुक्तिरीशसमतैवकथंस्यात् ॥ ध्यानजाकिमितिसानविनश्येद्भावकार्यमखिलंहिननित्यं॥ ७४॥ किंचसंक्रमणमीशगुणानामिष्यतेपशुपुमोक्षदशायां ॥ तन्नसाध्ववयवैर्विधुराणांसंक्रमोनघटतेहिगुणानां॥ ७५॥ पद्मगंधइवगंधवहेऽस्मिन्नात्मनीश्वरगुणोऽस्त्विवतिचेन्न॥ तत्रगंधसमवायिनभस्वत्संयुतंदिशतिगंधधियंयत् ॥ ७६ ॥ किंचैकदेशेनसमाश्रयंतेकात्स्न्येनवाशंभुगुणाविमुक्तान् ॥ पूर्वेतुपूर्वोदितदोषसंगस्त्वंतेऽज्ञतादिःपरमेश्वरेस्यात् ॥ ७७॥

हियस्मादवयवैर्वर्जितानांगुणानांसंक्रमोनघटते ॥ ७५ ॥ ननुगंधवहेवायौयथानिरवयवस्यपद्मगंधस्यसंक्रमस्तथास्मिन्जीवे पशुपतिगुणानांसंक्रमोस्त्विवतिशंकते पद्मगंधइति गंधसमवायिकमलंसूक्ष्मावयवात्मना वायुसंयुक्तंसत्तत्रवायौगंधधियंयस्माद्दिशतितस्मान्नैवमित्याहनेति ॥ ७६ ॥ किंचपशुपतिगुणाएकदेशेनविमुक्तान्समाश्रयंति किंवाकात्स्न्येन आद्यपक्षेतुपूर्वोक्तदोषस्यनिरवयवगुणानामेकदेशेनसंक्रमायोगस्यप्रसक्तिः द्वितीयेपरमेश्वरेऽज्ञानादिःस्यात् इं० ॥ ७७ ॥

इत्थंवज्रवत्कठिनैस्तर्कैर्भिंद्यन्भेदंगच्छन्स्वाभिमतोऽर्थोयेषांतेपंडितंमन्यमानास्तांत्रिकाःपाशुपताः स्मयस्यातिशयेनयोमदस्तंतत्यजुः खग कुलस्तपेर्गरुत्मतोरयस्यवेगस्यातिशयोयेषुतैःपक्षाघातैः फणासुताड्यमानाःसाभिमानाःसर्पायथाक्ष्वेडज्वालांविषज्वालांत्यजंतितद्वत् क्ष्वेड स्तुगरलंविषमित्यमरःमंदा० ॥७८॥ व्याख्यायांजृंभितमुल्लसितंयत्पाटवंकुशलतातस्मात्फणिपतेःशेषस्य मंदाक्षंलज्जामुद्दीपयन् संख्यामति क्रांतानामसंख्यातानांशिष्याणांहृज्जलरुहेषुभानुतामुद्वहन् उद्वेलस्ययशःसुमैरुल्लंघितसमाब्धितटस्ययशोलक्षणपुष्पैर्जगत्भूषयन्वादिमृ

इत्थंतर्कैःकुलिशकठिनैःपंडितंमन्यमानाभिद्यत्स्वार्थाःस्मयभरमदंतत्यजुस्तांत्रिकास्ते॥पक्षाघातैरिवर यभरैस्ताड्यमानाःफणासुक्ष्वेडज्वालांखगकुलपतेःपन्नगाःसाभिमानाः ॥ ७८ ॥ व्याख्याजृंभितपा टवात्फणिपतेर्मंदाक्षमुद्दीपयन्संख्यालंघितशिष्यहृद्वनरुहेष्वादित्यतामुद्वहन् ॥ उद्वेलस्वयशःसुमैःसभग वत्पादोजगद्भूषयन्कुर्वन्वादिमृगेषुनिर्भरमभाच्छार्दूलविक्रीडितं॥ ७९ ॥ वेदांतकांतारकृतप्रचारःसुती क्ष्णसद्युक्तिनखाग्रदंष्ट्रः॥ भयंकरोवादिमतंगजानांमहर्षिकंठीरवउल्ललास॥ ८० ॥ अमानुषंतस्ययती श्वरस्यविलोक्यबालस्यसतःप्रभावं ॥ अत्यंतमाश्चर्ययुतांतरंगाःकाशीपुरस्थाजगदुस्तदेत्थं॥ ८१ ॥

गेषुनिर्भरंदृढंशार्दूलविक्रीडितंकुर्वन्सभगवत्पादोऽभात् अद्युतत् अत्रश्रीशंकरवर्णनपरेणशार्दूलविक्रीडितपदेनैतच्छंदोनामसूचनान्मुद्रालंकारः सूच्यार्थसूचनंमुद्राप्रकृतार्थपरैःपदैरित्युक्तेः शा० ॥ ७९ ॥ श्रीशंकरंसिंहरूपेणवर्णयति वेदांतलक्षणेवनेकृतःप्रचारोयेन सुतीक्ष्णा निसद्युक्तयएवनखाग्राणिदंष्ट्राश्चयस्य वादिलक्षणानांगजानांभयंकरः एवंविधोमहर्षिलक्षणःसिंहउल्ललासउच्चकाशे उ० ॥ ८० ॥ त स्ययतीश्वरस्यबालस्यसतः प्रभावंविलोक्यआश्चर्ययुक्तमंतरंगंमनोयेषांतेकाशीपुरस्थास्तस्मिन्कालेइत्थमूचुः ॥ ८१ ॥

मुहुर्मुहुः पुनर्धौतितानि सर्वशास्त्राणियेन तथाभूताद्स्माच्छ्रीशंकरात् पीडितंहृत्कमलंयेषांते भास्करप्रमुखाः पराभवंप्रपेदिरेप्राप्तवंतः ॥ ८२ ॥
किंचास्यात्मनिष्ठयातुष्टः कामरिपुर्महादेवः पुरस्तात्प्रादुर्भवन्वेदांतानांशारीरकसूत्राणांचभाष्यंप्रणेतुंप्रचोदयामास ॥ ८३ ॥ कुदृष्टीनांस्फु
रत्कुमतान्येवपंकस्तस्मिन्मग्नांपुरापराशरसूनुनाबुधेनवेदव्यासेन बुधानांमुदेचिरादुद्धृतांजरद्गवींचिरंतनांश्रुतिलक्षणांगां अहोबतेतिनिपाता

अस्मान्मुहुर्धौतितसर्वतंत्रात्पराभवंपीडितपुंडरीकाः ॥ प्रपेदिरेभास्करगुप्तमिश्रमुरारिविद्येंद्रगुरुप्रधानाः
॥ ८२ ॥ अस्यात्मनिष्ठातिशयेनतुष्टः प्रादुर्भवन्कामरिपुः पुरस्तात् ॥ प्रचोदयामासकिलप्रणेतुंवेदांतशा
रीरकसूत्रभाष्यं ॥ ८३ ॥ कुदृष्टितिमिरस्फुरत्कुमतपंकमग्नांपुरापराशरभुवाचिरात्बुधमुदेबुधेनोद्धृतां ॥ अ
होबतजरद्गवीमनघभाष्यसूक्तामृतैरपंकयतिशंकरः प्रणतशंकरः सादरं ॥ ८४ ॥ त्रैलोक्यंससुखंक्रियाफलप
योभुंक्तेययाविष्कृतंयस्यावृद्धतरेमहीसुरगृहेवासः प्रवृद्धाध्वरे ॥ तांपंकप्रसृतेकुतर्ककुहरेघोरैः खरैः पातितां
निष्पंकामकरोत्सभाष्यजलधेः प्रक्षाल्यसूक्तामृतैः ॥ ८५ ॥

वत्याश्चर्यार्थकावत्यंतहर्षार्थकौवा निरवद्यभाष्यसूक्तलक्षणैरमृतैः सादरंयथास्यात्तथाऽपंकयति उक्तपंकविनिर्मुक्तांकरोतीत्यर्थः पृथ्वीवृत्तं
॥ ८४ ॥ ययाश्रुतिलक्षणयागवाप्रकटितंक्रियाफललक्षणंपयोदुग्धंससुखंत्रिलोकीस्थोजनः भुंक्ते यस्याश्चगोर्वृद्धतरेऽतिप्राचीनेप्रवृद्धाअध्व
राध्यागायस्मिन्तथाभूतेप्रयागसंज्ञके भूसुरस्यप्रजापतिसंज्ञस्यब्राह्मणस्यगृहेवासः एवंभूतांतांगां घोरैर्भीमैः खरैस्तीक्ष्णैर्दुर्जनैः पंकेनप्रसृते
व्याप्तेकुतर्कलक्षणेछिद्रेपातितांसभाष्यकारोभाष्यसमुद्रस्यसूक्तामृतैः प्रक्षाल्यनिष्पंकामकरोत् शा० ॥ ८५ ॥

कैश्चिद्वेदबाह्यैरुपनिषत् मिथ्यावक्तीतिदूरमुत्सारिताअभूत् अन्यैर्भाट्टप्रभाकरैरस्मिन्वेदेकर्मणिवाय: नियोज्यस्तंपरिचरितुमसावुपनिषदर्हतीति प्रनुन्नाप्रकर्षेणपीडिता अर्थोनभवतिकिंतुअर्थवदाभासतइत्यर्थाभासस्तस्यत्वमसितस्मात्त्वमसितस्मैत्वमसीत्येवमादिरूपस्तंदधानै:चोरितोलोपितस्तदभिन्नस्त्वमसीत्येवमादिरूपोवास्तवोर्थोयैर्मृदुभिरिवातिपरुषैरेवकोमलाभासैरपरैर्नैय्यायिकादिभिर्वंचितासुचिरमशरणासतीदानींशं

मिथ्यावक्तीतिकैश्चित्परुपमुपनिषद्दूरमुत्सारिताभूदन्यैरस्मिन्नियोज्यंपरिचरितुमसावर्हतीतिप्रनुन्ना ॥ अर्थाभासंदधानैर्मृदुभिरिवपरैर्वंचिताचोरितार्थैर्विदत्यानंदमेषासुचिरमशरणाशंकरार्यंप्रपन्ना ॥ ८६ ॥ हंतुंबौद्धोनुधावत्तदनुकथमपिस्वात्मलाभ:कणादाज्जात:कौमारिलार्यैर्निजपदगमनेदर्शितंमार्गमात्रं ॥ सांख्यैर्दु:खंविनीतंपरमथरचिताप्राणधृत्यर्हतान्यैरित्थंखिन्नंपुमांसंव्यधितकरुणयाशंकरार्य:परेशं ॥ ८७ ॥

करार्यंप्रपन्नाएषाउपनिषदानंदंविंदतिप्राप्नोति स्र० ॥ ८६ ॥ बौद्ध:शून्यवादीहंतुमन्वधावत् तत:पश्चाद्यथाकथंचित्कणादात्स्वात्मलाभोजात:कौमारिलापरसंज्ञैर्भट्टपादैरार्यैर्निजपदगमनेमार्गम.त्रंप्रदर्शितं सांख्यै:परंकेवलंदु:खंविनीतमपनीतमथान्यै:पातंजलै: प्राणधृत्याप्राणनिरोधेनार्हतातस्यपूज्यतारचिता इत्थमत्यंतंखेदंप्राप्तंपुरुषमात्मानंकरुणयाशंकरार्य:परेशमकृत ॥ ८७ ॥ ॥ १

भूतैः पृथिव्यादिभिर्यस्तं देवमात्मानं कतिचन न ददृशुः केचिच्चार्वाकान् दृष्टवंतः केचिच्च योगाचारादयो दृष्ट्वाप्यधीराः क्षणिकविज्ञानमात्मा ततः स्वीकृतत्वात् केचित्तु तार्किका मीमांसकाश्च भूतैर्वियुक्तं व्यधुः अथ कृतिनः सांख्याः सर्वैर्भूतैस्तद्गुणैश्च विनिर्मुक्तं व्यधुः किंतु एते तेषामसत्त्वं न विदधुस्ततस्तस्मादसावात्मा भीतिं भयं न त्यक्तवान् शंकरस्तु तेषां सत्तामुच्छिद्य तमात्मानमभयमकृत यतः शंकरस्य ब्रह्मविद्याधीशस्य महादेवस्यांशो ज्ञानकलावतारः ॥ ८८ ॥ प्राक् पुरा चार्वाकैर्निन्हुतोपलपितोऽथानंतरं बलिभिः काणादैर्मृषा मिथ्याभूतं कर्तृत्वादिविशिष्टं ज्ञानादिगुणकं रूप

ग्रस्तं भूतैर्न देवं कतिच न ददृशुः केच दृष्ट्वाप्यधीराः केचिद्भूतैर्वियुक्तं व्यधुरथ कृतिनः केपि सर्वैर्विमुक्तं ॥ किंत्वेतेषामसत्त्वं न विदधुरजहन्नैव भीतिं ततोसौ तेषामुच्छित्य सत्तामभयमकृत तं शंकरः शंकरांशः ॥ ८८ ॥ चार्वाकैर्निन्हुतः प्राग्बलिभिरथ मृषारूपमापाद्य गुप्तः काणादैर्हानियोज्यो व्यरचि बलवता कृष्य कौमारिलेन ॥ सांख्यैराकृष्य हत्वा मलमपि रचितो यः प्रधानैकतंत्रो दृष्ट्वा सर्वेश्वरं तं व्यतनुत पुरुषं शंकरः शंकरांशः ॥ ८९ ॥ वाचः कल्पलताः प्रसूनसुमनः संदोहसंदोहना भाष्ये भूष्यतमे समीक्षितवतां श्रेयस्करे शांकरे ॥ भाष्याभासगिरां दुरन्वयगिराश्लिष्टा विसृष्टा गुणैरिष्टाः स्युः कथमंबुजासनवधूदौर्भाग्यगर्भीकृताः ॥ ९० ॥

मापाद्य गुप्तो रक्षितः हेति खेदे कौमारिलेन बलवता तेभ्यो भूतेभ्य आकृष्य पृथक्कृत्य स्वर्गकामो यजेतेत्यादिविधौ दास इव नियोज्यो व्यरचि विरचितः ततोप्याकृष्य सांख्यैर्मलं हत्वापि यः प्रधानैकतंत्रो रचितस्तं पुरुषं शंकरः परेशं व्यतनुत ॥ ८९ ॥ भूष्यतमे श्रेयस्करे शांकरे भाष्ये यावाचस्ताः प्रसूनसुमनसां फलपुष्पाणां संदोहस्य समुदायस्य संदोहनं याभ्यस्तथाभूताः कल्पलतास्तत्तुल्यांस्ता गिरः समीक्षितवतां पुरुषाणामन्यदीयभाष्याभासवाचो दुरन्वयगिरा आलिंगिताः गुणैस्त्यक्ता अंबुजासनस्य चतुर्मुखस्य वध्वाः सरस्वत्या दौर्भाग्येन गर्भीकृताः कथमिष्टाः स्युरित्यर्थः शा० ॥ ९० ॥

कामंयथेष्टंकामंकिरातस्यधनुर्लतातःपर्यायेणक्रमेणकंदेववानिर्यानयानिःसृतयानाराचाख्येषूणांछटयासमूहेनविपाटितंमनोधैर्यंयेषांतैर्धि
यास्वबुद्ध्याकल्पितान्विरसान्अवंधापहान्वंधनाशासमर्थान्ग्रंथान्आचार्याननवर्यान्नियतानिर्गतेनांभिदासिद्धांतेनशुद्धांऽतःकरणोधी
रःनानुसरीसरीतिअनुसरणंनैवकरोति ॥ ११ ॥ किंचसुधास्पंदस्यामृतप्रवाहस्याहंतायाविजयिनीयाभगवत्पादरचनातत्समस्कंधान्स ६
॥ १३॥ मपर्यायांस्तुल्यप्रकारान्ग्रंथान्निवद्धान्ग्रंथकर्त्तायदिरचयतितदा ग्रामांतमुपशल्यंस्यादित्यमरान्नियतमुपशल्येग्रामांतअदृतागतिर्यस्याःसा

कामंकामकिरातकार्मुकलतापर्यायनिर्यातयानाराचच्छटयाविपाटितमनोधैर्यैर्धियाकल्पितान॥ आचा
र्याननवर्यनिर्यदभिदासिद्धांतशुद्धांतरोधीरोनानुसरीसरीतिविरसान्ग्रंथानवंधापहान् ॥ ११ ॥ सुधास्पं
दाहंताविजयिभगवत्पादरचनासमस्कंधान्ग्रंथान्रचयतिनिवद्धायदितदा॥ विशंकांभंगानांमृडमुकुटशृं
गाटसरितःकृतौतुल्याकुल्यानियतमुपशल्यादृतगतिः ॥१२॥ ययादीनाधीनाघनकनकधारासमरचिप्रती
तिंनीतासौशिवयुवतिसौंदर्यलहरी॥ भुजंगोरौद्रोपिश्रुतभयहृदाधायिसुगुरोर्गिरांधारासेयंकलयतिकवेः
कस्यनमुदं ॥१३॥

कुल्यात्पाकृत्रिमासरित्मृडस्यशिवस्यमुकुटमेवशृंगाटश्चतुष्पथस्तस्यसरितोगंगायाभंगानांतरंगाणांकृतौकरणेतुल्याइतिविशंकामपिरचय ॥१
ति ॥ १२ ॥ ययागिरांधारयाअमलात्मकनकधारादीनाधीनासमरचिसम्यक्रचितायायाचशिवयुवतिसौंदर्यलहरीप्रतीतिंनीताप्रकटितारौ
द्रोपिभुजंगःसर्पःश्रुतेनभयहृत्आधायिकृतवान्प्रसिद्धंचशंकरनामांकितप्राकृतमंत्रस्यसर्पविषहारित्वंसेयंसुगुरोःश्रीशंकरस्यगिरांधाराकस्य
कवेर्मुदंनकलयतिकिंतुसर्वस्यापिमुदंप्रयच्छतीत्यर्थः ॥ १३ ॥

परगुरोः श्रीशंकरस्य गिरां धारा कल्पवृक्षकुसुमानां धारा तस्या धाराया अर्थपंक्तिश्चिंतामणिलक्षणांगनायाः किरणलक्षणाया वेण्याः केशबंधस्य गुणनिकानृत्यरूपा भवेद्गुणनिकानृत्येशून्यांकेपाठनिश्चितावितिविश्वप्रकाशः अभंगोयोव्यंग्यानांव्यंजनावृत्त्यागम्यानामोघःसमुदायःसुरसुरभिदुग्धोर्मिसहभूर्देवकामधेनुदुग्धतरंगसदृशः अतोविदुषांशंकरगुरुर्भव्यैः काव्यैर्दिवंसृजति ॥ ९४ ॥ येषुवाचामोचाफलाभाःकदलीफलतुल्यायेषुचतेतासांवाचामर्थाश्रमशमनविधौसमर्थाः येषुचकिमप्यनिर्वाच्यंभंग्यंतरंविवक्षितसुरभिघृतरूपादपिचारुतररूपांतरास्पदंत

गिरांधाराकल्पद्रुमकुसुमधारापरगुरोस्तदर्थालीचिंतामणिकिरणवेण्यागुणनिका ॥ अभंगव्यंग्यौघःसुरसुरभिदुग्धोर्मिसहभूर्दिवंभव्यैःकाव्यैःसृजतिविदुषांशंकरगुरुः ॥ ९४ ॥ वाचामोचाफलाभाःश्रमशमनविधौतेसमर्थास्तदर्थाव्यंग्यंभंग्यंतरंतत्खलुकिमपिसुधामाधुरीसाधुरीतिः ॥ मन्येधन्यानिगाढंप्रशमिकुलपतेःकाव्यगव्यानिभव्यान्येकश्लोकोपियेषुप्रथितकविजनानंदसंदोहकंदः ॥ ९५ ॥ वाग्गुंफैःकुरुविंदकंदलनिभैरानंदकंदैःसतामर्थौघैररविंदवृंदकुहरस्पंदन्मरंदोज्ज्वलैः ॥ व्यंग्यैःकल्पतरुप्रफुल्लसुमनःसौरभ्यगर्भीकृतैर्दत्तेकस्यमुदंनशंकरगुरोर्भव्यार्थकाव्यावलिः ॥ ९६ ॥

त्प्रसिद्धंव्यंग्यंयेषुचसुधावन्माधुरीसाधुरीतिस्तानिकाव्यलक्षणानिभव्यानिगव्यानिगोदुग्धानिगाढमत्यंतंधन्यानिमन्ये येषुकाव्येषुएकःश्लोकोपिकविजनानामानंदसमूहस्यकंदोमूलं स्त्र० ॥ ९५ ॥ शंकरगुरोर्भव्योऽर्थोयेषांतेषांकाव्यानामावलिःपंक्तिःवाचांगुंफैरर्थौघैर्व्यंग्यैश्चकस्यमुदंनददातिवाग्गुंफान्विशिनष्टि कुरुविंदोमुस्तकः कुरुविंदोमेघनामामुस्तामुस्तकमस्त्रियामित्यमरस्तस्यकंदलनिभैर्नवांकुरतुल्यैःसतामानंदस्यकंदैर्मूलैरर्थार्थौघान्विशिनष्टि अरविंदवृंदस्यकमलसमुदायस्यछिद्रेभ्यःस्यंदन्मरंदःस्रवन्मकरंदस्तद्वदुज्ज्वलैरथव्यंग्यान्विशिनष्टि कल्पवृक्षस्यप्रफुल्लसुमनसःसुगंधिभिर्गर्भीकृतैः ॥ ९६ ॥

यतिशेखरेणोद्धृतमुपनिषत्भाष्यंतत्तादृक्तथाभूतप्रभावंनिशम्यगंगातटस्थविदुषांमध्येकेचिद्गौतमपक्षंश्रिताभेदवादिनोऽनुमानमेकंप्रधान
मीक्षणंज्ञानसाधनंयेषांतेविक्षमाःक्षमाविनिर्मुक्ताईर्ष्ययामात्सर्येणभविष्यमविचार्यखंडयितुंप्रयत्नंचक्रुःचित्रकिरणंचित्रभानुमग्निंचित्राःपतं
गाइव शा० ॥ ९७॥ तैःईर्ष्यमाणंतदीयंभाष्यंनदुष्टतामगात्प्रत्युतातिशयेनरराजेतिसदृष्टांतमाह निघर्षणादिभिर्यथासुवर्णपरमुत्कृष्टंभागंभा
ग्यंप्राप्नोतितथाविवादिभिरतिशयेनमथ्यमानंमुनेर्भाष्यमत्यंतमद्युतत उपेंद्रवज्रा ॥ ९८ ॥ सभाष्यलक्षणश्चंद्रोमुनिलक्षणात्क्षीरसमुद्रादुत्था

तत्तादृग्यतिशेखरोद्धृतनिषद्भाष्यंनिशम्येर्ष्ययाकेचिद्देवनदीतटस्थविदुषामक्षांघ्रिपक्षश्रिताः ॥ मौर्ख्यात्खं
डयितुंप्रयत्नमनुमानैकेक्षणाविक्षमाश्चक्रुर्भाव्यविचार्यचित्रकिरणंचित्राःपतंगाइव ॥ ९७ ॥ निघर्षण
च्छेदनतापनाद्यैर्यथासुवर्णंपरभागमेति ॥ विवादिभिःसाधुविमथ्यमानंतथामुनेर्भाष्यमदीपिभूयः ॥
॥ ९८ ॥ सभाष्यचंद्रोमुनिदुग्धसिंधोरुत्थायदास्यन्नमृतंबुधेभ्यः ॥ विधूयगोभिःकुमतांधकारानतर्पयद्द्वि
प्रमनश्चकोरान् ॥ ९९ ॥ अनादिवाक्सागरमंथनोत्थासेव्याबुधैर्धिक्कृतदुःसपत्नैः ॥ विश्राणयंतीविजराम
रत्वंविदिद्युतेभाष्यसुधायतींदोः ॥ १०० ॥

यपंडितलक्षणेभ्योदेवेभ्योमोक्षलक्षणममृतंदास्यन्वाग्लक्षणैःकिरणैःकुमतलक्षणानंधकारान्प्रकंप्यदूरीकृत्यविप्राणांमुमुक्षुब्राह्मणानांमनोल
क्षणानूचकोरानतर्पयत् उ० ॥ ९९ ॥ इदानींभाष्यंसुधारूपेणवर्णयति यतिलक्षणस्यचंद्रस्यभाष्यलक्षणासुधाअनादिभूतवेदवाक्लक्षणा
त्समुद्रादुत्थिताधिकृताःदुष्टशत्रवःकामक्रोधादयआंतराबाह्याश्चवादिनोयैस्तैःपंडितलक्षणैर्देवैःसेव्यापुनश्चजरामरणरहितत्वंसंपादयंतीवि
दिद्युतेऽतिशयेनबभासे ॥ १०० ॥

इदानींभाष्यंप्रभारूपेणवर्णयति सतांहृल्लक्षणानिकमलानिविकासयतीगाढानिबाह्यप्रभाभिर्विदारयितुमशक्यान्यज्ञानलक्षणानितमांसिवि-
दारयंतीप्रतिवादिलक्षणानुलूकान्मकर्षेणविलापयंतीयतिश्रेष्ठलक्षणस्यसूर्यस्यभाष्यलक्षणाप्रभाऽभात्अद्युतत० ॥ १०१ ॥ प्रसिद्धसु
धायाभाष्यसुधायांव्यतिरेकंदर्शयति .व्यासोक्तन्यायलक्षणेनमंदराचलेनविशेषेणमंथनात्श्रुतिलक्षणात्समुद्राज्जाताभाष्यनूतनसुधाश्रवण
मात्राद्विबुधेभ्यःपंडितेभ्योऽत्रजीवद्दशायांचित्रंप्रसिद्धामृतविलक्षणममृतत्वंमोक्षरूपंवितरतिप्रयच्छति सातुनैवंविधा स्वा० ॥ १०२ ॥

सतांहृदब्जानिविकासयंतीतमांसिगाढानिविदारयंती ॥ प्रत्यर्थ्युलूकान्प्रविलापयंतीभाष्यप्रभाभाद्यति
वर्यभानोः ॥ १०१ ॥ न्यायमंदरविमंथनजाताभाष्यनूतनसुधाश्रुतिसिंधोः ॥ केवलश्रवणतोविबुधेभ्य
श्चित्रमत्रवितरत्यमृतत्वं ॥ १०२ ॥ पादादासीत्पद्मनाभस्यगंगाशंभोर्वक्त्राच्छांकरीभाष्यसूक्तिः ॥ आद्या
लोकान्दृश्यतेमज्जयंतीत्यन्यामग्नानुद्धरत्येपभेदः ॥ १०३ ॥ व्यासोदर्शयतिस्मसूत्रकलितन्यायौघरत्नाव
लीरर्थालाभवशानकैरपिबुधैरेताग्रहीताश्चिरं ॥ अर्थाप्त्यासुलभाभिराभिरधुनातेमंडिताःपंडिताव्यासश्चाप
कृतार्थतांयतिपतेरौदार्यमाश्चर्यकृत् ॥ १०४ ॥

इदानींगंगातःभाष्यसूक्तेर्व्यतिरेकंदर्शयति गंगापद्मनाभस्यविष्णोःपादादासीत् भाष्यसूक्तिस्तुशंभोर्मुखादासीदित्येकोव्यतिरेकः आद्यागंगा
लोकान्मज्जयंतीदृश्यते अन्याभाष्यसूक्तिःसंसारसागरेमग्नानुद्धरतीत्येषद्वितीयोव्यतिरेकः शालि० ॥ १०३॥ सूत्रैःकलितान्यायसमूहरत्नाना
मावलीर्मालाव्यासोदर्शयतिस्म यथाशिल्पिवरेणग्रथनंकृत्वाप्रदर्शितारत्नमालास्तद्योग्यधनालाभात्केपिनगृह्णंति तथार्थालाभवशादेतामा
लाश्चिरकालंकैरपिपंडितैर्नगृहीता इदानींतुयतिपतेःसकाशादर्थप्राप्त्यासुलभाभिराभिर्मालाभिस्तेपंडिताअलंकृताव्यासश्चापिकृतार्थतांप्राप
अतोयतिपतेःश्रीशंकरस्यौदार्यमाश्चर्यकृत् शा० ॥ १०४ ॥

विदुषांसमूहस्यतपसःफलं श्रुतिलक्षणायावध्वाधम्मिल्लस्यकेशबंधस्यमालतीस्रजं सद्वैय्यासिकसूत्रलक्षणसुंदरमित्रस्यमधुरस्यागणनी यस्यातिपुण्यस्योदयभूतं वाग्देव्यायानिचिरभोग्यभाग्यानितेषांविभवातिशयभूतार्थसंघातस्यालयं भाष्यंतेनितरांपिबंति केइत्यपेक्षायामाह येषांसंसारेपुनर्जन्मनास्ति हंतेतिहर्षे मुग्धस्तुसुंदरेमूढेमधुराशतपुष्पयोः मित्रेपातेगिरिभिदोः कोशोऽस्त्रीकुड्मलेपात्रेदिव्येखड्ग ६

विद्वज्जालतपःफलंश्रुतिवधूधम्मिल्लमल्लीस्रजंसद्वैय्यासिकसूत्रमुग्धमधुरागण्यातिपुण्योदयं ॥ वाग्देवी
चिरभोग्यभाग्यविभवप्राग्भारकोशालयंभाष्यंतेनिपिबंतिहंतनपुनर्येषांभवेसंभवः ॥ १०५ ॥ मंथानाद्रि
धुरंधराश्रुतिसुधासिंधोर्यतिक्ष्मापतेर्ग्रंथानांफणितिःपरावरविदामानंदसंधायिनी ॥ इंधानैःकुमतांधकार
पटलैरंधीभवच्चक्षुषांपंथानंस्फुटयंत्यकांडकमभात्तर्कार्कविद्योतितैः ॥ १०६ ॥

पिधानके जातीकोशेर्थसंघातइतिमेदिनी ॥ १०५ ॥ श्रुतिलक्षणस्यसुधासिंधोःक्षीरसमुद्रस्यमंथानाद्रेर्धुरंधरतीतितथाभूतायतिराजस्यग्रंथानांसूक्तिः परेब्रह्मादयोऽवरेपरमात्मानंविदंतीतितथा कार्यकारणविदोवा स्थूलसूक्ष्मविदोवा तत्त्वंपदार्थविदोवा तेषामानंदमाधायिनी इंधानैर्दीप्तिंकुर्वद्भिस्तर्कलक्षणार्कप्रकाशैःकुमतांधकारसमूहैरंधीभवच्चक्षुषांमार्गंस्फुटयंती अकांडकमभात्नतुरहसि अकांडकमकुत्सितंयथास्यात्तथाभादितिवा कुत्सितेरहसिस्तंबेकांडमितिविश्वप्रकाशः ॥ १०६ ॥ ॥ १

सीतानाथस्यनेतारामेश्वरस्तस्यसमुद्रात्स्थलकृतंसेतुबंधनेनयत्सलिलंतेनद्वैतमुद्रायत्रतत्पर्यंतं पुनश्चरुद्रेणत्रिपुरसंहारसमयेयदाकर्षणंतस्मा- द्रागृझटितिअवनतानिनम्रीभूतानिश्रृंगाणियस्यभोगैःसांद्रान्घनीभूतान्नगेंद्रात्सुमेरोस्तत्पर्यंतं तथोदयाचलगिरिमुकुटतटपर्यंतं तथा

आसीतानाथनेतुःस्थलकृतसलिलद्वैतमुद्रात्समुद्रादारुद्राकर्षणाद्रागवनतशिखराद्भोगसांद्रान्नगें द्रात् ॥ आचप्राचीनभूमीधरमुकुटतटादातटात्पश्चिमाद्रेरद्वैताद्यापवर्गाजयतियतिवरेणोद्धृताब्र ह्मविद्या ॥ १०७ ॥ इतिश्रीमाधवीयेतद्ब्रह्मविद्याप्रतिष्ठितिःसंक्षेपशंकरजयेषष्ठःसर्गउपा रमत् ॥ ६ ॥ संख्या ॥ १८० ॥ ॥ ७ ॥ ॥ ७ ॥

स्ताचलाद्रेस्तटपर्यंतमद्वैतोद्वैतशून्यआद्योकार्यभूतोऽपवर्गोयस्याःसायतिभूमिर्येनयतिराजेनोद्धृताब्रह्मविद्याविजयतिसर्वोत्कर्षेणवर्तते श्लो० ॥ १०७ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेश्रीशं कराचार्यविजयडिंडिमेषष्ठःसर्गः ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

श्री० एवंसपरिकरांब्रह्मविद्याप्रतिष्ठितिमुपवर्ण्यव्यासदर्शनादिकंवर्णयितुमनुक्रमते ॥ सइति ॥ सश्रीशंकरःकदाचित्खनदीगंगातत्समीपेशारीरकसूत्रभाष्यंपाठयन् शिष्यपंक्तिशंकाःशमयन्उवास यावत्कालंसूर्यआकाशस्यमध्यमितःप्राप्तः उपजाति० ॥१॥ शनैरधीत्यश्रांतेषुशिष्येषुसत्सुयावदेषआचार्यःशनैरुत्तिष्ठतितावद्वृद्धरूपःकश्चनब्राह्मणस्त्वंकःकिंपाठयसीतिपृष्टवान् इंद्रवज्रा० ॥२॥ तंवृद्धरूपंब्राह्मणंशिष्याःप्रश्नद्वयस्योत्तरमूचुः तत्रप्रथमप्रश्नोत्तरंभगवानिति द्वितीयस्योत्तरमाहुः अनेनदूरीकृतोभेदवादोयत्रतत्शारीरकसूत्रभाष्यमकारिकृतं तदेवपाठय

अथसप्तमःसर्गः ॥ सजातुशारीरकसूत्रभाष्यमध्यापयन्नभ्रसरित्समीपे ॥ शिष्यालिशंकाःशमयन्नुवास
यावन्नभोमध्यमितोविवस्वान् ॥ १ ॥ श्रांतेष्वथाधीत्यशनैर्विनेयेष्वाचार्यउत्तिष्ठतियावदेषः ॥ तावद्द्विजः
कश्चनवृद्धरूपःकस्त्वंकिमध्यापयसीत्यपृच्छत् ॥ २॥ शिष्यास्तमूचुर्भगवानसौनोगुरुःसमस्तोपनिषत्स्वतंत्रः ॥
अनेनदूरीकृतभेदवादमकारिशारीरकसूत्रभाष्यं ॥३॥ सचाब्रवीद्भाष्यकृतंभवंतमेतेवदंत्यद्भुतमेतदास्तां ॥
अथैकमुच्चारयपारमर्षंयत्तेर्थतस्त्वंयदिवेत्थसूत्रं ॥ ४ ॥ तमब्रवीद्भाष्यकृदग्र्यवाचंसूत्रार्थविद्भ्योस्तुनमोगुरु
भ्यः ॥ सूत्रज्ञताहंकृतिरस्तिनोमेतथापियत्पृच्छसितद्ब्रवीमि ॥ ५ ॥

तीत्यर्थः उ० ॥ ३ ॥ एवंशिष्योक्तंनिशम्यसचब्राह्मणोभाष्यकारमभाषत एतेत्वांभाष्यकारंवदंति एतदद्भुतमास्तांतिष्ठतु हेयतेयदित्वंपरमर्षिणावेदव्यासेनप्रोक्तंसूत्रमर्थतोजानासितर्ह्येकमपितत्सूत्रंउच्चारयतदर्थव्याख्यानायैकस्यसूत्रस्योच्चारणंकुर्वित्यर्थः ॥ ४ ॥ एवमुक्तोभाष्यकारस्तंब्राह्मणंश्रेष्ठांवाचमुवाच सूत्रार्थविद्भ्योगुरुभ्योनमोऽस्तु सूत्रज्ञताऽभिमानोयद्यपिममनास्तितथापियत्पृच्छसितद्ब्रवीमि ॥ ५ ॥

अथभाष्यकारोक्तेरनंतरंसब्राह्मणोयतीशंपप्रच्छ यत्पृष्टवानृतदाह तृतीयमध्यायमधिकृत्यतृतीयाध्यायआरंभगतंतदंतरप्रतिपत्तौरंहतिसंप
रिष्वक्तःप्रश्ननिरूपणाभ्यामितिसूत्रमस्तिएतस्यार्थंयदित्वंजानासितर्हिब्रूहि॥६॥एवंपृष्टःसभाष्यकारउक्तसूत्रस्यार्थंप्रोक्तवान् जीवःकरणाना
मिंद्रियाणामवसादेमरणसमयेदेहांतरप्रतिपत्तौदेहबीजैर्भूतसूक्ष्मैःसंपरिष्वक्तःसंवेष्टितोरंहतिगच्छतीत्यवगंतव्यं कुतःप्रश्ननिरूपणाभ्यांतांडिश्रु

पप्रच्छसोध्यायमथाधिकृत्यतृतीयमारंभगतंयतीशं ॥ तदंतरेत्यादिकमस्तिसूत्रंब्रूह्येतदर्थंयदिवे
त्थकिंचित् ॥ ६ ॥ सप्राहजीवःकरणावसादेसंवेष्टितोगच्छतिभूतसूक्ष्मैः ॥ तांडिश्रुतौगौतमजैमि
नीयप्रश्नोत्तराभ्यांप्रथितोयमर्थः ॥ ७॥

तौगौतमजैमिनीयप्रश्नप्रतिवचनाभ्यांप्रश्नस्तावत्वेत्थयथापंचम्यामाहुतावापःपुरुषवचसोभवंतीतिप्रतिवचनंचद्युपर्जन्यपृथिवीपुरुषयोषि
त्सुपंचस्वग्निषुश्रद्धासोमवृष्ट्यन्नरेतोरूपाःपंचाहुतीर्दर्शयित्वाइतितुपंचम्यामाहुतावापःपुरुषवचसोभवंतीतितस्मादाभ्यांप्रश्नप्रतिवचनाभ्याम
यमर्थःप्रथितः ॥ ७ ॥

* अप्शब्देनसर्वेषामेवदेहबीजानांभूतसूक्ष्माणामुपादानं

इत्येवंप्रकारेणतेनोक्तंसूत्रार्थंश्रुत्वासवावदूकोतिवक्ताब्राह्मणः शतधाविकल्प्यपंडितकुंजराणांमध्येविस्मयमादधानोऽखंडयत्खंडितवान् तथाहिव्यापिनांकरणानामात्मनश्चदेहांतरप्रतिपत्तौकर्मवशाद्वृत्तिलाभस्तत्रभवति यद्वाकेवलस्यैवात्मनोवृत्तिलाभस्तत्रभवतींद्रियाणितुदेहवदभिनवान्येवतत्रतत्रभोगस्थानमुत्पद्यंते यद्वामनएवकेवलंभोगस्थानमपिप्रतिष्ठते यद्वाजीवएवोत्सृज्यदेहाद्देहांतरंप्रतिपद्यतेशुकइववृक्षाद्वृक्षांतरं किंचदेहांतरप्रतिपत्तौकरणानांजीवेनसहगमनंश्रुतिविरुद्धं तथाचश्रुतिर्यत्रास्यपुरुषस्यमृतस्याग्निंवागप्येतिवातंप्राणश्चक्षुरादित्यंमनश्चंद्र

इत्युक्तमर्थंनिशमय्यतेनसवावदूकःशतधाविकल्प्य ॥
अखंडयत्पंडितकुंजराणांमध्येमहाविस्मयमादधानः॥ ८ ॥

मसंदिशःश्रोत्रमित्याद्याअपिचप्रथमेऽग्नावपांश्रवणाभावात्पंचम्यामाहुतावापःपुरुषवचसोभवंतीतिनिर्धारयितुंनशक्यते अत्रहिद्युलोकप्रमुखाःपंचाग्नयःश्रद्धादीनांपंचानामाहुतीनामाधारत्वेनाधीताःतत्रप्रथमेऽग्नौश्रुतांश्रद्धांपरित्यज्याश्रुतीनामपांपरिकल्पनंसाहसमात्रंश्रद्धायाःप्रत्ययविशेषत्वप्रसिद्धेः किंचास्त्वपांश्रद्धादिक्रमेणपंचम्यामाहुतौपुरुषाकारप्रतिपत्तिस्तथापितत्परिष्वक्तस्यजीवस्यगमनंतुनवाच्यंतद्गमनस्याश्रुतत्वादित्येवमादिनाशतधाविकल्प्यखंडितवानित्यर्थः ॥ ८ ॥

तदीयभाषितंसर्वमनूद्यशास्त्रकारःश्रीशंकरःसहस्रधाचखंड नतावत्सांख्यबौद्धवैशेषिकदिगंबराणांकल्पनाआदर्तव्याउदाहृतश्रुतिविरोधात्न चापूशब्दश्रवणसामर्थ्यात्प्रश्नप्रतिवचनाभ्यांकेवलाभिरद्भिःसंपरिष्वक्तोरंहतीतिवाच्यं तासांभूयस्त्वापेक्षयापूशब्दप्रयोगाविरोधात्नहिकेवला नामपांदेहारंभकत्वंसंभवति त्रिवृत्करणश्रुतेः त्रयाणामपितेजोबन्नानांदेहकार्योपलब्ध्यातस्यत्रयात्मकत्वाच्च ननुपार्थिवोधातुर्भूयिष्ठोदेहेषू पलक्ष्यतेइतिचेन्नैषदोषः इतरापेक्षयाःपांबाहुल्यसंभवात् तस्मादप्शब्देनसर्वेषामेवदेहबीजानांभूतंसूक्ष्माणामुपादानंयुक्तं किंचप्राणानांदेहां





अनूद्यसर्वंफणितंतदीयंसहस्रधातीर्थकरश्चखंड ॥
तयोःसुराचार्यफणींद्रवाचोर्दिनाष्टकंवाक्कलहोजजृंभे ॥ १ ॥

तरप्रतिपत्तौगतिःश्राव्यते तमुत्क्रामंतंप्राणोऽनुत्क्रामतिप्राणमनुत्क्रामंतंसर्वेप्राणाअनूत्क्रामंतीत्यादिश्रुतिभ्यः साचप्राणानांगतिराश्रयमंतरेण नसंभवतीत्यतःप्राणगतिप्रयुक्तानांतदाश्रयाणामपामपिभूतांतरोपसृष्टानांगतिरर्थादवगम्यते नहिनिराश्रयाःप्राणाःक्वचिद्गच्छंतितिष्ठंतिवाजी वतोऽदर्शनात्वागादीनामग्न्यादिगतिश्रुतिस्तुगौणी लोमसुकेशेषुचादर्शानादोषधीर्लोमानिवनस्पतीन्केशाइतिहितत्रतत्राम्नायते नचतेषामुत्क्रु त्यतेषुगमनंसंभवति नचजीवस्यप्राणोपाधिप्रत्याख्यानेनगमनमवकल्प्यंते नापिप्राणैर्विनादेहांतरउपभोगउपपद्यते तस्माद्वागाद्यधिष्ठात्रीणा ॥ २

मग्न्यादिदेवतानांवागाद्युपकारिणीनांमरणकालेउपकारिनिवृत्तिमात्रमपेक्ष्यवागादयोऽग्न्यादीनूगच्छंतीत्युपचर्यते यत्तुप्रथमेऽग्नावित्यादितद
पिनदोषावहंयतस्तत्रापिप्रथमेऽग्नौताएवापःश्रद्धाशब्देनाभिप्रेयंते एवंहिसत्यादिमध्यावसानसंगादनाकुलमेतदेकंवाक्यमुपपद्यतेऽन्यथापुनः
पंचम्यामाहुतावपांपुरुषवचस्त्वप्रकारेपृष्टेप्रवचनावसरेप्रथमाहुतिस्थानेयद्यनयोर्होम्यद्रव्यंश्रद्धांनामावतारयेत्ततोऽन्यथाप्रश्नोऽन्यथाप्रतिव
चनमित्येकवाक्यतानस्यात् नचश्रद्धाख्योप्रत्ययोमानसोजीवस्यवाधर्मःसन्धर्मिणंनिष्कृष्यहोमायोपादातुंशक्यतेपश्वादिभ्यइवहृदयादीनि
तस्मादापएवश्रद्धाशब्देनोपादेयाः श्रद्धावाआपइतिवैदिकप्रयोगदर्शनादपिश्रद्धाशब्दस्याप्सूपपत्तिः गच्छंतीनांमपांबीजरूपतयासूक्ष्मत्वगु

एवंवदंतौयतिराड्द्विजेंद्रौविलोक्यपार्श्वस्थितपद्मपादः ॥ आचार्यमाहेतिमहीसुरोयं
व्यासोहिवेदांतरहस्यवेत्ता ॥ १० ॥ त्वंशंकरःशंकरएवसाक्षाद्व्यासस्तुनारायणएवनू
नं ॥ तयोर्विवादेसततंप्रसक्तेकिंकिंकरोहंकरवाणिसद्यः ॥ ११ ॥

णयोगेनमाणवकेसिंहशब्दइवतासुश्रद्धाशब्दोवोपपन्नःश्रद्धापूर्वककर्मसमवायाच्चाप्सुश्रद्धाशब्दउपपद्यतेपुरुषेपुपंचशब्दइवआपोहास्मैश्र
द्धांसन्नमंतेपुण्यायकर्मणइतिश्रुतेःश्रद्धाहेतुत्वाच्चतासुश्रद्धाशब्दोपपत्तिर्यद्यप्यत्रजीवानांश्रवणंनास्तितथापियइष्टापूर्तादिकारिणःपितृयाने
नगंतारःश्रुतास्तएवेहापिप्रतीयंतेइत्याद्यनेकप्रकारेणखंडितवान् बृहस्पतिशेषनागतुल्यवाचोस्तयोर्वाक्कलहोदिनाष्टकंजजृंभे उपें० ॥ ९ ॥
एवंप्रकारेणवदंतौयतिराड्द्विजेंद्रौविलोक्यपार्श्वेस्थितःपद्मपादःआचार्यमितीदमाहायंब्राह्मणोवेदांतरहस्यवेत्ताव्यासः हिरवधारणे उ० ॥
॥ १० ॥ तथाचयुवयोःशिवविष्ण्वोर्विवादेप्रवृत्तेकिंकरेणमयाकिमनुष्ठेयमित्याह त्वमिति ॥ ११ ॥

इतीदंविचित्रंपद्मपादवचोनिशम्यसभाष्यकारःसूत्रकारंदिदृक्षुःप्रयतःसावधानःकृतांजलिस्तंप्रणम्यनवपद्यरूपांस्तुतिरत्नरूपांवाणींजगाद उपेंद्रवज्रा ॥१२॥ यदुवाचतदाह भवान्विद्युद्वच्चारुजटाकिरीटेनप्रवर्षुकांभोधरस्यकांतिरिवयाकांतिस्तयाकांतः शुभ्रमुपवीतंयस्यधृतंकृष्णचर्मयेनसकलिदोषहंताकृष्णद्वैपायनोव्यासएवसाक्षान्नत्वन्यःकश्चनब्राह्मणइत्यर्थः उ० ॥ १३ ॥ भवदीयसूत्रेप्रतिपाद्यस्यतादृशस्यनिर्विशेषसविशेषार्थस्यप्रतिपादकंअद्वैतभाष्यंतवसत्समीचीनंसंमतंचेत्तर्हिममापराधंक्षमित्वाशीघ्रंममाग्रेप्रत्यक्षोभव पाठांतरेभावत्कसूत्रप्रतिपाद्यतदर्थस्यकार्यकारणात्मकस्यतादृक्परापरार्थप्रतिपादकमित्यर्थः ॥ १४ ॥ एवंवदन्सन्अथानंतरमयंश्रीशंकरःकृष्णमाराद्दूरादवलोकितवान् तंविशिनष्टि चामीकरव्रततयःसुवर्णमय्योलतास्तद्वत्सुंदराणांजटानांकलापोयस्यविद्युल्लक्षणलतावलयेनवेष्टितेनमेघेनतुल्यंचिन्मुद्रयाज्ञानमुद्रयाऽभीष्टमर्थंप्रकटयंतं वसंततिलका ॥ १५ ॥ पुनस्तमेवपंचभिर्विशिनष्टि अनुरागजुषारजन्याऽत्यंतमालिंगितंशरच्चंद्रबिंबंनिदास्पदंकुर्वंतं यतोतापिच्छस्तमालस्तत्तुल्यस्वशरीरकांतिझरीभिर्व्याप्तं कांतोयश्चंद्रकांतमणिस्तेननिर्मितंकरकंकमंडलुंदधानं ॥ १६ ॥

इतीदमाकर्ण्यवचोविचित्रंसभाष्यकृत्सूत्रकृतंदिदृक्षुः ॥ कृतांजलिस्तंप्रयतःप्रणम्यवभाणवाणींनवपद्यरूपां ॥ १२ ॥ भवांस्तडिच्चारुजटाकिरीटप्रवर्षुकांभोधरकांतिकांतः ॥ शुभ्रोपवीतिर्धृतकृष्णचर्माकृष्णोहिसाक्षात्कलिदोषहंता ॥ १३ ॥ भावत्कसूत्रंप्रतिपाद्यतादृक्परापरार्थप्रतिपादकंसत् ॥ अद्वैतभाष्यंतवसंमतंचेत्सोढामममागःपुरतोभवाशु ॥ १४ ॥ एवंवदन्नयमथैक्षतकृष्णमाराच्चामीकरव्रततिचारुजटाकलापं ॥ विद्युल्लतावलयवेष्टितवारिदाभंचिन्मुद्रयाप्रकटयंतमभीष्टमर्थं ॥ १५ ॥ गाढोपगूढमनुरागजुषारजन्यागर्हापदंविदधतंशरदिंदुबिंबं ॥ तापिच्छरीतितनुकांतिझरीपरीतंकांतेंदुकांतघटितंकरकंदधानं ॥ १६ ॥

समाधिकैरच्छदरैः स्वच्छच्छिद्रैर्विंशतिसंख्याकैर्मौक्तिकैराढ्यामक्षमालां सत्यस्य मूर्तिमिव बिभ्रतं तत्तादृशस्य स्वपतिवंशस्य चंद्रवंशस्य वर्द्धनाम्ना गुणगतां तारावलीमश्विन्यादिनक्षत्रमालां भवत्पतिवंशं वर्द्धयिष्यामीत्यनुनयं कर्तुमेवेत्युत्प्रेक्षाद्वयं ॥ १७ ॥ शार्दूलचर्मोद्वहनादिना शंभोरर्धासनाध्यासनस्य सख्यस्य पात्रं ॥ इंद्र० ॥ १८ ॥ अद्वैतविद्यालक्षणस्यांकुशस्य तीक्ष्णया धारया वशीकृतोऽहंकारलक्षणो गजेंद्रो येन तं स्वशास्त्रमद्वैतशास्त्रं तल्लक्षणे शंकौ स्थाणावुज्वलसूत्रलक्षणदामभिर्नियंत्रितमकृत्रिमानां श्रुतिलक्षणगवां सहस्रं येन तं उ० ॥ १९ ॥ तत्तादृशामत्युज्वलकीर्तिशालिनां

समाधिकाच्छदरविंशतिमौक्तिकाढ्यां सत्यस्य मूर्तिमिव बिभ्रतमक्षमालां ॥ तत्तादृशस्वपतिवंशविवर्धनाम्ना
कृतारावलीमुपगतामिव चानुनेतुं ॥ १७ ॥ शार्दूलचर्मोद्वहनेन भूतेरुद्धूलनेनापि जटालताभिः ॥ रुद्राक्षमा
लावलयेन शंभोरर्द्धासनाध्यासनसख्यपात्रं ॥ १८ ॥ अद्वैतविद्यासृणितीक्ष्णधारावशीकृताहंकृतिकुंजरेंद्रं ॥
स्वशास्त्रशंकूज्ज्वलसूत्रदामनियंत्रिताकृत्रिमगोसहस्रं ॥ १९ ॥ तत्तादृगत्युज्ज्वलकीर्तिशालिशिष्यालिसंशो
भितपार्श्वभागं ॥ कटाक्षवीक्षामृतवर्षधारानिवारिताशेषजनानुतापं ॥ २० ॥ विलोक्य वाचंयमसार्वभौ
मं सशंकरो शंकितदर्शनं तं ॥ गुरुं गुरूणामपि हृष्टचेताः प्रत्युद्ययौ शिष्यगणैस्समेतः ॥ २१ ॥ अत्यादराच्छा
त्रगणैः सहासौ प्रत्युद्गतस्तच्चरणौ प्रणम्य ॥ यत्यग्रगामी विनयी प्रहृष्ट इत्यब्रवीत्सत्यवतीसुतं सः ॥ २२ ॥

शिष्याणां पंक्तिभिः संशोभितः पार्श्वभागो यस्य तं कटाक्षेणाभिवीक्षालक्षणयाऽमृतधारया निवारितोऽशेषजनानामाध्यात्मिकादिरूपोऽनुतापो येन तं सर्वो जनानुतापो येनेति वा ॥ २० ॥ वाचंयमानां नियंत्रितसर्वेंद्रियाणां मुनीनां राजानमशंकितमसंभावितं दर्शनं यस्य तं गुरूणामपि गुरुं विलोक्य प्रहृष्टचेताः स शंकरः शिष्यगणैः संयुक्तः प्रत्युद्ययौ ॥ २१ ॥ अत्यादराच्छिष्यगणैः सह प्रत्युद्गतोऽसौ शंकरस्तस्य व्यासस्य चरणौ प्रणम्य यत्यग्रगामी विनययुक्तः प्रहृष्टः स श्रीशंकरः सत्यवतीपुत्रमितीदमुवाच इंद्रवज्रा ॥ २२ ॥

यदुवाचतदाह हेद्वैपायनस्वागतंतुभ्यमस्तु भवंतद्दृष्ट्वामयासर्वेपुमर्थाचरितास्तदेतदस्मदादेःसर्वार्थसंपादकत्वंत्वयियुक्तं तत्रहेतुमाह सर्वेषुकाले
षुपरोपकारव्रतेदीक्षितत्वात् उ०॥२३॥परोपकारव्रतिनात्वयाकृतस्यलेशोप्यन्येनकर्तुमशक्यइत्याशयेनाह हेमुनेब्राह्मं पाद्मं वैष्णवंच शैवंलैं
गं सगारुडं नारदीयं भागवतमाग्नेयंस्कांदसंज्ञितं भविष्यं ब्रह्मवैवर्त्तं मार्कंडेयं सवामनं वाराहंमात्स्यंकौर्म्यंचब्रह्मांडाख्यमितितित्रिषडित्युक्तान्य



ष्टादशपुराणानिसाक्षाच्छुत्यर्थगर्भाण्यन्यैःसुदुष्कराणित्वयाकृतानि अत्रास्मिन्नृलोकेसुसंगतार्थंश्लोकद्वयमपिकर्त्तुंकःशक्नोति विय०॥२४॥

द्वैपायनस्वागतमस्तुतुभ्यंदृष्ट्वाभवंतंचरितामयार्थाः॥ युक्तंतदेतत्त्वयिसर्वकालंपरोपकारव्रतदीक्षित
त्वात्॥ २३ ॥ मुनेपुराणानिदशाष्टसाक्षाच्छ्रुत्यर्थगर्भाणिसुदुष्कराणि॥ कृतानिपद्यद्वयमत्रकर्तुंको
नामशक्नोतिसुसंगतार्थं॥ २४ ॥ वेदार्णवंव्यतियुतंव्यदधाश्चतुर्धाशाखाप्रभेदनवशादपितान्विभ
क्तान्॥ मंदाःकलौक्षितिसुराजनितारएतेवेदान्ग्रहीतुमलसाइतिचिंतयित्वा॥ २५॥ एष्यद्विजाना
सिभवंतमर्थंगतंचसर्वंननवेत्सियत्तत्॥ नोचेत्कथंभूतभवद्भविष्यत्कथाप्रबंधान्रचयेरजानन्॥२६॥

किंचव्यतियुतंव्यामिश्रितंवेदसमुद्रं ऋग्यजुःसामाथर्वणलक्षणैश्चतुर्भिःप्रकारैर्युक्तंत्वंव्यदधाःकृतवानसि कलौमंदप्रज्ञाएतेब्राह्मणावेदान्ग्र
हीतुमलसाजनितारउत्पत्स्यंतइतिचिंतयित्वाशाखाप्रभेदनवशादपितान्वेदान्विभक्तान्व्यधाःविहितवानसि वसंततिलका ॥ २५ ॥ एष्यत्
भविष्यत्विजानासि तथाभवंतंवर्तमानंगतमतीतंचसर्वंजानासि यत्त्वंनवेत्सिनजानासितन्नास्त्येव नोचेत्यदिनैवजानासितर्हिजानन्भूतभवद्भ
विष्यत्कथाप्रबंधान्कथंरचयेःकथंरचितवानसि आख्यानकीवृत्तं ॥ २६ ॥

अंतरमंगंसर्वांतरमात्मानमष्टमूर्तिशिवावयवंतच्छरीरंवाभासयन् स्थूलंकार्यं सूक्ष्मंकारणं बहिर्जगन्मिथ्यात्वाज्ञानमंतरंप्रत्यगभिन्नपरमात्मा ज्ञानमांध्यंतमोऽपानुदन्भारतलक्षणोऽपूर्वश्चंद्रोभगवत्पयोब्धेस्त्वत्तःक्षीरसमुद्रादभूत् प्रसिद्धचंद्रस्तुबाह्यंशिवशरीरंतच्छिरोलक्षणावयवंवाप्रकाशयन्स्थूलंबाह्यंतमोनाशयति यद्वाबर्हिःस्थूलंकार्यरूपमंतरंसूक्ष्मंकारणरूपं अथवास्थूलमर्थाज्ञानंसूक्ष्मंधर्माज्ञानंबहिःकामाज्ञानमंतरंमोक्षज्ञानमित्यर्थः उ० ॥ २७ ॥ २८॥ द्वैपायननिरुक्तिवृक्षरूपकेणाह ऋतमेवधामसत्यस्वप्रकाशरूपंपरब्रह्मैवक्कचिद्द्वीपेसमुदयन्वेदशाखानांसहस्रंसचिवोयस्यशुकेनसेव्यमानःकल्पवृक्षरूपीयोमुनीनांतिलकःसुदृष्टीनांस्वीयचरणभाजामुच्चैःफलानिउत्कृष्टानिमोक्षादिरूपाणिफला

आभासयन्नंतरमंगमांध्यंस्थूलंचसूक्ष्मंवहिरंतरंच॥अपानुदन्भारतशीतरश्मिरभूदपूर्वोभगवत्पयोधेः॥२७॥
वेदाःषडंगंनिखिलंचशास्त्रंमहान्महाभारतवारिराशिः ॥ त्वत्तःपुराणानिचसंबभूवुःसर्वंत्वदीयंखलुवाङ्मयास्यं ॥ २८ ॥ द्वीपेक्कचित्समुदयन्नृतमेवधामशाखासहस्रसचिवंशुकसेव्यमानः ॥ उल्लासयत्यहहयस्तिलकोमुनीनामुच्चैःफलानिसुदृशांनिजपादभाजां ॥ २९ ॥ धत्सेसदार्तिशमनायत्वदागिरीशंगोपायसेधिवदनंचचिरंतनीर्गाः॥ दूरीकरोपिनरकंचदयार्द्रदृष्ट्याकस्तेगुणान्गदितुमद्भुतकृष्णशक्तः॥ ३० ॥

न्युल्लासयति अहहेत्यत्याश्चर्येतिप्रसिद्धौवा सत्यंतद्धृतंधामैवेतिवा इंद्र०॥२९ ॥ हेऽद्भुतकृष्णतेगुणान्वक्तुंकःशक्तोनकोपिसमर्थःअद्भुतत्वमाह सर्वेषामार्तिशमनायगिरीशंमहादेवंसदैवहृदाधत्सेसतुगोपादीनामेवार्तिशांतयेगोवर्धनसंज्ञंपर्वतंसप्तदिनंहस्तेनधृतवान् पुनश्चचिरंतनीर्गाः श्रुतीरधिवदनमुखेपालयसि सतुप्रसिद्धाःनवीनागावनेपालितवान् पुनश्चदयार्द्रदृष्ट्यैवनरकंदूरीकरोपि सतुयुद्धेनरकासुरंदूरीकृतवान् अतस्त्वाद्भुतकृष्णत्वमित्यर्थः व० ॥ ३० ॥

किंबहुनासर्वश्रुतिप्रतिपाद्यःपरमात्मात्वमेवेत्याह यमिति नासदासीन्नोसदासीत् अनंतरमबाह्यंसत्यंज्ञानमनंतंब्रह्म विज्ञानमानंदंब्रह्मप्रज्ञानघन इत्यादिश्रुतयोयंतत्त्वंपदयोर्लक्ष्यार्थमामनंतिसकारणादिविलक्षणःसच्चिदानंदघनःपुराणःपुरुषःपरमात्मानारायणस्त्वमेवनरशब्देनस्थावरजंगमात्मकंशरीरजातमुच्यते तत्रनित्यसन्निहिताश्चिदाभासाजीवानराइतिनिरुच्यतेषामयनमाश्रयोधिष्ठानंनारायणःपूर्णत्वात्पुरुषोऽभिव्यक्त्या



दिविकारशून्यत्वेननिर्विकारत्वात्पुराणःयद्वायंतत्त्वंपदयोर्वाच्यार्थंलक्ष्यार्थंचामनंतीत्यर्थः तत्रपरमात्मेत्यंतंलक्ष्यार्थप्रतिपादनं नारायणःसर्वां

यमामनंतिश्रुतयःपदार्थंनसन्नवासन्नबहिर्नचांतः॥ससच्चिदानंदघनःपरात्मानारायणस्त्वंपुरुषःपुराणः॥
॥ ३१ ॥ इतिस्तुतस्तेनयथाविधानमासेदिवान्विष्टरमात्मनिष्ठः ॥ द्वैपायनःप्रश्रयनम्रपूर्वकायंयतीशान
मिदंबभाषे ॥ ३२ ॥ त्वमस्मदादेःपदवींगतोभूरखंडपांडित्यमबोधयंते ॥ शुकर्षिवत्प्रीतिकरोसिविद्वन्पुरे
वशिष्यैस्सहमाश्रमीस्त्वं॥ ३३ ॥ कृतंत्वयाभाष्यमितींदुमौलेःसभांकणेसिद्धमुखान्निशम्य ॥ हृदाप्रहृष्टे
नदिदृक्षयातेदृगध्वनीनःप्रशमिन्नभूवं॥ ३४ ॥

तर्यामीतत्पदवाच्यार्थःपुरिशयनात्पुरुषस्त्वंपदवाच्यःपुराणत्वमनादित्वमुभयोर्विशेषणं उ०॥३१॥ इत्येवंप्रकारेणतेनश्रीशंकरेणस्तुतःआत्मनिष्ठोद्वैपायनोवेदव्यासोयथाविधानमासनआसेदिवान्उपविष्टवान् विभाषायांसदवसश्रुवइतिक्वसुः प्रश्रयेणनम्रःपूर्वकायोऽग्रभागोयस्यतंयतीशमिदंवक्ष्यमाणमुवाच॥३२॥ यदुवाचतदाहास्मदादेःपदवींत्वंगतोभूःपूर्वमेवप्राप्तः तेऽखंडपांडित्यमबोधयंज्ञातवानस्मि स्वपुत्रवत्प्रीतिकरोसि यतोविद्वन्तस्मादयंवादायागतइतिशिष्यैःसहत्वंपूर्वंयथाश्रमंप्राप्तस्तथामाश्रमीःश्रमंमागाः उ० ॥ ३३ ॥ त्वयाभाष्यंकृतमितिशिवस्यसंबंधीसभांकणेसंज्ञःसिद्धस्तस्यमुखाच्छ्रुत्वा प्रहृष्टेनहृदातवदर्शनेच्छया हेप्रशमिन्तेनेत्रपथचरोहंजातोस्मि ॥ ३४ ॥ ॥

एवंभूतस्यमुनींद्रस्यवेदव्यासस्यवचनस्यश्रवणादुत्थितरोमांचपूरव्याजेनबहिरुत्प्लुत्यगच्छंतंहर्षंधारयन्शुकाचार्यमतलक्षणसमुद्रप्रवर्धनेपूर्णचंद्रःश्रीशंकरोनवमेघकांतिमनल्पशक्तितंश्रीव्यासमाख्यत्प्रोक्तवान् व० ॥ ३५॥ तद्वाक्यमुदाहरतित्रिभिः सुमंतुपैलवैशंपायनाद्यामुनींद्रा महानुभावः प्रभावोयेषांते ननुयस्यतेशिष्यास्तस्मिंस्त्वयितृणादप्यतिशयेनलघुभूतोऽहंकोयद्यप्येवंतथापिदीनेमयिकारुण्यंदर्शितवानसि उपें० ॥३६॥ सोहंलघीयानपितवकारुण्यपात्रतांगतःसर्वेषामपनिषद्गतानामर्थानांविवेचकस्यायमत्राभिप्रेतोऽर्थोऽयंनेतिविविच्यप्रदर्शकस्य

इत्थंमुनींद्रवचनश्रवणोत्थहर्षरोमांचपूरमिपतोबहिरुत्प्लुवंतं ॥ विभ्रंतमभ्ररुचिमाख्यददभ्रशक्तिंश्रीशंकरःशुकमतार्णवपूर्णचंद्रः ॥ ३५ ॥ सुमंतुपैलप्रथमामुनींद्रामहानुभावाननुयस्यशिष्याः ॥ तृणाल्लघीयानपितत्रकोहंतथापिकारुण्यमदर्शिदीने ॥ ३६ ॥ सोहंसमस्तार्थविवेचकस्यकृत्वाभवत्सूत्रसहस्ररश्मेः ॥ भाष्यप्रदीपेनमहर्षिमान्यनीराजनंधृष्टतयानलज्जे॥ ३७॥ अकारियत्साहसमात्मबुद्ध्याभवत्प्रशिष्यव्यपदेशभाजा॥ विचार्यतत्सूक्तिदुरुक्तिजालमर्हःसमीकर्तुमिदंकृपालुः॥ ३८॥

भवदीयसूत्रलक्षणस्यसहस्रकिरणस्यसूर्यस्यभाष्यलक्षणेनप्रदीपेननीराजनमारार्तिकंकृत्वा हेमहर्षिमान्यधार्ष्ट्येननलज्जे इंद्र० ॥ ३७॥ यद्यप्येवंतथापिभक्त्याकृतंप्रदीपेननीराजनंयथासवितास्वीकरोतितथाभवत्सूत्रेणस्वीकृतत्वान्मत्कृतंभाष्यंत्वंशोधयितुमर्हसीत्याशयेनाह भवत्प्रशिष्यव्यपदेशपात्रेणमयायत्साहसंस्वबुद्ध्याकृतंतद्विचार्यसूक्तिजालमिदंसमंकर्तुंकृपालुस्त्वंयोग्योसि उ० ॥ ३८ ॥

इत्थमुक्त्वोपरतस्यतूर्ष्णींस्थितस्यश्रीशंकरस्यहस्तात्सवेदव्यासआदरेणहस्तद्वयेनभाष्यमादायासौव्यासःप्रसादगांभीर्यगुणैरभिरामंसर्वत्रसम्य क्विचारपूर्वकंदृष्टवान् ॥ ३९ ॥ पुनस्तद्विशिनष्टि सूत्रानुसारिभिर्मृदुवाक्यैर्निवेदितोऽर्थोयेन स्वीयैःपदैर्निराकृताःपूर्वपक्षायेनसिद्धांतयुक्तिभिर्विनिवेशितंतस्यसिद्धांतस्यस्वरूपंयत्रतथाभूतंभाष्यंसवेदव्यासोदृष्ट्वाऽभिनंद्यपरितोषवशादवोचदुक्तवान् व० ॥ ४० ॥ गुरुणाविनीतो

इत्थंनिगद्योपरतस्यहस्तेहस्तद्वयेनादरतःसभाष्यं ॥ आदायसर्वत्रनिरीक्षतासौप्रसादगांभीर्यगुणाभिरामं ॥
॥ ३९ ॥ सूत्रानुकारिमृदुवाक्यनिवेदितार्थंस्वीयैःपदैस्सहनिराकृतपूर्वपक्षं ॥ सिद्धांतयुक्तिविनिवेशितत
त्स्वरूपंदृष्ट्वाभिनंद्यपरितोषवशादवोचत् ॥ ४० ॥ नसाहसंतातभवानकार्षीद्यत्सूत्रभाष्यंगुरुणाविनीत ॥
विचार्यतांसूक्तदुरुक्तमत्रेत्येतन्महत्साहसमित्यवैमि ॥ ४१ ॥ मीमांसकानामपिमुख्यभूतांवल्थाखिलव्याक
रणानिविद्वन् ॥ विनिःसरेत्तेवदनाद्यतींदोगोविंदशिष्यस्यकथंदुरुक्तं ॥ ४२ ॥ नप्राकृतस्त्वंसकलार्थदर्शी
महानुभावःपुरुषोसिकश्चित् ॥ योब्रह्मचर्याद्विषयान्निवार्यपर्यव्रजःसूर्यइवांधकारान् ॥ ४३ ॥

भवान्यत्सूत्रभाष्यमकृततत्साहसंनकृतवान् सूक्तदुरुक्तमत्रविचार्यतामित्येतन्महत्साहसमित्यवैमिजानामि विप० ॥ ४१ ॥ तत्रहेतुमाह मीमांसकानामपीति वेदजानासि ॥ उ० ॥ ४२ ॥ किंचनप्राकृतस्त्वंकिंतुसर्वार्थदर्शीकश्चिन्महानुभावःपुरुषोसि तत्रहेतुमाह यइति पर्यव्रजः संन्यासंकृतवान् अनायासेनविषयनिवारणेदृष्टांतोयथासूर्योंधकारान्निवार्यगच्छतितद्वत् ॥ ४३ ॥

मत्सूत्रभाष्यकरणादपित्वंप्राकृतोनभवसीत्याशयेनाह बहवोऽर्थागर्भेयेषांनिगूढोभावोयेषांपुनश्चलघूनिमल्कतानियानिसूत्राणितानित्वांविहायएवंप्रकारेणसम्यंकृयोविवरीतुंविवरणंकर्तुंसमर्थस्सनास्ति ॥ ४४ ॥ किंचसूत्रकृत्परिश्रमतुल्यएवैषांव्याख्यातुःपरिश्रमइतिदेवार्पंडिताश्चवदंतीत्याह निसर्गात्स्वभावादेवातिशयेनदुर्ज्ञानानिसूत्राणियथाभूतार्थतोज्ञातुंकोवाऽलंनकोपिसमर्थःहेसनूयतएषांसूत्राणांप्रणेतुर्यावान्क्लेशस्तावानेवैषांविवरणकर्तुःक्लेशइतिविशेषज्ञादेवाश्चवदंति ॥ ४५ ॥ एवंयथात्वयामदीयोभावोबुद्धस्तथातंयथावदविज्ञायऐश्वर्ययुक्तोपिकर्तुमकर्तुमन्यथाकर्तुंसमर्थोपिकश्चिद्भाष्यंप्रणेतुमलंसमर्थोनभवतियथावदेवंभाष्यमितिवायतएवमतःपरशिवांशंविनासांख्यादिना

वह्वर्थगर्भाणिलघूनियानिनिगूढभावानिचमल्कतानि॥ त्वामेवमित्थंविरहय्यनास्तियस्तानिसम्यग्विवरी
तुमीष्टे॥४४॥ निसर्गदुर्ज्ञानतमानिकोवासूत्राण्यलंवेदितुमर्थतस्सन्॥ क्लेशस्तुतावान्विवरीतुरेषांयावान्प्र
णेतुर्विबुधावदंति ॥ ४५ ॥ भावंमदीयमवबुध्ययथावदेवंभाष्यंप्रणेतुमनलंभगवानपीशः॥ सांख्यादिना
मथयितुं*श्रुतिमूर्द्धवर्त्मोद्धर्तुंकथंपरशिवांशमृतेप्रभुःस्यात्॥४६॥ रोषानुषंगकलयापिसुदूरमुक्तोधत्सेधि
मानसमहोसकलाःकलाश्च॥ सर्वात्मनागिरिजयापहितस्वरूपःशक्योनवर्णयितुमद्भुतशंकरस्त्वं॥४७॥

विपरीततांप्रापितंवेदांतमार्गमुद्धर्तुंकथंप्रभुःसमर्थःस्यादित्यर्थः ॥ वसं० ॥ ४६ ॥ यत्तुधत्सइत्याद्युक्तंतत्राहाद्भुतशंकरस्त्वंवर्णयितुंनशक्योऽद्भुतत्वंदर्शयति रोषस्यसंबंधलेशेनापिरहितःसतुरोषानुषंगेणमुक्तोनभवति एवंभूतोप्यधिमानसंमनसिसकलाअपिकलाधत्सेसतुशिरस्येकामेवशशिकलांबिभर्तिपुनश्चसर्वात्मनासर्वात्मभावेनगिरिजयावेदांतवाचिजातयाब्रह्मविद्यालक्षणयापार्वत्यायुक्तंस्वरूपंयस्यसत्वर्धशरीरेणपार्वत्यायुक्तस्वरूपइत्यर्थः ॥ ४७ ॥

* मथयितुमित्यत्रविलुलितमितिपाठः

यदुक्तंलज्जासंपादकंकर्मकृत्वापिधृष्टतयाहंनलज्जइतितत्राहपूर्वमेतन्मदीयंसूत्रजातमसंख्यातैःकविभिर्व्याख्यातंइतःपरंचकैश्चित्कविभिरेत
द्याख्यास्यतेपरंतुभवानिवनिगूढमस्मदभिप्रायंविज्ञातुंकिमेतेव्याख्यातारोऽलंसमर्थानैवशक्ताःसर्वज्ञस्यतवैवैतद्विज्ञानेशक्तिर्नत्वन्यस्याल्पज्ञ
स्येत्याशयवानाहहेसर्वज्ञेति उ० ॥४८॥ एवंसूत्रभाष्यंश्रुत्वाश्रुतिभाष्यकरणादौप्रेरयन्स्वगमनमामंत्रयतिव्याख्याहीति वेदांतविद्यामुपनिष
दंविभेदवादान्पंडितान्विजित्यविषयसंबंधप्रयोजनाधिकार्याख्यानुबंधयुक्तान्ग्रंथान् आख्यापय उ० ॥४९॥इत्युक्तवंतंतंश्रीव्यासमसौश्री

व्याख्याप्यसंख्यैःकविभिःपुरैतद्याख्यास्यतेकैश्चिदितःपरंच ॥ भवानिवास्मद्धृदयंकिमेतेसर्वज्ञविज्ञातु
मलंनिगूढं॥ ४८ ॥ व्याख्याहिभूयोनिगमांतविद्यांविभेदवादान्विदुषोविजित्य॥ ग्रंथान्भुविख्यापयसा
नुबंधानहंगमिष्यामियथाभिलाषं॥ ४९ ॥ इत्युक्तवंतंतमसाववोचत्कृतानिभाष्याण्यपिपाठितानि ॥
ध्वस्तानिसम्यक्कुमतानिधैर्यादितःपरंकिंकरणीयमस्ति ॥ ५० ॥ मुहूर्तमात्रंमणिकर्णिकायांविधेहिसद्व
त्सलसन्निधानं॥ चिराद्यतेहंपरमायुषोंतत्यजामियावद्वपुरद्यदेहं॥ ५१ ॥ इतीदमाकर्ण्यवचोविचिंत्यस
शंकरंप्राहकुरुष्वमैवं ॥ अनिर्जिताःसंतिवसुंधरायांत्वयाबुधाःकेचिदुदारविद्याः॥ ५२॥

शंकरोऽवोचत्अवदत् त्वदाज्ञामयापूर्वमेवसंपादितेतिदर्शयतिनिगमांतभाष्याणिकृतानिपाठितानिचपुनश्चकुमतानिधैर्यात्सम्यक्नाशितानि
तस्मादितःपरंकिंचिदपिकर्तव्यंनास्ति ॥५०॥ यतएवमतोहेसद्वत्सल घटिकाद्वयंमणिकर्णिकायांसामीप्यंविधेहिएतदर्थमहंचिराद्यत्नंकरोमि
परमायुषस्तवसमीपेऽद्ययावद्धेयंवपुःशरीरंत्यजामितावदित्यर्थः हेपरमआयुषोंऽतेसमाप्तावितिवा उपें० ॥ ५१ ॥ ५२ ॥

तेषामुदारविद्यानांजयायहेस्थिरधीर्यद्यपितत्पराभवहेतुभूताःग्रंथास्त्वयारचितास्तथापिकतिवर्षाणित्वयापिवस्तव्यमेवविपक्षेदोषमाह नोचे
दितियथाबाल्येमातृरहितस्यस्थितिर्दुर्लभातद्वन्मातृवद्रक्षकेणत्वयारहितामोक्षेच्छाडुर्लभास्यात् उ० ॥ ५३ ॥ आयुषःसमाप्तिविचार्यवरदा
नायाहहेआत्मविदांऋषीणांवरेण्यप्रसन्नगंभीराणांभवत्प्रणीतानांप्रबंधानांसंदर्भैर्भवोजन्मयस्यसप्रहर्षःतुभ्यंवरंप्रदातुंमांप्रोत्साहयति ॥ ५४ ॥
वयांसिवर्षाणिभवस्यशिवस्याज्ञयावरांतरंददातिचपुनरिदंभाष्यमारविचंद्रतारंभूयात्यावत्सूर्यादिस्थितिस्तावद्भवत्वित्यर्थः व० ॥ ५५॥ ननु

जयायतेषांकतिहायनानिवस्तव्यमेवस्थिरधीस्त्वयापि ॥ नोचेन्मुमुक्षाभुविदुर्लभास्यात्स्थितिर्यथामातृधृत
स्यबाल्ये ॥ ५३ ॥ प्रसन्नगंभीरभवत्प्रणीतप्रबंधसंदर्भभवःप्रहर्षः ॥ प्रोत्साहयत्यात्मविदांऋषीणांवरेण्यवि
श्राणयितुंवरंते ॥ ५४ ॥ अष्टौवयांसिविधिनातववत्सदत्तान्यन्यानिचाष्टभवतास्वधियार्जितानि ॥ भूयोपि
षोडशभवंतुभवाज्ञयातेभूयाच्चभाष्यमिदमारविचंद्रतारं ॥ ५५ ॥ त्वमायुषानेनविरोधिवादिगर्वांकुरान्मूल
नजागरूकैः ॥ वाक्यैःकुरुष्वोज्झितभेदबुद्धीनद्वैतविद्यापरिपंथिनोऽन्यान् ॥ ५६ ॥ इतीरयंतंप्रतिवाचमूचे
सशंकरःपावितसर्वलोकः ॥ त्वत्सूत्रसंबंधवशान्मदीयंभाष्यंप्रचारंभुवियातुविद्वन् ॥ ५७ ॥ इतीरयित्वा
चरणौववंदेयतिर्मुनेःसर्वविदोमहात्मा ॥ प्रदायसंभाव्यवरंमुनीशोद्वैपायनःसोंतरधाद्यतात्मा ॥ ५८ ॥

षोडशवर्षपरिमितमायुषामयाकिंकर्तव्यमित्याकांक्षायामाह त्वमनेनायुषान्यानद्वैतविद्यापरिपंथिनःस्ववाक्यैस्त्यक्तभेदमतीन्कुरुष्व वा
क्यानिविशिनष्टिविरोधिवादिनांगर्वस्यसमूलोच्छेदनेजागरूकैःसावधानैः उ० ॥ ५६ ॥ इत्येवंकथनंकुर्वंतंवेदव्यासंपवित्रितलोकःस
शंकरःप्रवचनमुवाचयद्यपिमदीयंभाष्यंप्रचारंगंतुंयोग्यंनभवतितथापित्वत्सूत्रसंबंधवशाद्धेविद्वन्भुविप्रचारंगच्छतु स्वलाघवोक्तिरियं ॥ ५७ ॥
संभाव्यवरमवश्यंभाविवरंसंपूज्यवरंप्रदायेतिवा ॥ ५८ ॥

इत्थंसंभाष्यास्मिन्नृषिश्रेष्ठेवेदव्यासेंतर्धानंगतेथानंतरमंतर्विवेकनिधिरपिसःश्रीशंकरोविव्यथेव्यथांप्रापतत्रहेतुःहृत्तापस्यहारीनिरुपाधिकपार सोयेषांतत्तादृशांव्यासप्रभृतीनांविरहःकथमहोविषह्यःकथमपिविषह्योनभवतीत्यर्थः व० ॥ ५९ ॥ तर्हिकथंतद्विरहंविषह्यदिग्विजये मनोदधेइत्याकांक्षायामाहतदितिगुरोर्वेदव्यासस्यनियोगादनुशासनात् उ० ॥ ६० ॥ अथदिग्विजयेमनसःस्थापनानंतरंकुमारिलेनभ

इत्थंनिगद्यऋषिवृष्णितिरोहितेस्मिन्नंतर्विवेकनिधिरप्यथविव्यथेसः॥ हृत्तापहारिनिरुपाधिकृपारसानांत त्तादृशांकथमहोविरहोविषह्यः॥ ५९॥ तत्पादपद्मेनिजचित्तपद्मेपश्यन्कथंचिद्विरहंविषह्य॥ यतिक्षितीशो पिगुरोर्नियोगान्मनोदधेदिग्विजयेमनीषी ॥ ६० ॥ भाष्यस्यवार्तिकमथैषकुमारिलेनभट्टेनकारयितुमाद रवान्मुनींद्रः ॥ वंध्यायमानदरविंध्यमहीधरेणवाचंयमेनचरितांहरितंप्रतस्थे ॥ ६१ ॥ ततस्सवेदांतरहस्य वेत्ताभित्तामतानांतरसंमतानां ॥ प्रयागमागात्प्रथमंजिगीषुःकुमारिलंसाधितकर्मजालं॥ ६२॥

ट्टेनभाष्यस्यवार्तिकमादरात्कारयितुमेषमुनींद्रःवंध्यावदाचरंतोनिष्फलादरागर्तायस्मिंस्तथाभूतोविंध्याचलोयेनतेनवाचंयमेनअगस्त्येनमु निनाचरितांदक्षिणांहरितंदिशंप्रतिप्रतस्थेप्रस्थानंकृतवान् व० ॥ ६१ ॥ ततःप्रस्थानानंतरंवेदांतरहस्यवेत्ताऽमतानामनभिमतानांमतानांप्रस ह्यझटितिवाभेदनकर्तासश्रीशंकरःसाधितकर्मकांडंकुमारिलंप्रथमंजेतुमिच्छुःप्रयागंतीर्थराजमागच्छत्प्रथमंप्रयागमितिवासंबंधः उ० ॥ ६२॥

अथानंतरंआमज्जतांपुंसांतनूंशरीरमसितांकृष्णांविष्णुसरूपांसितांश्वेतांशिवस्वरूपांचकर्तुंकलिंदाख्यगिरिपुत्र्याकालिंद्यायमुनयासंपादिताऽ
नुषंगःसंबंधोययानिह्नुतानिनाशितान्यघानिययातांजाह्नवीमह्नायांजसाऽर्थानांचतुर्विधपुरुषार्थानांमार्गमध्येप्रयागंप्रयागस्यमध्यमगमत्
पारेमध्येषष्ठ्यावेतिसमासएदंतत्वनिपातनंच वसं०॥६३॥ गंगाप्रवाहैरुपरुद्धोवेगोयस्याःसाविचित्रजलाकालिंदकन्यायमुनायत्रप्रयागमध्येऽ
पूर्वसख्याआगतायालज्जातयास्तिमितोऽचंचलःप्रवाहःप्रवृत्तिर्यस्यास्तथाभूताइवाधिकंभातिप्रवाहस्तुप्रवृत्तौस्यादपिस्रोतसिवारिणीतिमेदि

आमज्जतांकिलतनूमसितांसितांचकर्तुंकलिंदसुतयाकलितानुषंगां ॥ अह्नायजह्नुतनयामथनिह्नुताघांम
ध्येप्रयागमगमन्मुनिरर्थमार्गं ॥६३॥ गंगाप्रवाहरुपरुद्धवेगाकलिंदकन्यास्तिमितप्रवाहा ॥ अपूर्वसख्या
गतलज्जयेवयत्राधिकंभातिविचित्रपाथाः ॥ ६४॥ अंतेवसद्भिरमलच्छविसंप्रदायमध्येतुमाश्रितजलां
कुहचिन्मरालैः॥ चक्रद्वयेनरजनीसहवाससौख्यसंशीलनायकिलसंवलितांपरत्र॥६५॥ यत्राप्लुतादिव्यश
रीरभाजआचंद्रतारंदिविभोगजातं ॥ संभुंजतेव्याधिकथानभिज्ञाःप्राहेममर्थंश्रुतिरेवसाक्षात्॥ ६६॥

नी उ० ॥६४॥ कुहचित्क्वचिदमलकांतिलक्षणंसंप्रदायमध्येतुंसमीपेवसद्भिःशिष्यैर्मरालैर्हंसैराश्रितंजलंयस्यास्तांपरत्रान्यत्रनलिनीसहवास
लक्षणसौख्यसंशीलनायचक्रद्वयेनसंव्याप्तांभागीरथींविगाह्येतिव्यवहितेनान्वयः रजनीनलिनीरात्रिहरिद्राजतुकासुचेतिमेदिनी व०॥६५॥
तामेववर्णयति यत्रयस्यांयमुनयासंगतायांगंगायामाप्लुतादिव्यशरीरभाजःपुनश्चव्याधिकथानभिज्ञाःसंतःदिविभवंभोगसमुदायंसम्यग्भुंजते
नन्वत्रकिंप्रमाणमितिचेत्तत्राह इममर्थंसाक्षाच्छ्रुतिरेवप्राहतथाचश्रुतिःसितासितेसरितेयत्रसंगतेतत्राप्लुतासोदिवमुत्पतंतीत्याद्या इंद्र०॥६६॥

किंचवाणीश्रुतिरपिअज्ञातसंभवस्यजन्मनस्तिरोधेस्तिरोधानस्यचकथाययासायस्यायमुनयासंगतायागंगायाःसितासिततयैवद्वयंवर्णयति तथाभूतामेतांयमुनयापरिचर्यमाणांभागिरर्थींविगाह्यमुदितोमुनिःश्रीशंकरइतिवक्ष्यमाणमभाणीदुक्तवान् व० ६७॥ हेसिंद्धापगेत्रिपुरविरोधिनःशिवस्यजटाभिरुपरोधेनक्रुद्धाशतममुष्यशिवस्यसदृशान्कुतःकिमर्थंविधत्सेएषांत्वयारचितानांजटाभिःकिंनुनवद्धाभवितासिकिंवद्धानभविष्यसिकिंतुभविष्यस्येवएवमाक्षिप्यस्वयमेवप्रतिक्षिपतिजडप्रकृतयोभविष्यंनजानंतिअत्रनिंदयास्तुतेरवगमाद्व्याजस्तुतिः उक्तिर्व्या

अज्ञातसंभवतिरोधिकथापिवाणीयस्याःसितासिततयैवगृणातिद्वैपं ॥ भागीरर्थींयमुनयापरिचर्यमाणामेतांविगाह्यमुदितोमुनिरित्यभाणीत् ॥६७॥ सिद्धापगेपुरविरोधिजटोपरोधक्रुद्धाकुतःशतमदःसदृशान्विधत्से॥ वद्धानकिंनुभवितासिजटाभिरपामद्धाजडप्रकृतयोनविदंतिभावि ॥६८॥ सन्मार्गवर्तनपरापिसुरापगेत्वमस्थीनिनित्यमशुचीनिकिमाददासि ॥ आज्ञातमंबहृदयंतवसज्जनानांप्रायःप्रसाधनकृतेकृतमज्जनानां ॥ ६९ ॥

जस्तुतिर्निंदास्तुतिभ्यांस्तुतिर्निंदयोरित्युक्तेः ॥ ६८ ॥ हेसुरापगेसन्मार्गवर्तनपरापित्वंनित्यमपवित्राण्यस्थीनिकिमर्थमाददासीत्याक्षेपःस्वयमेवसमाधत्तेहेदेवितवहृदयमाज्ञातंतवाभिप्रायोबुद्धस्तवजलेकृतंमज्जनंयैस्तेषांसज्जनानांप्रायःप्रसाधनकृतेशिवरूपाणांतेषामलंकारार्थमाददासीत्यर्थःङिद्रहिताकारपूर्वकत्वात्परस्मैपदप्रयोगोनदोषावहः आङोदोनास्यविहरणेइतिङिद्ग्रहणाज्ज्ञापकात्तथाचलोकोपकारायययथोक्तात्वप्रवृत्तिरित्यर्थः ॥ ६९ ॥

स्वापानुषंगेणनिद्रानुषंगेणयाजडतातयाभरितान्निद्रानुषंगजडताविधुरानेवविधत्सेदूरीभवद्विषयरागोयस्मात्तथाभूतंहृद्येषांतांस्तुमुखादिमुंडनं
नधूर्तावतंसयसिधूर्तशिरोमणीन्करोषि तथाचैषकोवामार्गःतथादूरीभवद्विषयरागहृदोधूर्तौधत्तूरपुष्पंतदवतंसःशिवस्तद्रूपान्करोषीतिश्लेषेण
स्तुतिःधूर्तेतुखंडलेवर्णेधत्तूरेनाविटेत्रिष्विितिमेदिनी उ० ॥ ७० ॥ इत्येवंत्रिवर्णीस्तुवन्सन्तापसराट्शाठ्याकोटिसम्यगाच्छाद्यभुजदंडयुग्मेनो
र्ध्वंधृतोवेणुदंडोयेनसकुपीटजले कुपीटमुदरेतोयेइतिमेदिनी अघमर्षणस्नानेमनोयस्यतथाभूतोबभूव उ० ॥ ७१ ॥ यापुपोषगर्भेदधारद्वः

स्वापानुषंगजडताभरितान्जनौघान्स्वापानुषंगजडताविधुरान्विधत्से ॥ दूरीभवद्विषयरागहृदोपितूर्णंधूर्ता
वतंसयसिदेविकएपमार्गः॥७०॥ इतिस्तुवंस्तापसराट्त्रिवर्णीशाठ्यासमाच्छाद्यकटिंकुपीटे॥ दोर्दंडयुग्मो
द्धृतवेणुदंडोघमर्षणस्नानमनाबभूव ॥ ७१ ॥ सस्नौप्रयागेसहशिष्यसंघैःस्वयंकृतार्थोजनसंग्रहार्थी ॥ अ
स्मारिमातापिचसापुपोषदधारयादुःखमसोढभूरि॥७२॥ अनुष्ठितंद्रागवसाय्यवातैःकल्हारशीतैरुपसेव्य
मानः ॥ तीरेविशश्रामतमालशालिन्यत्रांतरेऽश्रूयतलोकवार्ता ॥ ७३ ॥ गिरेरवप्लुत्यगतिःसतांयःप्रामा
ण्यमाम्नायगिरामवादीत् ॥ यस्यप्रसादात्रिदिवौकसोपिप्रपेदिरेप्राक्तनयज्ञभागान् ॥७४॥ सोयंगुरोरुन्म
थनप्रसक्तंमहत्तरंदोषमपाकरिष्णुः ॥ अशेषवेदार्थविदास्तिकत्वात्तुषानलंप्राविशदेषधीरः ॥७५ ॥

खंचभूरिअसोढसामाताप्यस्मारिस्मृता आख्या० ॥ ७२ ॥ द्रागझटितिअनुष्ठितमनुष्ठानंअवसाय्यसमाप्यकल्हारशीतैर्वातैरुपसेव्यमा
नःतमालशालिनितीरेविश्रामंकृतवान् अत्रांतरेलोकवार्ताअश्रूयत उ० ॥ ७३ ॥ तामेवदर्शयन्ति गिरेरिति यःसतांगतिःपर्वतादवप्लुत्यवेद
गिरांप्रामाण्यमवादीत् ॥ ७४ ॥ सोयंभट्टपादःगुरोरुन्मथनात्प्रसक्तंप्राप्तंमहत्तरंदोषमपाकरिष्णुःसर्ववेदार्थज्ञएषधीरआस्तिकत्वात्तुषाग्नि
प्राविशत् ॥ ७५ ॥

अयंभट्टपादःक्षिप्रसिद्धमधीताखिलवेदमंत्रःपुनश्चकूलंकषानदीतद्वद्वालोडितानिअवगाहितानिसर्वशास्त्राणिसर्वसिद्धांतावायेनसनितांतंदूरीकृतानिदुष्टतंत्राणियेनातएवविभ्रामितंकीर्तिलक्षणंयंत्रंयेनसः वियं० ॥ ७६ ॥ इतितांलोकवार्तांश्रुत्वातंभट्टपादंव्यालोकयत्दृष्टवान् उ० ॥ ७७ ॥ तंविशिनष्टि धूमायमानेनतुषाग्निनाऽशेषेवपुषिसंदह्यमानेपिसंदृश्यमानेनमुखेनोष्मव्याप्तकमलस्यश्रियमादधानंबाष्पमूष्माश्रुकशिपाविति मेदिनी ॥ ७८ ॥ कटाक्षभंग्यादूरेविधूतान्यघानियेनतंदृष्टिमार्गेऽवतीर्णंदेशिकंश्रीशंकरंज्वलदग्नितुल्योभट्टपादोददर्शयोजिता

अयंत्वधीताखिलवेदमंत्रःकूलंकषालोडितसर्वतंत्रः॥ नितांतदूरीकृतदुष्टतंत्रस्त्रैलोक्यविभ्रामितकीर्तियंत्रः
॥७६॥ श्रुत्वेतितांसत्वरमेपगच्छन्व्यालोकयत्तंतुपराशिसंस्थं॥ प्रभाकराद्यैःप्रथितप्रभावैरुपस्थितंसाश्रुमुखैर्विनेयैः॥ ७७॥ धूमायमानेनतुपानलेनसंदह्यमानेपिवपुष्यशेषे॥ संदृश्यमानेनमुखेनबाष्पपरीतपद्मश्रियमादधानं ॥ ७८ ॥ दूरेविधूताघमपांगभंग्यातंदेशिकंदृष्टिपथावतीर्णं ॥ ददर्शभट्टोज्वलदग्निकल्पोजुगोपयोवेदपथंजितारिः ॥ ७९ ॥ अदृष्टपूर्वंश्रुतपूर्ववृत्तंदृष्ट्वातिमोदंसजगामभट्टः ॥ अचीकरच्छिष्यगणैःसपर्यामुपाददेतामपिदेशिकेंद्रः ॥ ८० ॥ उपात्तभिक्षःपरितुष्टचित्तःप्रदर्शयामाससभाष्यमस्मै ॥ सर्वोनिबंधात्यमलोपिलोकेशिष्टेक्षितःसंचरणंप्रयाति ॥ ८१ ॥ दृष्ट्वाभाष्यंहृष्टचेताःकुमारःप्रोचेवाचंशंकरंदेशिकेंद्रं ॥ लोकेत्वल्पोमत्सरग्रामशालीसर्वज्ञानानाल्पभावस्यपात्रं ॥ ८२ ॥

रिर्वेदमार्गंजुगोप ॥ ७९ ॥ अदृष्टपूर्वंश्रुतपूर्ववृत्तंचरितंयस्यतंश्रीशंकरंदृष्ट्वाभट्टोऽतिहर्षंजगाम ततश्चशिष्यगणैःपूजांकृतवान्तांसपर्यामनपेक्षितामपिदेशिकेंद्रःस्वीकृतवान् ॥ ८० ॥ उपात्ताभिक्षायेनपरितुष्टचित्तःसश्रीशंकरोऽस्मैभट्टपादायभाष्यंदर्शयामास ननुकिमर्थंदर्शयामासेत्यपेक्षायामाह सर्वइति ॥ ८१ ॥ तत्रहेतुमाह हियस्माल्लोकेऽल्पःक्षुद्रोमत्सरग्रामशालीसर्वज्ञानःसर्वज्ञस्तुमात्सर्यादिलक्षणस्यक्षुद्रभावस्यपात्रंनभवतीत्यर्थः ॥ ८२ ॥

यदुवाचतदाह अष्टाविति हेविद्वन्नत्रास्मिन्ग्रंथेप्रथमेऽध्यायेभाष्येसद्वार्तिकानामष्टौसहस्राणिभांतितर्हिकर्तव्यानीतिचेत्तत्राहाहंयद्यगृहीतदीक्षःस्यांतर्ह्यस्यभाष्यस्यसुनिबंधंविधास्ये उ० ॥ ८३ ॥ तिष्ठत्वेतद्भवद्दर्शनंत्वतिदुर्लभंमयालब्धमित्याह भवादृशामिति उपें० ॥ ८४ ॥ यतोभवादृशांसंगतिरेवसंसारादुद्धरणोपायइत्याहासारेति तदुत्तारविधौसंसारोत्तरणविधौ उ० ॥ ८५ ॥ नन्वेवंतर्हिपूर्वंदर्शनेच्छातवकुतोनोत्पन्नेतिचेत्तत्राह चिरकालमारभ्येत्थंदर्शनमिच्छामिपरंत्वद्यदृष्टिमार्गेत्वंगतोऽसि नन्वेवंतर्हिकिमितिस्वाभिलषितंत्वयानसंपादितमितिचेत्त-

अष्टौसहस्राणिविभांतिविद्वन्सद्वार्तिकानांप्रथमेत्रभाष्ये ॥ अहंयदिस्यामगृहीतदीक्षोध्रुवंविधास्येसुनिबंधमस्य ॥ ८३ ॥ भवादृशांदर्शनमेवलोकेविशेषतोस्मिन्समयेदुरापं ॥ पुरार्जितैःपुण्यचयैःकथंचित्त्वमद्यमेदृष्टिपथंगतोभूः ॥ ८४ ॥ असारसंसारपयोब्धिमध्येनिमज्जतांसद्भिरुदारवृत्तैः ॥ भवादृशैःसंगतिरेवसाध्यानान्यस्तदुत्तारविधावुपायः ॥ ८५ ॥ चिरंदिदृक्षेभगवंतमित्थंत्वमद्यमेदृष्टिपथंगतोभूः ॥ नत्वत्रसंसारपथेनराणांस्वेच्छाविधेयोभिमतेनयोगः ॥ ८६ ॥ युनक्तिकालःक्वचिदिष्टवस्तुनाक्वचित्त्वरिष्टेनचनीचवस्तुना ॥ तथैवसंयोज्यवियोजयत्यसौसुखासुखेकालकृतप्रवेक्ष्यतः ॥ ८७ ॥ कृतानिबंधानिरणायिपंथानिरासिनैयायिकयुक्तिजालं ॥ तथान्वभूवंविषयोत्थजातंनकालमेनंपरिहर्तुमीशे ॥ ८८ ॥

त्राह नहीति ॥ ८६ ॥ तर्हिकोवायुनक्तीतिचेत्तत्राह युनक्तीति अतःकारणात्सुखदुःखेकालकृतेऽहंविजानामि उ० ॥ ८७ ॥ अहंतुसर्वंकर्तव्यंकृतवानेवेत्याह कृतइति पुनश्चकर्ममार्गोनिर्णीतःपुनश्चनैयायिकयुक्तिजालंनिरस्तं विषयोत्थंसुखदुःखजातंचान्वभूतं नन्वेवंभूतस्त्वमेनंकालंकिमितिनपरिहरसीतिचेत्तत्राह नेशेसमर्थोनभवामि ॥ ८८ ॥

ननुकिमर्थमेवंविधातुंप्रवृत्तोसीतिजिज्ञासायामीश्वरनिरासगुरुद्रोहलक्षणयोःपापयोःप्रायश्चित्तंकर्तुंप्रवृत्तोस्मीतिदर्शयितुमुपक्रमतेनिरास्यमि
ति ईशानोभूतभव्यस्येत्यादिश्रुतेर्लोकाच्चसिद्धमीशंनिराकृतवान्किमिच्छन्निति चेत्तत्राह वेदस्यस्वतःप्रामाण्यमुदाहरिष्यन्नूहेविद्वन्जातुकदा
चित्प्रपंचोजगद्येनविनासौख्यायनकल्पनेयोग्योनभवतितमीशंननिह्नुवेनैवापलपामितन्निषेधेमदभिप्रायोनास्तीत्यर्थः ॥८९॥ एवमेकंपापंप्रद
र्श्यद्वितीयंदर्शयति तथागतैःसुगतैराक्रांतमशेषंसर्वमभूत्तेनचसवैदिकःपंथाविरलीबभूवेतिपरीक्ष्यतेषांविजयायपुराणंवेदमार्गंसंत्रातुमनाअ
हंप्रवृत्तः ॥ ९० ॥ शिष्यसंघैःसहिताःसुगताःराज्ञोगेहंप्रविशंतितदादिराजादिस्ववशेविधातुंराजामदीयस्तथाजिरंविषयोदेशोस्मदीयस्तस्माद्वेद

निरास्यमीशंश्रुतिलोकसिद्धंश्रुतेःस्वतोमात्वमुदाहरिष्यन् ॥ ननिह्नुवेयेनविनाप्रपंचःसौख्यायकल्पेतनजातुवि
द्वन्॥८९॥ तथागताक्रांतमभूदशेषंसवैदिकोध्वाविरलीबभूव ॥ परीक्ष्यतेषांविजयायमार्गंप्रावर्तिसंत्रातुमनाः
पुराणं ॥ ९० ॥ सशिष्यसंघाःप्रविशंतिराज्ञांगेहंतदादिस्ववशेविधातुं ॥ राजामदीयोजिरमस्मदीयंतदाद्रियध्वं
नतुवेदमार्गं ॥ ९१ ॥ वेदोप्रमाणंवहुमानवाधात्परस्परव्याहतिवाचकत्वात् ॥ एवंवदंतोविचरंतिलोकेनकाचि
देषांप्रतिपत्तिरासीत् ॥ ९२ ॥ अवादिषंवेदविघातदक्षैस्तान्नाशकंजेतुमवुध्यमानः ॥ तदीयसिद्धांतरहस्यवा
धान्निषेध्यवोधाद्विनिषेध्यवाधः ॥ ९३ ॥ तदातदीयंशरणंप्रपन्नःसिद्धांतमश्रौषमनुद्धतात्मा ॥ अदूदुषद्वैदिकमे
वमार्गंतथागतोजातुकुशाग्रवुद्धिः ॥ ९४ ॥

मार्गंनैवाद्रियध्वंयद्वातत्तस्मादस्मदीयमजिरमस्मदीयशास्त्रविषयमाश्रयध्वंनतुवेदमार्गमितिवदंतोविचरंतीतिपरेणान्वयःअजिरंप्रांगणेचातिवि
षयेदर्दुरेनिलइनिमेदिनी॥९१॥ वेदोऽप्रमाणंवहुमानेनप्रत्यक्षादिप्रमाणेनवाधात्परस्परव्याघातवाचकत्वाच्चेत्येवंवदंतोलोकेविचरंतिस्म एषांसु
गतानांकाचित्प्रतिपत्तिःप्रतिक्रियानासीत् आख्या० ॥ ९२ ॥ वेदविघातदक्षैस्तैरवादिषंवादंकृतवान्परंतुतदीयसिद्धांतरहस्यजलधीन
वुध्यमानस्तान्जेतुंनाशकं हियतोनिषेध्यस्यज्ञानान्निषेध्यस्यवाधोभवतिनान्यथेत्यर्थः उ० ॥ ९३ ॥ तदानींतदीयंशरणंप्रपन्नोऽनुद्धता
त्मातदीयंसिद्धांतमश्रौषंजातुकदाचित्तीक्ष्णवुद्धिःसुगतोवैदिकमेवमार्गमदूदुषत् ॥ ९४ ॥

तदासहसामेऽश्रुबिंदुरपतत्तच्चाश्रुपतनमन्येपार्श्वनिवासिनोऽविदुस्तदाप्रभृत्येवमय्याप्तभावंपरिहृत्यस्थितानांतेषांशंकाविवेश वि० ॥ ९५
दर्शनंशास्त्रं उ० ॥ ९६ ॥ इत्थंसंमंत्र्यकृतनिश्चयास्तेयेचान्येऽहिंसनवादशीलाः विनिपातभीरुंविनिपातात्भयशीलंप्रमत्तंमामुच्चतरात्श्रे
ष्ठसौधाद्व्यपातयन् ॥ ९७ ॥ सौधतलात्पतन्पतन्अरूरुहंपुनःपुनरारूढःयदिश्रुतयःप्रमाणंभवंतितत्तर्ह्यस्मिन्विषमस्थलेपतितःजीवेयंयतःश्रु

तदापतन्मेसहसाश्रुबिंदुस्तच्चाविदुःपार्श्वनिवासिनोन्ये ॥ तदाप्रभृत्येवविवेशशंकामय्याप्तभावंपरिहृत्यतेषां ॥
॥ ९५ ॥ विपक्षपाठीबलवान्द्विजातिःप्रत्याददद्दर्शनमस्मदीयं ॥ उच्चाटनीयःकथमप्युपायैर्नैतादृशःस्यापयि
तुंहियोग्यः ॥ ९६ ॥ संमंत्र्यचेत्थंकृतनिश्चयास्तेयेचापरेहिंसनवादशीलाः ॥ व्यपातयन्नुच्चतरात्प्रमत्तमामग्रसौ
धाद्विनिपातभीरुं ॥ ९७ ॥ पतन्पतन्सौधतलान्यरूरुहंयदिप्रमाणंश्रुतयोभवंति ॥ तज्जीवयेस्मिन्पतितेसमस्थले
मज्जीवनेतच्छ्रुतिमानतागतिः ॥ ९८ ॥ यदीहसंदेहपदप्रयोगाद्व्याजेनशास्त्रश्रवणाच्चहेतोः ॥ ममोच्चदेशात्पततो
व्यनंक्षीत्तदेकचक्षुर्विधिकल्पनासा ॥ ९९ ॥ एकाक्षरस्यापिगुरुःप्रदाताशास्त्रोपदेष्टाकिमुभाषणीयं ॥ अहंहिस
र्वज्ञगुरोरधीत्यप्रत्यादिशेतेनगुरोर्महागः ॥ १०० ॥

तिप्रामाण्यस्यमज्जीवनेनैवगतिः ॥ ९८ ॥ ॥ इहवेदप्रामाण्येयदीतिसंदेहप्रतिपादस्यप्रयोगाद्व्याजेनकपटेनशास्त्रस्यश्रवणाच्चहेतोरुच्चदेशा
त्पततोममतदेकंचक्षुर्व्यनंक्षीत्किंचसाचक्षुरस्यनाशंगच्छत्वितिविधेर्दैवस्यकल्पना ॥ ९९ ॥ एकाक्षरस्यापिप्रदातागुरुर्भवतिशास्त्रोपदेष्टास
भवतीतिकिमुवक्तव्यंअहंतुसर्वज्ञात्सुगतात्सर्वज्ञःसुगतइत्यमरःगुरोरधीत्यतेनाधीतेनगुरोर्महागःप्रत्यादिशेप्रत्यर्पितवान् ॥ १०० ॥

महापराधमेवाह तदेवमनेनप्रकारेणसुगतादधीत्यतस्यसुगतस्यकुलमेवादौप्राघातयंजैमिनेरुपज्ञाआद्यंज्ञानंयत्रउपज्ञाज्ञानमाद्यंस्यादित्यमरस्तस्मिन्शास्त्रेभिनिविष्टंचेतोयस्यसअहंपरमेश्वरंचनिरास्थंनिरस्तवान् ॥ १॥ अस्योदाहृतस्यदोषद्वयस्ययथोक्तांनिष्कृतिंचिकीर्षुर्हेऽर्हन्आश्रयाशंपावकंप्राविक्षंप्रवेशंकृतवानस्मिआश्रयाशोबृहद्भानुःकृशानुःपावकोनलइत्यमरःतवपादनिरीक्षणस्यनिष्कृतिरूपत्वादेपानिष्कृतिस्तवपादनिरीक्षणेनपुनरुक्तभूताजातासंपन्ना ॥२॥ननुशाबरभाष्यवदस्मद्भाष्येपित्वयावार्तिकंकर्तव्यंस्थितमितिचेत्तत्राह भाष्यंभवताप्रणीतमितिश्रुत्वाहेयोगिन्भवत्प्रणीतेभाष्येवृत्तिविधाययशोऽधिगच्छेयमितिवांच्छापुरास्थितापरंतुसंप्रतितदुक्त्याकिंनिष्फलत्वात्स्मेतिपादपूरणे ॥३॥ आर्याणामर्थेजातमार्याणामर्थसमुदायोयस्मात्तथाभूतमितिवाआर्यजनार्थंजातमितिवा पुनश्चाद्वैतरक्षणायविहितोऽवतारोयेनतथाभूतंभवंतमहंजानामिअतोयदितुषानलप्रवेशात्प्रागेवपापक्षयायममनेत्रमार्गंकृतार्थयेथास्तर्हिहेयतेईदृशंप्रायश्चित्तंनाचरिष्यं वसं० ॥ ४ ॥ अधुनातुप्रायोगुरुद्रोहेश्वरनिरासप्रभवाघशांत्यर्थमात्तदीक्षस्तुषानलंहेआर्यप्राविक्षं ममभाग्यानुदयएवभवद्भाष्यवार्तिकाकरणनिदानमित्याह भाग्यमिति ॥ १०५ ॥

तदेवमित्थंसुगतादधीत्यप्राघातयंतत्कुलमेवपूर्वं॥ जैमिन्युपज्ञेभिनिविष्टचेताःशास्त्रेनिरास्थंपरमेश्वरंच॥ १ ॥
दोषद्वयस्यास्यचिकीर्षुरर्हन्यथोदितांनिष्कृतिमाश्रयाशं ॥ प्राविक्षमेषापुनरुक्तभूताजाताभवत्पादनिरीक्षणेन ॥ २ ॥ भाष्यंप्रणीतंभवतेतियोगिन्नाकर्ण्यतत्रापिविधायवृत्तिं॥ यशोधिगच्छेयमितिस्मवांच्छास्थितापुरासंप्रतिकिंतदुक्त्या ॥ ३ ॥ जानेभवंतमहमार्यजनार्थजातमद्वैतरक्षणकृतेविहितावतारं॥ प्रागेवचेन्नयनवर्त्मकृतार्थयेथाःपापक्षयायवतनेदृशमाचरिष्यं ॥ ४ ॥ प्रायोधुनातदुभयप्रभवाघशांत्यैप्राविक्षमार्यतुषपावकमात्तदीक्षः॥ भाग्यंनमेजनिहिशाबरभाष्यवत्त्वद्भाष्येपिकिंचनविलिख्ययशोधिगंतुं ॥ १०५ ॥

एवंभट्टपादोक्तमुदाहृत्यश्रीशंकरवाक्यमुदाहर्तुमाह इत्येवमुक्तवंतंभट्टकुमारिलमीषद्विकस्वरमुखकमलमथतदुक्त्यनंतरंमौनीश्रीशंकरउवाच
यद्यप्यन्येनजानंतितथापिश्रुत्यर्थात्कर्मणोविमुखान्सुगतान्विहंतुंभुविजातंस्कंदंभवंतमहंतुजाने ॥ ६ ॥ दोषद्वयनिवृत्तयेतुषानलंप्रविक्षमि
त्युक्तंतत्राह संभावनेति तथापिसज्जनानांशिक्षणायसत्यव्रतंचरसियतएवमतःकमंडलुजलकणसिंचनेनभवंतमुज्जीवयामिननुकिमर्थंजीवय
सीतिचेत्तत्राहांगहेभट्टकुमारिलमेभाष्येपिभव्यंवार्तिकंरचय ॥ ७ ॥ इत्युचिवांसंदेवशिरोमणिपंडितावतंसंवाब्रह्मविदांमध्येश्रेष्ठतमंशांतिध

इत्यूचिवांसमथभट्टकुमारिलंतमीषद्विकस्वरमुखांबुजमाहमौनी ॥ श्रुत्यर्थकर्मविमुखान्सुगतान्नि
हंतुंजातंगुहंभुविभवंतमहंतुजाने ॥ ६ ॥ संभावनापिभवतोनहिपातकस्यसत्यंव्रतंचरसिसज्जन
शिक्षणाय ॥ उज्जीवयामिकरकांबुकणोक्षणेनभाष्येपिमेरचयवार्तिकमंगभव्यं ॥ ७ ॥ इत्यूचिवां
संविबुधावतंसंसधर्मविद्ब्रह्मविदांवरेण्यं ॥ विद्याधनःशांतिधनाग्रगण्यंसप्रश्रयंवाचमुवाचभूयः ॥
॥ ८ ॥ नार्हामिशुद्धमपिलोकविरुद्धकृत्यंकर्तुंमयीड्यमहितोक्तिरियंतवार्हा ॥ आजानतोतिकुटिले
पिजनेमहांतस्त्वारोपयंतिहिगुणंधनुपीवशूराः ॥ ९ ॥

नेषुयतिष्वग्रेगणनीयंश्रीशंकरंधर्मज्ञोविद्याधनःसभट्टपादःसप्रश्रयंयथातथावाचंपुनरुवाच उ० ॥ ८ ॥ यदुक्तंश्रुत्यर्थेत्यादितत्राह नेति
शुद्धमपिलोकविरुद्धंकृत्यंकर्तुंयोग्योनभवामि हेस्तुत्यमय्यतिक्षुद्रेपीयंमहितोक्तिस्तवयोग्याआजानतःस्वभावतोतिकुटिलेपिजनेमहांतस्तुगुण
मारोपयंति तत्रदृष्टांतोयथाजानतोतिकुटिलेपिधनुषिशूरागुणंज्यामारोपयंतितद्वत् व० ॥ ९ ॥

हेशंकरयद्यपिचिरकालंमृतस्यापिदयालक्षणोर्मिव्याप्तदृष्टिपातैःशंकरेत्याद्येकंवापदं संजीवनायत्वंशक्तोसि तथाप्यधुनारब्धंवेदोक्तमेतद्व्रतंत्य 
जन्सतामविनिंद्योनभवितास्मिएतज्ज्ञातुंयोग्योसीतिज्ञापनायसंबोधयतिहेबुधेति ॥ १० ॥ किंचसमस्तभूतानिसंहृत्यपुनर्यथावत्स्रष्टुंसमर्थ
स्यतवनैतच्चित्रमित्याह जानइति इंद्र॰ ॥ ११ ॥ यद्यप्येवंतथापिहेयतिराजसंकल्पितमिदंव्रताग्र्यंत्यक्तुंनाभ्युत्सहे यद्यहमवश्यमनुग्राह्यस्त



संजीवनायचिरकालमृतस्यचत्वंशक्तोसिशंकरदयोर्मिलदृष्टिपातैः ॥ आरब्धमेतदधुनाव्रतमागमोक्तंमुंच
न्सतांनभवितास्मिबुधाविनिंद्यः ॥ १० ॥ जानेतवाहंभगवन्प्रभावंसंहृत्यभूतानिपुनर्यथावत् ॥ स्रष्टुंसमर्थो
सितथाविधोमामुज्जीवयेश्चेदिहकिंविचित्रं ॥ ११ ॥ नाभ्युत्सहेकिंतुयतिक्षितींद्रसंकल्पितंहातुमिदंव्रताग्र्यं ॥
तत्तारकंदेशिकवर्यमत्यमादिश्यतद्ब्रह्मकृतार्थयेथाः ॥ १२ ॥ अयंचपंथायदितेप्रकाश्यःसुधीश्वरोमंडनमिश्र
शर्मा ॥ दिगंतविश्रांतयशाविजेयोयस्मिन्जितेसर्वमिदंजितंस्यात् ॥ १३ ॥ सदावदन्योगपदंचसांप्रतंसवि
श्वरूपःप्रथितोमहीतले ॥ महागृहीवैदिककर्मतत्परःप्रवृत्तिशास्त्रेनिरतःसुकर्मतः ॥ १४ ॥ निवृत्तिशास्त्रेनकृ
तादरःस्वयंकेनाप्युपायेनवशंसनीयतां ॥ वशंगतेतत्रभवेन्मनोरथस्तदंतिकंगच्छतुमाचिरंभवान् ॥ १५ ॥



र्हीदंविधेहीत्याह तत्तस्मात्हेदेशिकतत्तारकंकाश्यामुपदिश्यमानंब्रह्मम्ह्यमुपदिश्यकृतार्थयेथाः ॥ १२ ॥ अद्वैतमार्गप्रकाशनायमांजेतुमय
मागतइतिविज्ञायाहअयंचेति दिशामंतेविश्रांतंयशोयस्य ॥ १३ ॥ सदायोगस्यकर्मयोगस्यपदंसांप्रतंन्याय्यंवदन्सविश्वरूपोभूतलेप्रथितः
उ॰ ॥१४॥ किंचनिवृत्तिशास्त्रेनकृतादरःस्वयंतस्मात्समंडनःकेनाप्युपायेनवशंनीयतां तत्रतस्मिन्वशंप्राप्तेभवन्मनोरथोभवेदतस्तत्समीपंशीघ्रं
भवान्गच्छतु उपें॰ ॥ १५ ॥

उंवेकइतिलोकैरभिहितस्यतस्यमंडनस्यवधूरुंवेतिबांधवजनैरभिधीयमानाकुतश्चिद्धेतोर्वाक्सरस्वतीदुर्वाससासुरुषाभिशमाद्वयभारती
जनिप्रादुर्भूता एतेनोंवेकउंवाइतिमंडनसरस्वत्योःप्राकृतंनामकथितमितिबोध्यं व० ॥१६॥ किंचसर्वासुशास्त्रसरणीषुसविश्वरूपोमत्तोऽधिकः
मदाश्रवेषुममशिष्येषुमध्येप्रियतमश्च तस्मात्हेशमधनेंद्रतस्यप्रेयसीमतिशयेनप्रियांसरस्वतींसाक्ष्येविधीयतामिमंविश्वरूपंवादेविजित्यवशगं

उंवेकइत्यभिहितस्यहितस्यलोकैरुंवेतिबांधवजनैरभिधीयमाना॥ हेतोःकुतश्चिदिहवाक्सुरुषाभि
शमाद्दुर्वाससाजनिवधूर्द्वयभारतीति॥१६॥सर्वासुशास्त्रसरणीषुसविश्वरूपोमत्तोधिकःप्रियतमश्च
मदाश्रवेषु ॥ तत्प्रेयसींशमधनेंद्रविधायसाक्ष्येवादेविजित्यतमिमंवशगंविधेहि ॥ १७ ॥ तेनैव
तावककृतिष्वपिवार्तिकानिकर्मंदिवर्यतमकारयमाविलंबं ॥ त्वंविश्वनाथइवमेसमयेसमागास्त
त्तारकंसमुपदिश्यकृतार्थयेथाः ॥ १८ ॥ निर्व्याजकारुण्यमुहूर्तमात्रमत्रत्वयाभाव्यमहंतुयावत् ॥
योगींद्रहृत्पंकजभाग्यमेतत्स्वजाम्यसूनूरूपमवेक्ष्यमाणः॥ १९॥

विधेहि ॥ १७॥ तेनैवतावककृतिष्वपिवार्तिकानिकारयहेपरिव्राट्श्रेष्ठतम भिक्षुःपरिव्राट्कर्मंदीत्यमरः विलंबंमाकुरुत्वंविश्वनाथइवमेस
मयेसमागास्तत्तस्मात्तारकंसम्यगुपदिश्यकृतार्थयेथाः व० ॥ १८ ॥ हेनिर्व्याजकारुण्यमुहूर्तमात्रंत्वयाऽत्रभवितव्यमहंतुयावत्योगींद्रहृ
त्कमलभाग्यमेतत्त्वरूपमवेक्षमाणोऽसूंत्स्सजामि उ० ॥ १९ ॥

इत्यूचिवांसमिमंभट्टपादंसंदीप्तसुखप्रकाशात्मकब्रह्मोपदिश्यबहिरंतरपास्तमोहंकुर्वन्दयानिधिरसौश्रीशंकरोऽभ्रमार्गादाकाशमार्गान्मंडनस्य निलयंगंतुमियेषेच्छतिस्म व० ॥१२०॥ अथोपदेशानंतरमादरादसौभट्टपादोगिरमुपसंहृत्यशमधनानांयतिवराणामधीशंबोधितमद्वैततत्त्वंय



इत्यूचिवांसमिममिद्धसुखप्रकाशंब्रह्मोपदिश्यबहिरंतरपास्तमोहं॥ तन्वन्दयानिधिरसौतरसाभ्रमा
र्गात्श्रीमंडनस्यनिलयंसइयेषगंतुं॥ २०॥ अथगिरमुपसंहृत्यादराद्भट्टपादःशमधनपतिनासौबो
धिताद्वैततत्त्वः॥ प्रशमितममतस्संस्तत्प्रसादेनसद्योविदलदखिलबंधोवैष्णवंधामपेदे ॥ १२१ ॥ इ
तिश्रीमाधवीयेतद्व्याससंदर्शचित्रगः॥संक्षेपशंकरजयेसर्गोसौसप्तमोभवत्॥ ७॥ मूलसंख्या॥१८०॥

स्मैशमितामममतायेनसतथाभूतस्सन्नूतस्यश्रीशंकरस्यप्रसादेनसद्योदलिताखिलबंधोवैष्णवंधामप्रापेत्यर्थः मालिनीवृत्तं ॥ १२१ ॥ इतिश्री मत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेश्रीशंकराचार्यविजयडिंडिमेसप्तमः सर्गः ॥ ७ ॥ टी० सं० ॥ ३३५ ॥

इति सप्तमःसर्गःसमाप्तः

श्री०॥नमःशर्वायशांतायविमुक्तायजटादिभिः॥निरस्तवाममार्गाययतींद्रायकपालवे॥एवंव्यासदर्शनादिकंनिरूप्याचार्यमंडनसंवादंसपरिकरंवर्णयितुमुपक्रमते अथभट्टपादंब्रह्मोपदिश्यतस्यवैष्णवपदप्राप्तेरनंतरंसभगवान्योगींद्रःमंडनंपंडितंजेतुंशीघ्रंप्रयागात्तीर्थराजात्प्रतस्थेप्रस्थानंकृतवान् ततःआकाशमार्गेणगच्छन्समंडनेनमंडितामलंकृतांमाहिष्मतींपुरंतन्नामकंनगरंआलुलोकेआसमंतादवलोकितवान् उपें० ॥ ॥१॥ रत्नविचित्रवप्रांविचित्ररत्नैर्हीरकादिभिर्विचित्राःवप्राअट्टालिकायस्यांतांमाहिष्मतींविलोक्यविस्मितंविस्मयंप्राप्तंमानसंमनोयस्य

श्री०॥ अथाष्टमःसर्गः ॥ अथप्रतस्थेभगवान्प्रयागात्तन्मंडनंपंडितमाशुजेतुं॥ गच्छन्खस्त्यापुरमालुलोकेमाहिष्मतींमंडनमंडितांसः॥ १ ॥अवातरद्रत्नविचित्रवप्रांविलोक्यतांविस्मितमानसोसौ॥ पुराणवत्पुष्करवर्तनीतःपुरोपकंठस्थवनेमनोज्ञे ॥ २ ॥ प्रफुल्लराजीववनेविहारीतरंगरिंगत्कणशीकरार्द्रः॥ रेवामरुत्कंपितसालमालःश्रमापहृद्भाष्यकृतंसिषेवे ॥ ३॥

सअसौयोगींद्रःमनोज्ञेऽतिरम्येपुरोपकंठस्थवनेपुरसमीपस्थवनेपुराणवत्पुराणःपुराणपुरुषोविष्णुस्तद्वत्पुष्करवर्त्तनीतःआकाशमार्गादवातरदवतीर्णः व्योमपुष्करमंबरं सरणिःपद्धतिःपद्यावर्त्तन्येकपदीतिचेत्यमरः उपेंद्र० ॥ २ ॥ तस्मिन्प्रफुल्लकमलवनेविहारीविहरणशीलस्तरंगेभ्योरिंगंतोनिःसरंतोयेकणशीकराअतिसूक्ष्मांबुकणाः कणोतिसूक्ष्मेधानांशे शीकरंशवलेवातस्तांबुकणयोःपुमानितिमेदिनी तैरार्द्रोरेवामरुत्कंपिताःसालानांवृक्षविशेषाणांमालाःपंक्तयोयेनसश्रमापहारकः भाष्यकारंसिषेवेसेवितवान् उ० ॥ ३ ॥

तस्मिन्वनेसश्रीशंकरोविश्रम्यविश्रामंकृत्वाकृतमह्निकंसंर्थ्यायेनतथाभूतःसन्मध्याह्नकालेयत्रसूर्यआयातितत्स्वस्तिकंसिद्धांतशिरोमण्यादौ प्रसिद्धंतदारोहणशालिनिइनेसूर्येसत्यसौमंडनपंडितस्यौकोगृहंप्रतिगच्छन्सतदीयामंडनपंडितस्यदासीःमार्गेददर्श इंद्र० ॥ ४ ॥ दृष्ट्वाच

॥ १ ॥ किंकृतवानित्यपेक्षायामाहकुत्रेति मंडनपंडितस्यालयोवासस्थानंकुत्रेत्येतास्तस्यदासीःजलानयनार्थंगंत्रीःगमनकर्त्रीःसभाष्यकारःपप्रच्छ ताश्चापिअद्भुतश्चासौशंकरश्चेत्यद्भुतशंकरस्तमद्भुतत्वंचशंकरत्वेसतिएकवक्त्रद्विनेत्रादिमत्त्वं यद्वाऽद्भुतमनिर्वाच्यंशंसुखंकरोतीतितथातंदृष्ट्वाऽ

तस्मिन्सविश्रम्यकृताह्निकःसन्सस्वस्तिकारोहणशालिनीने ॥ गच्छन्नसौमंडनपंडितौकोदासीस्त

दीयाःसददर्शमार्गे ॥ ४ ॥ कुत्रालयोमंडनपंडितस्येत्येताःसपप्रच्छजलायगंत्रीः ॥ ताश्चापिदृष्ट्वा

द्भुतशंकरंतंसंतोषवत्योददुरुत्तरंस्म ॥ ५ ॥ स्वतःप्रमाणंपरतःप्रमाणंकीरांगनायत्रगिरंगिरंति ॥

द्वारस्थनीडांतरसन्निरुद्धाजानीहितन्मंडनपंडितौकः ॥ ६ ॥ फलप्रदंकर्मफलप्रदोजःकीरांगनायत्र

गिरंगिरंति ॥ द्वारस्थनीडांतरसन्निरुद्धाजानीहितन्मंडनपंडितौकः ॥ ७ ॥

वलोक्यसंतोषवत्यउत्तरंप्रतिवचनंददुः अपिशब्देनतादृशशंकरदर्शनंनिकृष्टानामपिसुखजनकमासीत्किमुतोत्कृष्टानामितिसूचितं ॥ ५ ॥

नाम्निर्दत्तमुत्तरमुदाहरतित्रिभिः स्वतइति वेदवाक्यंस्वतःप्रमाणमुतपरतःप्रमाणमितिविचारात्मिकांगिरंवाचंयत्रमंडनालयेकीराणांशुकादिप ॥ १

क्षिणामंगनाअपिद्वारस्थस्यनीडस्यपंजरादिरूपस्यांतरेमध्येसम्यक्निरुद्धाःगिरंतिउच्चारयंतितत्तादृशंमंडनपंडितस्यौकःगृहंजानीहि ॥ ६ ॥

सुखदुःखादिफलप्रदंकर्मकिंवाऽजोजन्मशून्यःसर्वशक्तिःसर्वज्ञःपरमात्मेतिविचारात्मिकांसमानमन्यत् ॥ ७ ॥

किंचजगत्ध्रुवंप्रवाहरूपेणनित्यंनकदाप्यनीदृशंस्यात् किंवाऽध्रुवमनित्यंस्यादितिविचारात्मिकामित्यर्थः ॥८॥ ताभिर्दत्तंप्रतिवचनंश्रुत्वाभगवा-
न्भाष्यकारोयत्कृतवांस्तदाह पीत्वेति तासांदासीनामुक्तीर्वचनानिकर्णपुटेनपीत्वाऽवधार्यतस्यमंडनस्यगेहाद्बहिर्गत्वाकवाटैर्गुप्तंरक्षितंदत्त
कवाटंदुर्निवेशंदुर्घटःप्रवेशोयस्मिन्तादृशंतस्यसद्मभवनमवलोक्यसयोगींद्रःयोगशक्त्याव्योमाध्वनाआकाशमार्गेणांगणांतश्चत्वरमध्येऽवा
तरत् ॥ ९ ॥ ततश्चयद्वृत्तंतदाह तदेति तदातस्मिन्नवतरणकालेसयोगींद्रःभूतलमंडनस्यभूलोकालंकारस्यमंडनस्यनिवेशनंवासस्थानंसमग्रं

जगत्ध्रुवंस्याज्जगदध्रुवंस्यात्कीरांगनायत्रगिरंगिरंति ॥ द्वारस्थनीडांतरसन्निरुद्धाजानीहितन्मंडनपंडि
तौकः॥८॥ पीत्वातदुक्तीरथतस्यगेहाद्गत्वाबहिःसद्मकवाटगुप्तं ॥ दुर्वेशमालोच्यसयोगशक्त्याव्योमा
ध्वनाऽवातरदंगणांतः ॥९॥ तदासलेखेंद्रनिकेतनाभंस्फुरन्मरुच्चंचलकेतनाभं ॥ समग्रमालोकतमंडन-
स्यनिवेशनंभूतलमंडनस्य ॥ १० ॥ सौधाग्रसंछन्ननभोवकाशंप्रविश्यतत्प्राप्यकवेःसकाशं ॥ वि
द्याविशेषात्तयशःप्रकाशंददर्शतंपद्मजसन्निकाशं॥ ११ ॥

आलोकतदृष्टवान् निवेशनंविशिनष्टि लेखाःदेवाःलेखाअदितिनंदनाइत्यमरस्तेषामिंद्रस्ययन्निकेतनंगृहंतस्याभाकांतिरिवकांतिर्यस्यतत्दे
वेंद्रगृहतुल्यमित्यर्थःस्फुरतामरुतावायुनाचंचलस्यकेतनस्यकेतोराभायस्मिंस्तत्केतनंतुनिमंत्रणे गृहेकेतौचकृत्येचेतिमेदिनी ॥ १० ॥ सौ
धस्यप्रासादस्याग्रेणापभागेनसंछन्नंनभस्तदात्मकोवकाशोयस्मिन्तत्सद्मप्रविश्यकवेःमंडनस्यसकाशंसमीपंप्राप्यतंकविंददर्श कविंविशि
नष्टि विद्यायाविशेषात्सर्वतआधिक्यादात्तःप्राप्तोयशसःप्रकाशोयंतंपद्मजेनब्रह्मणासमं आ० ॥ ११ ॥

पुनस्तंविशिनष्टि सत्यवत्यास्तनूजमात्मजंव्यासंजैमिनिनासहवर्त्तमानंतपोनिधानंतपोमाहात्म्येनैवश्राद्धविधौयथाविधिनिमंत्र्यतयोर्व्यासजैं
मिन्योःपादकमलान्यवनेजयंतंप्रक्षालयंतं उ० ॥ १२ ॥ एतादृशंमंडनंदृष्ट्वायत्कृतवान्तदाह तत्रतस्मिन्मंडनगृहेंबराद्राकाशादवतीर्य
व्यासंजैमिनिचैषोयोगिश्रेष्ठोयथायोग्यंसमागम्यताभ्यांचोभाभ्यांसहर्षंयथास्यात्तथाभिनंदितोऽभूत् इं० ॥ १३ ॥ अथानंतरंसःमंडनः
आकाशमार्गादवतीर्णमुन्योर्व्यासजैमिन्योरंतिकेसमीपेस्थितंज्ञानमेवशिखाउपवीतंचास्यास्तीतितंशिखोपवीतविवर्जितमितियावत् असौ

तपोमहिम्नैवतपोनिधानंसजैमिनिंसत्यवतीतनूजं ॥ यथाविधिश्राद्धविधौनिमंत्र्यतत्पादपद्मान्यवने
जयंतं ॥ १२ ॥ तत्रांतरिक्षादवतीर्ययोगिवर्यःसमागम्ययथार्हमेषः ॥ द्वैपायनंजैमिनिमप्युभाभ्यांता
भ्यांसहर्षंप्रतिनंदितोभूत् ॥ १३ ॥ अथद्युमार्गादवतीर्णमंतिकेमुन्योःस्थितंज्ञानशिखोपवीतिनं ॥ सं
न्यास्यसावित्यवगत्यसोभवत्प्रवृत्तिशास्त्रैकरतोपिकोपनः ॥ १४ ॥ तदातिरुष्टस्यगृहाश्रमेशितुर्यती
श्वरस्यापिकुतूहलंभृतः ॥ क्रमात्किलैवंबुधशस्तयोस्तयोःप्रश्नोत्तराण्यासुरथोत्तरोत्तरं ॥ १५ ॥

संन्यासीत्यवगत्यबुध्वाप्रवृत्तिशास्त्रैकरतोपिकोपनःकोपयुक्तोऽभवत् अक्रोधनैःशौचपरैःसततंब्रह्मचारिभिःभवितव्यंभवद्भिश्चमयाचश्राद्धक
र्मणीत्यादिप्रवृत्तिशास्त्रेणश्राद्धादिकर्मणिकोपस्यनिषिद्धत्वात्तदभिरतत्वेनकोपायोग्योपीत्यपिशब्दार्थः ॥ उ० ॥ १४ ॥ तदातस्मिन्का
लेगृहस्थाश्रमस्येशितुरीश्वरस्यमंडनस्यातिक्रुद्धस्ययतीश्वरस्यचकोपरहितस्यापिकुतूहलंकौतुकंभृतःधारयतःएवंकिलवक्ष्यमाणप्रकारेणबुध
श्रेष्ठयोस्तयोरथक्रमेणोत्तरोत्तरंप्रश्नोत्तराणिआसुर्बभूवुः वंश० ॥ १५ ॥

प्रश्नोत्तराण्युदाहरन्नादौमंडनकर्तृकंप्रश्नमुदाहरति कुतइति मुंडीकुतःगृहद्वाराणांकवाटैःपिहितत्वात्मुंडीश्राद्धकर्मणिद्रष्टुमयाश्योभवा नमार्गेणप्रविष्टः एवंमंडनोक्तंश्रुत्वातद्वचनस्याकिंपर्यंतंभवान्मुंडीत्यर्थंप्रकल्प्याह भगवान् आगलात्गलपर्यंतंमुंडीमत्प्रश्नार्थएतेननबुद्धइत्य वगत्यमंडनआह पंथाःमार्गस्तेतवमयापृच्छ्यतेनतुकिंपर्यंतंभवान्मुंडीतिएवमुक्तस्तद्वचनस्यतवपंथानंप्रतिमयाप्रश्नःकृतइत्यर्थंप्रकल्प्याह भगवान् किमाह पंथास्त्वयापृष्टः पंथास्त्वांप्रतिकिमाहकिमुक्तवान् एवंविपरीतंश्रुत्वाकुपितःसन्मंडनआह त्वन्मातेति मयापृष्टःपं थास्त्वन्मातामुंडाइत्याह एवमापृष्टोभगवानुवाच तथैवेति त्वयापृष्टेनपथात्वांप्रतित्वन्मातामुंडेतियदुक्तंतत्तथैवहियस्मात्पंथानंप्रतित्वम पृच्छस्त्वांप्रष्टारंप्रत्येवपंथास्त्वन्मातामुंडेत्याह हेमंडनेतिसंबोधयन्पंडितशिरोमणिस्त्वमिदंज्ञातुंयोग्योसीतिसूचयति तस्मात्त्वन्मातेत्यत्रायंत्व

**कुतोमुंड्यागलान्मुंडीपंथास्तेपृच्छ्यतेमया ॥ किमाहपंथास्त्वन्मातामुंडेत्याहतथैवहि ॥ १६ ॥ पंथानंत्वमपृच्छस्त्वांपंथाःप्रत्याहमंडन ॥ त्वन्मातेत्यत्रशब्दोयंनमांब्रूयादपृच्छकं ॥ १७ ॥ अहोपीताकिमुसुरानैवश्वेतायतःस्मर ॥ किंत्वंजानासितद्वर्णमहंवर्णंभवान्रसं ॥ १८ ॥**

च्छब्दःमामपृच्छकंनब्रूयात्मद्वाचकोनभवतीत्यर्थः वक्रोक्तिश्लेषकाकुभ्यामपरार्थत्वकल्पनं ॥ १६ ॥ १७ ॥ एवमुक्तोऽतिरुष्टःसन्मं डनआहाहोकिमुसुरामदिरापीताकिंत्वयामद्यपानंकृतंअन्यथाविपरीतभाषणंकथंस्यात् एवमाकृष्टोभगवान्तद्वचनस्यसुराकिमुपीतापीतव र्णेत्यर्थंप्रकल्प्याहनैवेतिसुरापीतापीतवर्णानैवभवति यतःकारणात्श्वेताश्वेतवर्णास्त्वानुभूतमप्यर्थंकुतोनस्मरसीत्याशयेनाह स्मरस्मरणं कुरुसुरेतिकचित्पाठः एवमुक्तोमंडनआह किमिति तस्याःसुरायावर्णंत्वंयतिःकिंजानासितद्वर्णज्ञानंयतेस्तवात्यंतानुचितमित्यर्थः एवमाक्षि प्तोभगवानुवाचाहंवर्णंजानामिभवांस्तुरसंजानातितथाचतद्वर्णज्ञानवानप्यहंनप्रत्यवायीत्वंतुतद्रसानुभवितात्प्रत्यवायार्हः नसुरांपिबेदितिनि षेधेनपानस्यप्रत्यवायजनकत्वबोधनान्नतुतद्वर्णज्ञानस्येतिभावः ॥ १८ ॥

एवंविपरीतानिवचनानिश्रुत्वाऽतिरुष्टोसेडनआह मत्तइति कलंजंविषलिप्तबाणेनहतस्यमृगस्यमांसं कलंजंनभक्षयेदितिवाक्येननिषिद्धमशि
तुंभोक्तुंशीलमस्येतिसकलंजाशस्तद्भक्षणशीलोमत्तउन्मत्तोजातः यतोभवान्विपरीतानिभाषते एवमत्याकुष्टोभगवांस्तद्वाक्यस्यमत्तोम
त्सकाशाज्जातःकलंजाशीविपरीतानिभाषतइत्यर्थंप्रकल्प्याह सत्यमिति यथापितात्वंकलंजाशीविपरीतानिभाषसेतथात्वत्तस्त्वत्सकाशाज्जा
तउत्पन्नःकलंजभुक्विपरीतानिब्रवीतिभाषतइतिसत्यंयथार्थमेवेत्यर्थः ॥ १९ ॥ एवंपुनःपुनर्विपरीतंभगवद्वाक्यंश्रुत्वाप्रकारांतरेणाक्षिपति
कंथामिति गर्दभेनापिदुर्वहांवोढुमशक्यांकंथांवहसितथाचातिभारभूतांकंथांवोढुंसमर्थस्यतेनवशिखायज्ञोपवीताभ्यांकोभारोभविष्यतिन

मत्तोजातःकलंजाशीविपरीतानिभाषते ॥ सत्यंब्रवीतिपितवत्त्वत्तोजातःकलंजभुक् ॥ १९ ॥ कंथांवहसि
दुर्बुद्धेगर्दभेनापिदुर्वहां ॥ शिखायज्ञोपवीताभ्यांकस्तेभारोभविष्यति ॥ २० ॥ कंथांवहामिदुर्बुद्धेतवपित्रा
पिदुर्भरां ॥ शिखायज्ञोपवीताभ्यांश्रुतेर्भारोभविष्यति ॥ २१ ॥

कोपीत्यर्थः स्वल्पभारभयादनल्पभारवाहकस्यतवाहोदुर्बुद्धितेतिसूचयन्संबोधयतिहेदुर्बुद्धेइति ॥ २० ॥ एवमाक्षिप्तोभगवानपिकौ
तुकादाक्षेपंप्रतिक्षिपन्शिखायज्ञोपवीताभ्यामित्यादेरुत्तरमाहकंथामितितवपित्रापिदुर्भरांस्त्रीभिस्तिरस्कृतेनपुनश्चतास्वेवप्रीतिमतागर्दभेनत
वपित्रापिदुर्वहांकंथांशिखायज्ञोपवीतेविहायवहामियतस्ताभ्यांपरीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वेदमायात् यदहरेवविरजेत्तदहरेवप्र
व्रजेत्ब्रह्मचर्याद्वागृहाद्वावनाद्वासंन्यस्यश्रवणंकुर्यात् नकर्मणानप्रजयाधनेनत्यागेनैकेअमृतत्वमानशुः अथपरिव्राड्विवर्णवासामुंडोऽपरिग्र
हइत्यादिश्रुतेर्भारोभविष्यति सचवैदिकेनावश्यमपाकरणीयः पाठांतरेतुविधिनिषेधात्मिकाश्रुतिर्भारोभविष्यतीत्यर्थः अतस्तद्भारविमोक्षणाय
कंथावाहकस्यममसुबुद्धित्वमविदित्वादुर्बुद्धित्वंवदतस्तवाहोदुर्बुद्धितेतिध्वनयन्संबोधयति हेदुर्बुद्धेइति ॥ २१ ॥

संन्यासंविनाब्रह्मनिष्ठतानसिध्यतीतिशिखायज्ञोपवीतमयात्यक्तेइतिबोधकंभगवद्वाक्यंश्रुत्वामंडनआह त्यक्त्वेतिस्वांस्वीयांपाणिगृहीतीम् यांपरिरक्षणेऽशक्त्याविहायशिष्यपुस्तकभारेच्छोस्त्वयाब्रह्मनिष्ठतासाव्याख्याताःहोलोकेप्रथिता ॥ २२ ॥ एवमाक्षिप्तस्तंप्रत्याक्षिपतिगुरुशुश्रूषणेआलस्यात्गुरोःकुलात्समावर्त्त्यसमावर्त्तनंविधायस्त्रियःशुश्रूषमाणस्यतवयाकर्मनिष्ठतासाव्याख्याता ॥२३॥ मंडनआह योषितांस्त्रीणांगर्भेस्थितोसिताभिरेवविवर्धितस्त्वंताएवकथंनिंदसील्हहोहेमूर्खतादृशस्त्रीकृतोपकारनाशकस्यतवकृतघ्नता ॥२४॥ भगवानुवाच यासां

त्यक्त्वापाणिगृहीतींस्वामशक्त्यापरिरक्षणे॥शिष्यपुस्तकभारेच्छोर्व्याख्याताब्रह्मनिष्ठता ॥ २२ ॥ गुरुशुश्रूषणालस्यात्समावर्त्यगुरोःकुलात् ॥ स्त्रियःशुश्रूषमाणस्यव्याख्याताकर्मनिष्ठता ॥ २३ ॥ स्थितोसियोपितांगर्भेताभिरेवविवर्धितः ॥ अहोकृतघ्नतामूर्खकथंताएवनिंदसि ॥ २४ ॥ यासांस्तन्यंत्वयापीतंयासांजातोसियोनितः ॥ तासुमूर्खतमस्त्रीपुपशुवद्रमसेकथं ॥ २५ ॥ वीरहत्यामवाप्नोसिवह्नीनुद्वास्ययत्नतः ॥ आत्महत्यामवाप्तस्त्वमविदित्वापरंपदं ॥ २६ ॥

योषितांस्तन्यंस्तनभवंपयस्त्वयापीतंयासांचयोनितोजातोसितासुस्त्रीपुहेमूर्खतमपशुवत्कथंरमसे ॥ २५ ॥ मंडनआहवीरेति गार्हपत्याहवनीयंदक्षिणाख्यानवह्नीन्यत्नतःप्रयत्नेनोद्वास्यवीरस्येंद्रस्यहत्यामवाप्नोसितथाचश्रुतिःवीरहावाएषदेवानांयोऽग्नीनुद्वासयतिएवमाकुष्टोभगवानुवाच परंपदंपरमात्मस्वरूपमविदित्वाआत्महत्यामवाप्तःप्राप्तःअसन्नेवसभवत्यसद्ब्रह्मेतिचेद्वेद असूर्यानामतेलोकाअंधेनतमसावृताः तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाः अन्यथासंतमात्मानंयोन्यथाप्रतिपद्यते किंतेननकृतंपापंचौरेणात्मापहारिणाइत्यादिश्रुतिस्मृतिभ्यः ॥२६॥

एवंवाक्यचातुर्येणप्रतिबद्धोमंडनःप्रकारांतरेणाक्षिपति दौवारिकान्द्वारपालान्वंचयित्वाचौरवत्कथमागतः प्रत्याक्षिपतिभगवान् भिक्षुभ्योऽन्नंतेषांभागमदत्वास्तेनवत्कथंभोक्ष्यसे ॥२७॥ एवंप्रत्युत्तरैःपराजितोवक्तुमशक्तःसन्मंडनआह संप्रतिइदानींकर्मकालेऽहंमूर्खेणत्वयासंभाष्योभाषणयोग्योनभवामि एवमुक्तोभगवानुवाच यतौपाठविच्छेदंभंगेनभेदेनविसंधिनाभाषणकर्त्रात्वयाऽहोज्ञानंप्रकटितं ॥२८॥ मंडन आह यतेस्तवभंगेप्रवृत्तस्यममतत्सूचकोयंयतिभंगोनदोषभाक्दोषयुक्तोनभवतीत्यर्थः एवमुक्तोभगवानुवाच यतिभंगेप्रवृत्तस्येत्यत्रयतेःसका

दौवारिकान्वंचयित्वाकथंस्तेनवदागतः॥ भिक्षुभ्योन्नमदत्वात्वंस्तेनवद्भोक्ष्यसेकथं ॥ २७॥ कर्मकालेन संभाष्यअहंमूर्खेणसंप्रति॥ अहोप्रकटितंज्ञानंयतिभंगेनभाषिणा ॥ २८॥ यतिभंगेप्रवृत्तस्ययतिभंगोन दोषभाक्॥ यतिभंगेप्रवृत्तस्यपंचम्यंतंसमस्यतां ॥ २९ ॥ क्वब्रह्मक्वचदुर्मेधाःक्वसंन्यासःक्ववाकलिः॥ स्वाद्वन्नभक्ष्यकामेनवेषोयंयोगिनांधृतः ॥ ३० ॥ क्वस्वर्गःक्वदुराचारःक्वाग्निहोत्रंक्ववाकलिः॥ मन्येमैथुनकामेनवेषोयंकर्मिणांधृतः ॥ ३१ ॥ इत्यादिदुर्वाक्यगणंब्रुवाणेरोपेणसाहंकृतिविश्वरूपे ॥ श्रीशंकरेवक्तरितस्यतस्योत्तरंचकौतूहलतश्चचारु॥ ३२ ॥

शाद्भंगइतिपंचम्यंतंसमस्यतांनतुषष्ठ्यंतं तथाचयतेःसकाशाद्भंगेजयविपर्ययेसतिप्रवृत्तस्ययतिभंगोदोषभाग्नभवतीतित्वद्वाक्यार्थः ॥ २९ ॥ मंडनआहक्वेति ॥ ३० ॥ भगवानुवाचक्वस्वर्गइति ॥ ३१ ॥ उपसंहरति इत्यादिदुर्वाक्यगणंसाहंकृतिविश्वरूपेरोषेणब्रुवाणेश्रीशंकरेचतस्यतस्यवचनस्योत्तरंचारुसुंदरंकौतुकादेवनतुकोपाद्वक्तरिसतितंमंडनंव्यासोऽब्रवीदितिपरेणान्वयःआदिपदेन किंजडोजडतादेहेभौतिकेन चिदात्मनि किमभाग्योसियत्यर्चारहितोऽभाग्यउच्यते किंदूषकोसिपापेनदूषितोजायतेनरः चोरैरुपाश्रितःकिंत्वंसतुषड्वर्गपीडितः अप्रार्थितःकिमर्थंत्वंसमायातोगृहेमम तवभाग्यवशाद्विष्णुरहमत्रसमागतइत्यादिवाक्यजातंयाह्यं उप० ॥ ३२ ॥

सस्मितेनजैमिनिनेक्षितंतंमंडनंव्यासउवाच हेवत्सज्ञातंसाक्षात्कृतमात्मतत्वंयेनतंधुताःविगताःपुत्रदारलोकेषणायस्मात्तंयमिनंप्रतियद्दुर्वचःज
ल्पसिइयमनिंदितात्मनामाचारणाआचारोनभवति इंद्रवज्रा० ॥ ३३ ॥ तथाचानिंदितात्मात्वमेवंकर्तुंयोग्योसीत्याहासौयतिःस्वयमेव
विष्णुरागतःइतिमत्वाज्ञातात्मतत्वंधुतैषणंयमिनमिममाशुशाघ्रंत्वंसंमंत्रय इत्येवंप्रकारेणाश्रवंवचनस्थितं आश्रवोंगीकृतौक्लेशेनान्यंवद्वचन
स्थितइतिमेदिनी ज्ञातविधिप्रतीतंप्रख्यातंतंमंडनंसुध्यग्रणीर्मुनिर्व्यासःसाधुयथास्यात्तथाऽशिषत्शिक्षणंकृतवान् इं० ॥ ३४ ॥ अथव्या

तंमंडनंसस्मितजैमिनीक्षितंव्यासोब्रवीज्जल्पसिवत्सदुर्वचः ॥ आचारणानेयमनिंदितात्मनांज्ञातात्मत
त्वंयमिनंधुतैषणं ॥ ३३ ॥ अभ्यागतोसौस्वयमेवविष्णुरित्येवमत्वाशुनिमंत्रयत्वं ॥ इत्याश्रवंज्ञातविधिं
प्रतीतंसुध्यग्रणीःसाध्वशिषन्मुनिस्तं ॥ ३४ ॥ अथोपसंस्पृश्यजलंसशांतःससंभ्रमंमंडनपंडितोपि ॥ व्यासा
ज्ञयाशास्त्रविदर्चयित्वान्यमंत्रयद्भैक्ष्यकृतेमहर्षिं ॥ ३५ ॥ सचाब्रवीत्सौम्यविवादभिक्षामिच्छन्भवत्सन्नि
धिमागतोस्मि ॥ सान्योन्यशिष्यत्वपणाप्रदेयानास्यादरःप्राक्तनभक्तभैक्ष्ये ॥ ३६ ॥

सत्कृतशिक्षानंतरंसमंडनपंडितोपिशांतःसन्जलंउपसंस्पृश्याचमनादिकंकृत्वाव्यासाज्ञयास्वयंचशास्त्रवित्महर्षिशंकराचार्यमर्चयित्वाभैक्ष्य
कृतेभैक्ष्यार्थंन्यमंत्रयत् उप० ॥ ३५ ॥ एवंभैक्ष्यकृतेमंडनेननिमंत्रितोमहर्षिःकिमुक्तवानित्यतआह सचमहर्षिरब्रवीत् हेसौम्यप्रियदर्शनवि
वादभिक्षामिच्छन्भवत्सन्निधितवसमीपमागतोस्मितस्मात्सावादभिक्षाऽन्योन्यशिष्यत्वपणाप्रदेयाप्राकृतान्नभैक्ष्येतुममादरोनास्ति ॥ ३६ ॥

ननुवादवादांस्त्यजेत्तर्कान्नपक्षंकंचनाश्रयेदितिसंन्यासिनस्तवनिषिद्धांवादभिक्षांकथंयाचसइतिचेत्तत्राह ममेति श्रुतिशिरसांवेदांतानांपंथा
मार्गस्तस्यविस्तृतिविस्तारंविनाममकिंचिदपिध्रुवमीप्सितमजस्रमाप्तुमिष्टंनभवति तथाचस्वख्यात्याद्यर्थवादाद्याश्रयणनिषेधपरमुदाहृतवा
क्यंनतूक्तप्रयोजनवादाश्रयणनिषेधपरं एतादृशवादस्यलोकोपकारकत्वात्सपंथाःभवएवतापःदुःखंसंसारसंबंध्यध्यात्मिकाधिदैविकाधि
भौतिकलक्षणंदुःखमितिवा तस्यहिमद्युतिश्चंद्रः औष्ण्यनिवृत्तिपूर्वकशैत्यजनकहिमद्युतिवत्निखिलदुःखनिवृत्तिपूर्वकपरमानंदप्राप्तिकरइत्य

ममनकिंचिदपिध्रुवमीप्सितंश्रुतिशिरःपथविस्तृतिमंतरा ॥ अवहितेनमखेष्ववधीरितःसभवताभवताप
हिमद्युतिः ॥ ३७ ॥ जगतिसंप्रतितंप्रथयाम्यहंसमभिभूयसमस्तविवादिनं ॥ त्वमपिसंश्रयमेमतमुत्तमंवि
गदवावदवास्मिजितस्त्विति ॥ ३८ ॥ इतियतिप्रवरस्यनिशम्यतद्वचनमर्थवदागतविस्मयः ॥ परिभवे
ननवेनमहायशाःसनिजगौनिजगौरवमास्थितः ॥ ३९ ॥ अपिसहस्रमुखेफणिनामकेनविजितास्त्विति
जातुफणत्ययं ॥ नचविहायमतंश्रुतिसम्मतंमुनिमतेनिपतेत्परिकल्पिते ॥ ४० ॥

र्थः मखेषुयज्ञेष्ववहितेनसावधानेनभवताऽवधीरितस्तिरस्कृतः द्रुत० ॥ ३७ ॥ अतोयोवेदांतमार्गोभवदादिभिरवधीरितस्तमहंसमस्तविवादिनं
सम्यगभिभूयतिरस्कृत्यजगतिप्रथयामिसर्वोत्कृष्टत्वेनप्रकटीकरोमि तस्मात्त्वमपिमेमतंवेदांतसिद्धांतत्वादुत्तमंसंश्रयविगदवायद्वाविवादंकुरु
जितस्त्वितिजितोस्मीत्येवंवावद ॥ ३८ ॥ इतियतिप्रवरस्यतत्नादृश्यमर्थवद्वचोऽर्थयुक्तंवचनंनिशम्यश्रुत्वानवेनापूर्वेणपरिभवेनतिरस्कारेणाग
तविस्मयःप्राप्तविस्मयःसमंडनोनिजगौरवमास्थितोनिजगौजगाद ॥ ३९ ॥ सहस्रमुखेफणिनामकेशेषनाम्नेसत्यप्ययंमंडनोजातुकदाचित्
विजितइतितुनफणतिनैववदत्यतोयंवेदसम्मतंमतंविहायपरिकल्पितेमुनेर्व्यासस्यतववामतेनचनिपतेत् ॥ ४० ॥ ॥ ९

इदंतुमदभिलषितमेवसिद्धमित्याशयेनाहअपिकदाचित्कश्चनकोविदःपंडितउदेष्यतिरसेनसहितासरसासाचासौवादकथाचसापिकदाचित्
भविष्यतिइतिकुतूहलिनोममाहोऽयायंजयमहोजयोत्सवःस्वयमागतः ॥ ४१ ॥ तस्मात्संप्रतिइदानीमावयोर्वादकथाभवतु जायमानयाच
वादकथयाशास्त्रपरिश्रमःफलतु सफलोभवतुबहुकालमारभ्याभिलाषास्पदाऽमृततुल्यावादकथागृहीतुंयोग्यैवेत्याशयेनाह स्वयमेवोपनता
समीपमागतातवनवीनाअननुभूतपूर्वासुधा वसुधाभवनेनभूमिनिवासिनामर्त्येनकिंनगृह्यतेऽपितुगृह्यतएवेत्यर्थः ॥ ४२ ॥ स्वगौरवंद्योत

अपिकदाचिदुदेष्यतिकोविदःसरसवादकथापिभविष्यति ॥ इतिकुतूहलिनोममसर्वदाजयमहो
यमहोस्वयमागतः ॥ ४१ ॥ भवतुसंप्रतिवादकथावयोःफलतुपुष्कलशास्त्रपरिश्रमः ॥ उपनतास्व
यमेवनगृह्यतेनवसुधावसुधावसथेनकिं ॥ ४२ ॥ अयमहंयमहंतुरपिस्वयंशमयितामयितावक
सद्गिरां ॥ सुकलहंकलहंसकलाभृतांदिशसुधांशुसुधामलसत्तनो ॥ ४३ ॥

तयन्नस्वस्मिन्वादात्मकंसुकलहंप्रार्थयते अयमहंमंडनःयमस्यमृत्योर्हंतुरीश्वरस्यापिशमयिता ईश्वरस्ययमहंतृत्वंतुमृत्युर्यस्योपसेवनमितिश्रु
तिसिद्धं निरीश्वरवादिमीमांसकत्वादीश्वरोनास्तीतिस्थापनेनतस्यापिस्वयंशमनकर्त्ता एतादृशेमयिकलहंसानांकलाबिभ्रतीतितास्तासांकल
हंसकलाभृतांतावकसद्गिरांसुकलहंदिशईरय एतस्मिन्नयोग्योर्सीतिसूचयन्संबोधयति सुधांशोश्चंद्रस्ययःसुधामतद्वल्लसंतीद्योत्यमाना
तनूर्यस्यतस्यसंबोधनंहेसुधांशुसुधामलसत्तनोइति ॥ ४३ ॥

ममवाक्चातुर्यमज्ञात्वामयासहवादमिच्छसीतिसूचयन्नाहापितुदुर्हृदयानांस्मयोगर्वएवकाननंवनंतस्यक्षतौछेदनेकठोरकुठारधुरंधराकठोर
कुठारतुल्याअनुगतान्यनुस्यूतान्यखिलदर्शनानिसर्वशास्त्राणिययाऽनुगतान्यनुस्यूतान्यखिलदर्शनानियस्यामितिवा एवंविधाममपटुताचा
तुरीननुनिश्चयेनतेतवश्रवणस्यकर्णस्यांतिकंसमीपंनगतानप्राप्तायतोमत्तोवादभिक्षांयाचसइत्यर्थः ॥ ४४ ॥ किंचात्यल्पमिति हेमुनेयदि
तववाददित्सुतावाददानेच्छुत्वंतर्हिवादभैक्ष्यंप्रकुर्वइत्येतद्भवनाऽत्यल्पमीरितंकथितंयतोऽहंश्रुतायावादवार्त्तातयैवयाचनांविनैववादंकर्त्तुंगतो
घमःप्राप्तोघमः इदंकुतइत्यतआह यतइयंवादवार्त्ताचिरेसिताचिरकालादानुमिष्टा तर्हिकिमितिकेनचिद्वादोनकृतइतितत्राह वदिता

अपितुदुर्हृदयस्मयकाननक्षतिकठोरकुठारधुरंधरा ॥ नपटुताममतेश्रवणांतिकंननुगतानुगताखिलदर्शना ॥ ४४ ॥ अत्यल्पमेतद्भवतेरितंमुनेभैक्ष्यंप्रकुर्वेयदिवाददित्सुता ॥ गतोघमोहंश्रुतवादवार्तयाचिरेप्सितेयंवदितानकश्चन ॥ ४५ ॥ वादंकरिष्यामिनसंदिहेत्रजयाजयौनौवदितानकश्चित् ॥ नकंठशोषैकफलोविवादोमिथोजिगीषूकुरुतस्तुवादं ॥ ४६ ॥ वादेहिवादिप्रतिवादिनौद्वौविपक्षपक्षग्रहणंविधत्तः ॥ कानौप्रतिज्ञावदतोश्चतस्यांकिंमानमिष्टंवदकःस्वभावः ॥ ४७ ॥

वादकर्त्तानकश्चनकोपिनमिलितइत्यर्थः उ० ॥ ४५ ॥ वादंकरिष्यामिअत्रवादकरणेनसंदिहेसंदेहंनकरोमिपरंतुनौआवयोर्जयाजयौ
अयंजयंप्राप्तोऽयंतुपराजयमितिवदिताकश्चिन्मध्यस्थोनभवतिचेन्नेत्याह यतआवयोर्विवादःकंठस्यशोषएवैकंफलंयस्यसकंठशोषैकफ
लोनभवति तुशब्दोऽप्यर्थःहियस्मात्परस्परंविजिगीषूविवादंकुरुतअतइत्यर्थः ॥ ४६ ॥ वादरीतिंदर्शयति हियस्मात्वादेवादिप्रतिवादिनौ
द्वौविपक्षपक्षयोर्ग्रहणंविधत्तःइतिरीतिस्तस्मान्नौआवयोर्विवदतोःप्रतिज्ञाका तस्यांप्रतिज्ञायांमानंप्रमाणंकिमिष्टंस्वभावःस्वीयोभावोऽभि
प्रायः ॥ ४७ ॥

कः पार्ष्णिकः समीपस्थो मध्यस्थः क इति सर्वं वद किंचाहं गृहमेधिसत्तमस्त्वं तु वदतामनुत्तमो भिक्षुराजस्तस्मादावां नौ जयाजयौ [illegible]
ततः परं द्वावपि सुस्मितौ वदाव वादं करवाव ॥ ४८ ॥ एवं प्रागल्भ्यपूर्वकमुक्त्वा नम्रतापूर्वकमाह। आहमतिधन्योस्मि यद्यस्मादार्यपादो भवा
न्मया सह विवादमभ्यर्थयते प्रार्थयते ॥ ४९ ॥ वादकथा श्व एव भविष्यत इति तथैवस्मितयुक्तेन शंकरेण सुष्टूक्ते सति हे मुनींद्रौ तस्य विवादस्य

कः पार्ष्णिकोहं गृहमेधिसत्तमस्त्वं भिक्षुराजो वदतामनुत्तमः ॥ जयाजयौ नौ सपणौ विधीयतां ततः परं साधु
वदाव सुस्मितौ ॥ ४८ ॥ अद्यातिधन्योस्मि यदार्यपादो मया सहाभ्यर्थयते विवादं ॥ भविष्यते वादकथा
परेद्युर्माध्याह्निकं संप्रति कर्म कुर्वां ॥ ४९ ॥ तथेति सूक्ते स्मितशंकरेण भविष्यते वादकथा श्व एव ॥ तत्सा
क्षिभावं व्रजतां मुनींद्रावित्यर्थयद्बादरिजैमिनी सः ॥ ५० ॥ विधाय भार्यां विदुषीं सदस्यां विधीयतां वादक
था सुधींद्र ॥ इत्थं सरस्वत्यवतारतां ज्ञौ तद्धर्मपत्न्यास्तमभाषिपातां ॥ ५१ ॥ अथानुमोद्याभिहितं मुनिभ्यां स
मंडनार्यः प्रकृतं चिकीर्षुः ॥ आनर्च्य दैवोपगतान्मुनींद्रानग्नीनिव त्रीन्मुनिशेखरांस्तान् ॥ ५२ ॥ भुक्तोपविष्ट
स्य मुनित्रयस्य श्रमापनोदाय तदीयशिष्यौ ॥ अतिष्ठतां पार्श्वगतावबुद्धौ सचामरौ वीजनमाचरंतौ ॥ ५३ ॥

साक्षिभावं व्रजतमिति व्यासजैमिनी सः मंडनः प्रार्थयत् ॥ ५० ॥ तस्य मंडनस्य धर्मपत्न्याः सरस्वत्यवतारतां ज्ञौ इयं सरस्वत्यवतारभूतेत्यभिज्ञौ
हे सुधींद्र विदुषीं भार्यां सदस्यां विधाय वादकथा विधीयतामित्यनेन प्रकारेण तं मंडनमभाषिषातामुक्तवंतौ ॥ ५१ ॥ मुनिभ्यां व्यासजैमिनिभ्यां
॥ ५२ ॥ वीजनं चामरसंचालनमाचरंतौ स्थितवंतौ ॥ ५३ ॥

 

ऋग्यजुःसामाख्यवेदत्रय्याअंतउपनिषद्भागस्तेनतत्रवावेद्यमर्थंपरपूरुषार्थभूतंपरमात्मानंजानंतीतित्रय्यंतवेद्यार्थविदोऽमीत्रयोव्यासजैमिनि शंकराःक्रियायाःपूर्वोक्तायाअंतेसूपविष्टाःपरस्परंप्रहृष्टास्तेमुहूर्त्तमात्रंचारुकिमपिअमंत्रयन् ॥ ५४ ॥ द्विजेंद्रस्यमंडनस्यगृहान्निर्गतानांम ध्येद्वौव्यासजैमिनीशीघ्रंअदर्शनंप्रापतुस्तृतीयःशंकराचार्यःरेवायानर्मदायास्तटेरम्याःकदंबाःसालाश्चयस्मिन्तस्मिन्स्थितेदेवालयेऽवस्थि

तवान् ॥ ५५ ॥ इत्येवंप्रकारेणयतिश्रेष्ठः गुरूणामितिबहुवचनमादरार्थं व्यासजैमिन्योर्दशनमितरजनैःप्राप्तुमशक्यंदैवयोगात्प्राप्य

अथक्रियांतेकिलसूपविष्टास्त्रय्यंतवेद्यार्थविदस्त्रयोमी ॥ अमंत्रयंश्चारुपरस्परंतेमुहूर्तमात्रंकिमपिप्रहृ
ष्टाः ॥ ५४ ॥ तेषांद्विजेंद्रगृहान्निर्गतानानदर्शनंजग्मतुरंजसाद्वौ ॥ रेवातटेरम्यकदंबसालेदेवालयेऽवस्थि
तवांस्तृतीयः ॥ ५४ ॥ इतिसंयतिवरेण्योदैवयोगाद्गुरूणामितरजनदुरापंदर्शनंप्राप्यहृष्टः ॥ तदुदित
वचनानिश्रावयन्नात्मशिष्याननयदमृततुल्यान्यात्मवित्तांत्रियामां ॥ ५६ ॥ प्रातःशोणसरोजबांधव
रुचिप्रद्योतितेव्योमनिप्रस्थातःसविधायकर्मनियतंप्रज्ञावतामग्रणीः ॥ साकंशिष्यवरैःप्रपद्यसदनं
सन्मंडितंमांडनंवादायोपविवेशपंडितसभामध्येमुनिर्ध्येयवित् ॥ ५७ ॥

हृष्टस्तैर्गुरुभिरुदितानिवचनान्यमृततुल्यानिस्वशिष्यान्श्रावयन्तांत्रियामांरात्रिमात्मविदनयत् मा० ॥ ५६ ॥ प्रातःकालेशोणस रोजानांरक्तकमलानांबांधवस्यसूर्यस्यरुच्याकांत्याप्रद्योतितेव्योमन्याकाशेसतिसयतिप्रवरःप्रज्ञावतामग्रणीर्नियतंनित्यंकर्मस्नानादिविधाय
शिष्यवरैःसाकंमंडनस्येदंमांडनंसदनंभवनंसद्भिर्मंडितंप्रपद्यप्राप्यध्येयंब्रह्मजानातीतिध्येयविन्मुनिःपंडितसभामध्येवादायउपविवेश पाठां ॥५
तरेतुमंडनंप्रतीतिव्याख्येयं शार्दू० ॥ ५७ ॥

ततःसभामध्येवादार्थंयतेरुपवेशनस्यानंतरं समंडनपंडितोपिसधर्मिणींभार्यांशारदांसरस्वतींनामप्रसिद्धांसमस्तविद्यासुविशारदांकुशलांस
दस्यतायांसभानायकतायांसमादिश्यवादंप्रतिसमुत्सुकःसम्यगुत्कंठितोऽभूत् उपे० ॥ ५८ ॥ साशारदापतिदेवतासुष्टुदंतवतीसदस्यभावेप
त्यानियुक्ताचकाशे तयोर्यतिमंडनयोःश्रुतस्यतारतम्यंविवेक्तुंसमागतासंसदिभारतीव ॥ ५९ ॥ तदनंतरंभगवान्भाष्यकारःकिंकृतवानित्य
पेक्षायामाह तदीयाप्रवृद्धायावादोत्सुकतातांविज्ञायविज्ञःपराभिप्रायज्ञःपरंकारणमवरंकार्यंयद्वापरंभविष्यमवरंभूतंतेपरावरेजानातीति
परावरज्ञः यद्वापरेब्रह्मादयोऽवरेयस्मात्तंपरमात्मानंजानातीतितथापरावरावीशजीवावभेदेनजानातीतिवा अतएतादृशःसयतींद्रःप्रथमंपराव

ततःसमादिश्यसदस्यतायांसधर्मिणींमंडनपंडितोपि ॥ सशारदांनामसमस्तविद्याविशारदांवादसमुत्सुकोभू
त् ॥ ५८ ॥ पत्यानियुक्तापतिदेवतासासदस्यभावेसुदतीचकाशे ॥ तयोर्विवेक्तुंश्रुततारतम्यंसमागतासंसदि
भारतीव ॥ ५९ ॥ प्रवृद्धवादोत्सुकतांतदीयांविज्ञायविज्ञःप्रथमंयतींद्रः ॥ परावरज्ञःसपरावरैक्यपरांप्रतिज्ञाम
करोत्स्वकीयां ॥ ६० ॥ ब्रह्मैकंपरमार्थसच्चिदमलंविश्वप्रपंचात्मनाशुक्तीरूप्यपरात्मनेवबहलाज्ञानावृतंभासते ॥
तज्ज्ञानान्निखिलप्रपंचनिलयास्वात्मव्यवस्थापरंनिर्वाणंजनिमुक्तमभ्युपगतंमानंश्रुतेर्मस्तकं ॥ ६१ ॥

रंयोरीशजीवयोरैक्यपरांस्वकीयांप्रतिज्ञामकरोत् ॥ ६० ॥ तामेवोदाहरति ब्रह्मैकंपरमार्थसच्चिदानंदममलंबहलेननिबिडेनानादिसिद्धेनाज्ञा
नेनावृतंसत्सकलप्रपंचात्मनाभासतेशुक्तिर्यथारूप्यपरात्मनारूप्यात्मकंपरस्वरूपेणभासतेतद्वत् तस्यपरावरैक्यस्यज्ञानान्निखिलप्रपंचस्य
नितरांकारणेनाज्ञानेनसहलयोबाधोयस्यामितिवा एवंविधायास्वात्मनिव्यवस्थाव्यवस्थितिःसापरंनिर्वाणंजनिमुक्तंजन्मविनिर्मुक्तमभ्युपग
तंअस्यांप्रतिज्ञायांप्रमाणंश्रुतेर्मस्तकंवेदांताःप्रमाणमिष्टं तथाचश्रुतेर्मस्तकं एकमेवाद्वितीयं सत्यंज्ञानमनंतं विज्ञानमानंदंब्रह्म सर्वंखल्विदंब्रह्म
वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यं तरतिशोकमात्मवित् तत्रकोमोहःकःशोकएकत्वमनुपश्यतब्रह्मवेदब्रह्मैवभवतिनसपुनरावर्त्तते
नसपुनरावर्त्ततइत्यादि शा० ॥ ६१ ॥

तत्रपणंदर्शयति बाढमिति दृढेप्यस्मज्जयेयदिपराजयभागहंस्यांतर्हिअंगहेमंडनकषायवस्त्रंसंन्यासंपरित्यज्यशुक्लंवस्त्रंवसीयआच्छादनार्थं मंगीकुर्यां क्रियमाणेवादजयाजयफलस्यप्रतिदीपिकाइयमुभयभारतीअस्तु व॰ ॥ ६२ ॥ विश्वरूपोमंडनःस्वमतेप्रतिष्ठायस्यास्तथाभूतप्रतिज्ञां उ॰ ॥ ६२ ॥ मंडनकृतांप्रतिज्ञामुदाहरति वेदांताइति चितिवपुषिचित्स्वरूपेपदेपरमात्मनिवेदांताःप्रमाणंनभवंतितत्रचिद्रूपेसिद्धे वस्तुनिकार्यानन्वितेसंमतेःशक्तेरयोगाद्वेदांतेभ्यःपूर्वोभागःपदचयेनपदसमुदायात्मकेनवाक्येनगमितेबोधितेऽशेषेकार्यवस्तुनिप्रमाणंअभ्युन्न

बाढंजयेयदिपराजयभागहंस्यांसंन्यासमंगपरिहृत्यकषायचैलं ॥ शुक्लंवसीयवसनंद्वयभारतीयंवादेजयाजयफलप्रतिदीपिकास्तु॥ ६२ ॥ इत्थंप्रतिज्ञांकृतवत्युदारांश्रीशंकरेभिक्षुवरेस्वकीयां ॥ सविश्वरूपोगृहमेधिवर्यश्चक्रेप्रतिज्ञांस्वमतप्रतिष्ठां ॥ ६३ ॥ वेदांतानप्रमाणंचितिवपुषिपदेतत्रसंगत्ययोगात्पूर्वोभागःप्रमाणंयदचयगमितेकार्यवस्तुन्यशेषे ॥ शब्दानांकार्यमात्रंप्रतिसमधिगताशक्तिरभ्युन्नतानांकर्मभ्योमुक्तिरिष्टातदिहतनुभृतामायुषःस्यात्समाप्तेः ॥ ६४ ॥ वादेकृतेऽस्मिन्यदिमेजयान्यस्त्वयोदितात्स्याद्विपरीतभावः॥ येयंत्वयाभूद्गदिताप्रसाक्ष्येजानातिचेत्साभवितावधूर्मे॥ ६५॥

तानांप्रसिद्धानांघटमानयेत्यादिकानांशब्दानांकार्यमात्रंप्रतिशक्तिःसमधिगताकर्मभ्यश्चमुक्तिरिष्टाअभिमता तत्कर्मइहास्मिन्लोकेतनुभृतां देहभृतांजीवानामायुषोजीवनस्यसमाप्तेःसमाप्तिपर्यंतमिष्टंस्यात् यावज्जीवमग्निहोत्रंजुहुयादितिवचनात् समाप्तिरितिपाठेतुतत्तस्मादिहास्मिन्कर्मणितनुभृतामायुषःसमाप्तिःस्यादितिव्याख्येयं स्रग्ध॰ ॥६४॥ पणंदर्शयति अस्मिन्वादेकृतेसतियदिमेजयादन्यःपराजयःस्यात्तर्हि त्वयोदितात्त्वदुक्ताद्विपरीतभावःशुक्लवसनंगृहाश्रमंविहायकषायवस्त्रपरिधानंस्याद्येयमुभयभारतीप्रसाक्ष्येत्वयाकथिताभूत्सैवेयंवधूर्मेप्रसाक्ष्येभविताभविष्यति उप॰ ॥ ६५ ॥

इहास्यांसभायांवादेवापराजितःजेतुराश्रममंगीकुर्यादितिकृतपणौयतिमंडनौउदारबुद्धिमंवांसरस्वतींसाक्ष्येऽभिषिच्याथोऽनंतरंजयेदत्तास्था
पितादृष्टिर्याभ्यांतौजल्पंविजिगीषुकथांवितेनतुर्विस्तारितवंतावित्यर्थः व० ॥ ६६ ॥ सर्ववेदौसर्वज्ञौतौसम्यंमिथःवादंवितनुतांविस्तारितवंतौ
एवंविजेतुमनसोरुपविष्टयोर्यतिमंडनयोर्गलेतांप्रसिद्धांपुष्पनिर्मितामेकैकांमालांसेयमुभयभारतीन्यधितस्थापितवती ॥ ६ ७॥ तयोर्गलेमालां

जेतुःपराजितइहाश्रममाददीतेत्येतौमिथःकृतपणौयतिविश्वरूपौ ॥ अंबामुदारधिषणामभिषिच्यसाक्ष्येज
ल्पंवितेनतुरथोजयदत्तदृष्टी ॥६६॥ आवश्यकंपरिसमाप्यदिनेदिनेतौवादंसमंव्यतनुतांकिलसर्ववेदौ ॥ एवं
विजेतुमनसोरुपविष्टयोस्तांमालांगलेन्यधितसोभयभारतीयं ॥ ६७॥ मालायदामलिनभावमुपैतिकंठेय
स्यापितस्यविजयेतरनिश्चयःस्यात् ॥ उक्त्वागृहंगतवतीगृहकर्मसक्ताभिक्षाशनेपिचरितुंगृहिमस्करिभ्यां ॥
॥ ६८ ॥ अन्योन्यसंजयफलेविहितादरौतौवादंविवादपरिनिर्णयमातनिष्टां ॥ ब्रह्मादयःसुरवराअपिवाह
नस्थाःश्रोतुंतदीयसदनंस्थितवंतऊर्ध्वं ॥ ६९ ॥

निधाययदुक्तवतीतदाह यदायस्मिन्कालेयस्यमलेमालामलिनभावमुपैतिप्राप्नुयात्तस्यतदाविजयेतरस्यपराजयस्यनिश्चयःस्यादित्युक्त्वा
गृहंगतवतीयतोगृहकर्मसक्ताअपिचभिक्षाचाशनंभोजनंचभिक्षाशनेचरितुंगृहिणेगृहस्थार्थमशनंमस्करिणेयत्यर्थंभिक्षांनिर्मातुमित्यर्थः ॥
॥ ६८ ॥ साक्ष्येस्थापितायाःकृत्यमुक्त्वावादिकृत्यमाह तौयतिमंडनौअन्योन्यसंजयात्मकेफलेविहितादरौ वादंजल्पात्मकमातनिष्टांवि
स्तारितवंतौ तस्मिन्कालेब्रह्मादयोपिसुरश्रेष्ठावाहनस्थाःसंतःविवादस्यपरिनिर्णयंश्रोतुंतदीयंसदनंभवनमूर्ध्वमंतरिक्षेस्थितवंतः ॥ ६९ ॥

ततोवादविस्तारानंतरंब्रह्मादेःस्थित्यनंतरंचतयोर्यतिमंडनयोर्महान्विवादआसबभूव विवादंविशिनष्टि सदस्यैःसभ्यैःविश्राणितोदत्तःसाधुवादोयस्मैसस्वस्वपक्षेसाक्षीकृताःसर्वेवेदायेनसपरस्परस्यापिकृतःप्रमोदःप्रहर्षोयेन उपें० ॥ ७० ॥ पुनर्विवादंविशिनष्टि दिनेदिनेचाधिगतःप्रकर्षोयेनसभूरीभवतांपंडितानांसन्निकर्षःसान्निध्यंयस्यसअन्योन्यभंगेनविवदतोरंतःकरणेआहितःस्थापितस्तर्षोजयाभिलाषोयेनतथापि



दूरीकृतोजन्यमर्षोयुद्धरोषोयस्मात्सः जन्यंहट्टेपरीवादेसंयुगेजनकेपुनरितिविश्वप्रकाशः उपें० ॥ ७१ ॥ साउभयभारतीप्रतिदिनंमध्य

ततस्तयोरासमहान्विवादःसदस्यविश्राणितसाधुवादः ॥ स्वपक्षसाक्षीकृतसर्ववेदःपरस्परस्यापिकृतप्रमोदः ॥ ७० ॥ दिनेदिनेचाधिगतप्रकर्षोभूरीभवत्पंडितसन्निकर्षः ॥ अन्योन्यभंगाहिततीव्रतर्षस्तथापिदूरीकृतजन्यमर्षः ॥ ७१ ॥ दिनेदिनेवासरमध्यमेसाब्रूतेयतिंभोजनकालमेव ॥ समेत्यभिक्षुंसमयंचभैक्ष्येदिनान्यभूवन्नितिपंचषाणि ॥ ७२ ॥ अन्योन्यमुत्तरमखंडयतांप्रगल्भंवद्धासनौस्मितविकासिमुखारविंदौ ॥ नस्वेदकंपगगनेक्षणशालिनौवानक्रोधवाक्छलमवादिनिरुत्तराभ्यां ॥ ७३ ॥

ह्नेसमागत्ययतिंभोजनकालमेवववक्तिभिक्षुंश्रीशंकरंभैक्ष्यंसमयंचवदति इत्येवंप्रकारेणपंचषाणिपंचवाषड्वादिनानिअभूवन् ॥ ७२ ॥ दृढतयाबद्धमासनंयाभ्यांतौस्मितेनमंदहसितेनविकासयुक्तेमुखकमलेययोस्तौयतिमंडनौप्रगल्भमुत्तरमन्योन्यमखंडयतांखंडितवंतौपुनश्चस्वेदःप्रस्वेदःगगनेक्षणंउत्तराप्रतिभानेआकाशंप्रतिनिरीक्षणंस्वेदकंपगगनेक्षणशालिनौनबभूवतुःनवा निरुत्तराभ्यांक्रोधेनवाक्छलंक्रोधवाकृच्छलमवादिकथितं व० ॥ ७३ ॥


९
॥९॥

ततोबहुकालपर्यंतंवादप्रवृत्त्यनंतरंयतिक्ष्माभृत्यतिराजस्तस्यविचक्षणस्यमंडनस्यक्षोदंविचारात्मकंपेषणंक्षमतेसहतइति[illegible]कु
शलतामवेक्ष्यक्षोभिताःसर्वेपक्षायेनतथाभूतमपिविदुषआचार्यस्यसमक्षेसंमुखेऽप्रतिभाताःकक्षाःकोट्योयस्यसतादृशंतंचिक्षेपयद्वक्तव्यंत
दुच्यतामितिपुनःप्रेरितवान् उ० ॥ ७४ ॥ तदनंतरंमंडनोयत्कृतवांस्तदाह ततःस्वसिद्धांतसमर्थनायप्रागल्भ्यहीनोपिसभ्यमुख्यःसमंडनः
वेदांतवचोभिःप्रसिद्धमद्वैतसिद्धांतमपाकरिष्णुरुवाच विप० ॥ ७५ ॥ यदुवाचतदुदाहरति भोभोइति संभ्रमेवीप्सा यतिक्ष्माधिपतेयतिराज

ततोयतिक्ष्माभृदवेक्ष्यदाक्ष्यंक्षोदक्षमंतस्यविचक्षणस्य ॥ चिक्षेपतंक्षोभितसर्वपक्षंविद्वत्समक्षाप्रतिभात
कक्षं ॥ ७४ ॥ ततःस्वसिद्धांतसमर्थनायप्रागल्भ्यहीनोपिससभ्यमुख्यः ॥ जगादवेदांतवचःप्रसिद्धमद्वैतसि
द्धांतमपाकरिष्णुः ॥ ७५ ॥ भोभोयतिक्ष्माधिपतेभवद्भिर्जीवेशयोर्वास्तवमैकरूप्यं ॥ विशुद्धमंगीक्रिय
तेहितत्रप्रमाणमेवंनवयंप्रतीमः ॥ ७६ ॥

जीवेश्वरयोर्वास्तवमैकरूप्यंविशुद्धंयद्भवद्भिरंगीक्रियतेतत्रप्रमाणंवयंनप्रतीमःनजानीमःतत्रप्रमाणंनास्तीत्यर्थः अयंभावःनहिश्रुतिमस्तकमु
क्तार्थेप्रमाणंभवितुमर्हतिशुद्धबुद्धोदासीनतयोपक्षणीयंब्रह्मभूतमभिदधतस्तस्यापुरुषार्थोपदेशिनोऽप्रयोजनत्वप्रसंगात् किंचयथालौकिकवा
क्यानिप्रमाणांतरावगतार्थबोधकानिनस्वतःप्रमाणं तथाभूतार्थानुवादकत्वेनश्रुतिमस्तकस्यानपेक्ष्यलक्षणंप्रामाण्यंव्याहन्येत तथाचप्रत्यक्षा
दिविषयस्यपरिनिष्ठितवस्तुनःप्रतिपादनासंभवात्तत्प्रतिपादनेचहेयोपादेयरहितेपुरुषार्थाभावाच्छ्रुतिमस्तकस्यतत्रप्रमाणत्वाभावेनभवत्सिद्धां
तेवयंप्रमाणंनप्रतीमइति उ० ॥ ७६ ॥

एवंमंडनकर्तृकमाक्षेपमुदाहृत्यभाष्यकृत्कर्तृकमुत्तरमुदाहर्तुमाह सभगवान्भाष्यकारःप्रत्यवादीप्रत्युत्तरंदत्तवान् इदमेवप्रमाणयंच्छ्वेतकेतुप्रभृतीन्शिष्यान्उद्दालकाद्याःमहांतोगुरवःपरेशंपरमात्मानमात्मतयाग्राहयंति तत्त्वमसिश्वेतकेतोइति आद्यप्रमुखपदाभ्यांजनकयाज्ञवल्क्यादयोगृह्यंते तथाचाहजनकंप्रतियाज्ञवल्क्यः अभयंवैजनकप्राप्तोसितदात्मानमेववेदाहंब्रह्मास्मीतितस्मात्तत्सर्वमभवत्तत्रकोमोहःकःशोक एकत्वमनुपश्यतइत्यादि अयमभिसंधिः पुंवाक्यदृष्टांतेनभूतार्थतयासापेक्षत्वेनाप्रामाण्यापत्तिमभिप्रेत्यप्रत्यगभिन्नेब्रह्मणिप्रमाणंनवयंप्रतीमःइतिवदतात्वयावक्तव्यं किंपुंवाक्यानांसापेक्षत्वंभूतार्थत्वेनोतपौरुषेयत्वेन आद्येप्रत्यक्षादीनामपिभूतार्थतयासापेक्षत्वेनाप्रमाण्यप्रसंगः द्वितीयेतुअपौरुषेयाणांवेदांतानांप्रत्यक्षादीनामिवभूतार्थानामपिनाप्रामाण्यं तथाचब्रह्मात्मभावस्यपरिनिष्ठितवस्तुस्वरूपत्वेपितत्त्वम

सप्रत्यवादीदिदमेवमानंयच्छ्वेतकेतुप्रमुखान्विनेयान् ॥
उद्दालकाद्यागुरवोमहांतःसंग्राहयंत्यात्मतयापरेशं ॥७७॥

सीत्यादिशास्त्रमंतरेणानवगम्यमानतयाप्रत्यक्षादिविषयत्वाभावेनानधिगतगंतृत्ववतांवेदांतानांप्रत्यगभिन्नेब्रह्मणिप्रामाण्यमवश्यमास्थेयं नापिहेयोपादेयरहितत्वादपुरुषार्थत्वंहेयोपादेयशून्यब्रह्मात्मावगमादेवसर्वक्लेशनिवृत्तिपूर्वकपरमानंदप्राप्त्यापुरुषार्थसिद्धेः द्विविधंह्युपादेयं किंचिदप्राप्तंयथाग्रामादिकिंचित्पुनःप्राप्तमपिविभ्रमवशादप्राप्तमिवावगतंयथास्वग्रीवावनद्धंग्रैवेयकं एवंहेयमपिद्विविधंकिंचिदहीनंयथाव्यावहारिकसर्पादिकिंचित्पुनर्हीनंयथाचरणाभरणेनूपुरादौसमारोपितसर्पादिरेवंचब्रह्मात्मभावस्याद्यहेयोपादेयत्वाभावेपिअविद्यासमारोपितशोकादेस्तत्त्वमस्यादिवाक्यजनिततत्त्वज्ञानादवगतिपर्यंतानिवृत्तौप्राप्तमप्यानंदरूपमप्राप्तमिवप्राप्तंभवतीत्यक्तमेवशोकाद्यत्यक्तमिवत्यक्तंभवतीतितस्यपरमंपुरुषार्थत्वसिद्धिरिति ॥ ७७ ॥

ननुभूतार्थतयावेदांतानामपौरुषेयत्वासिध्यावेदांताःपौरुषेयावाक्यत्वात्भारतादिवदित्यनुमानस्याप्रत्यूहमुत्पत्तेः [illegible]
तवचसांकस्मिंश्विदर्थेविवक्षानास्तिकिंतुजप्यानितान्यघमर्षणानीत्यभ्युपगंतव्यमित्याशयवान्मंडनआह वेदावसानेषुवेदांतेषुहियस्मात्हुंफ
ण्मुखानिवचनानियथाजप्यान्यघमर्षणानितथातत्त्वमस्यादिवचांसिजप्यानिपापनिवर्त्तकानि तस्मात्हेयोगिन्नेषांतत्त्वमस्यादिवचसांकुह

वेदावसानेषुहितत्त्वमादिवचांसिजप्यान्यघमर्षणानि॥ हुंफण्मुखानीववचांसियो
गिन्नेषांविवक्षास्तिकुहस्विदर्थे॥ ७८ ॥ अर्थाप्रतीतौकिलहुंफडादेर्जपोपयोगित्व
मभाणिविज्ञैः ॥ अर्थप्रतीतौस्फुटमत्रसत्यांकथंभवेत्प्राज्ञजपार्थतैव ॥ ७९ ॥

स्विदर्थेकस्मिंश्विदर्थेविवक्षानास्तीत्यर्थः ॥ ७८ ॥ एतद्दूषयतिभगवान् अर्थस्याप्रतितावप्रतिभानेकिलप्रसिद्धंहुंफडादेर्जपोपयोगित्वंविज्ञै
रभाणिभाषितं अत्रतत्त्वमस्यादिवचनेषुस्पष्टंयथास्यात्तथाऽर्थस्यप्रतीतौसत्यामेषांजपार्थतैवकथंभवेत्केनापिप्रकारेणनभवतीत्यर्थः प्रा
ज्ञस्त्वंदृष्टांतवैषम्यंकथंनजानासीतिसूचयन्संबोधयतिहेप्राज्ञेति आ० ॥ ७९ ॥

उक्तंपक्षंविहायपक्षांतरालंबनायमंडनआह आपाततइति हेयतीशयद्यपिजीवेशयोरभेदस्तत्त्वमसीतिवाक्यादापाततःप्रतीयतेतथापिमखा
दिकर्तृप्रशंसयाईशाभिन्नोयंमखादिकर्त्तेतिस्तुत्यातयोरभेदःविधेःशेषएवेत्यर्थः अयंभावः वेदांतवचसांतत्तद्विहितकर्मापेक्षितकर्तृदेवतादिप्र
तिपादनपरत्वेनैवक्रियार्थत्वमभ्युपेयं कार्यस्यापूर्वस्यमानांतरागोचरतयाअत्यंताननुभूतपूर्वस्यतत्वेनसमारोपेएवापुरुषबुद्धावनारोहात्त



आपाततस्तत्त्वमसीतिवाक्याद्यतीशजीवेश्वरयोरभेदः॥ प्रती
यतेऽथापिमखादिकर्तृप्रशंसयास्याद्विधिशेषएव ॥ ८० ॥

दर्थानांवेदांतानांकार्यपरत्वांगीकारस्यावश्यकत्वात् तथाचजैमिनिनापिआम्नायस्यक्रियार्थत्वादानर्थक्यमतदर्थानामितिसूत्रेणअक्रियार्था
नामर्थवादानामानर्थक्यंपूर्वपक्षंकृत्वाविधिनात्वेकवाक्यत्वात्स्तुत्यर्थेनविध्यधीनाःस्युरितिअक्रियार्थानामानर्थक्यंपूर्वपक्षोक्तमंगीकृत्यैवा
र्थवादानांविध्यैकवाक्यतयाप्रामाण्यंप्रतिपादितं नचाक्रियार्थत्वेपिवेदांतानांब्रह्मरूपविधिपरत्वस्वीकारेणनसिद्धांतसूत्रविरोधइतिवाच्यं स
र्वेषांविधीनामनागतोत्पाद्यभावनाविषयत्वेनपरिनिष्ठितवस्तुस्वरूपविधेरसंभवादिति उ० ॥ ८० ॥

वेदांतानांकार्यपरत्वस्वीकारेणापौरुषेयत्वंप्रतिपादयतात्वयावक्तव्यंकिंतत्कार्यंयदशक्यंपुरुषेणज्ञातुमपूर्वमितिचेत्नानातरानवगतसमानपदा योगात्लिङादीनामबोधकत्वप्रसंगः स्वर्गकामपदसमभिव्याहारसंख्यातनर्कानुगृहीतवेदादेवक्रियाविलक्षणपूर्वेलिङादीनांसंगतिग्रहाद्बोध कत्वमितिचेत्चैत्यवंदनादिवाक्येष्वपिस्वर्गकामइत्यादिपदसंबंधादपूर्वकार्यत्वप्रसंगेनतेषामप्यशक्यरचनतयाऽपौरुषेयत्वप्रसंगः स्पष्टेनपौ रुषेयत्वेनतेषामपौरुषेयत्वप्रतिषेधइतिचेत्वाक्यत्वादिलिंगेनवेदानामपिपौरुषेयत्वानुमानादपूर्वार्थतानस्यात्स्मर्यमाणकर्तृकत्वेनवाक्यादि सोपाधिकमितिचेत्यथावेदांतानांकार्यार्थत्वपक्षेतेषांपौरुषेयत्वानुमानंकर्तृस्मरणोपाधिनानिरस्यतेतथानेषांसिद्धार्थत्वपक्षेपितन्निरसनस्य समानत्वात्तेषांकार्यार्थत्वकल्पनमप्रयोजकंतस्माद्वेदांतानामपौरुषेयत्वसंपादनायक्रियार्थत्वंनैवाभ्युपेयंसदेवसौम्येदमग्रआसीदेकमेवाद्वितीं

क्रत्वंगयूपादिकमर्यमादिर्देवात्मनावाक्यगणःप्रशंसन् ॥ शेषः
क्रियाकांडगतोयदिस्यात्कांडांतरस्थोपिभवेत्कथंसः ॥ ८१ ॥

यंआत्मावाइदमेकएवाग्रआसीत्तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्ममयमात्माब्रह्मसर्वानुभूःब्रह्मैवेदममृतंपुरस्तादित्यादिवाक्येषूपक्रमोपसंहारा दिषड्विधतात्पर्यलिंगेनब्रह्मात्मभावेप्रतिपादकत्वेनसमनुगतेषुस्थितानांपदानांप्रत्यगभिन्नब्रह्मस्वरूपविषयेनिश्चितेसमन्वयेवगम्यमानेऽर्थांतरक ल्पनायाःश्रुतहान्यश्रुतकल्पनाग्रस्तायाअयुक्तत्वात् यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदित्यादिक्रियाकारकफलनिराकरणश्रुतेःप्रकरणांतर पठितवेदांतवाक्यानांकर्त्रादिप्रशंसयाविधिशेषत्वासंभवाच्चेत्याशयवान्भगवान्आह क्रत्वंगयूपादिकमिति आदित्योयूपःयजमानःप्रस्तर इत्यादिवाक्यगणःक्रत्वंगयूपप्रस्तरादिकंआदित्ययजमानाद्यात्मनाप्रशंसन् क्रियाकांडगतत्वात्शेषोयदिस्यात्तर्हिभवतुनामतथापिकांडां तरेज्ञानकांडेस्थितस्तत्त्वमस्यहंब्रह्मास्मीत्यादिवाक्यगणःविधिशेषःकथंभवेत् इंद्र० ॥ ८१ ॥

एवमुक्तोमंडनआह हेऽर्हन्यद्येवंतर्हितत्त्वमस्यादिवाक्यगणोजीवेपरमात्मदृष्टिविधायकोस्तुकिमर्थमितिचेत्तत्राह कर्मसमृद्धयेतत्रदृष्टांतोय 
थामनोब्रह्मेत्युपासीतअन्नमुपास्वआदित्योब्रह्मेत्यादेशःवायुर्वावसंवर्गःप्राणोवावसंवर्गइत्यादिवाक्यगणःकर्मणांसम्यगभिवृद्धयेअब्रह्मणिम
 नआदौब्रह्मधियंविधत्तेतद्वत्तथाचारोपितब्रह्मभावस्यजीवस्योपास्तिपरावेदांतानतस्यब्रह्मात्मत्वेप्रमाणमितिभावः आ० ॥ ८१ ॥ एतद्दूषय 

तत्त्वंस्तुजीवेपरमात्मदृष्टिविधायकःकर्मसमृद्धयेऽर्हन् ॥ अब्रह्मणिब्रह्मधियंविध
त्तेयथामनोऽन्नार्कनभस्वदादौ ॥ ८२ ॥ संश्रूयतेऽन्यत्रयथालिङ्गादिर्विधायको
ब्रह्मविभावनाय ॥ तथाविधेरश्रवणान्मनीषिन्संजाघटीत्यत्रकथंविधानं ॥८३॥

तिभगवान् अन्यत्रमनोब्रह्मेत्युपासीतेत्यादिवाक्येयथाब्रह्मविभावनायविधायकोलिङ्गादिःश्रूयतेतथाऽत्रतत्त्वमस्यादिवाक्येलिङ्गादिरूपस्य
विधेरश्रवणात्विधानंकथंसंजाघटीतिकेनप्रकारेणघटतेनकेनापीत्यर्थः मनीषीसन्कथमेवंभाषसइतिसंबोधनाशयस्तथाचविध्यभावेनारो 
पितब्रह्मभावस्यजीवस्योपास्तिपरत्वंवेदांतानांनसंभवतीतितस्यब्रह्मात्मत्वएववेदांताःप्रमाणमितिभावः उ० ॥ ८३ ॥

ननुसंतुवेदांताब्रह्मात्मत्वेप्रमाणंपरंतुज्ञानविधिद्वारातत्रविधेःकल्पयितुंशक्यत्वादितिमन्वानोमंडनआह यद्वत्प्रतिष्ठाफलदर्शनेनहियतीनामध्यग्र
ष्ठेतिसंबोधनेनाध्वरमीमांसानध्ययनंसूचयतिरात्रिसत्रेविधिःप्रकल्प्यतेतद्वदिहापिब्रह्मात्मैकत्वेपिमुक्तिफलश्रुतेःसविधिःकल्पयितुंयुक्तः अयम
र्थः प्रतितिष्ठंतिहवायएतारात्रीरुपयंतीतिश्रूयतेतत्ररात्रिशब्देनायुर्ज्योतिरित्यादिवाक्यविहिताःसोमयागविशेषाउच्यंतेऽत्रयद्यपिप्रतितिष्ठंती
तिवर्त्तमानापदेशात्सिद्धरूपैवप्रतिष्ठाप्रतीयतेनसाध्यरूपातथापिश्रुतायाएवप्रतिष्ठायाविपरिणामेनफलकल्पनस्यात्यंताश्रुतस्वर्गस्यफलत्व
कल्पनापेक्षयावरत्वात्यत्तदोर्व्यत्यासेनयोजनयाप्रतितिष्ठंतीत्यत्रसनर्थांतर्भावेनचयेप्रतितिष्ठाःसंतितेएतारात्रीरुपेयुरितिवाक्यविपरिणामे
नयथारात्रिविधिःप्रकल्प्यतेतथेहापिब्रह्मवेदब्रह्मैवभवतीतिमुक्तिफलश्रुतेःब्रह्मबुभूषुर्ब्रह्मवेदनंकुर्यादितिविधिःकल्पयितुंयुक्तःतथाचात्मावा

यद्वत्प्रतिष्ठाफलदर्शनेनविधिर्यतीनांवररात्रिसत्रे ॥ प्रक
ल्प्यतेतद्वदिहापिमुक्तिफलश्रुतेःकल्प्यातुसंययुक्तः ॥८४ ॥

रेद्रष्टव्यःयआत्माऽपहतपाप्मासोन्वेष्टव्यःसविजिज्ञासितव्यआत्मेत्येवोपासीतआत्मानमेवलोकमुपासीतब्रह्मविद्ब्रह्मैवभवतीत्यादिषुविधाने
षुसत्सुकोवाआत्माकिंब्रह्मेत्याकांक्षायांतत्स्वरूपसमर्पणेननित्यःसर्वज्ञःसर्वगतोनित्यतृप्तोनित्यशुद्धबुद्धमुक्तस्वभावोविज्ञानमानंदंब्रह्मेत्येवमा
दयःसर्वेवेदांताउपयुक्तास्तदुपासनाच्चशास्त्रदृष्टोऽदृष्टमोक्षोभविष्यतिकर्त्तव्यविध्यननुप्रवेशेतुवस्तुमात्रकथनेहानोपादानासंभवात्सप्तद्वीपा
वसुमतीराजासौगच्छतीत्यादिवाक्यवद्वेदांतवाक्यानामानर्थक्यमेवस्यात् किंचवेदांतानांप्रवृत्तिनिवृत्त्यबोधकत्वेशास्त्रत्वमेवनस्यात्तत्परस्य
वशास्त्रत्वबोधनात् यथाहुःप्रवृत्तिर्वानिवृत्तिर्वानित्येनकृतकेनवा पुंसांयेनोपदिश्येतेतच्छास्त्रमभिधीयतइति अपिचरज्जुरयंनायंसर्पइत्यादिश्र
वणेनयथाभयकंपादिनिवर्त्ततेनतथासंसारित्वभ्रांतिर्ब्रह्मस्वरूपश्रवणेननिवर्त्तते श्रुतब्रह्मस्वरूपस्ययथापूर्वसुखदुःखादिसंसारधर्मदर्शनात् मंत
व्योनिदिध्यासितव्यइतिश्रवणोत्तरकालयोर्मनननिदिध्यासनयोःश्रवणाच्चेति ॥ ८४ ॥

शं०वि० एतत्प्रयत्नि भगवांस्तर्हि मोक्षस्योपास्तिरूपक्रियाफलत्वे सति विमुक्तिर्विनश्वरा स्यात् क्रियाजन्यत्वात्स्वर्गादिवदिति अयमर्थः कर्त्तव्यविधिशे ॥ डिं०टी०
षत्वेनात्मोपदेशो न युक्तः स्वर्गादिवन्मोक्षस्यानित्यत्वसातिशयत्वयोरनिष्टयोरापत्तेः ननु ज्ञानस्यापि मानसक्रियात्वाद्भवन्मतेऽपि विमुक्तेरनित्य
त्वं कुतो नस्यादित्याशंक्य ज्ञानस्य मानसत्वेऽपि यथाभूतवस्तुविषयप्रमाणजन्यत्वेन कर्तुमन्यथा वा कर्त्तुमशक्यत्वात्केवलवस्तुतंत्रत्वेन चोदनातंत्र ८
॥ १३ ॥ त्वाभावात् पुरुषतंत्रत्वशून्यत्वाच्चास्मन्मतेनोक्तदोष इत्याशयेनाह उपासनेति यथायस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्संध्यां
मनसा ध्यायेदित्येवमादिषु ध्यानं चिंतनं मानसं पुरुषतंत्रत्वात्कर्तुमन्यथा वा कर्त्तुं शक्यं तथा मनसः क्रियोपासनैव कर्त्तुमकर्तुमन्यथा वा कर्तुमर्हा
न तु ज्ञानं तथा च तज्जन्यविमुक्तेरनित्यत्वं स्पष्टमेवेत्यर्थः तस्मात्तद्विषये लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात्कुंठीभवंतो विधिच्छायारूप

तर्हि क्रियाजन्यतया विमुक्तिः स्वर्गादिवद्ध्रुवं तद्विनश्वरा स्यात् ॥ उपासना कर्तुमकर्तुम
न्यथा वा कर्तुमर्हा मनसः क्रियैव ॥ ८५ ॥ माभूदिदं तत्त्वमसीति वाक्यमुपासनापर्य
वसायिकामं ॥ किंत्वस्य जीवस्य परेण साम्यप्रत्यायिकं सत्तम वो भवीतु ॥ ८६ ॥

त्वात् स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थाः अन्यथा क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन अभयं
वै जनक प्राप्तोसि तदात्मानमेवावेदाहं ब्रह्मास्मीत्याद्याः श्रुतयो ब्रह्मविद्यानंतरं मोक्षं प्रदर्शयंत्यो मोक्षस्य ज्ञानजन्यापूर्वजन्यत्वं वारयंत्यो नोपपद्ये
रन् ब्रह्मावगतौ सत्यां सर्वकर्त्तव्यताहानेः कृतकृत्यतायाश्चास्माकमलंकारत्वात् मननादिसहकृतेन श्रवणेन ब्रह्मस्वरूपसाक्षात्कारे संसारित्वनिवृ
त्तेः श्रुतिस्मृत्यनुभवसिद्धत्वाद्धितशासनेनैतत्तत्प्रतिपादकस्य मुख्यशास्त्रत्वाच्च न कोपि दोष इति ॥ ८५ ॥ एवमुक्तो मंडनस्तत्त्वमस्यादिवाक्य ॥ १३ ॥
स्योपासनापर्यवसानाभावमंगीकृत्य प्रकारांतरेणाक्षिपति इदं तत्त्वमसीति वाक्यमुपासनापर्यवसायि यथेष्टं माभूत् तथाप्यैक्यप्रतिपादकं नास्ति
किंत्वस्य जीवस्य परमेश्वरेण सादृश्यस्य प्रतिपादकं हे सत्तम वो भवीतु भवतु ॥ ८६ ॥

एतद्विकल्प्यदूषयतिभगवान् किमिति तत्त्वमसीतिवाक्यंकिंचेतनपरेणसादृश्यंप्रवदतिकिंवासार्वज्ञ्यसार्वात्म्यसर्वशक्तित्वप्रभृतिभिर्गुणैःसाम्यं विवक्ति अथचेतनत्वेनसाम्यस्यप्रसिद्धत्वादुपदेशानर्थक्यंद्वितीयेजीवस्यपरमात्मस्वरूपापत्त्याभेदोनास्तीतिस्वसिद्धांतविरुद्धतास्यात् तस्मादैक्यप्रतिपादकमेवोक्तवाक्यमभ्युपेयमित्यर्थः ॥ इं२० ॥ ८७ ॥ एवमुक्तोमंडनआह नित्यत्वमात्रेणपरमात्मगुणसदृशैःसुखबोधानंत्यादिभिरविद्यावरणादप्रतीतेरस्यजीवस्यपरेणसाम्यमुक्तवाक्यंहेमुनेब्रवीतुतस्मान्नोक्तदोषः उ० ॥ ८८ ॥ एवमुक्तोभगवानाह, यद्येवंतर्हि

किंचेतनत्वेनविवक्तिसाम्यंसार्वज्ञ्यसार्वात्म्यमुखैर्गुणैर्वा ॥ आद्येप्रसिद्धंनखलूपदेश्यमंतेस्वसिद्धांतविरुद्धतास्यात् ॥ ८७॥ नित्यत्वमात्रेणमुनेपरात्मगुणोपमानैःसुखबोधपूर्वैः ॥ गुणैरविद्यावृतितोऽप्रतीतेःसाम्यंब्रवीत्वस्यततोनदोषः ॥ ८८ ॥ यद्येवमेतस्यपरत्वमेवप्रत्यापयत्वत्रदुराग्रहःकः ॥ त्वयैवतस्यप्रतिभासशंकाविद्वन्नविद्यावरणान्निरस्ता ॥ ८९ ॥ भोश्चेतनत्वेनशरीरिसाम्यमावेद्यतामस्यजगत्प्रसूतेः ॥ चिदुत्थितत्वेनपरोदितस्याप्यणुप्रधानप्रभृतेर्निरासः ॥ ९० ॥

तस्यजीवस्यपरमात्मत्वमेवोक्तवाक्यंबोधयतुअत्रतस्यपरत्वेदुराग्रहःकः नन्वेवंतर्हितस्यपरत्वंकुतोनप्रतिभासतेइतिचेत्तत्राह तस्यसुखबोधानंतरूपस्यपरत्वस्यप्रतिभासशंकातुअविद्यावरणात्त्वयैवनिरस्ता विद्वान्सन्कथमेवंभाषसइतिसंबोधनाशयः ॥ ८९ ॥ एवमुक्तोमंडनःप्रकारांतरमालंब्याह हेयतीशास्यजगत्कारणस्यचेतनत्वेनजीवेनसाम्यमावेद्यतां तथाचचितश्चेतनाज्जगतउत्थितत्वात्परैःसांख्यादिभिरुदितस्यप्रधानपरमाण्वादेर्निरासोपिसिध्यतीत्यर्थः ॥ ९० ॥

 एवमुक्तोभगवानाह हंतहेमंडनैवंचेत्तदात्वन्मतेतज्जगत्कारणंत्वंत्वत्सदृशमस्तीतिप्रयोगःस्यात्तत्त्वमसीतिनस्यात् जडत्वशंकायास्तुतदैक्षत 
बहुस्यांप्रजायेयेतीक्षणश्रवणात्तत्त्वमसीतिजगत्कारणस्यचेतनाभेदप्रतिपादनेनचव्यावर्त्तनात्पुनरत्रचोद्याभावात्प्रधानादेर्निरासायैवंनवा



हंतैवमस्तीतितदाप्रयोगःस्यात्त्वन्मतेतत्त्वमसीतिनस्यात् ॥ तदैक्षतेत्यत्रजडत्वशं
काव्यावर्तनाच्चात्रपुनर्नचोद्यं ॥ ९१ ॥ नन्वेवमप्यैक्यपरत्वमस्यप्रत्यक्षपूर्वप्रमि
तिप्रकोपात् ॥ नयुज्यतेतज्जपमात्रयोगिस्वाध्यायविध्याश्रितमभ्युपेयं ॥ ९२ ॥

च्यमित्यर्थः ॥ ९१ ॥ एवंसर्वतःप्रतिरुद्धोमंडनइममपिपक्षमुपेक्ष्यपुनस्तत्त्वमस्यादिवाक्यस्यजपोपयोगित्वालंबनायपरपक्षेप्रत्यक्षविरोधमा
पादयति नन्वेवंसाम्याप्रत्यायकत्वेप्यस्योक्तवाक्यस्यैक्यपरत्वंनाहमीश्वरइतिप्रत्यक्षात्मिकायाज्ज्येष्ठप्रमायाःप्रकोपान्नयुज्यतेततःस्वाध्यायो 
ध्येतव्यइतिविधिनाश्रितमुक्तवाक्यंजपोपयोग्यमभ्युपेयमिति ॥ ९२ ॥

एतद्दूषयतिभगवान्   अक्षेणेंद्रियेणचेत् भेदमितिर्भेदप्रमायदिस्यात्तदाऽभेदवादिश्रुतिवाक्यस्यबाधःस्यात्अक्षस्यभेदेनासन्निकर्षाद्भिदप्रमैवनं हिभवेत्तेनकारणेनास्यवाक्यस्यकुतोविरोधोनकेनापिविरोधोस्यप्रत्यक्षस्यकस्माद्धेतोर्विरोधइतिवा अयमर्थः इंद्रियभेदेनप्रमाणंतदसन्निकृष्टत्वात्संमतवत् ननुहेत्वसिद्धिरितिचेदिंद्रियस्यभेदेनसंयोगसमवायतादात्म्यानामन्यतमःसन्निकर्षस्तदन्योवा आद्येनतावत्समवायासंभवात्तदसिद्धेश्चननुरूपीघटोमृद्घटइतिप्रत्ययस्यसंयोगानवगाहित्वात्परिशेषात्समवायएवसिध्यतीतिचेन्न गुणगुणिनोरवयवावयविनोश्चात्यंतभेदे तत्संबंधस्यचतथात्वेदंडपुरुषादाविवशुक्लोघटोमृद्घटइतिसमानाधिकरणप्रत्ययानुपपत्तेः किंचसमवायिभ्यांसंबद्धःसमवायोविशिष्टप्रत्ययनियामकउतासंबद्धः नाद्यस्तस्यतस्यान्योऽन्यसंबंधःकल्पयितव्यइत्यनवस्थापातात् ननुसमवायिभिर्नित्यसंबंधएवायंगृह्यतेऽतोनोक्तदोषइति

अक्षेणचेद्भेदमितिस्तदास्याद्भेदवादिश्रुतिवाक्यबाधः ॥ अ
सन्निकर्षान्नभवेद्भिभेदप्रमैवतेनास्यकुतोविरोधः ॥ ९३ ॥

चेत्तर्हिसंयोगोपिसंयोगिभिर्नित्यसंबद्धत्वात्संबंधांतरंनापेक्षत्वर्थांतरत्वादपेक्षतइतिचेत्तर्हिसमवायोपितथात्वात्कुतोनापेक्षतेसंयोगोगुणत्वात्तथेतिचेन्नगुणपरिभाषायाअतंत्रत्वादपेक्षाकारणस्यचतुल्यत्वात् नांत्योतिप्रसंगात् किंचसअनेकएकोवा आद्येऽपसिद्धांतोगौरवंचद्वितीयेरूपज्ञानादिसमवायस्यवायुघटादिवृत्तिसमवायाभेदात्रूपीवायुःघटोज्ञानवानितिप्रतीतिप्रसंगः नचतत्ररूपादेरभावान्नोक्तप्रतीतिरितिवाच्यं तद्वृत्तित्वप्रयोजकसंबंधेसतितदभावव्यवहारस्यव्याहतत्वात्तस्मान्नकथमपिसमवायःसिध्यति अवयवावयव्यादीनांसंबंधस्तुतादात्म्यंतच्चनभिन्नाभिन्नत्वंविरुद्धयोर्भेदाभेदयोरेकत्रासंबंधादपितुभिन्नत्वेसत्यभिन्नसत्ताकत्वंतच्चानिर्वाच्यं नापिसंयोगतादात्म्येतदभावस्यसुप्रसिद्धेर्नद्वितीयस्तदन्यसन्निकर्षस्यकाप्यप्रसिद्धेरिति ॥ ९३ ॥

ननुभेदस्यान्योन्याभावरूपत्वादभावेचविशेषणतायांःसन्निकर्षत्वादसंन्निकर्षसिद्धिरितिमंडनःशंकतेहियस्मादीशादहंभिन्नइतिभेदस्यजी
वात्मविशेषणत्वंभासतेअथतस्माद्धेमनीषिन्भेदेंद्रिययोःसंयोगादिसंप्रयोगाभावेपितत्सन्निकर्षोविशेषणतासन्निकर्षोऽस्तु इंद्र० ॥ १४ ॥
परिहरतिभगवान् केवलस्यविशेषणत्वस्यविशेषणतामात्रस्यतत्सन्निकर्षत्वंनैवाभ्युपेयंतत्रहेतुरतिप्रसक्तेःभित्त्यादिव्यवहितभूतलादिनिष्ठ
घटाद्यभावेपिविशेषणतामात्रस्यसत्वेनप्रत्यक्षत्वप्रसंगात्तस्माद्भेदाश्रयेहींद्रियसन्निकृष्टेसतिविशेषणतायाःसन्निकर्षत्वमभ्युपेयंनचसन्निकृष्ट
त्वमिहेंद्रियआत्मनोस्तिवस्तुतस्त्वधिकरणेंद्रियसन्निकर्षोपिनकारणंपरमतेकरणवलयावच्छिन्ननभसएवश्रोत्रेंद्रियत्वात्तस्यैवस्वग्राह्यशब्दा

भिन्नोहमीशादितिभासतेहिभेदस्यजीवात्मविशेषणत्वं ॥ तत्सन्निकर्षोस्त्वथसंप्रयोगाभावेपिभेदेंद्रिययो
र्मनीषिन् ॥ १४ ॥ अतिप्रसक्तेर्नतुकेवलस्यविशेषणत्वस्यतदभ्युपेयं ॥ भेदाश्रयेहींद्रियसन्निकृष्टेनसन्नि
कृष्टत्वमिहात्मनोस्ति ॥ १५ ॥ भेदाश्रयात्मेंद्रियसन्निकर्षोनेत्युक्तमेतच्चतुरंनयस्मात् ॥ चित्तात्मनोर्द्रव्यतया
द्वयोरप्यस्त्येवसंयोगसमाश्रयत्वं ॥ १६ ॥ आत्माविभुःस्यादथवाणुमात्रःसंयोगितानोभयथापिमुक्ता ॥
दृष्टाहिसासावयवस्यलोकेसंयोगितासावयवेनयोगिन् ॥ १७ ॥

भावाधिकरणत्वात्स्वेनस्वस्यासन्निकर्षादधिकारणेंद्रियसन्निकर्षाभावेनशब्दाभावेप्रत्यक्षत्वंनस्यादितिध्येयं उ० ॥ १५ ॥ एतदसहमानो
मंडनआह भेदाश्रयस्यात्मनइंद्रियेणसन्निकर्षोनास्तीतित्वयोक्तमेतन्नसमीचीनंयस्मात्चित्तात्मनोर्द्रव्यत्वेनोभयोरपिसंयोगसमाश्रयत्वम
स्त्येव इंद्र० ॥ १६ ॥ एवमाक्षिप्तोभगवान्विकल्प्याक्षेपंप्रक्षिपति आत्माविभुःस्यादथवाणुमात्रःपक्षद्वयेपिसंयोगितानयुक्ताहियस्मात्सावय
वस्यसावयवेनसासंयोगितालोकेदृष्टातस्मादित्यर्थः भार्यादियोगित्वमनुभूतमपलपितुमनर्होसीतिकटाक्षेणसंबोधयति हेयोगिन्निति ॥ १७ ॥ ॥

किंचमनइंद्रियमित्यंगीकृत्यभेदेनास्यासंगित्वमुक्तंवस्तुतस्तुमनोनेंद्रियंचक्षुरादिसहकारित्वात्दीपवत्इंद्रियेभ्यःपराह्यर्था अर्थेभ्यश्वपरंमनइ त्यादिश्रुत्यामनसोऽनिंद्रियत्वावधारणादेवेत्युक्तं मनःषष्ठानींद्रियाणीतिवचनंतुनमनसइंद्रियत्वेप्रमाणं यजमानपंचमाइडांभक्षयंति वेदान ध्यापयामासमहाभारतपंचमानित्यादिवदनिंद्रियेणापिमनसाषट्त्वसंख्यापूर्णत्वसंभवात् इंद्रियाणांमनश्चास्मीतिवचनमपिनक्षत्राणामहं

मनोक्षमित्यभ्युपगम्यभेदासंगित्वमुक्तंपरमार्थतस्तु ॥ साहाय्यकृल्लोचनपूर्वकस्यदीपादिवन्नेंद्रियमेवचित्तं ॥ ९८ ॥ भेदप्रमानेंद्रियजास्तुतर्हिसाक्षिस्वरूपैवतथापियोगिन् ॥ तयाविरोधात्परमात्मजीवाभेदंकथंबोधयितुंप्रमाणं ॥ ९९ ॥ प्रत्यक्षमात्मेश्वरयोरविद्यामायायुजोर्द्योतयतिप्रभेदं ॥ श्रुतिस्तयोःकेवलयोरभेदंभिन्नाश्रयत्वान्नतयोर्विरोधः ॥ १०० ॥

शशीतिवत्नमनसइंद्रियत्वेप्रमाणमिति उ० ॥ ९८ ॥ एवंनिरुद्धोमंडनआह भेदप्रमेंद्रियजानचेत्तर्हिसाक्षिस्वरूपैवास्तु तथापिहेयोगिन्तयासाक्षिस्वरूपयाभेदप्रमयाविरोधात्परमात्मजीवयोरभेदंबोधयितुंकथंप्रमाणंतत्त्वमस्यादिवाक्यमितिशेषः ॥ ९९ ॥ मंडनोक्तमंगीकृत्यविषयभेदाद्विरोधंपरिहरतिभगवान् साक्षिस्वरूपंप्रत्यक्षंजीवात्मपरमात्मनोरविद्यामायायुक्तयोःप्रभेदंद्योतयति श्रुतिस्तुतद्विनिर्मुक्तयोःशुद्धयोस्तयोर्जीवेश्वरयोरभेदंद्योतयतीत्येवंश्रुतिप्रत्यक्षयोर्भिन्नाश्रयत्वान्नविरोधः ॥ १०० ॥

विरोधमंगीकृत्यापिपरिहरति स्याद्वाविरोधस्तदप्ययंश्वरंप्रथमप्रवृत्तंबलहीनंभेदप्रत्यक्षमेवप्राबल्यवत्याभेदवादिश्रुत्याचरमप्रवृत्त्याबाध्यं अपच्छेदन्यायेनौक्तयारीत्याऽपच्छेदनयइतिवा तथाचषाष्ठंपारमर्षसूत्रंपौर्वापर्येपूर्वदौर्बल्यंप्रकृतिवदितिज्योतिष्टोमेबहिःपवमानार्थंहविर्धानान्निर्गच्छतांऋत्विग्यजमानानांअध्वर्युंप्रस्तोताऽन्वारभतेप्रस्तोतारमुद्गातारंप्रतिहर्त्तेत्यादिनाऽन्वारंभणंविहितंतद्विच्छेदनिमित्तंप्रायश्चित्तंश्रूयते यद्युद्गातापच्छिद्येतादक्षिणंतंयज्ञमिष्ट्वातेनपुनर्यजेततत्रतद्दद्यात्यत्पूर्वस्मिनदास्यंस्यात्यदिप्रतिहर्तापच्छिद्येतसर्ववेदसंदद्यादितितत्रोद्गातृप्रतिहर्त्रोः क्रमेणविच्छेदेविरुद्धप्रायश्चित्तयोःसमुच्चयासंभवात्किंपूर्वंकार्यमुतपरमितिविषयेऽनुपजातविरोधितयापूर्वमितिप्राप्तेराद्धांतःपौर्वापर्येसतिनिमित्तयोःपूर्वस्यनैमित्तिकस्यदौर्बल्यंउत्तरस्यपूर्वनिरपेक्षस्यतद्बाधकतयोदितत्वात्पूर्वोदयकालेउत्तरस्याप्राप्तत्वेनपूर्वेणबाध्यत्वायो

स्याद्वाविरोधस्तदपिप्रवृत्तंप्रत्यक्षमग्रेऽबलमेवबाध्यं॥ प्राबल्यवत्याचरमप्रवृत्त्याश्रुत्यात्यपच्छेदनयोक्तरीत्या ॥ १०१ ॥ नन्वेवमप्यस्त्यनुमानबोधोभेदश्रुतेःसंयमिचक्रवर्त्तिन् ॥ घटादिवद्ब्रह्मनिरूपितनभेदेनयुक्तोयमसर्ववित्त्वात्॥ २ ॥

गात् तदुक्तंपूर्वंपरमजातत्वादबाधित्वैवजायते परस्यानन्यथोत्पादान्नत्वबाधेनसंभवः तत्रदृष्टांतः प्रकृतिवत् यथाप्रकृतौकृतोपकाराः कुशाःप्रथममतिदेशेनविकृतावुपकाराकांक्षिण्यांप्राप्ताःकल्प्योपकारचरमभाविभिरपिशरैर्निरपेक्षैर्बाध्यंतेतद्वत्तथाचयथाप्रथमप्रवृत्तंदुर्बलंपूर्वनैमित्तिकमेवपश्चात्प्रवृत्तेनप्रबलेनोत्तरेणनैमित्तिकेनबाध्यंतद्वद्यथोक्तंप्रत्यक्षमेवयथोक्तश्रुत्याबाध्यं हिशब्दोलोकप्रसिद्धिंद्योतयति यथापूर्वप्रवृत्तरजतज्ञानमेवपश्चात्प्रवृत्तेनशुक्तिज्ञानेनबाध्यमन्यथातदनपबाधनेतदपबाधनात्मकस्यतस्योत्पत्त्यनुपपत्तेस्तद्वदित्यर्थः इंद्र० ॥ १०१॥ एवमुक्तोमंडनोऽयंजीवोब्रह्मनिरूपितभेदवान्असर्वज्ञत्वात्घटादिवदित्यनुमानेनश्रुतेर्बाधंशंकते नन्वेवंप्रत्यक्षेणाभेदश्रुतेर्बाधाभावेपिहेसंयमिचक्रवर्त्तिन्नित्यनेनतर्कानधिकारंद्योतयति अनुमानेनाभेदश्रुतेर्बाधोऽस्तितदेवदर्शयति घटादिवदिति उपलक्षणमेतद्ब्रह्मधर्मिकभेदप्रतियोगि ॥ १
त्वस्यापिअसर्वज्ञत्वादितिपदार्थत्वादित्यस्याप्युपलक्षणंपदंब्रह्मतदर्थत्वात्तच्छेषत्वात्तन्नियम्यत्वादितिवा उ० ॥ २ ॥

मंडनोक्तमनुमानंविकल्प्यदूषयतिभगवान्भाष्यकारः किमेषब्रह्मनिरूपितोभेदःपरमार्थभूतःप्रसाध्यतेऽथवाकाल्पनिकः आद्येदृष्टांतहानिः घटादेरुक्तभेदवत्त्वतत्प्रतियोगित्वयोरभावात् अंत्येतुस्वीकृतोऽस्माभिर्नसाधनीयः परस्परप्रतियौगिककाल्पनिकव्यावहारिकभेदस्यास्माभिरप्यंगीकृतत्वात्सिद्धसाधनमित्यर्थः एतेनजीवस्यब्रह्मणोभेदाभावेतन्नियम्यत्वानुपपत्तिरपिप्रत्युक्ता नियम्यत्वादेःस्वसमानसत्ताकनियंत्रादिभेदसापेक्षत्वात्तस्यचस्वीकारात् ॥ २ ॥ एवमुक्तोमंडनआह ब्रह्मनिरूपितस्वज्ञानाबाध्यभेदवत्त्वंसाध्यंतच्चघटादावस्तिआत्मज्ञाने

किमेषभेदःपरमार्थभूतःप्रसाध्यतेकाल्पनिकोथवाद्ये ॥ दृष्टांतहानिश्चरमेतुविद्वन्नूरीकृतोऽस्माभिरसाधनीयः ॥ ३ ॥ स्वप्रत्ययाबाध्यभिदाश्रयत्वंसाध्यंघटादौचतदस्तियोगिन् ॥ त्वयात्मबोधेनभिदानबाध्येत्यनभ्युपेतेतिनकोपिदोषः ॥ ४ ॥ ननुस्वशब्देनसुखादिमान्वाविवक्षितस्तद्विधुरोथवात्मा ॥ आद्येऽस्मदिष्टंनतुसाध्यमंतेदृष्टांतहानिःपुनरेवतेस्यात् ॥ ५ ॥

नघटादिगतभेदस्याबाध्यत्वात् हेयोगिन्आत्मज्ञानेननबाध्याभिदात्वयाऽनभ्युपेताआत्मज्ञानाबाध्योभेदस्त्वयानांगीकृतःसचास्माभिःसाधनीयइतिहेतोर्नकोपिदृष्टांतहान्यादिरूपोदोषः ॥ ४ ॥ एतदपिविकल्प्यदूषयतिभगवान् ननुस्वशब्देनसुखादिमान्जीवपदवाच्यःकर्त्रादिरूपआत्माविवक्षितोऽथवासुखादिरहितः आद्येसुखदुःखादिमतःशरीरिणःप्रत्ययेनाबाध्यस्यव्यावहारिकानिर्वचनीयभेदस्यास्मदिष्टत्वान्नैवतत्साध्यं अंतेदृष्टांतहानिःपुनरेवतेस्यात् घटादेःसुखदुःखादिविधुरात्मन्यज्ञानविलसितत्वेनतद्बोधबाध्यत्वस्वीकारात्तद्बोधाबाध्यस्यभेदस्यकाप्यनभ्युपगमात् घटादावपिव्याप्त्यभावेनव्याप्यत्वासिद्धेः ॥ ५ ॥

* स्वज्ञानबाध्यभेदवत्त्वं

एवमुक्तोमंडनआह ॥ हेयोगिन् अनौपाधिकभेदवत्त्वमिहास्मिन्ननुमानेविवक्षितं ननुजीवेशभेदस्यनिरुपाधिकत्वेपिघटादिभेदवन्मिथ्यात्वोपपत्तेःसिद्धसाधनतात्रापितदवस्थेत्याशंक्याह त्वदिति जीवेशभेदस्यनिरुपाधिकत्वेतत्वज्ञानादविद्यादेर्निवृत्तावपितत्कार्यघटादिभेदवन्नतस्तन्निवृत्तेरयोगात्तत्सत्यत्वसिद्धिभियौपाधिकस्येश्वरजीवभेदस्यतवेष्टत्वादस्माभिश्चानौपाधिकभेदवत्त्वस्यसाध्यमानत्वात्नसिद्धसाधनंनापिदृष्टांतहानिस्तत्रनिरुपाधिकभेदस्यतवेष्टत्वादित्याह घटेशभेदइति वियोगिनी ॥ ६ ॥ परिहरतिभगवान् घटेशभेदेप्यविद्यायानु

योगिन्ननौपाधिकभेदवत्त्वंविवक्षितंसाध्यमिहत्वदिष्टः ॥ औपाधिकस्त्वीश्वरजीवभेदोघटेशभेदोनिरुपाधिकश्च ॥ ६ ॥ घटेशभेदेप्युपधिर्ह्यविद्यातवानुमानेषुजडत्वमेव ॥ चित्त्वादभिन्नःपरवत्परस्मादात्मेतिवात्रप्रतिपक्षहेतुः ॥ ७॥

पाधित्वेनानौपाधिकस्यतस्यतत्रानंगीकाराद्दृष्टांतहानिरेवेत्यर्थः किंचतवानुमानेषुजडत्वमुपाधिरेवघटादेर्जडत्वेनदृश्यतयामिथ्यात्वात्तद्गोचरज्ञानस्यघटतद्भेदहेत्वज्ञाननिवृत्त्ययोग्यत्वात्तत्रस्वज्ञानाबाध्यभेदवत्त्वंजाड्यप्रयुक्तमितिजडत्वमुक्तसाध्यव्यापकंसाधनवतिस्वप्रकाशात्मन्यभावात्साधनाव्यापकं ततश्चसोपाधिकत्वादयंहेत्वाभासइत्यर्थः ननुप्रमेयत्वातिरिक्तजडत्वाभावात्तस्यचकेवलान्वयित्वात्साधनव्यापकत्वादिनानोपाधित्वमितिचेन्न तस्यास्वप्रकाशस्यात्मनःस्वप्रकाशत्वस्यचश्रुतिन्यायसिद्धत्वात्पदार्थत्वादितिप्रतिपक्षहेतुःप्रतिपक्षंदर्शयति आत्मापरप्रतियोगिकभेदशून्यः चित्त्वात्तत्रदृष्टांतःपरवदिति प्रतिपक्षःसाध्याभावसाधकोहेतुर्यस्यसतथाहेतुःसप्रतिपक्षइत्यर्थः उ० ॥ ७ ॥

एवमुक्तोमंडनोब्रह्मपक्षकानुमानंप्रयुंजन्सिद्धसाध्यत्वादिपरिहारंशंकते धर्मिप्रमाऽबाध्यशरीरभेदोब्रह्मणिसाध्यमिष्टंहियस्मात्संस्तिशून्येब्र
ह्मजीवप्रतियौगिकधर्मिप्रमाऽबाध्यभेदवत्संस्तिशून्यत्वाद्घटादिवदित्येवमस्मदिष्टत्वादात्मप्रतियौगिकभेदस्यचब्रह्मज्ञानेनबाध्यत्वस्यतवेष्टत्वा
दस्माभिश्चतद्विपरीतस्यसाध्यमानत्वान्नसिद्धसाधनंनापिदृष्टांतहानिर्घटादिप्रमयातथाभूतभेदस्याबाध्यतायास्तवापीष्टत्वादित्याह त्वयेति
॥ ८ ॥ एतद्विकल्प्यदूषयतिभगवान् किंसभेदःसमस्तधर्मिप्रमयानबाध्यःकिंवायत्किंचनधर्मिबोधान्नबाध्यः तत्रघटगतजीवभेदस्यापिस्व

धर्मिप्रमाबाध्यशरीरभेदस्त्वसंस्तौब्रह्मणिसाध्यमिष्टं ॥ त्वयेष्यतेब्रह्मधियात्मभेदोबाध्योघटादिप्रमयात्व
बाध्यः ॥ ८ ॥ किंकृत्स्नधर्मिप्रमयानबाध्यःकिंवासयत्किंचनधर्मिबोधात् ॥ घटादिकेब्रह्मणिचात्मभेदस्यै
क्यात्पुनःस्यान्ननुपूर्वदोषः ॥ ९ ॥ किंवागुणोवासगुणोमनीषिन्विवक्ष्यतेधर्मिपदेननांत्यः ॥ भेदस्यतद्बु
द्ध्यविबाध्यतेष्टेर्नाद्यश्चतत्रोभयथापिदोषात् ॥ १० ॥

धर्मिब्रह्मज्ञानबाध्यत्वस्वीकारेणयावद्धर्मिज्ञानाबाध्यत्वस्यासंप्रतिपत्त्यादृष्टांतहानेराद्यपक्षासंभवमभिप्रेत्यद्वितीयेदोषमाह पुनःपूर्वोक्तःसि
द्धसाधनलक्षणोदोषःस्यात्तत्रहेतुमाह घटादाविति स्वरूपातिरिक्तभेदवादिमतेघटादौब्रह्मणिचात्मभेदस्यैक्यात्तद्धर्मिघटज्ञानाबाध्यजीवभे
दस्यब्रह्मण्यस्माभिरपिस्वीकृतत्वादित्यर्थः ॥ ९ ॥ पुनःप्रकारांतरेणविकल्प्यदूषयति किंचेति हेमनीषिन्धर्मिपदेनकिंवेदांततात्पर्यगोचरःस
त्यज्ञानादिरूपोनिर्गुणोविवक्ष्यते किंवाब्रह्मेशादिपदवाच्योऽनवच्छिन्नत्वसर्वज्ञत्वादिविशिष्टःसगुणो नद्वितीयोभेदस्यतत्प्रमाऽविबाध्यतायाइ
ष्टत्वेनसिद्धसाधनत्वात् नचाद्यपक्षउभयथापिप्रमितत्वाप्रमितत्वलक्षणपक्षद्वयेपिवक्ष्यमाणविधयादोषस्यसत्त्वादित्यर्थः ॥ १० ॥

उभयथापिदोषाद्वित्युक्तंविवृणोति किंनिर्गुणंब्रह्मप्रमितंसत्पक्षः किंवाऽप्रमितं द्वितीयेप्रामाण्याश्रयासिद्धिरथाद्यपक्षेब्रह्मादिपदलक्ष्यस्याद्वयानं
दस्यप्रत्यग्बोधात्मजीवाभेदेनिर्धारिततात्पर्यैस्तत्त्वमस्यादिवेदांतैर्जीवात्माभेदेनपरमात्मनःसिद्धेर्धर्मिग्राहकवेदांतप्रमाणस्यप्रकोपःप्राप्नोति त
थाचज्योतिष्टोमोनस्वर्गफलःक्रियात्वान्मर्दनक्रियावदित्यनुमानंज्योतिष्टोमेनस्वर्गकामोयजेतेतिवेदबाधितविषयत्वाद्यथाभासरूपंतथेदम
पीतिभावः ॥ ११ ॥ एवंसर्वतःप्रतिरुद्धोमंडनोऽनुमानविरोधंस्थापयितुमशक्तःश्रुतिविरोधमुद्भावयतिभोइति द्वासुपर्णासयुजासखायासमा
नंवृक्षंपरिषस्वजाते तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीतिश्रुतिःकर्मफलभोक्तृभोक्त्रोर्जीवेशयोर्भेदमुदीरयंतीतयोर्जीवेशयो

किन्निर्विशेषंप्रमितंनवांत्येप्रामाण्याश्रयासिद्धिरथाद्यकल्पे ॥ शरीर्यभेदेनपरस्यसिद्धेःप्राप्नोतिधर्मिग्रहमान
कोपः ॥ ११ ॥ भोद्वासुपर्णासयुजासखायेत्याद्याश्रुतिर्भेदमुदीरयंती ॥ जीवेशयोःपिप्पलभोक्तृभोक्त्रोस्त
योरभेदश्रुतिबाधिकाऽस्तु ॥ १२ ॥ प्रत्यक्षसिद्धेविफलेपरात्मभेदेश्रुतिर्नोनयविन्प्रमाणं ॥ स्यादन्यथामानम
तत्परोपिस्वार्थेर्थवादःसकलोपिविद्वन् ॥ १३ ॥

रभेदश्रुतेर्बाधिकाऽस्तु ॥ १२ ॥ परिहरतिभगवान्प्रत्यक्षसिद्धेविफलेस्वर्गापवर्गाख्यफलशून्येप्रत्युतमृत्योःसमृत्युमाप्नोतियइहनानेवपश्यती
तिश्रुत्युक्तानर्थप्रदेपरजीवयोर्भेदेश्रुतिःप्रमाणंनस्यादत्रभेदेप्रत्यक्षप्रतिपन्नमंगीक्रियतेतत्रश्रुतिप्रामाण्यवारणायनतुतत्रप्रमाणंतदसंभवस्योक्त
त्वात्सिद्धांतेशुक्तिरूप्यवत्तस्यानुभवमात्रसिद्धत्वस्वीकारादज्ञातेर्थेश्रुतिप्रमाणस्यन्यायेननिर्धारितवतोजैमिनेर्न्यायाभिज्ञस्यतवैवंकथनंनशो
भनमितिध्वनयन्नाह हेनयवित् तथाचभेदस्यान्यतःसिद्धावपूर्वत्वाभावान्नश्रुतितात्पर्यगोचरतायेनवाक्येनयत्रप्रतीत्युत्पादनेनमानाभावप्र
युक्तासत्वशंकानिवर्त्ततेतस्यतत्रतात्पर्यमन्यथातस्यतदर्थत्वायोगात्यत्परःशब्दःसशब्दार्थइतिन्यायात्विपक्षेऽपसिद्धांतदंडंपातयति अन्य
थास्वार्थेऽतत्परोप्यर्थवादःसकलोपिप्रमाणंस्यात् एतज्ज्ञातुंयोग्योसीतिसूचयितुमाह हेविद्वन्निति उ० ॥ १३॥

एवमुक्तोमंडनआह. क्षेत्रज्ञं वापिमांविद्धिसर्वक्षेत्रेषुभारतेत्यादिस्मृतिप्रसिद्धस्यार्थस्यविबोधकतत्त्वमस्यादिश्रुतिवाक्यंमूलतयायथाप्रमाण मिष्यतेतथाप्रत्यक्षेणसिद्धोऽर्थोयस्यतथाभूतंवाक्यंप्रत्यक्षस्यमूलतयाप्रमाणंस्यात्तथाचभेदस्यप्रत्यक्षादिप्रवृत्तेःप्रागपूर्वतायानिरपेक्षश्रुतिप्रमे यत्वाच्छ्रुतेस्तत्रतात्पर्योपपत्तिरितिभावः ॥ १४ ॥ परिहरतिभगवान् यदिवेदविद्भिःस्मृतेऽर्थेश्रुतिस्तन्मूलतयाप्रमाणंनभवेत्किंत्वनधिगतगं तृत्वेनैववेदविद्भिःस्मर्यमाणार्थस्यततएवज्ञानत्वात्तर्हिवेदकथानभिज्ञैरपिपरजीवयोर्भेदेज्ञातेसाश्रुतिस्तन्मूलतयाप्रमाणंकथंभवेत्नकेनापिप्र

स्मृतिप्रसिद्धार्थविबोधिवाक्यंयथेष्यतेमूलतयाप्रमाणं॥ प्रत्यक्षसिद्धार्थकवाक्यमेवंस्यादेवतन्मूलतयाप्र माणं॥ १४॥ श्रुतिःस्मृतेर्थेयदिवेदविद्भिर्भवेन्नतन्मूलतयाप्रमाणं ॥ कथंभवेद्वेदकथानभिज्ञैर्ज्ञातेपिभेदे परजीवयोःसा ॥ १५॥ जीवेश्वरौसावदतीत्युपेत्यप्रावोचमेतत्परमार्थतस्तु ॥ विविच्यसत्वात्पुरुषंसमस्त संसाररराहित्यममुष्यवक्ति॥ १६॥ यदीयमाख्यात्यथसत्वजीवौविहायसर्वज्ञशरीरभाजौ ॥ जडस्यभोक्तृ त्वमुदाहरंतीप्रामाण्यमर्हन्कथमश्नुवीत॥ १७॥

कारेणेत्यर्थस्तथाचवेदकथानभिज्ञैर्निरपेक्षतयाप्रथमप्रवृत्तैःप्रत्यक्षादिभिर्ज्ञातेभेदेश्रुतिःप्रमेयत्वाभावान्नतस्यास्तत्रतात्पर्यमितिभावः ॥ १५॥ किंचसाश्रुतिर्जीवेश्वरौवदतीत्यंगीकृत्यैतत्प्रावोचं परमार्थतस्तुकर्मफलभोक्तुःसत्वाद्बुद्धेःपुरुषंविविच्य साश्रुतिरमुष्यपुरुषस्यसमस्तसुखदुःख भोक्तृत्वलक्षणस्यसंसारस्यराहित्यंवक्ति ॥ १६ ॥ उक्तश्रुत्यर्थमसहमानोमंडनआह यदीयंश्रुतिःपरजीवौविहायाथसत्वजीवौवक्ति तर्हिप्रत्यक्षविरुद्धं जडस्यसत्वस्यभोक्तृत्वमुदाहरंतीहेऽर्हन्प्रामाण्यंकथमश्नुवीतकेनप्रकारेणप्राप्नुयात्प्रत्यक्षविरुद्धार्थप्रतिपादकत्वेनयजमानः प्रस्तरइत्यादिश्रुतिवत्स्वार्थेप्रामाण्यानुपपत्तेः ॥ १७ ॥

 अस्यमंत्रस्यपैंग्यरहस्यब्राह्मणेनैवमेवव्याख्यातत्वान्मैवमितिपरिहरतिभगवान् अत्रास्मिन्नर्थेत्वयावयंनशंकनीयायतस्तयोरन्यःपिप्पलंस्वा 
द्वत्तीतिसत्वमनश्नन्नन्योअभिचाकशीत्यनश्नन्नन्योऽभिपश्यतिज्ञस्तावेतौसत्वक्षेत्रज्ञावितिपैंग्यरहस्यमेवेमंमंत्रंविवृणोतीत्यर्थः विद्वांस्त्वमेत
उज्ज्ञातुंयोग्योसीतिसंबोधनाशयः ॥ १८ ॥ उक्तब्राह्मणस्यापिशारीरक्षेत्रप्रतिपादकत्वाद्द्वासुपर्णेतिवाक्यस्यनान्यपरत्वमितिमंडनःशंकते ननुत
॥ १९ ॥ त्रपैंग्यरहस्यब्राह्मणेपिसत्त्वशब्दःशारीरवाचीक्षेत्रज्ञशब्दःपरमात्मवाचीअतःकारणात्पैंग्यरहस्योक्तमार्गेणाप्यस्यबुध्यात्मपरत्वंनास्तीत्यर्थः ८

नचोदनीयावयमत्रविद्वन्यतस्त्वयापैंग्यरहस्यमेव॥ अत्तीतिसत्वेत्वभिपश्यतिज्ञइतिस्मसम्यग्विवृणोतिमं
त्रं॥ १८॥ शारीरवाचीननुसत्वशब्दःक्षेत्रज्ञशब्दःपरमात्मवाची ॥ तत्राप्यतोनान्यपरत्वमस्यवाक्यस्यपैं
ग्योदितवर्त्मनापि ॥ १९॥ तदेतदित्यादिगिराहिचित्तेप्रदर्शितासत्वपदस्यवृत्तिः ॥ क्षेत्रज्ञशब्दस्यचवृत्ति
रुक्ताशारीरकेद्रष्टरितत्रविद्वन् ॥ २० ॥ येनेतिहिस्वप्नदृशिक्रियायाःकर्त्तोच्यतेतत्रसजीवएव ॥ क्षेत्रज्ञश
ब्दाभिहितश्चयोगिन्स्यात्स्वप्नदृक्सर्वविदीश्वरोपि॥ २१ ॥

॥ १९ ॥ सत्वक्षेत्रज्ञशब्दयोरंतःकरणशारीरपरतयाप्रसिद्धत्वात्तत्रैवव्याख्यातत्वाच्चमैवमित्युत्तरमाहभगवान् तत्रपैंग्यरहस्येतदेतत्सत्वंयेन
स्वप्नंपश्यत्यथयोयंशारीरउपद्रष्टासक्षेत्रज्ञस्तावेतौसत्वक्षेत्रज्ञावितिगिरासत्वपदस्यवृत्तिश्चित्तेप्रदर्शिता क्षेत्रज्ञशब्दस्यचशारीरकेद्रष्टरिवृत्ति ॥ १
रुक्ता हिरितिप्रसिद्धार्थकोनिपातः ॥ २० ॥ उदाहृतपैंग्यरहस्यगिरापिजीवपरमात्मानावेवविवक्ष्यतइतिमंडनःशंकते येनेत्यनेनहितत्रोदा
हृतगिरिस्वप्नदर्शनक्रियायाःकर्तोच्यते सकर्त्ताजीवएवतथाक्षेत्रज्ञशब्दाभिहितः स्वप्नद्रष्टाईश्वरोपिस्याद्यतोहेयोगिन्ससर्वज्ञइत्यर्थः ॥२१॥

कर्त्रर्थस्यतिङ्प्रत्ययेनाभिहितत्वात् शारीरइतिविशेषणाच्चनैवमितिभगवान्परिहरति अत्रगिरितिङ्प्रत्ययेनकर्त्तोक्तस्तस्मात्करणेतृतीयास्वीक र्तव्याऽनभिहितइत्यधिकारात् द्रष्टाचशारीरइतिशारीरत्वेनविशेष्यतेतेनहेतुनासद्रष्टाईश्वरोनस्यादित्यर्थः मनीषिणात्वयैवंनवक्तव्यमितिसं बोधनाशयः ॥ २२ ॥ एवमुक्तोमंडनःसत्वपदस्यजीवेवृत्तिप्रतिपादयितुमशक्तःशारीरपदस्यपरमात्मनिवृत्तिंदर्शयति शरीरेभवतीत्यस्मि

तिङ्प्रत्ययेनाभिहितोत्रकर्ताततस्तृतीयाकरणेभ्युपेया ॥ द्रष्टाचशारीरतयामनीषिन्विशेष्यतेतेनसनेश्वरः स्यात् ॥ २२ ॥ वृत्तिःशरीरेभवतीत्यमुष्मिन्नर्थेहिशारीरपदस्ययोगिन् ॥ तस्मिन्भवन्सर्वगतोमहेशःकथं नशारीरपदाभिधेयः ॥ २३ ॥ भवन्शरीरादितरत्रचेशःकथंनुशारीरपदाभिधेयः ॥ नभःशरीरेपिभवत्य थापिनकेपिशारीरमितीरयंति ॥ २४ ॥ यद्येषमंत्रोनभिधायजीवप्राज्ञौवदेद्बुद्धिशरीरभाजौ ॥ अत्तीति भोक्तृत्वमचेतनायाबुद्धेर्वदेत्तर्हिकथंप्रमाणं ॥ २५ ॥

न्नर्थेहियस्मात् हेयोगिन् शारीरपदस्यवृत्तिस्तस्मात्सर्वगतत्वात्तस्मिन् शरीरेभवन्महेशःशारीरपदाभिधेयःकथंनभवेदपितुभवेदेव ॥ २३ ॥ प रिहरतिभगवान् सर्वगत्वादीशःशरीरादितरत्रापिभवन् शारीरपदाभिधेयःकथंतत्रदृष्टांतोयथाकाशंव्यापकत्वाच्छरीरेपिभवतितथापिशारी रपदाभिधेयंकेपिनकथयंतितद्वदित्यर्थः उ० ॥ २४ ॥ एवंतर्हिमंत्रस्यप्रामाण्यंबाध्येतेतिशंकितंमंडनःस्मारयति यद्येषमंत्रोजीवेशावनभि धायबुद्धिजीवौवदेत् बुद्धेश्चाचेतनायाअत्तीतिभोक्तृत्वंवदेत्तर्हिप्रमाणंकथं प्रमाणंनभवेदित्यर्थः इंद्र ॥ २५ ॥

परिहरतिभगवान् अदाहकस्यापिलोहपिंडस्यवह्नेस्तादात्म्याद्यथादाहकत्वमास्तेतथैवचैतन्यानुप्रवेशादचेतनायाबुद्धेरपिभोक्तृत्वंस्यात्तथा चायोदहतीतिवाक्यवद्दत्तीतिवाक्यमपिसुखदुःखादिविक्रियावतिसत्वेभोक्तृत्वमप्यप्रवृत्तंप्रमाणमेवनहीयंश्रुतिरचेतनस्यसत्वस्यभोक्तृत्वंवक्तुं प्रवृत्ताकिंतुचेतनस्यक्षेत्रज्ञस्याभोक्तृत्वंब्रह्मस्वभावतांचवक्तुंप्रवृत्तेतिभावः वि॰ ॥ २६ ॥ एवमुक्तोमंडनऋतंपिबंतौसुकृतस्यलोकेगुहांप्रवि ष्टौपरमेपरार्ध्ये छायातपौब्रह्मविदोवदंतिपंचाग्नयोयेचत्रिणाचिकेताइतिकठवल्लीस्थाश्रुतिरभेदश्रुतेर्बाधिकास्त्वित्याह ऋतंकर्मफलंपिबंतौ

अदाहकस्याप्ययसःकृशानोराश्लेषणाद्दाहकतायथास्ते ॥ तथैवभोक्तृत्वमचेतनायाबुद्धेरपिस्याच्चिदनुप्रवेशात् ॥ २६ ॥ छायातपौयद्वदतीवभिन्नौजीवेश्वरौतद्वदितिब्रुवाणा ॥ ऋतंपिबंतावितिकाठकेषुश्रुतिस्त्वभेदश्रुतिबाधिकास्तु ॥ २७ ॥ भेदंवदंतीव्यवहारसिद्धंनबाधतेऽभेदपरश्रुतिंसा ॥ एषात्वपूर्वार्थतयाबलिष्ठाभेदश्रुतेःप्रत्युतबाधिकास्यात् ॥ २८॥ मानांतरोपोद्बलिताहिभेदश्रुतिर्बलिष्ठायमिनांवरेण्य ॥ तद्बाधितुंसाप्रभवत्यभेदश्रुतिंप्रमाणांतरबाधितार्था ॥ २९ ॥

पानप्रयोज्यप्रयोजकावितिकाठकेषुश्रुतिस्तुछायातपौयद्वदतीवभिन्नौजीवेश्वरौतद्वदितिब्रुवाणाऽभेदश्रुतेर्बाधिकाऽस्तु उ॰ ॥ २७ ॥ इयम पिश्रुतिर्नबाधिकाप्रत्युतबाध्येतिपरिहरतिभगवान् व्यवहारसिद्धंभेदंवदंतीसाभेदश्रुतिस्तदसिद्धाभेदपरांश्रुतिंनबाधतेप्रत्युतापूर्वार्थोयस्यास्त त्तयाऽपूर्वार्थबोधिकतयाबलिष्ठाएषाभेदश्रुतिर्भेदश्रुतेर्बाधिकास्यात् ॥२८॥ एवमुक्तोमंडनआह प्रमाणांतरेणप्रत्यक्षेणोपोद्बलितोपबृंहिता भेदश्रुतिर्हेयमिनांवरेण्यबलिष्ठातत्तस्मात्साभेदश्रुतिःप्रत्यक्षप्रमाणबाधितार्थामभेदश्रुतिंबाधितुंप्रभवतिनत्वभेदश्रुतिर्भेदश्रुतिमित्यर्थः ॥ २९ ॥

परिहरति हेबुधानामग्रयायिन् प्रमाणांतरंश्रुतीनांप्राबल्यंनापादयतिकिंतुगतार्थतादानमुखेनतासांश्रुती[illegible]याय नस्त्वेयमुक्तिरशोभनेतिसंबोधनाशयः ॥ ३० ॥ उपसंहरति इतीति अस्यश्रीशंकरस्येत्याद्यादृढयुक्तिःशुशुभे आद्यपदेनमुक्तोऽश्नुतेकाम गणान्सहेशेत्येवंवदंतीखलुतैत्तिरीया श्रुतिर्विनाभेदमबाध्यमथार्द्धीनासतीसत्त्वममुष्यवक्ति १ मैवंयतोऽज्ञाननिवृत्तितोयंसत्यामितानंद चिदात्मभावं गतोऽश्नुतेसोम्यससर्वकामांस्तदंतरस्थानितिसाब्रवीति २ द्रष्टव्यआत्मेतिवचःपरात्मनःकर्मत्वकर्तृत्वमिदंहिवक्ति संदर्शनेतोय तिराजभेदःसत्योऽन्यथास्याच्छ्रुतिरप्रमाणं ३ नेयंश्रुतिस्तात्विकभेदगास्यद्वैतश्रुतेर्वेदविदांवरेण्य विरोधतोब्रह्मपरत्वतोस्यास्तात्पर्यगत्याकि लमानभावः ४ नन्वस्त्वभेदश्रुतिरेवयोगिन्प्रकल्पिताभेदपरेतिमैवं प्रातीतिकोवाव्यवहारसिद्धोभेदोनवेभेदमितिप्रकोपात् ५ अथास्तु

प्राबल्यमापादयतिश्रुतीनांमानांतरंनैवबुधाग्रयायिन्॥गतार्थतादानमुखेनतासांदौर्बल्यसंपादकमेव॥किंतु॥
॥ ३० ॥ इत्याद्यादृढयुक्तिरस्यशुशुभेदत्तानुमोदागिरांदेव्यातादृशविश्वरूपरभसावष्टंभमुष्टिंधया ॥ भर्तृन्यास विलक्ष्यसूक्तिजननीसाक्षित्वकुक्षिंभरिःसश्लाघाद्भुतपुष्पवृष्टिलहरीसौगंध्यपाणिंधया ॥ ३१ ॥

भेदेयतिशेखरार्थापत्तिर्नचैवंननसत्यभेदं विनोपपत्त्यारहितोनचार्थस्तस्मादभेदार्थश्रुतिर्बलिष्ठा ६ स्याच्चेदभेदोस्यपरात्मनामुनेतह्योपल भ्येतनचोपलभ्यते तस्मादसौनास्तिततोयतेभिदाषष्ठप्रमाणस्यतुगम्यतांगता ७ यथावृतोनैवघटःप्रदृश्यतेतथावृतोऽसावपिनैवभासते अ विद्ययातत्त्वविदामनावृतःप्रकाशतेतोनभिदांत्यमानगा ८ इत्यादिदृढयुक्तिजातंयाह्यं तांविशिनष्टि गिरांदिव्याऽधिष्ठातृदेवतयासरस्वत्याद त्तोऽनुमोदोयस्यैतयानुमोदितेत्ययावत् तथातादृशस्यविश्वरूपस्यमंडनस्ययोरभसावष्टंभोवेगस्यदर्पस्यवास्तंभस्तस्यमुष्टिधयानिष्पीड्यसा राकर्षिकातयाभर्तुर्न्यासस्यसंन्यासस्यविलक्ष्येणसंव्याजेनयासूक्तिस्तस्याजननीसरस्वतीएवसाक्षित्वकुक्षिंभरिःसाक्षित्ववतीयस्यास्तथा श्लाघयासहवर्तमानायापुष्पवृष्टिलहरीतस्याःसौगंध्यस्यपाणिंधयतिहस्तंपिबंतीतितथा शार्दू० ॥ ३१ ॥

इत्थमेवंप्रकारेणयतिराजस्ययुक्तिमनुमोद्यमालांचमंडनगलेमलिनामवेक्ष्याद्ययुवांभिक्षार्थमुच्चलतमितीमौशंकरमंडनावृचिष्टोवाचांवास
रस्वतीतंवर्तींद्रंपुनरुवाच ॥ ११२ ॥ पुराकोपातिरेकवशतोमांशपतादुर्वाससातवजयस्तस्यावधिर्विहितस्तस्यजातत्वात्साहंहेशमिप्रवी
रयथागतमुपैम्यनुगच्छामीत्येवममुंससंभ्रममुक्त्वानिजधामयांतींबबंधेत्यन्वयः ससंभ्रमंयांतीमितिवा ॥ ३३ ॥ निःशंकमरण्यदुर्गामंत्रेणवन



इत्थंयतिक्षितिपतेरनुमोद्ययुक्तिंमालांचमंडनगलेमलिनामवेक्ष्य ॥ भिक्षार्थमुच्चलतमद्ययुवामितीमावृचि
ष्टतंपुनरुवाचयतीद्रमंबा ॥३२॥ कोपातिरेकवशतःशपतापुरामांदुर्वाससातदवधिर्विहितोजयस्ते ॥ साहं
यथागतमुपैमिशमिप्रवीरेत्युक्त्वाससंभ्रममसुंनिजधामयांतीं ॥ ३३ ॥ बबंधनिःशंकमरण्यदुर्गामंत्रेणतां
जेतुमनामुनींद्रः ॥ जयोऽपितस्यास्वमतैक्यसिद्ध्यैसार्वज्ञतःस्वस्यनमानहेतोः ॥ ३४ ॥ जानामिदेवींभवतीं
विधातुर्देवस्यभार्यांपुरभित्सगर्भ्यां ॥ उपात्तलक्ष्म्यादिविचित्ररूपांगुप्त्यैप्रपंचस्यकृतावतारं ॥ ३५ ॥

दुर्गामंत्रेणमुनींद्रःश्रीशंकरोबबंध किमर्थमित्यपेक्षायामाह तांसरस्वतींजेतुमनाः ननुयतींद्रस्यतस्यतज्जयसिद्धमानेनकिमित्याशंक्याह त
स्याःसरस्वत्याजयोपिस्वमतैक्यसिद्ध्यैनतुस्वस्यसर्वज्ञतानिमित्तकमानपूजादिसिद्ध्यर्थं उ० ॥ ३४ ॥ मंत्रेणबध्वाकिमुक्तवानित्यपेक्षायां ॥२
तद्वचनमुदाहरति देवस्यविधातुर्ब्रह्मणोभार्यांत्रिपुरसंभेदकस्यमहादेवस्यसगर्भ्यांसहोदरां उपात्तंलक्ष्म्यादीनांविचित्ररूपंययातथाभूता
मिदानींप्रपंचस्यरक्षणार्थंकृतावतारांदेवींभवतींसरस्वतींत्वामहंजानामि ॥ ३५ ॥

तस्मात् हे जननि ते भक्तचूडामणिरहं यदा निजस्थानमेतुं गंतुमभ्यनुज्ञामभिदास्यामि तदा त्वं निजपदं व्रजइत्येवंभूते निजवचने शारदया सरस्वत्या संमते सति मांडनं हृन्मंडनस्याभिप्रायं ज्ञातुमिच्छुरसौ मुनिः श्रीशंकरो मुदितोऽभूत् मालिनी ॥ १३६ ॥ इति श्रीमत्परमहंसपरिव्रा

व्रज जननि तदा त्वं भक्तचूडामणिस्ते निजपदमनुदास्याम्यभ्यनुज्ञां यदैतु ॥ इति निजवचनेऽस्मिंश्छारदासंमते सौ मुनिरथ मुदितोभून्मांडनं त्वद्दुभुत्सुः ॥ १३६॥ इति श्रीमाधवीये तन्मंडनार्यकथापरः ॥ संक्षेपशंकरजये सर्गोऽसावष्टमोऽभवत् ॥ ८ ॥ ॥ ७ ॥ मू० सं० १३६ ॥ ७ ॥ ॥ ७ ॥

जकाचार्यबालगोपालस्वामिश्रीपूज्यपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिकृते श्रीशंकराचार्यविजयडिंडिमेऽष्टमः सर्गः ॥ ८ ॥
टी० सं० ॥ ६२५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

श्री० ॥ एवंमंडनाचार्यसंवादंसपरिकरंनिरूप्यसर्वज्ञोपायंसप्रपंचंनिरूपयितुमुपक्रमते अथाचार्ययुक्तीनांसरस्वतीकृतानुमोदनस्यस्वगलस्थ मालायामलिनीभावस्यचानंतरंसंयमिराजस्यश्रीशंकरस्यवेदार्थनिर्णयकरैःपुनश्चन्यायसहितैर्वचनैःशमितआग्रहोयस्यसतथाभूतोपिसपदि तत्क्षणेकृतसंशयःपुनरवोचत्यतःकर्मजडः प्रमिताक्षरावृत्तं प्रमिताक्षरासजससैरुदितेतिलक्षणात् ॥ १ ॥ यदुवाचतदाह हेयतिराजसंप्रतिममा भिनवादपजयाद्विषादंनप्राप्तोस्मिअपितुजैमिनीयवचनानि अहहेतिनिपातावाश्चर्यातिशयार्थावत्यंतरवेदार्थौवा उन्मथितानीतिकारणादत्यंतं

श्री० ॥अथनवमसर्गः॥अथसंयमिक्षितिपतेर्वचनैर्निगमार्थनिर्णयकरैःसनयैः॥शमिताग्रहोपिपुनरप्यव दत्कृतसंशयःसपदिकर्मजडः॥ १ ॥यतिराजसंप्रतिममाभिनवान्नविषादितोस्म्यपजयादपितु॥ अपिजैमि नीयवचनान्यहहोन्मथितानिहीतिभृशमस्मिकृशः ॥ २ ॥ सहिवेत्त्यनागतमतीतमपिप्रियकृत्समस्तजग तोधिकृतः॥ निगमप्रवर्तनविधौसकथंतपसांनिधिर्वितथसूत्रपदः ॥ ३ ॥ इतिसंदिहानमवदत्तमसौनहि जैमिनावपनयोस्तिमनाक्॥ प्रमिमीमहेनवयमेवमुनेर्हृदयंयथावदनभिज्ञतया॥ ४ ॥

कृशोस्मि ॥ २ ॥ हियस्मात्सजैमिनिर्भविष्यंभूतंचजानाति पुनश्चजगतःप्रियकरणार्थंवेदस्यवेदार्थस्यवाप्रवर्त्तनविधावधिकृतस्तथाचैवंभूतस्त पसांनिधिःसकथंवितथसूत्रपदोवितथानिव्यर्थानिसूत्रपदानियस्यवितथसूत्रेषुव्यवसायोवायस्यतथाभूतःकथंभवेदित्यर्थः ॥ ३ ॥ इत्येवंसं देहंप्राप्तवंतंतंमंडनमसौश्रीशंकरोऽवोचत्जैमिनौमनाक्ईषदपिअपनयोऽन्यायोनहि किंतुवयमेवानभिज्ञतयामुनेरभिप्रायंयथावन्नप्रमिमीम हेप्रमातुंनशक्नुमः ॥ ४ ॥

एवंश्रुत्वात्युत्सुकोमंडनआह यदिकविजनैरप्यविदितंमुनेर्हृदयमभिप्रायोविद्यतेतत्तर्हीहास्मदग्रेवर्णय ननुमुन्यभिप्रायवित्त्वाभिमानवतांभव
द्विधानामग्रेतद्वर्णनंनिष्फलमित्याशंक्याह यदिभवताऽत्रास्मिन्हृदयवर्णनेप्रसक्तेयुक्तंकथितंतर्हिदलिताहंकृतयःसंतोवयंतत्हृदिकुर्महे॥५॥ए
वंप्रार्थितःसश्रीशंकरोजैमिन्यभिप्रायमाविष्करोति परेब्रह्मण्यभिप्रायवानपिविषयेषुप्रवाहीकृतबुद्धीन्तत्रानधिकारमालोच्यतत्राधिकाराय
ताननुग्रहीतुमिच्छुरसौमुनिःपरब्रह्मप्राप्तिसाधनतयापरंकेवलंसुकृतंपुण्यंकर्मातिशयेननिरूपितवान्नतुपरंब्रह्मेत्यर्थः ॥६॥ नन्विदंभवद्भिःकथं
ज्ञातमितिचेत्श्रुत्यर्थनिर्णायकस्यश्रुत्यननुरूपाभिप्रायवत्त्वाभावनिश्चयादित्याशयेनाह वचनमिति तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतिय

यदिविद्यतेकविजनाविदितंहृदयंमुनेस्तदिहवर्णयभो ॥ यदियुक्तमत्रभवताकथितंहृदिकुर्महेदलदहंकृत
यः॥ ५ ॥ अभिसंधिमानपिपरेविषयप्रसरन्मतीननुजिघृक्षुरसौ ॥ तदवाप्तिसाधनतयासकलंसुकृतंन्य
रूपयदितिस्मपरं ॥ ६ ॥ वचनंतमेतमितिधर्मचयंविदधातिबोधजनिहेतुतया ॥ तदपेक्षयैवसचमोक्षपरो
निरधारयन्नपरथेतिवयं॥ ७॥ श्रुतयःक्रियार्थकतयासफलाअतदर्थकानितुवचांसिवृथा ॥ इतिसूत्रयन्न
नुकथंमुनिराडपिसिद्धवस्तुपरतांमनुते॥ ८॥

ज्ञेनदानेनतपसानाशकेनेतिवचनंपरब्रह्मावगतिजन्महेतुतयाब्रह्मचर्यादिधर्मसमुदायंविदधातियद्यपिप्रत्ययार्थप्रधानतापक्षेसनर्थेच्छाजनिहेतु
तयातद्विधायकंतथाप्यश्वेनजिगमिषतीतिवत्प्रकृत्यर्थप्रधानताश्रयेणैवमुक्तं तद्वचनापेक्षयैवसचमोक्षपरोजैमिनिर्धर्मनिचयंनिरधारयत्नान्य
थेतिवयंमन्महइत्यध्याहारः॥ ७॥ननुआम्नायस्यक्रियार्थत्वादानर्थक्यमतदर्थानामितिसूत्रयन्वेदस्यसिद्धवस्तुपरतांकथंमनुतइतिमंडनःशंकते ॥ १
श्रुतयःक्रियार्थकतयासफलाअक्रियार्थकानितुवचांसिवृथाऽनर्थकानीतिसूत्रयन्मुनिराड्वेदवचसांसिद्धवस्तुपरतांननुकथंमनुतइत्यर्थः ॥८॥

उक्तसूत्रस्यकर्मकांडाभिप्रायत्वान्नैवमितिपरिहरतिभगवान् श्रुतिराशिःपरंपरयाऽद्वितीयब्रह्मपरोपिआत्मबोधःफलंयस्यतस्मिन्कर्मणिप्रसरत्कटाक्षःप्रवाहीकृतंदृष्टिरित्यतःकर्मप्रकरणस्थगिरांकार्यपरत्वमसूचिसूत्रितवान् ॥ ९ ॥ नन्वेवंतर्हिफलदातृत्वंकर्मणःस्वीकृत्यपरेशंकिमर्थंनिराहेतिमंडनःशंकते ननुकृत्स्नवेदकदंबस्यसच्चिदात्मपरतायदिमुनेरभिमतातर्हिपुरुषात्परमात्मनोभिन्नस्यकर्मणःफलदातृत्ववदन्सनुमुनिःपरमेश्वरंमपिकथंनिराकृतवानित्यर्थः ॥ १० ॥ अनुमानगम्यंतंनिराकृतवान्नतुवेदनिचयगम्यमितिसमाधत्तेभगवान् नन्विति इदंजगत्कर्तृपूर्वकंका

श्रुतिराशिरद्वयपरोपिपरंपरयात्मबोधफलकर्मणिच ॥ प्रसरत्कटाक्षइतिकार्यपरत्वमसूचितत्प्रकरणस्थगिरां ॥ ९ ॥ ननुसच्चिदात्मपरताभिमतायदिकृत्स्नवेदनिचयस्यमुनेः ॥ फलदातृतामपुरुषस्यवदन्सकथंनिराहपरमेशमपि ॥ १० ॥ ननुकर्तृपूर्वकमिदंजगदित्यनुमानमागमवचांसिविना ॥ परमेश्वरंप्रथयतिश्रुतयस्त्वनुवादमात्रमितिकाणभुजाः ॥ ११ ॥ नकथंचिदौपनिषदंपुरुषंमनुतेबृहंतमितिवेदवचः ॥ कथयत्यवेदविदगोचरतांगमयेत्कथंतमनुमानमिदं ॥ १२ ॥ इतिभावमात्मनिनिधायमुनिःसनिराकरोन्निशितयुक्तिशतैः ॥ अनुमानमीश्वरपरंजगतःप्रभवंलयंफलमपीश्वरतः ॥ १३ ॥

र्यत्वात्घटादिवदित्यनुमानंवेदवचांसिविनापरमेश्वरंसाधयतिश्रुतयस्तुअनुमानसिद्धार्थस्यानुवादमात्रमितिकाणभुजाःकाणादाः ॥ ११ ॥ औपनिषदमुपनिषदेकगम्यंबृहंतंपुरुषमवेदवित्कथंचिदपिनमनुतेनविजानातीतिवेदवचःपरमात्मनोऽवेदगोचरतांकथयति तथाचश्रुतिःतंत्वौपनिषदंपुरुषंपृच्छामिनावेदविन्मनुतेतंबृहंतमितितस्मादिदंकाणादोक्तमनुमानंतंकथंगमयेदितिभावमितिपरेणान्वयः ॥ १२ ॥ इत्युक्तंभावमात्मनिबुद्धौनिधायसमुनिस्तीक्ष्णयुक्तिशतैरीश्वरपरमनुमानंनिराकरोत्तथेश्वरात्जगतःप्रभवंप्रलयंफलंचनिराकरोत् ॥ १३ ॥

तत्तस्मादिहास्मिन्मुनेर्वचसिअस्मदुक्तविधयानिषदारहस्येनाण्वपिविरुद्धंनभवति तथाचोक्तंगूढभावमनवेक्ष्याबुधास्तंजैमिनिमनीश्वरवाद्यय
मितिकथयंति॥ १४॥ परमेश्वरपरानुमानखंडनमात्रेणतस्यानीश्वरवादित्वंनसंभवतीत्याह किमुतावतैव सपरात्मविदुषांप्रवरःनिरीश्वरवादीअ
भवत्निशाटनैर्मेचकादिभिराहितंस्थापितंतमो दिवसेतरणेःसूर्यस्यप्रभांक्वचिदपिनमलिनयेत्नैवमलिनांकुर्यात् ॥ १५॥ इत्येवंप्रकारेणयतिसिंहे
नकथितंजैमिनीयवचनानांहृदयंनिशम्यसकविराट्मंडनोमनसाऽत्यंतंननंदशारदयासहवर्त्तमानाश्चसंभानायकास्तथैवननंदुः ॥ १६ ॥ यति

तदिहास्मदुक्तविधयानिपदानविरुद्धमण्वपिमुनेर्वचसि॥इतिगूढभावमनवेक्ष्यबुधास्तमनीशवाद्ययमितिब्रुव
ते ॥ १४ ॥ किमुतावतैवसनिरीश्वरवाद्यभवत्परात्मविदुषांप्रवरः ॥ ननिशाटनाहिततमःक्वचिदप्यहनिप्रभांम
लिनयेत्तरणेः॥ १५॥ इतिजैमिनीयवचसांहृदयंकथितंनिशम्ययतिकेसरिणा॥मनसाननंदकविराण्नितरांस
हशारदाश्चसदसस्पतयः॥ १६ ॥ विदिताशयोपिपरिवर्तिमनाग्विशयःसजैमिनिमवापहृदा॥अवगंतुमस्यव
चसापिपुनःसचसंस्मृतःसविधमापकवेः ॥ १७॥ अवदच्चशृण्वितिसभाष्यकृतिप्रजहाहिसंशयमिमंसुमते ॥
यदवोचदेषममसूत्रततेर्हृदयंतदेवममनापरथा॥ १८ ॥

राजोक्त्याविदिताभिप्रायोपिसमंडनःपरिवर्तिवर्त्तमानोमनागीषद्विशयःसंशयोयस्यसअस्यजैमिनेर्वचसापिचतमभिप्रायमवगंतुंमनसाजैमिनिं
प्रापतस्यध्यानंकृतवान्सचजैमिनिःकवेःमंडनस्यसमीपमवाप ॥ १७ ॥ सजैमिनिःशृण्वित्यवदच्चहेसुमतेभाष्यकारेश्रीशंकरे सतेनोक्तएवमुने
राशयउतान्यइतीमंसंशयंपरित्यज यतोममसूत्रततेर्यत्हृदयमेषअवोचत्तदेवममहृदयंनान्यथा ॥ १८ ॥

किंचनकेवलंममैवत्त्वदयंयमिराट्जानातिअपितुश्रुतेःसर्वशास्त्रततेश्च्हृदयंवेदयच्चभूतंभविष्यंवर्त्तमानंतदप्ययमेववेदेतरस्सुमतेयावद ॥१९॥ तथाचैतदुक्तएवममाशयोव्यासशिष्यस्यममतद्विरुद्धकथनासंभवादित्याह गुरुणाश्रीवेदव्यासेनवेदांतवचसांचिदेकरसतत्परतानिरणायितद्विरुद्धमेकसूत्रमप्यहंकथंकथयामियतस्तस्मात्परिप्राप्तबुद्धिः॥२०॥ तस्मात्हेसुयशःसंशयमलमाकलय्यालंकृत्वाविमुच्यममवचनाद्रहस्यंश्रृणु संसृतिसागरनिमग्नजनोत्तरणार्थंगृहीतविग्रहंपरंपुरुषंपरमात्मानंशिवमेवेमंत्वंजानीहि यद्वाइममेवपरंपुरुषमवेहि ननुनिर्विग्रहस्यनस्यकथंतद्व

नममैववेदत्त्वदयंयमिराडपितुश्रुतेःसकलशास्त्रततेः॥ यदभूद्भविष्यतिभवत्तदपित्ययमेववेदनतथात्वितरः॥
॥१९॥ गुरुणाचिदेकरसतत्परतानिरणायिहिश्रुतिशिरोवचसां ॥ कथमेकसूत्रमपितद्विमतंकथयाम्यहंतदु
पसादितधीः॥ २०॥ अलमाकलय्यविशयंसुयशःश्रृणुमेरहस्यमिममेवपरं॥ त्वमवेहिसंसृतिनिमग्नजनोत्तर
णेगृहीतवपुषंपुरुषं॥२१॥ आद्येसत्वमुनिःसतांवितरतिज्ञानंद्वितीयेयुगेदत्तोद्वापरनामकेतुसुमतिर्व्यासःकलौ
शंकरः॥इत्येवंस्फुटमीरितोस्यमहिमाशैवेपुराणेयतस्तस्यत्वंसुमतेमतेत्ववतरःसंसारवार्धितरेः॥२२॥ इतिबो
धितद्विजवरोंतरधान्मनसोपगुत्ययमिनामृषभं॥ सयायजूकपरिषत्प्रमुखःप्रणिपत्यशंकरमवोचदिदं॥२३॥

त्तेत्याशंक्याह संसृतीति ॥२१॥ ननुकुतएतज्ज्ञातमितिचेत्तत्राह यतआद्येकृतयुगेसत्वमुनिःकपिलाचार्यःसतांज्ञानंप्रयच्छतिद्वितीयेत्रेतासंज्ञकेयुगेदत्तोद्वापरनामकेतुसुमतिर्व्यासःकलौशंकरइत्येवमस्यमहिमाशैवेपुराणेस्फुटंयथास्यात्तथायतःकथितस्तस्मात्तस्यमतेहेसुमतेत्वमवतरःप्रविष्टोभव ततःकिमितितत्राह संसारसमुद्रंतरेस्तीर्णोभव ॥ शार्दू० ॥ २२ ॥ ततःकिंवृत्तमित्यपेक्षायामाह इत्येवंबोधितोद्विजवरोमंडनोयेनसजैमिनिर्यमिनांऋषभंमनसाआलिंग्यांतर्धानमगात् सचयायजूकानांइज्याशीलानांसदसिप्रमुखःश्रेष्ठोमंडनःशंकरंप्रणिपत्येदंवक्ष्यमाणमवोचत् प्र० ॥ २३ ॥

संप्रतिभवान् विदितोस्तिकोसावहमितितत्राह जगतःप्रकृतिःकारणमतएवनिरस्तसमतातिशयःजगत्कारणस्यकत्वौदन्यथकस्यसिसृक्षायामप रस्यजिहीर्षाऽपरस्यजिहीर्षायामन्यस्यसिसृक्षेत्यनवस्थित्यापातात् ननुसांख्याद्यभिमतंप्रधानादिरूपंमांजानासीतिचेत्तत्राहावबोधमात्रवपु र्ननुविग्रहवंतंमांकथमेवंजानासीतिचेत्तत्राहैवंभूतोप्यस्मदाद्यज्ञजनोद्धरणायकेवलंगृहीतविग्रहोनतुवस्तुतस्तद्वानित्यर्थः ॥ २४ ॥ अबुधो द्धारश्चत्वयासंपादितएववेदांतवेद्यस्थापनादित्याशयेनाह आत्मावाइदमेकएवाग्रआसीत्ब्रह्मवाइदमग्रआसीदेकमेवसोम्येदमग्रआसीदेक

विदितोस्तिसंप्रतिभवान्जगतःप्रकृतिर्निरस्तसमतातिशयः ॥ अवबोधमात्रवपुरप्यबुधोद्धरणायकेवलमु पात्ततनुः॥ २४॥ यदेकमुदितंपदंयतिवरत्रयीमस्तकैस्तदस्यपरिपालकस्त्वमसितत्त्वमस्यायुधः॥परंगलित सौगतप्रलपितांधकूपांतरेपतत्कथमिवान्यथाप्रलयमग्रनापत्स्यते॥ २५॥ प्रबुद्धोहंस्वप्नादितिकृतमतिःस्व प्नमपरंयथामूढःस्वप्नेकलयतितथामोहवशगाः ॥ विमुक्तिमन्यंतेकतिचिदिहलोकांतरगतिंहसंत्येतान्दा सास्तवगलितमायाःपरगुरोः॥ २६॥

मेवाद्वितीयमित्यादिभिःऋग्यजुःसामाख्यवेदत्रयीमस्तकैर्यदेकंपदंकथितंतस्यास्यपदस्यतत्त्वमस्यायुधस्त्वंपरंकेवलंपरिपालकोसिअन्यथाग लिताःपुमर्थभ्रष्टायेसौगतास्तैःप्रलपितलक्षणस्यांधकूपस्यांतरेऽग्रपततृतत्पदंकथमिवप्रलयंनापत्स्यतेऽपितुप्रपत्स्यएव पृथ्वी ॥ २५ ॥ किंच यथाकश्चनमूढःस्वप्नेश्रमंप्राप्यसुप्त्वाप्रबुद्धःप्रबोधरूपमपरंस्वप्नएवाहंस्वप्नात्प्रबुद्धइतिकृतबुद्धिःकलयतिमन्यंतेतथेहलोकेकेचिदविवेकवशव र्त्तिनोबंधरूपामेवलोकांतरगतिंविमुक्तिमन्यंते तवपरगुरोर्दासास्तुविगलितमायाएतान्हसंति ॥ शि० ॥ २६ ॥

तस्माद्भेदवादिप्रलपितविमुक्तिमुहुर्धिग्धिगूयतोयस्याउदयेपिकर्तृत्वप्रमुखोऽसारःसंसारोनशाम्यतित्वदुक्तांस्थिरतमांविमुक्तिमोदेनुमोदेयतःस र्वानर्थनिवृत्तिपूर्वकपरमानंदप्राप्तिरूपेत्याह सेयंत्वदुक्तास्वरूपरूपाएवंभूतायाअपिनाशवत्त्वेऽनुपादेयत्वंस्यादित्यतःस्थिरतमेत्युक्तं ॥ २७॥ किंचाविद्यालक्षणयाराक्षस्यागिलितमखिलेशंहेपरगुरोअस्याःपिचंडमुदरंभित्वासरभसंयथास्यात्तथाऽमुष्मादुदरात्सकाशादुदहरउद्धृतवान सितथाचरक्षसांयुवतिभिर्दतांनतुगिलितांतत्राप्यमुष्याखिलेशस्यरामचंद्रस्यप्रियतमांसीतांनतुतंतत्रापिपश्यन्नूनतुरक्षोयुवतिनाशेनाहरत्हनू

मुहुर्धिग्धिग्भेदिप्रलपितविमुक्तिंयदुदयेप्यसारःसंसारोविरमतिनकर्तृत्वमुखरः॥भृशंविद्वन्मोदेस्थिरतम विमुक्तिंत्वदुदितांभवातीतायेयंनिरवधिचिदानंदलहरी॥२७॥ अविद्याराक्षस्यागिलितमखिलेशंपरगुरो पिचंडंभित्वास्याःसरभसममुष्मादुदहरः ॥ हतांपश्यन्रक्षोयुवतिभिरमुष्यप्रियतमांहनूमाँल्लोकेव्यस्तवतु कियतीस्यान्महितता॥ २८॥ जगदार्तिहन्ननवगम्यपुरामहिमानमीदृशमचिंत्यमहं॥ यदहंपुराब्रुवमसांप्रत मप्यखिलंक्षमस्वकरुणाजलधे॥ २९॥ कपिलाक्षपादकणभुक्प्रमुखाअपिमोहमीयुरमितप्रतिभाः ॥ श्रु तिभावनिर्णयविधावितरःप्रभवेत्कथंपरशिवांशमृते॥ ३०॥

मान्लोकेव्यएवंभूतस्यतवतुमहत्ताकियतीस्यात्तस्याःपरिमाणंनास्तीत्यर्थः॥ २८॥ एवंस्तुत्यासम्मुखीकृत्यक्षमापयति हेजगदार्तिहन्ईदृश मचिंत्यंमहिमानंपूर्वमबुध्वायदहमन्याय्यंपुराऽब्रुवंतत्सर्वंक्षमस्वयतोहेकरुणासमुद्र॥प्र०॥२९॥ एवंक्षमाप्यपुनःस्तौति अपरिमितप्रतिभाःकपि लगौतमकणादप्रभृतयोपिश्रुतिभावनिर्णयविधौमोहंप्रापाःतत्रपरशिवांशंत्वांविनान्यःकथंप्रभवेत् ॥ ३१॥

तथाचेदानींतेषांवचस्तमःपुंजाअकिंचित्कराएवेत्याह समंतैरितिसुधाधारोद्गारप्रचुराद्भगवत्पादमुखलक्षणाच्चंद्रात्प्ररोहंतोव्याहारलक्षणाअ
मृतकिरणास्तेषांपुंजेविजयिनिसतिमनसोमलिनिम्नोमालिन्यस्यसमारंभणेनचणैर्वित्तैःप्रतीतैरेतैःकपिलादिवचस्तमस्तोमैर्मिलितैरपिकिंस्वका
र्यकरणायस्थातुमप्यशक्तत्वात् ॥शि०॥३१॥ दुर्वादिभिर्व्याप्तामुर्वीमालोच्योद्भूतांचिंतांदर्शयति देवेश्वरमात्मलक्षणंदेवप्रतिमांभिदानैःतद्भेद
नपरैर्मोहमदेनमत्तैरेतैरुपलभ्यमानैर्वादिलक्षणाभिनवयवनैःश्रुतिलक्षणासद्गोभंजनोत्सुकैःसर्वेयंभूमिर्व्याप्तातत्श्चजगतिएवंविधान्सेवतांक

समंतैरेतैःकिंकपिलकणभुग्गौतमवचस्तमस्तोमैश्चतोमलिनिमसमारंभणचणैः ॥ सुधाधारोद्गारप्रचुर
भगवत्पादवदनप्ररोहद्व्याहारामृतकिरणपुंजेविजयिनि॥ ३१ ॥ भिदानैर्देवमत्तैरभिनवयवनैःसद्गवीभंज
नोत्कैर्व्याप्तासर्वेयमुर्वीक्वजगतिभजतांकैवमुक्तिप्रसक्तिः ॥ यद्वासद्वादिराजाविजितकलिमलाविष्णुतत्वा
नुरक्ताउज्जृंभंतेसमंताद्दिशिदिशिकृतिनःकिंतयाचिंतयामे॥ ३२॥ कथमल्पबुद्धिविवृतिप्रचयप्रबलोरग
क्षतिहताःश्रुतयः॥ नयदित्वदुक्त्यमृतसेकधृताविहरेयुरात्मविधृतानुशयाः ॥ ३३॥

स्मिन्देशेकस्मिन्कालेवामुक्तिप्रसक्तिःकेवक्वापिकापिनास्ति पुनराचार्यशिष्यानालोच्याह यद्वासद्वादीभवान्राजायेषांतेविजितकलिमलावि
ष्णुतत्वानुरक्तावशीकृतचित्ताभवच्छिष्यादिशिदिशिसमंताद्विजृंभंतेऽतस्तयाचिंतयामम्मांकनकिमपीत्यर्थः ॥ स्र० ॥३२ ॥ किंच अल्पबुद्धा
नांयाविवृतयोव्याख्यास्तासांप्रचयःप्रचारःसएवप्रबलोरगस्तत्कर्तृकक्षत्याहताःश्रुतयोयदित्वदुक्तिलक्षणामृतसेकेनधृतानस्युस्तर्ह्यात्मनिकृता
भिप्रायाःकथंविहरेयुःजीवनंलब्ध्वाविहारंकुर्युरित्यर्थः ॥ प्र० ॥ ३३ ॥ ॥ ४

किंचभवदुक्तसूक्तलक्षणस्यामृतभानोःसुधाकिरणस्यचंद्रस्यभानवोंशवोहेआर्ययदिनविचरेयुस्तर्ह्यतितीव्रस्यातएवदुःसहस्यभवलक्षणस्यो
ष्णभानोःसूर्यस्यप्रचुरातपात्प्रभवोयस्यतथाभूतमिममनुभूयमानंतापंकःशमयेत् अतितीव्रोदुःसहोभवोष्णकरप्रचुरातपप्रभवस्तापस्तमि
ममितिवा॥२४॥अतएवैवंविधोप्यहंत्वयोद्धृतोस्मीत्याह वतखेदेहर्षेवा कर्मयंत्रमधिरुह्यतपआदिभिरतिरूढाभिमानेनभरितोव्यामः संसारकूपं
बिलेपतितोऽहंतस्मात्भवतोद्धृतोस्मि॥२५॥नन्वेकस्योद्धरणेऽपरस्यानुद्धरणेवैषम्यंममस्यादितिचेत्तत्कृतसुकृतदुष्कृतानुसारित्वात्तन्नेत्याहा
हंपूर्वजन्मसुनिश्चयेनासुकरमतिकष्टसाध्यंबहुतपोऽचरं नोचेदधुनाअस्मिन्जन्मनिकरुणानिधिनाजगदीश्वरेणभवतासहममात्यंतायोग्यस्यक

भवदुक्तसूक्त्यमृतभानुकरानचेरयुरार्ययदिकःशमयेत् ॥ अतितीव्रदुःसहभवोष्णकरप्रचुरातपप्रभवतापमि
मं॥२४॥ वतकर्मयंत्रमधिरुह्यतपःश्रुतगेहदारसुतभृत्यधनैः ॥ अतिरूढमानभरितःपतितोभवतोद्धृतोस्मिभ
वकूपविलात्॥२५॥ अहमाचरंबहुतपोऽसुकरंननुपूर्वजन्मसुनचेदधुना ॥ जगदीश्वरेणकरुणानिधिनाभव
ताकथाममकथंघटते ॥ ३६ ॥ शांतिप्राक्सुकृतांकुरंदमसमुल्लासोल्लसत्पल्लवंवैराग्यद्रुमकोरकंसहनतावल्लीप्र
सूनोत्करं ॥ एकाग्रीसुमनोमरंदविस्तृतिंश्रद्धासमुद्यत्फलंविंदेयंसुगुरोर्गिरांपरिचयंपुण्यैरगण्यैरहं॥३७॥

थाकथंघटते॥२६॥ अतोऽसंख्यातैरेवपुण्यैःसुगुरोस्तवगिरांपरिचयंलब्धवानस्मि तंविशिनष्टि शांतिरूपेणपरिणतस्यप्राकृतस्यसुकृतस्यबीज
भूतस्यांकुरंदमसमुल्लासस्योल्लसंतंपल्लवंवैराग्यद्रुमस्यवैराग्यलक्षणपारिजातस्यकोरकंकलिकाभूतं तितिक्षावल्ल्याःप्रसूनोत्करंपुष्पनिचयं ए
काग्रीसुमनसःसमाधानपुष्पस्यमरंदविस्तृतिंमकरंदविस्तारं श्रद्धायाःसमुद्यत्फलंतथाचशांत्यादिमताधिकारिणालभ्यंतमहमसंख्यातैःपुराकृतैः
पुण्यैःप्राप्तवानस्मीत्यहोमद्भाग्यमाहात्म्यमितिभावः॥ शा० ॥ ३७॥

अतोत्रास्मिन्लोकेतवकटाक्षझरींधन्यतमोऽवगाहते तांविशिनष्टि देवानामपिचतुर्विधपुरुषार्थकरीमिहचसंसरतांजनानांविमुक्तिकरींकरुणा
लक्षणोर्मिभिर्व्याप्ता ॥ प्र०॥३८॥ ननुप्रमदालीलासुलोलाशयानामुक्तझर्यवगाहनासंभवात्कथमिहसंसरतांविमोक्षकरत्वंतस्याइत्याशंक्या
ह . केचिदेतेविषयिणश्चंचलेलोचनेयासांतासामंगनानांकुचतटीवस्त्रैकदेशोच्चालनादिरूपासुलीलासुचंचलांतःकरणाःसंतिचेत्संतु तथाप्य

मीवशीकृतचित्ताअप्रतिमयशसांकोशादयःपात्रमंजूषादिरूपाःश्रीगुरोस्तवव्याहारेभ्यःक्षरितस्यनिःसृतस्यामृतस्ययोब्धिस्तस्यलहरीलक्षणा
सुदोलासुखेलंतितत्रद्राक्परिरंभंझटितिआलिंगनं संभ्रमस्त्वरयाकालेभूषास्थानविपर्ययः कलाशिल्पनैपुण्यं प्रियानुकरणंलीलावाग्भिर्गत्या

त्रिदिवौकसामपिपुमर्थकरीमिहसंसरज्जनविमुक्तिकरीं ॥ करुणोर्मिलातवकटाक्षझरीमवगाहतेत्रखलुधन्य
तमः॥ ३८॥ केचिच्चंचललोचनाकुचतटीचेलांचलोच्चालनस्पर्शद्राक्परिरंभसंभ्रमकलालीलासुलोलाशयाः॥
संत्वेतेकृतिनस्तुनिस्तुलयशःकोशादयःश्रीगुरुव्याहारक्षरितामृताब्धिलहरीदोलासुखेलंत्यमी ॥ ३९ ॥ चिंता
संतानतंतुग्रथितनवभवत्सूक्तिमुक्ताफलौघैरुद्यद्द्वैशद्यसद्यःपरिहृततिमिरैर्हारिणोहारिणोमी॥ संतःसंतोषवंतो
यतिवरकिमतोमंडनंपंडितानांविद्याद्वद्यास्वयंताऽछतमखमुखरान्वारयंतीवृणीते ॥ ४० ॥

चेष्टया ॥ शार्दू० ॥ ३९॥ किंचउद्यद्वैशद्येनप्रोद्यद्व्यक्ततालक्षणेनशौक्ल्येनसद्यःपरिहृतमज्ञानलक्षणंतिमिरंयैःचिंतायाविचारस्यसंतानलक्ष
णैस्तंतुभिर्ग्रथितानांनवीनानांभवत्सूक्तिलक्षणमुक्ताफलानांसमूहैःचामीकरवंतोऽहारिणोयुद्धरहिताहारिणोमनोज्ञाइतिवाअमीसंतोभवच्छि
ष्याःसंतोषवंतःसंतिअतोहेयतिवरपंडितानांमंडनमतःपरंकिमयमेवपंडितानामलंकारोनत्वन्योऽतएवातिरम्याविद्याब्रह्मविद्यालक्षणांगनापुरंद
रप्रमुखान्वारयंतीएतान्वृणीते ॥ स्र० ॥ ४० ॥ 

किंचतर्वकृताम्नायस्योपदेशस्यशोभायेषुतैर्यशोभिः संतः संतोषस्य पोषंपुष्टिधारयंतुआहोसूर्यसंबंध्यालोकैरुलूकाइवतैर्निखिलखलाभि
र्दुर्वयंतुधीराश्चतेश्रीशंकरार्यप्रणतेःपरिणत्याप्रणामस्यपरिणामेनभ्रश्यदंतर्दुरंततमोयेषांताहशाः संतःप्रचुरतरनिजानंदसागरेनिमग्नाः धीरश्चासौ
श्रीशंकरश्चेतिवा ॥ ४१ ॥ किंचतेचिंतनंसर्वाभिलषितसंपादकत्वात्कल्पवृक्षस्तथातेपदकमलयोर्वदनंनंदनंतथात्वद्विषयकोमनसिसंकल्पआ
राधनादीच्छा कल्पवल्ली तथातवगुणस्तुतेर्वर्णनाइयंस्वर्णदीगंगातथास्वर्गस्तेदृग्गोचरः कटाक्षविपयोऽतोहेशंकरार्यइदमेवंविधंत्वद्भजनंविचार्य

संतःसंतोषपोषंदधतुतवकृताम्नायशोभैर्यशोभिस्सौरालोकैरुलूकाइवनिखिलखलामोहमाहोवहंतु ॥ धीरश्री
शंकरार्यप्रणतिपरिणतिभ्रश्यदंतर्दुरंतध्वांताःसंतोवयंतुप्रचुरतरनिजानंदसिंधौनिमग्नाः ॥ ४१ ॥ चिंतासंता
नशाखीपदसरसिजयोर्वंदनंनंदनंतसंकल्पःकल्पवल्लीमनसिगुणनुतेर्वर्णनास्वर्णदीयं॥स्वर्गोदृग्गोचरस्त्वत्पदभ
जनमतःसंविचार्येदमार्यामन्यंतेस्वर्गमन्यंतृणवदतिलघुंशंकरार्यत्वदीयाः॥ ४२ ॥ तदहंविसृज्यसुतदारगृहंद्र
विणानिकर्मचगृहेविहितं॥ शरणंत्वणोमिभगवच्चरणावनुशाधिकिंकरममुंकृपया ॥ ४३॥ इतिसूनृतोक्तिभि
रुदीर्णगुणःसुधियात्मवाननुजिघृक्षुरसौ॥ समुदैक्षतास्यसहधर्मचरींविदिताशयामुनिमवोचतसा॥४४॥

त्वदीयाःवर्णितादन्यंस्वर्गंशुष्कतृणवदतिलघुंमन्यंते ॥ ४२ ॥ तत्तस्मादहंसुतादिसर्वंपरित्यज्यभवच्चरणौशरणंत्वणोमिअतोऽमुंकिंकरंशाधिआ
ज्ञापय ॥ प्र० ॥ ४३ ॥ इत्येवंसुबुद्धिनामंडनेनसूनृतोक्तिभिरुदीर्णगुणआत्मवानसौश्रीशंकरस्तमनुग्रहीतुमिच्छुरस्यमंडनस्यसहधर्मचरींपत्नीं
समुदैक्षत विदितोमुनेराशयोययासासरस्वतीमुनिमवोचत ॥ ४४॥

 यदुवाचतदाह हेयतिव्याघ्र पुंडरीकंसितांभोजेसितच्छत्रेचभेषजे कोशकारांतरेव्याघ्रेपुंडरीकोग्निदिग्गजेइतिविश्वप्रकाशः अहंतवमनोगतंवे 
द्मिपूर्वमेवचेहास्मिन्स्वजन्मनियत्सर्वंभविष्यंतापसमुखान्मयाविदितंतदुदीर्यतेसभ्यजनैःसहत्वंशृणु॥ ४५॥एवंतापसमुखाद्विदितंवृत्तांतंश्रावयि
॥ ६ ॥ तुमभिमुखीकृत्यतंश्रावयति जातुकदाचित्मातुरुपकंठजुषिमातृसामीप्यंसेवमानायामयिसत्यांप्रभयाविद्युल्लतिभटाजटायस्यसितभूत्याश्वेत 
भस्मनारुषितालिप्तातनुःशरीरंयस्यसअपरसूर्यइवकश्चित्तपस्वीअभ्ययात् ॥ ४६ ॥ तदापाद्याद्ययापूजयामुनिपरिगृह्यरचितांजलिःनमिता

यतिपुंडरीकतववेद्मिमनोननुपूर्वमेवविदितंचमया॥ इहभावितापसमुखादखिलंतदुदीर्यतेशृणुससभ्यजनः॥
॥ ४५॥ मयिजातुमातुरुपकंठजुषिप्रभयातडित्प्रतिभटोच्चजटः ॥ सितभूतिरूषितसमस्ततनुःश्रमणोभ्ययाद
परसूर्यइव॥ ४६॥ परिगृह्यपाद्यमुखयार्हणयारचितांजलिर्नमितपूर्वतनुः॥ जननीतदात्तवरिवस्यममुंमुनिम
न्वयुंक्तममभाव्यखिलं ॥ ४७॥ भगवन्नवेद्मिदुहितुर्ममभाव्यखिलंचवेत्तितपसाहिभवान् ॥ प्रणतेजनेहिसु
धियःकथयंत्यपिगोप्यमार्यसदृशाःकृपया॥४८॥कियदायुराप्स्यतिसुतान्कतिवादयितंकथंविधमुपेष्यतिच ॥
अथचक्रतूनपिकरिष्यतिमेदुहिताप्रभूतधनधान्यवती॥ ४९ ॥ इतिपृष्टभाविचरितःप्रसुवाक्षणमात्रमीलित
विलोचनकः॥सकलंक्रमेणकथयन्निदमप्यपरंजगादसुरहस्यमपि॥ ५० ॥

पूर्वतनुःशिरोभागोययासाजननीआत्तावरिवस्यापूजायेनतममुंमुनिममभविष्यमखिलमन्वयुंक्तपृष्टवती ॥ ४७॥ हेभगवन् स्वदुहितुर्भविष्य
महंनजानामिभवान्हितपसावेत्तिआर्यसदृशानम्रेजनेगोप्यमपिकृपयाकथयंत्येव ॥ ४८ ॥ एवंतंसम्मुखीकृत्यगुह्यंपृच्छति मेदुहिताकियदा
युःप्राप्स्यतिसुतान्कतिवाप्राप्स्यतिपतिंकीदृशमुपेष्यतितथाप्रभूतधनधान्यवतीसतीयज्ञानपिकरिष्यति॥ ४९॥ इत्येवंप्रसुवाजनन्यापृष्टभावि ॥ १
चरितंयस्मैसक्षणमात्रंमीलितेविलोचनेएवविलोचनकेनेत्रेयेनसंक्रमेणसकलंकथयन्इदमप्यपरमतिगोप्यमपिजगाद ॥ ५० ॥

वेदबाह्यंमतंयेषांकर्मधारयोवा प्रबलैश्चतैर्बाह्यमतैरसंख्यातैर्वेदमार्गेऽधिक्षितिभूमौखिलेछिन्नेसतिद्रुहिणोब्रह्मावेदमार्गमुद्धर्त्तुमिच्छुर्मंडनकवींद्र
व्याजेनावतीर्यकिलभातिप्रकाशते ॥५१॥ पर्वतसुतापार्वतीरुद्रमिवसमुद्रसुतालक्ष्मीर्विष्णुमिवसातवसुतातंद्रुहिणावतारमनुरूपंमंडनमवाप्या
दृताःसर्वेमखायज्ञायययासुतैःसहवर्त्तमानाचसतीचिरकालंमुदिताभविष्यति ॥ ५२ ॥ अथानंतरमिहास्मिंल्लोकेप्रबलैःकुमतैर्नष्टमौपनिषदंकृ

निगमाध्वनिप्रबलबाह्यमतैरमितैरधिक्षितिखिलेद्रुहिणः ॥पुनरुद्दिधीर्षुरवतीर्यखलुप्रतिभातिमंडनकवींद्र
मिषात् ॥ ५१ ॥ तमवाप्यरुद्रमिवसाद्रिसुतादुहितातवाच्युतमिवाब्धिसुता ॥ अनुरूपमाहृतसमस्तमखास
सुताभविष्यतिचिरंमुदिता ॥५२॥ अथनष्टमौपनिषदंप्रबलैःकुमतैःकृतांतमिहसाधयितुं॥ननुमानुपंवपुरुपे
त्यशिवःसमलंकरिष्यतिधरांस्वपदैः ॥ ५३ ॥ सहतेनवादमुपगम्यचिरंदुहितुःपतिस्तुयतिवेषजुषा ॥ विजि
तस्तमेवशरणंजगतांशरणंगमिष्यतिविसृष्टगृहः ॥ ५४ ॥ इतिगामुदीर्यसमुनिःप्रययौसकलंयथातथम
भूच्चमम ॥ भवदीयशिष्यपदमस्यकथंवितथंभविष्यतिमुनेर्वचसि ॥५५॥

तांतंसिद्धांतंसाधयितुंननुशिवोमानुषंवपुरवाप्यस्वचरणन्यासैर्भूमिमलंकरिष्यति ॥ ५३ ॥ तेनयतिवेषजुषाश्रीशंकरेणसहतवदुहितुःपतिर्वादं
प्राप्यतेनविजितःसन्परित्यक्तगृहोजगतांशरणंतंशरणंगमिष्यति ॥ ५४ ॥ इतिवाचमुदीर्यसमुनिःप्रययौममसर्वंभविष्यंयथातेनोक्तंतथैवाभू
त्तस्मादस्यममपत्युर्भवदीयशिष्यपदंमुनेर्वचसिकथमसत्यंभविष्यति ॥ ५५ ॥

यद्यप्येवंतथापिमदविजयेनसकलस्यापराजितत्वान्मांविजित्यैनंशिष्यंकुर्वित्याहापितुंकितुप्रथितानामग्रणीर्ममपतिरद्यत्वेयासमग्राजितोनभवति तथायद्यस्माद्हमस्यार्द्धशरीरंनजिताआत्मनोर्द्धपत्नीतिश्रुतेः एतज्ज्ञातुंयोग्योसीतिसूचयन्संबोधयति हेमतिमन्निति तस्मान्मांविजित्यैनंशिष्यंकुरु ॥ ५६॥ ननुमत्स्वरूपाभिज्ञामयासहवादंकथमिच्छसीतिचेत्तत्राह यद्यप्यस्यजगतस्त्वंकारणंसर्वज्ञश्चपरमःपुरुषस्तथापित्वयैवस

अपितुत्वयाद्यनसमग्रजितःप्रथिताग्रणीर्ममपतिर्यदहं ॥ वपुरर्धमस्यनजितामतिमन्नपिमांविजित्यकुरु शिष्यमिमं ॥ ५६॥ यदपित्वमस्यजगतःप्रभवोननुसर्वविच्चपरमःपुरुषः॥ तदपित्वयैवसहवादकृतेहृदयंविभर्तिममतूत्कलिकां॥ ५७॥ इतियायजूकसहधर्मचरीकथितंवचोर्थवदगर्त्यपदं ॥ मधुरंनिशम्यमुदितःसुतरांप्रतिवक्तुमीहतयतिप्रवरः॥ ५८॥ यदवादिवादकलहोत्सुकतांप्रतिपद्यतेहृदयमित्यबले ॥ तदसांप्रतंनहिमहायशसोमहिलाजनेनकथयंतिकथां॥ ५९ ॥ स्वमतंप्रभेत्तुमिहयोयततेसवधूजनोस्तुयदिवास्त्वितरः॥ यतितव्यमेवखलुतस्यजयेनिजपक्षरक्षणपरैर्भगवन्॥ ६० ॥

हवादार्थममतुत्हृदयमुत्कंठांधारयति ॥ ५७ ॥ इत्येवंयजनशीलस्यपत्याकथितमर्थवदनिंदितपदंमधुरंवचोनिशम्यात्यंतंमुदितोयतिश्रेष्ठःश्रीशंकरःप्रतिवक्तुमैच्छत् ॥५८॥ मेत्हृदयंवादकलहोत्सुकतांप्रतिपद्यतइतित्वयायदुक्तंहेऽबलेतदयुक्तं हियस्मान्महायशसःवधूजनेनकथांनकथयंति ॥ ५९ ॥ स्वमतरक्षणायप्रवृत्तेनत्वयैतन्नवाच्यमित्याशयेनसरस्वत्याहेहास्मिन्लोकेस्वमतंप्रभेत्तुंयःप्रयत्नंकरोतिसवधूजनोस्त्वन्योवाऽस्तुतस्यजयेहेभगवन्स्वपक्षरक्षणपरैर्यत्नःकर्त्तव्यएवखलुप्रसिद्धं ॥ ६० ॥ ॥ ७

तत्रैवंविधौवृद्धानुदाहरति अतएवगार्ग्याख्ययाऽबलयासहयाज्ञवल्क्योमुनिराट्कलहमकरोत् तयोःसंवादोबृहदारण्यकेउक्तस्तथाजनकःसुल भयाऽबलयासहकलहमकरोदितिमोक्षधर्मेषूक्तं यदुक्तंमहायशसइतितत्राह किमेतावताऽमीयाज्ञवल्क्यादयोयशोनिधयोनभवंत्यपितुभवं त्येव॥६१॥ इत्येवंयुक्तियुक्तंतयाकथितमाकर्णयन्मुदितांतरःश्रुतिलक्षणानांनदीनांसमुद्रःसश्रीशंकरोवचसामधिष्ठात्र्यादेवतयासरस्वत्याविदु

अतएवगार्ग्यभिधयाकलहंसहयाज्ञवल्क्यमुनिराडकरोत् ॥ जनकस्तथासुलभयाबलयाकिमभीभवंतिन यशोनिधयः॥६१॥ इतियुक्तिमद्वदितमाकलयन्मुदितांतरःश्रुतिसरिज्जलधिः॥ सतयाविवादमधिदेवत यावचसामियेपविदुपांसदसि॥६२॥ अथसाकथाप्रववृतेस्मतयोरुभयोःपरस्परजयोत्सुकयोः॥ मति चातुरीरचितशब्दझरीश्रुतिविस्मयीकृतविचक्षणयोः॥६३॥ अनयोर्विचित्रपदयुक्तिभरैर्निशमय्यसंक थनमाकलितं॥ नफणीशमप्युतुलयन्नरविंनगुरुंकविंकिमपरंजगति॥६४॥ नदिवानिशिस्यपिचवा दकथाविरराममनैय्यमिककालमृते॥इतिजल्पतोःसममनल्पधियोर्दिवसाश्वसप्तदशचात्यगमन्॥६५॥

पांसदसिवादमियेपइच्छतिस्म॥६२॥ अथानंतरंपरस्परजयोत्सुकयोःश्रुत्याश्रवणेनविस्मयीकृता विचक्षणायाभ्यांतयोर्द्वयोःशंकरसरस्वयोर्वा दकथाप्रववृते तांविशिनष्टि बुद्धिचातुर्यारचिताशब्दझरीयत्रसा॥६३॥विचित्रपदयुक्तिभैरव्याप्तमनयोःकथितंश्रुत्वाफणीशंशेषमपिनातुलय तनापिसूर्यंनापिबृहस्पतिंनापिशुक्रंजगत्यपरंनातुलयन्नितिकिंवक्तव्यं॥६४॥ नैय्यमिककालंसंध्यावंदनादिषुनियतंकालंविना॥६५॥

अथशारदाऽकृतकवाक्प्रमुखेष्वनादिसिद्धवेदवाक्यप्रभृतिष्वखिलेषुशास्त्रसमूहेषुतंपरंमुनिंजेतुमशक्यमात्मनिविचिंत्यपुनरपीदंवक्ष्यमाणंझटि
त्यचिंतयत् ॥ ६६ ॥ यदचिंतयत्तद्दर्शयति अतिवाल्यएवकृतंसंन्यसनंयेननियमैःपरैरविधुरोऽविकलश्चसदाकदापिनियमविनिर्मुक्तोनभवती
त्यर्थः अतःकामागमेष्वयमकृतबुद्धिस्तत्तस्मादनेनमदनागमेनेदानीमहंजयेयं ॥ ६७ ॥ इत्येवममुनाकथनेप्रसंगंसंप्रधार्य अथप्रसंगात्सदस्य
॥ ८ ॥ मुंयमिनंकामशास्त्रस्यरहस्यमसौविदुषीसरस्वत्यपृच्छत् ॥ ६८॥ यदपृच्छत्तदुदाहरति पुष्पधन्वनःकामस्यकलाःकियंत्यइतिसंख्याविषयकः

अथशारदाऽकृतकवाक्प्रमुखेष्वखिलेषुशास्त्रनिचयेषुपरं ॥ तमजय्यमात्मनिविचिंत्यमुनिंपुनरप्यचिंतय
दिदंतरसा ॥ ६६ ॥ अतिवाल्यएवकृतसंन्यसनोनियमैःपरैरविधुरश्चसदा ॥ मदनागमेष्वकृतबुद्धिरसौतद
नेनसंप्रतिजयेयमहं ॥ ६७ ॥ इतिसंप्रधार्यपुनरप्यमुनाकथनेप्रसंगमथसंगतितः ॥ यमिनंसदस्यमुमपृ
च्छदसौकुसुमास्त्रशास्त्रहृदयंविदुषी ॥ ६८ ॥ कलाःकियंत्योवदपुष्पधन्वनःकिमात्मिकाःकिंचपदंसमाश्रि
ताः ॥ पूर्वेचपक्षेकथमन्यथास्थितिःकथंयुवत्यांकथमेवपूरुषे ॥ ६९ ॥ नेतीरितःकिंचिदुवाचशंकरोविचिंत
यन्नत्रचिरंविचक्षणः ॥ तासामनुक्तौभविताल्पवेदिताभवेत्तदुक्तौममधर्मसंक्षयः ॥ ७० ॥

प्रश्नः किमात्मिकाइतिस्वरूपविषयकः किंस्थानमाश्रिताइतिस्थानगोचरः पूर्वेशुक्लेचपक्षेऽन्यथाकृष्णपक्षेयास्थितिस्तस्याविपर्ययेणतस्यके
नप्रकारेणस्थितिरितिपक्षद्वयेपितस्यस्थितिप्रकारविषयःकथंयुवत्यांपुरुषेचकथमितिस्त्रीपुरुषयोर्वैलक्षण्येनतस्यस्थितिविषयः ॥ ६९ ॥ इती
रितोऽस्मिन्नर्थेविचिंतयन्विचक्षणःश्रीशंकरःकिंचिदपिनोवाच विचिंतनमाह तासांकलानामकथनेममाल्पज्ञताभविष्यतिताःसांकथनेतुममय
तेर्धर्मस्यसंक्षयः ॥ ७० ॥

इत्येवंसशीघ्रंमनसासंविदितकामागमोपिजगतिव्रतिनांकामशास्त्रानभ्यासादिव्रतवतांपरमहंसपरिव्राजकानांनियमंरक्षयितुमिच्छुस्तस्मिन् कालेऽनवबुद्धकामशास्त्रइवसन्जगाद ॥ ७१ ॥ यदुवाचतदाहेहास्मिन्कलादिसंकथनेमासमात्रमवधिःक्रियतां हियस्माद्दिवसस्यगणोवादिभिरनुमन्यतेतथाचमासानंतरंभोसुदतिकामशास्त्रनिपुणत्वमपित्यक्ष्यसि ॥ ७२ ॥ तथेतितयासरस्वत्यास्वीकृतेसतियोगिराट्श्रीशंकरआकाशमाक्रमतेस्माथानंतरंश्रुतःविग्रहःस्वरूपंयस्यसप्रख्यातविग्रहस्तथाश्रुतैर्विनेयैःशिष्यैःपुनःसयोगदृष्ट्याऽभ्रचारमाकाशगमनमदधत् ॥ ७३ ॥

इतिसंविचिंत्यसद्दाशुनदानवबुद्धपुष्पशरशास्त्रइव ॥ विदितागमोपिसुरिरक्षयिपुर्नियमंजगादजगतिव्रतिनां ॥ ७१ ॥ इहमासमात्रमवधिःक्रियतामनुमन्यतेहिदिवसस्यगणः ॥ तदनंतरंसुदतिहास्यसिभोकुसुमास्त्रशास्त्रनिपुणत्वमपि ॥ ७२ ॥ उररीकृतेसतितथेतितयाक्रमतेस्मयोगिमृगराड्गगनं ॥ श्रुतविग्रहःश्रुतविनेययुतोदधदभ्रचारमथयोगदृशा ॥ ७३ ॥ सददर्शकुत्रचिदमर्त्यमिवत्रिदिवच्युतंविगतसत्वमपि ॥ मनुजेश्वरंपरिवृतंप्रलपत्प्रमदाभिरार्तिमदमात्यजनं ॥ ७४ ॥ अथोनिशाखेटवशादटव्यांमूलेतरोर्मोहवशात्परासुं ॥ तंवीक्ष्यमार्गेऽमरकंनृपालंसनंदनंप्राहससंयमींद्रः ॥ ७५ ॥ सौंदर्यसौभाग्यनिकेतसीमाःपरःशतायस्यपयोरुहाक्ष्यः ॥ सएषराजामरकाभिधानःशेतेगतासुःश्रमतोधरण्यां ॥ ७६ ॥

सकस्मिंश्चिद्देशेविगतजीवमपिस्वर्गात्पतितंदेवमिवप्रलपंतीभिःप्रमदाभिःपरिवृतंआर्त्तिमान्अमात्यजनोयस्यतंनरेश्वरंददर्श ॥ ७४ ॥ अथोनिशायांरात्रौमृगयावशादाखेटोमृगयास्त्रियामित्यमरःअटव्यांवनेवृक्षस्यमूलेमोहोमूर्छनंतद्वशात्परासुमुत्क्रांतप्राणंतममरकसंज्ञंराजानंवीक्ष्यससंयमींद्रःसनंदनंपद्मपादंप्रोवाच ॥ उ० ॥ ७५ ॥ यस्यसौंदर्यसौभाग्यनिकेतसीमाःपरःशताःशतादधिकाःकमलनयनाःसएषोऽमरकसंज्ञोराजाश्रमतोगतप्राणोभूमौशेते ॥ ७६ ॥

परासोर्नृपस्यतमिमंदेहंप्रविश्यराज्येऽस्यपुत्रंनिवेश्ययोगप्रभावात्पुनरप्युपागंतुमस्मदीयंमनउत्कंठते ॥ ७७॥ सर्वज्ञतानिर्हरणायसर्वज्ञत्वनिर्वा
हायअमुष्यराज्ञइमाअदसीयानानाअनेकविधाःकुशेशयाक्ष्यःकमलाक्ष्यस्तासांयानिकिलकिंचितानि रोषाश्रुहर्षभीत्यादेःसंकरःकिलकिंचि
तमित्युक्तानि तेषामन्यादृशानामतिविलक्षणानांसाक्षित्वंसाक्षाद्द्रष्टृत्वमप्याश्रयितुंसोहंसमीहे ॥ ७८ ॥ इत्युक्तवंतंयतिश्रेष्ठं तमेनंश्रीशंकरंससां
त्वंयथास्यात्तथाप्रोवाचहेसर्वज्ञसर्वविदस्तवयद्यपिकिंचिदप्यज्ञातंनास्तितथापितवभक्तिरस्मन्मुखंकथनायमुखरंवाचालंकरोति ॥ ७९ ॥

प्रविश्यकायंतमिमंपरासोर्नृपस्यराज्येऽस्यसुतंनिवेश्य ॥ योगानुभावात्पुनरप्युपैतुमुत्कंठतेमानसमस्मदीयं ॥
॥ ७७॥ अन्यादृशानामदसीयनानाकुशेशयाक्षीकिलकिंचितानां ॥ सर्वज्ञतानिर्हरणायसोहंसाक्षित्वमप्याश्र
यितुंसमीहे ॥ ७८ ॥ इत्यूचिवांसंयतितल्लजंतंसनंदनःप्राहससांत्वमेनं ॥ सर्वज्ञनैवाविदितंतवास्तितथापिभ
क्तिर्मुखरंतनोति ॥ ७९ ॥ मत्स्येंद्रनामाहिपुरामहात्मागोरक्षमादिश्यनिजांगगुप्त्यै ॥ नृपस्यकस्यापितनुंपरासोः
प्रविश्यतत्पत्तनमाससाद ॥ ८० ॥ भद्रासनाध्यासिनियोगिवर्येभद्राण्यनिद्राण्यभवन्प्रजानां ॥ ववर्षकालेषु
वलाहकोपिसस्यानिचाशास्यफलान्यभूवन् ॥ ८१ ॥ विज्ञायविज्ञाःसचिवानृपस्यकायेप्रविष्टंकमपीहदिव्यं ॥
समादिशन्राजसरोरुहाक्षीःसर्वात्मनातस्यवशीक्रियायै ॥ ८२ ॥

एवंपुरावृत्तंवृत्तांतंश्रावयितुमभिमुखीकृत्यतंश्रावयति हिप्रसिद्धं परामत्स्येंद्रनामामहात्मास्वशरीररक्षणायगोरक्षसंज्ञंशिष्यमाज्ञप्यकस्यचि
न्मृतकस्यराज्ञःशरीरंप्रविश्यतस्यराज्यमाप्तवान् ॥ ८० ॥योगिश्रेष्ठेतस्मिन्भद्रासनाध्यासिनिनृपासनमुपविष्टेसतिप्रजानांभद्राणिनिद्रावर्जिता
निअभवन् अभ्रमपिकालेषुववर्ष सस्यानिचेच्छानुसारिफलान्यभूवन् ॥ ८१ ॥ इहास्मिन्नृपस्यकायेप्रविष्टंकमपिदिव्यंविज्ञाःसचिवाविज्ञा
यराज्ञःकमलाक्षीःसर्वभावेनतस्यवशीकरणार्थंसमादिशन् ॥ ८२ ॥

एवंसंप्रेरितानांतासांललितेषुसंगीतनृत्याभिनयाद्येषुसक्तंचित्तंयस्यसएषमुनिःसमाधिंविस्मृत्यसर्वात्मभावेनप्राकृतवद्बभूव ॥ ८३ ॥ अथानंतरमेषोगोरक्षःगुरोःप्रवृत्तिंविज्ञायबहुप्रकारेणास्यगुरोर्देहंरक्षन्सन्निशांतस्यांतःपुरस्यकातानांनर्त्तनोपदेष्टासन्अस्यगुरोरत्यंतमंतरंगोबभूव ॥ ८४ ॥ तत्रतस्मिन्देशेएकस्मिन्कालेतत्वनिबोधनेननिवृत्तरागंनिजगुरुंसःगोरक्षःयोगानुपूर्वीमुपदिश्ययथापूर्वंप्राक्तनमेवदेहंनिन्ये ॥ ८५ ॥ तथाचैवंविधोयंविषयानुरागःकिंचोर्ध्वरेतोव्रतखंडनेनोल्बणंपापंकितेनोदयेदपितूदयेदेवतथाचयत्कर्त्तव्यंतद्भवानेवविवेक्तुंकृतीसमर्थः ३० ॥

संगीतलास्याभिनयादिकेषुसंसक्तचेताललितेषुतासां ॥ सएषविस्मृत्यमुनिःसमाधिंसर्वात्मनाप्राकृतवद्बभूव ॥ ८३ ॥ गोरक्षएषोथगुरोःप्रवृत्तिंविज्ञायरक्षन्बहुधास्यदेहं ॥ निशांतकांतानटनोपदेष्टानितांतमस्याभवदंतरंगः ॥ ८४ ॥ तत्रैकदातत्त्वनिबोधनेननिवृत्तरागंनिजदेशिकंसः ॥ योगानुपूर्वीमुपदिश्यनिन्येयथापुरंप्राक्तनमेवदेहं ॥ ८५ ॥ हंतेदृशोयंविषयानुरागःकिंचोर्ध्वरेतोव्रतखंडनेन ॥ किन्नोदयेत्किल्बिषमुल्बणंतेकृत्यंभवानेवकृती विवेक्तुं ॥ ८६ ॥ व्रतमस्मदीयमतुलंक्वमहत्क्वचकामशास्त्रमतिगर्ह्यमिदं ॥ तदभीप्यतेभगवतैवयदित्यनवस्थितंजगदिहैवभवेत् ॥ ८७ ॥ अधिमेदिनिप्रथयितुंशिथिलंधृतकंकणस्ययतिधर्ममिमं ॥ भवतःकिमस्त्यविदितं तदपिप्रणयान्मयोदितमिमंभगवन् ॥ ८८ ॥

॥ ८६ ॥ किंचास्मदीयमतुलंमहद्व्रतंक्व चेदमतिनिंद्यंकामशास्त्रंतदपिभवतैवयदीप्यतेतर्ह्यस्मिल्लोकेजगदेनवस्थितमेवभवेत् तथाचोक्तं यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरोजनः सयत्प्रमाणंकुरुतेलोकस्तदनुवर्त्ततइति ॥ ५० ॥ ८७ ॥ इदंनमयाविदितंज्ञापितंसर्वज्ञत्वात्तवकिंतुप्रेम्णोदितमित्याह शिथिलमिमंयतिधर्मंभूमौप्रकटयितुंधृतकंकणस्यगृहीतप्रतिज्ञस्यभवतोऽविदितंकिमस्तिनकिमपितथापिहेभगवन्प्रणयादिदंमयोक्तं ॥ ८८ ॥

एवंपद्मपादवाक्यमुदाहृत्याचार्यस्यतदुदाहर्तुमाह पद्मपादस्यवचःश्रुत्वावाचस्पतितुल्याप्रतिभायस्यसउक्तवान्यद्यपित्वयाऽनिंदितमेवकथि डि०
तंतथापिहेसौम्यश्रोतुंसावधानोभवपरमार्थमिदंकथयामि ॥८९॥ किंतदित्यपेक्षायामाहासंगिनआसक्तिविनिर्मुक्तस्यकामाःनप्रभवंतितत्रदृ
ष्टांतःगोपवधूसखस्यश्रीकृष्णस्येवकिंचयावज्रोलिसंज्ञिकयोगप्रतिभूमिःसएषहेवत्सनोऽस्माकमवकीर्णित्वस्यरेतःपातेनक्षतव्रतत्वस्यविपर्यय

सनिशम्यपद्मचरणस्यगिरंगिरतिस्मगीष्पतिसमप्रतिभः ॥ अविगीतमेवभवताफणितंश्रृणुसौम्यवच्मिप
रमार्थमिदं॥८९॥ असंगिनोनप्रभवंतिकामाहरेरिवाभीरवधूसखस्य ॥ वज्रोलियोगप्रतिभूःसएषवत्साव
कीर्णित्वविपर्ययोनः॥ ९०॥ संकल्पएवाखिलकाममूलंसएवमेनास्तिसमस्यविष्णोः॥ तन्मूलहानौभवपाश
नाशःकर्तुःसदास्याद्भवदोषदृष्टेः॥ ९१॥ अविचार्ययस्तुवपुराद्यहमित्यभिमन्यतेजडमतिःसुदृढं॥ तमबुद्धतत्व
मधिकृत्यविधिप्रतिषेधशास्त्रमखिलंसफलं॥ ९२॥

स्तदभावःतस्यारेतआकर्षणसामर्थ्यसंपादकत्वात् ॥ उ० ॥ ९० ॥ किंचसंकल्पएवाखिलाभिलाषस्यमूलंसएवकृष्णतुल्यस्यममनास्ति तथा
चसदैवसंसारदोषदृष्टेःकर्तुरपिकाममूलस्यसंकल्पस्यहानौसत्यांभवपाशनाशःस्यात् ॥ ९१ ॥ नन्वेवंतर्हिविधिप्रतिषेधशास्त्रंनिष्फलंस्यादिति
चेत्तत्राह यस्तुदेहाद्यविचार्यदेहादेर्जडत्वादिनाऽनात्मत्वमविचार्याहमित्यहंप्रत्यालंबनमालानंसुदृढमभिमन्यतेयतोजडबुद्धिस्तमबुद्धतत्वमधि ॥ १
कृत्यसर्वंविधिप्रतिषेधशास्त्रंसफलं ॥ प्र० ॥ ९२ ॥

एवमज्ञस्याधिकारिणःसत्वाद्विधिप्रतिषेधशास्त्रसाफल्यमुक्त्वातत्त्वविदोअधिकाराभावमाह कृतासंपादितामहावाक्यजन्याधीर्येनसत्वाश्रमादिविनिर्मुक्तमात्मानमात्मत्वेनावगत्यवेदांतप्रतिपाद्यस्वरूपत्वान्निगमस्यमूर्ध्निवसन्विधिर्किंकरतांनभजेतविधिग्रहणंप्रतिषेधस्याप्युपलक्षणं ॥ ॥९२॥नन्ववश्यमेवभोक्तव्यंकृतंकर्मशुभाशुभं नाभुक्तंक्षीयतेकर्मकल्पकोटिशतैरपीत्यादिवचनैःकर्मफलभोगस्यावश्यकत्वावगमात्कथंतेनतत्त्वविदोऽसंबंधइत्याशंक्यवाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यमितिश्रुत्युक्तदृष्टांतेनकालत्रयेप्यात्मव्यतिरिक्तस्यप्रपंचस्याभावविचारणेनतस्यमृषात्वनिश्चयादित्याह घटाद्यंमृत्प्रभवंवस्तुयथामृदंविनानास्तितथापरमात्मजन्यमिदंजगदपिपरमात्मानंविनाकालत्रयेपिनास्तितदन

कृतधीस्त्वनाश्रममवर्णमजात्यवबोधमात्रमजमेकरसं ॥ स्वतयावगत्यनभजेन्निवसन्निगमस्यमूर्ध्निविधिर्किंकरतां ॥ ९३ ॥ कलशादिमृत्प्रभवमस्तियथामृदमंतरानजगदेवमिदं ॥ परमात्मजन्यमपितेनविनासमयत्रयेपिनसमस्तिखलु ॥ ९४ ॥ कथमज्यतेजगदशेषमिदंकलयन्मृषेतिहृदिकर्मफलैः ॥ नफलायहिस्वपनकालकृतंसुकृतादिजात्वनृतबुद्धिहतं ॥ ९५ ॥ तदयंकरोतुहयमेधशतान्यमितानिविप्रहननान्यथवा ॥ परमार्थविन्नसुकृतैर्दुरितैरपिलिप्यतेऽस्तमितकर्तृतया ॥ ९६ ॥

न्यत्वमारंभणशब्दादिभ्यइतिन्यायात्कल्पितस्याधिष्ठानानतिरिक्तत्वंप्रसिद्धमितिखल्वर्थः ॥९४॥ तथाचैवंप्रकारेणसर्वंजगन्मिथ्येतिहृद्यनुसंदधानःकर्मफलैर्नकेनापिप्रकारेणलिप्यतेहियस्मात्स्वप्नकालकृतंसुकृतंदुष्कृतंचमृषाबुद्धिहतत्वात्कदाचिदपिफलायनभवति ॥९५॥ तत्तस्मादयमश्वमेधशतानिकरोतुअथवाऽसंख्यातानिविप्रहननानिकरोतुतथापिपरमार्थवित्सुकृतैर्दुरितैश्चनलिप्यतेलेपकारणस्यकर्तृत्वस्यनिवृत्तत्वादितिहेतुमाह अस्तंगतकर्तृतयेति ॥ ९६ ॥

अयममितानिब्रह्महननानिवाकरोतुतथापिदुरितैर्नलिप्यतइत्युक्तंतत्रप्रमाणाकांक्षायांत्रिशीर्षाणंत्वाष्ट्रमहन्नरुन्मुखान्यतीनृशालावृकेभ्यःप्रा
यच्छत्तस्यमेतत्रलोमापिनमीयतेसयोमांवेदनहवैतस्यकेनचनकर्मणालोकोमीयतेनस्तेयेननभ्रूणहत्ययेतिश्रुतिमर्थतःपठतित्रिशिरसंत्वष्टृपुत्रंवि
श्वरूपमिंद्रोऽवधीत्तथारौतियथार्थशब्दमतितीतिरुद्धेदांतवाक्यंतद्येषांमुखेनास्तीतितानरुन्मुखान्शतशःयतीनृशालावृकसमूहायकुपितःसन्
अदात् तथापिशतक्रतोरिंद्रस्यतेनकर्मणालोमहानिरपिनैवकृतेतिऋग्वेदिनांवागित्यर्थः ॥ १७ ॥ हयमेधशतानिकरोतुतथापिसुकृतैर्नलिप्यत

अवधीत्त्रिशीर्षमददाच्चयतीन्वृकमंडलायकुपितःशतशः॥ नतलोमहानिरपितेनकृतानशतक्रतोरितिहिब
ह्वृचगीः॥१७॥बहुदक्षिणैरयजतक्रतुभिर्विबुधानतर्पयदसंख्यधनैः॥ जनकस्तथाप्यभयमापपरंनतुदेहयो
गमितिकाण्ववचः ॥ १८ ॥ नविहीयतेहरिपुवद्दुरितैर्नचवर्धतेजनकवत्सुकृतैः॥ नसतापमेत्यकरवंदुरितं
किमहंनसाध्वकरवंत्वितिच॥ १९॥

इत्यत्रापिप्रमाणमाह जनकोबहुदक्षिणैःक्रतुभिर्देवानयजत्तथाऽसंख्यधनैरतर्पयत्तथापिकेवलंसर्वभयशून्यंपरमानंदस्वरूपंमोक्षंप्रापनतुतत्
फलभोगायदेहसंबंधमापेतिकाण्वानांवचनं तथाचश्रुतिः जनकोवैदेहोबहुदक्षिणेनयज्ञेनेजेअभयवंजैनकःप्राप्तोसीत्याद्या॥१८॥ फलितमा
ह तथाचतत्त्वविद्वृत्ररिपुरिंद्रस्तद्वत्दुरितैर्नहीयते तथाजनकवत्सुकृतैश्चनवर्द्धतेकिंचसतत्वविदहंदुरितंकिमर्थमकरवंसाधुकर्मचकिमर्थंनाकरव ॥ ११
मितितापमपिनप्राप्नोतीत्यर्थस्तथाचश्रुतिस्तत्सुकृतदुष्कृतेविधुनुतएनंहवावनतपतिकिमहंसाधुनाकरवंकिमहंपापमकरवमित्याद्या ॥ १९ ॥

तत्तस्माद्यद्यपिकामशास्त्रपरिशीलनंहेसौम्यानेनैवकरणेनवपुषाकृतमपिनचदोषकृत्तथापिशिष्टसरणीपरिपालनार्थमन्यशरीरंप्राप्ययत्नंकरोति ॥१००॥ इत्येवंभवभयभंजनकरीःसत्कथाःकथयन्कथनीयंयशोयस्यसचरणचारिजनैरतिदुःप्रापमद्रिशृंगंप्राप्याथगिरिशृंगप्राप्त्यनंतरंसःश्रीशंकरोभूयोप्युवाच ॥ १ ॥ यदुवाचतदुदाहरति गुहायाःपुरतःसमंतलंयस्याःसाविपुलाशिलाविभातितथातस्यागुहायाःपरिसरेप्रांतभूमौस्वच्छजलापुनश्चफलानांभारेणनम्रैर्वृक्षैरम्यंतटंयस्याःसासरसीविभाति हेविनेयांअनुपश्यत ॥२॥ तथाचयावत्कामकलाज्ञानायोचितंशरीर

तदनंगशास्त्रपरिशीलनमप्यमुनैवसौम्यकरणेनकृतं ॥ नहिदोषकृत्तदपिशिष्टसरण्यवनार्थमन्यवपुरेत्ययते ॥ १०० ॥ इतिसत्कथाःसकथनीययशाभवभीतिभंजनकरीःकथयन् ॥ सुदुरासदंचरणचारिजनैर्गिरिशृंगमेत्यपुनरेवजगौ ॥१०१॥ अथसानुपश्यतविभातिगुहापुरतःशिलासमतलाविपुला॥सरसीचतत्परिसरेऽच्छजलाफलभारनम्रतरुरम्यतटा ॥२॥ परिपाल्यतामिहवसद्भिरिदंवपुरप्रमादमनवद्यगुणाः ॥ अहमास्थितस्तदुचितंकरणंकलयामियावदसमेषुकलां॥३॥इतिशिष्यवर्गमनुशास्ययमिप्रवरोविसृष्टकरणोधिगुहं॥ महिपस्यसूक्ष्मगुरुयोगबलोविशदातिवाहिकशरीरयुतः॥ ४ ॥

मास्थितोऽहंविषमेषुकलामनुभवामितावदस्यांशिलायांवसद्भिर्हेऽनवद्यगुणाइदंचमद्वपुरप्रमादंयथास्यात्तथापरिपाल्यतामित्यर्थः ॥ ३ ॥ इत्येवंशिष्यवर्गमनुशास्यगुहायांत्यक्तदेहउरुयोगबलआतिवाहिकेनज्ञानेंद्रियकर्मेंद्रियप्राणमनोबुद्धिरूपेणलिंगशरीरेणयुतोयमिनांप्रवरःश्रीशंकरोऽमरकाभिधस्यक्षितिपस्यकायमविशत् ॥ ४ ॥

कथंविसृष्टदेहस्तच्छरीरंप्रविष्टवानित्यपेक्षायांतत्प्रकारंदर्शयति स्वशरीरस्यांगुष्ठमारभ्यदशमद्वारपर्यंतंप्राणवायुंनयन्सन् शिरोरंध्रमार्गाद्बहिरा गत्यमृतस्यराजदेहस्यचरणाग्रपर्यंतंकरंध्रमार्गेणशनैःप्रविष्टवान्एवंसत्यप्येकबुद्धिरेव॥उ०॥५॥ ततःकिंवृत्तमित्यपेक्षायामाह मृतकस्यभूमिप तेर्गात्रंहृत्प्रदेशेशनैःसमास्पंदतसम्यक्प्रचलितंतथाहस्तादिचलनक्रमेणनयनमुदमीलयत्तथासराजाप्यथापूर्वमेवोदतिष्ठत् ॥६॥ क्रमेणेत्युक्तंत त्केनक्रमेणेत्याकांक्षायांक्रमंनिरूपयति आदौतस्यांगंगात्रमुदयंतीमुखकांतिर्यस्मिन्तथाभूतंपश्चान्नासांतर्निर्गच्छन्प्राणवायुर्यस्मिन्शनकैः

अंगुष्ठमारभ्यसमीरणंनयन्करंध्रमार्गाद्बहिरेत्ययोगवित् ॥ करंध्रमार्गेणशनैःप्रविष्टवान्मृतस्ययावच्चरणा ग्रमेकधीः॥५॥ गात्रंगतासोर्वसुधाधिपस्यशनैःसमास्पंदतहृत्प्रदेशे॥ तथोदमीलन्नयनंक्रमेणतथोदतिष्ठ त्सयथापुरैव॥६॥ आदौतदंगमुदयन्मुखकांतिपश्चान्नासांतनिर्यदनिलंशनकैःपरस्तात् ॥ उन्मीलदंघ्रिचल नंतदनूद्यदक्षिव्याकोचमुत्थितमुपात्तबलंक्रमेण ॥ ७ ॥ तंप्राप्तजीवमुपलभ्यपतिंप्रभूतहर्षस्वनाःप्रमुदिता ननपंकजास्ताः॥ नार्योविरेजुररुणोदयसंप्रफुल्लपद्माःससारसरवाइववारिजिन्यः॥ ८ ॥

पश्चादुन्मीलच्चरणयोश्चलनंयस्मिन्ततःपश्चादुद्यन्नेत्रयोर्व्याकोचःसंकोचविनिर्मोकोयस्मिन्नित्येवंक्रमेणोपात्तबलंसदुत्थितं ॥ व० ॥ ७ ॥ तं प्राप्तजीवंपतिमुपलभ्यप्रभूतोहर्षयुक्तःशब्दोयासांप्रमुदितानिमुखकमलानियासांतानार्योविरेजुः तत्रदृष्टांतः अरुणोदयेनसंप्रफुल्लानिकमला नियासुताःसारसानांशब्देनसहितापुष्करिण्यइव ॥ ८ ॥

तासांवामेक्षणानामुदितंहर्षंवीक्ष्यनृपतिमपिआत्तप्राणंवीक्ष्यमहामात्यप्रमुख्याःप्रहृष्टाःसंतःशंखान्पूरितवतः पणवादीन्वाद्यविशेषाश्चाभ
जघ्नुस्तेषांशंखादीनांशब्दःद्यांभूमिंचबधिरीचक्रिरे मंदाक्रांता ॥ १०९ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपा

हर्षंतासामुदितमतुलंवीक्ष्यवामेक्षणानामात्तप्राणंनृपमपिमहामात्यमुख्याःप्रहृष्टाः ॥ दध्मुःशंखान्पणवप
टहान्दुंदुभीश्चाभिजघ्नुस्तेषांघाषःसपदिबधिरीचक्रिरेद्यांभुवंच॥९॥ इतिश्रीमाधवीयेतत्सार्वज्ञोपायगो
चरः॥ संक्षेपशंकरजयेसर्गोयंनवमोभवत्॥ ९॥ संख्या॥ १७८॥

दशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिकृतेश्रीशंकराचार्यविजयडिंडिमेनवमःसर्गः॥ ९॥ टी०सं० ॥ २२५॥

श्री०॥ एवंसार्वज्ञोपायंसप्रपंचंनिरूप्यकामकलातत्वंसपरिकरंप्रपंचयितुमारभते अथानंतरंकृतशांतिककर्मभिःपुरोहितादिभिर्यथोचितंविहितमांगलिकःस्थितोमंगलगजोयेनसनरपतिःनगरंययौ द्रुतविलंबितं ॥ १ ॥ पुरंसमधिगम्यपरिसांत्वितःप्रियजनोयेनन्नृपतिभिरादृतंशासनंयस्यसअधिराट्संमतैःसचिवैःसहदिवमिंद्रइवभुवमपालयत् ॥ २ ॥ इत्येवंनृपत्वंप्राप्ययतिराजेश्रीशंकरेभूमिमवतिसतितंपरमधिकृत्यत

श्री०॥ अथदशमःसर्गः॥ अथपुरोहितमंत्रिपुरःसरैर्नरपतिःकृतशांतिककर्मभिः॥विहितमांगलिकःसयथोचितंनगरमास्थितभद्रगजोययौ ॥ १ ॥ समधिगम्यपुरेपरिसांत्वितप्रियजनःसचिवैःसहसंमतैः॥ भुवमपालयदादृतशासनोनृपतिभिर्दिवमिंद्रइवाधिराट्॥२॥ इतिनृपत्वमुपेत्यवसुंधरामवतिसंयमिभूभृतिमंत्रिणः॥ तमधिकृत्यपरंकृतसंशयाइतिजजल्पुरनल्पधियोमिथः॥ ३॥ मृतिमुपेत्ययथापुनरुत्थितःप्रकृतिभाग्यवशेनतथात्वयं ॥ नरपतिःप्रतिभातिनपूर्ववत्समुदिताखिलदिव्यगुणोदयः ॥ ४ ॥ वसुददातिययातिवदर्थिनेवदतिगीष्पतिवद्गिरमर्थवित् ॥ जयतिफाल्गुनवत्प्रतिपार्थिवान्सकलमप्यवगच्छतिशर्ववत्॥ ५॥

स्मिन्परस्मिन्ननल्पबुद्धयोमंत्रिणःकृतसंशयाःसंतःपरस्परमूचुः ॥ ३ ॥ जल्पनमेवोदाहरति मृतिमुपेत्यप्रजाभाग्यवशेनयथापुनरुत्थितस्तथैवप्रकृतिभाग्यवशेनैवायंनपूर्ववत्प्रतिभाति किंतुसमुदितानामखिलानांदिव्यगुणानामुदयोयस्मिंस्तथाभूतःप्रतिभातीत्यर्थः ॥ ४ ॥ गुणानेवोपवर्णयति अर्थिनेययातिवद्धनंददाति तथाऽयमर्थवित्वाचस्पतिवद्गिरंवदति प्रतिराज्ञोऽर्जुनवज्जयति सर्वमपिमहादेववज्जानाति ॥ ५ ॥

अनुसवनंसर्वदावितरणशीलैरपूर्वैःदातृत्वादिभिर्नान्यस्मिन्सुलभैर्गुणैरेषभूमिपतिराद्यःपरःपुमान्परमात्मेवविभाति पुष्पिताग्रावृत्तं ॥६॥ किंच वृक्षाअनृतुषुसुपुष्पिताग्राःगोमहिष्यश्चबहुतरदुग्धदुघाःक्षितिश्चाभिमतावृष्टिर्यस्यांसाआढ्यसस्याप्रजाश्चसर्वाःस्वविहितधर्मरताः ॥ ७ ॥ किंबहुनाअस्यराज्ञःप्रभावात्सर्वदोषाकरोपिकलिकालस्त्रेतामतिक्रामतितत उत्कृष्टोभवति  तस्मात्प्राप्तैश्वर्यःकश्चिदस्मद्राज्ञःशरीरंप्रविश्यपृथि



अनुसवनविसृत्वरैरपूर्वैर्वितरणपौरुषशौर्यधैर्यपूर्वैः॥ अनितरसुलभैर्गुणैर्विभातिक्षितिपतिरेषपरःपुमानिवाद्यः॥ ६॥ अनृतुषुतरवःसुपुष्पिताग्रावहुतरदुग्धदुघाश्चगोमहिष्यः॥ क्षितिरभिमतवृष्टिराढ्यसस्यास्वविहितधर्मरताःप्रजाश्चसर्वाः॥ ७॥ कालस्त्रिष्यःसर्वदोषाकरोपित्रेतामत्येत्यस्यराज्ञःप्रभावात्॥ तस्मादस्मद्राजवर्ष्मप्रविश्यप्राप्तैश्वर्यःशास्तिकश्चिद्धरित्रीं॥ ८॥ तदयंगुणवारिधिर्यथाप्रतिपद्येतनपूर्वकंवपुः॥ करवामतथेतिनिश्चयंकृतवंतःसचिवाःपरस्परं ॥ ९ ॥ अथतेभुवियस्यकस्यचिद्विगतासोर्वपुरस्तिदेहिनः॥ अविचार्यतदाशुदह्यतामितिभृत्यान्रहसिन्ययोजयन्॥ १०॥ अथराज्यधुरंधराधिपःपरमाप्तेषुनिवेश्यमंत्रिषु॥ बुभुजेविषयान्विलासिनीसचिवोन्यक्षितिपालदुर्लभान् ॥ ११ ॥

वींशास्ति शालि॰ ॥८॥ तत्तस्मादयंगुणसमुद्रोयथापूर्वंशरीरंनप्राप्नुयात्तथाकरवामेत्येवंसचिवाःपरस्परंनिश्चयंकृतवंतः वियोगिनी ॥९॥ अथैवंनिश्चयकरणानंतरंयस्यकस्यचिन्मृतकस्यदेहिनःशरीरंभूमावस्तितदविचार्याशुदह्यतामित्येवभृत्यानेकांतेन्ययोजयन् ॥ १० ॥ एवंमंत्रिणांजल्पनादिनिरूप्यराज्ञश्चरितंवर्णयितुमुपक्रमते  अथराजदेहप्रवेशाद्यनंतरंभूमिपःपरमाप्तेषुमंत्रिषुराज्यभारंनिवेश्यविलासिनीसहायोऽन्यभूमिपालानांदुर्लभान्विषयान्बुभुजे ॥ ११ ॥

॥

ज्योत्स्नावच्छुभ्रेस्फटिकफलकेमनोज्ञानिशिरोगृहाणिउपबर्हणानियस्मिन्तस्मिन्दुरोदरकेलिषुद्यूतकारक्रीडासुअक्षैर्दीव्यन्सन्राज्ञामिथोज
येअधरदशनंवाञ्छावाहंभुजेनोद्वहनंमहोत्पलेनताडनंरतिविपर्ययंग्लहंपणमकार्षीत् हरिणीवृत्तं रसयुगहयैः न्सौम्रौस्लौगोपदाहरिणीतदेतिल
क्षणात् ॥ १२ ॥ अधराज्जातायाःसुधायाःश्लेषाद्धृद्यंमुखवायोर्व्यतिकरवशात्संपर्कवशात्सुगंधिकांतानांकरेभ्यःप्राप्तमतएवातिप्रियंमदक

स्फटिकफलकेज्योत्स्नाशुभ्रेमनोज्ञशिरोगृहेवरयुवतिभिर्दीव्यन्नक्षैर्दुरोदरकेलिषु ॥ अधरदशनंवा
ञ्छावाहंमहोत्पलताडनंरतिविनिमयंराजाकार्षीद्ग्लहंविजयेमिथः ॥ १२ ॥ अधरजसुधाश्लेषाद्धृद्यंसु
गंधिमुखानिलव्यतिकरवशात्कामंकांताकरात्तमतिप्रियं ॥ मधुमदकरंपायंपायंप्रियाःसमपायय
त्कनकचषकैरिंदुच्छायापरिष्कृतमादरात् ॥ १३ ॥ मधुमदकलंमंदस्विन्नंमनोहरभाषणंनिभृतपु
लकंसीत्काराढ्यंसरोरुहसौरभं ॥ दरमुकुलिताक्षीपल्लज्जंविस्त्वरमन्मथंप्रचरदलकंकांतावक्त्रंनिपी
यकृतीनृपः ॥ १४ ॥

रमिंदुच्छाययाचंद्रप्रतिबिंबेनपरिष्कृतंमधुमद्यंकामंयथेष्टंपीत्वापीत्वाप्रियाःसमपाययत् ॥ १३ ॥ मधुमदनकलमव्यक्ताक्षरंमंदस्विन्नमीषत्स्वेद
युक्तंमनोहरंभाषणंयस्मिन्निभृतरोमांचंसीत्काराढ्यंकमलस्यसौरभवत्सौरभंयस्यविस्त्वरःप्रसरणशीलोमन्मथोयत्र एवंविधंकांतामुखंनिपी
यनृपःकृतकृत्योऽभूत् ॥ ॥ १४ ॥

विवृत्तेआवरणरहितेजघनेयस्मिन् संदष्टोऽधरोष्ठोयस्मिन् प्रणुन्नौप्रकर्षेणपीडितौस्तनौयस्मिन् प्रसृतंभणितंरतिकूजितंयस्मिन् प्राप्तउत्साहो यस्मिन् रणंतीमणिमेखलायस्मिन् निभृतमासादितंकरणंक्रियाभेदःसंवेशनंवायस्मिन् करणंहेतुकर्मणोः क्रियाभेदेंद्रियक्षेत्रकायसंवेशनेषु चेतिमेदिनी नृत्यंतिगात्राणियस्मिन् गताइतरस्यभावनायस्मात्तथाभूतंवाचामगम्यंकिमप्यतिशयितंसुखंप्रादुर्भूतमित्यर्थः ॥ १५ ॥ तत्रा पिब्रह्मानंदमेवान्वभूदित्याह मनसिजेति श्रद्धाप्रीतीरतिश्चैवधृतिःकीर्तिर्मनोभवा विमलामोदिनीघोरामदनोत्पादिनीमदा मोहिनीदीपनीचै वज्ञेयावशकरीतथा रंजनीचैवमदनाकलाःस्युरंगेषुसर्वशः दक्षिणांगंसमाश्रित्यआशिरश्चरणावधि पादगुल्फेतथोरौचभगेनाभौकुचेहृदि क

विवृतजघनंसंदष्टोष्ठंप्रणुन्नपयोधरंप्रसृतभणितंप्राप्तोत्साहंरणन्मणिमेखलं ॥ निभृतकरणंनृत्यद्गात्रंगतेतर भावनंप्रसृमरसुखंप्रादुर्भूतंकिमप्यपदंगिरां ॥ १५॥ मनसिजकलातत्वाभिज्ञोमनोज्ञविचेष्टितःसकलवि षयव्यावृत्ताक्षःसदानुसृतोत्तमः ॥ कृतकुचगुरूपास्त्यात्यंतंसुनिर्वृतमानसोनिधुवनवरब्रह्मानंदंनिरर्गलम न्वभूत् ॥ १६॥ पुरेवभोगानुबुभुजेमहीभृत्सभोगिनीभिःसहितोप्यरंस्त ॥ कंदर्पशास्त्रानुगतःप्रवीणैर्वात्स्या यनेतच्चनिरैक्षताद्धा ॥ १७॥

क्षेकंठेतथोष्ठेचगंडेनेत्रेश्रुतावपि ललाटेचशिरोदेशेवसेत्कामस्तिथिक्रमात् दक्षेपुंसःस्त्रियावामेशुक्लेकृष्णेविपर्ययइत्युक्तप्रकारेणमनसिजस्य कामस्यकलास्वभिज्ञोमनोज्ञंविचेष्टितंयस्यसकलविषयेषुव्यापारयुक्तानींद्रियाणियस्यसदाऽनुसृताःप्रमदोत्तमायेनकृतायाकुचलक्षणगुरू पासनानयाऽत्यंतंसुनिर्वृतमंतःकरणंयस्यसनिरर्गलंनिराबाधंनिधुवनंमैथुनं मैथुनंनिधुवनंरतमित्यमरस्तच्चवरोयःब्रह्मानंदस्तमनुभूतवान् हरि णी ॥ १६ ॥ समहीभृत्पुरेवभोगिनीभिःप्रमदाभिःसहितोभोगानुबुभुजे वात्स्यायनेप्रवीणैःसहितश्चकामशास्त्रानुगतोऽरंस्त तच्चकंदर्पशा स्त्रंस्वयंसाक्षाद्दृष्टवान् उ० ॥ १७॥

तद्दृष्ट्वानिबंधमेकंचकारेत्याह वात्स्यायनेनप्रोदितं त्रिवर्गप्रतिपत्तिः विद्यासमुद्देशः नागरिकंवृत्तं नायकसहायदूतीकर्मविमर्शः प्रमाणकालभावेभ्योरत्यवस्थापनं प्रीतिविशेषाः आलिंगनविचाराः चुंबनविकल्पाः नखरदशनजातयःदशनच्छेद्यविधयःदेश्याउपचाराःसंवेशनप्रकाराः चित्ररतानि प्रहरणनयोगाः तद्युक्ताश्चसीत्कृतोपक्रमाःपुरुषायितं पुरुषोपसृप्त्यानि औपरिष्टकंरतारंभावसानिकं रतविशेषाः प्रणयकलहइत्यादिसमासव्यासात्मकंसूत्रजातंतदीयंभाष्यंचसम्यक्निरीक्ष्याभिनवार्थगर्भमेकंनिबंधमभरकाख्यनृपवेषधारीव्यधत्तेत्यर्थः॥

वात्स्यायनप्रोदितसूत्रजातंतदीयभाष्यंचनिरीक्ष्यसम्यक् ॥ स्वयंव्यधत्ताभिनवार्थगर्भंनिबंधमेकंनृपवेष
धारी॥१८॥ पाराशर्यवनिभृतिप्रविश्यराज्ञोवर्ष्मैवंविहरतितद्विलासिनीभिः॥ दृष्ट्वातत्समयमतीतमस्यशि
ष्यारक्षंतोवपुरितरेतरंजजल्पुः ॥ १९ ॥ आचार्यैरवधिरकारिमासमात्रंसोतीतःपुनरपिपंचषाश्चघस्राः ॥
अद्यापिस्वकरणमेत्यनःसनाथान्कर्तुंतन्मनसिनजायतेऽनुकंपा॥ २०॥

॥ १८ ॥ एवंराजदेहप्रवेशानंतरंकृतंतदीयंचरितंनिरूप्यतच्छिष्यचरितंवर्णयितुमुपक्रमते पराशरेणप्रोक्तंभिक्षुसूत्रमधीतइतिपाराशरीयतिःपाराशर्यपिमस्करीत्यमरस्तेषामवनिभृतिराज्ञिश्रीशंकरेराज्ञःशरीरंप्रविश्यैवंतद्विलासिनीभिर्विहरतिसतितस्यागमनकालंतत्संकेतंमासमात्रंवाव्यतिक्रांतंदृष्ट्वाअस्यशिष्याःशरीररक्षंतःपरस्परंजजल्पुः प्रहर्षणी॥ १९ ॥ तज्जल्पनमुदाहरति आचार्यैर्मासमात्रमवधिःकृतःसोऽतीतःपुनरपिपंचषड्वादिनानिव्यतीतानिअद्यापिस्वशरीरंप्रविश्यास्मान्सनाथान्कर्तुंतस्यमनसिकरुणानजायते ॥ २० ॥

तस्मात्किंकुर्मः क्वयंच्छामः नतुक्वचित् गत्वाकश्चनप्रष्टव्यइत्याशंक्याहुर्जाननूसन्इहवसतीतिनोअस्मभ्यंकअभिदध्यात्   ननुसमुद्रपर्यंतंक्षिति
तलमन्विष्यस्वयमेवविज्ञेयइतितत्राहुः आसिंधुभूमितलंविचित्यान्विष्यापीमंगुरुंविज्ञातुंकिंसमर्थाभवामोयतोऽन्यशरीरेगूढं ॥ २१ ॥ तथाक
रुणानिधिर्गुरुरपियदिसन्निधिंनविधास्यतितर्ह्यस्माकंकापिगतिर्नास्तीत्याशयेनाहुः करुणानिधिनागुरुणापियदित्यक्तावयमधुनासन्निहिता
स्तर्हिविपदंतकरंतत्स्वपदंभजतांपनश्चेदंसर्वंत्यजतांजगतिकगतिर्नकापीत्यर्थः इहतोटकमंबुधिसैःप्रथितं ॥ २२ ॥ नन्वेवंभूतगुरुविरहवतां

किंकुर्मःक्वनुमृगयामहेक्वयामःकोजानन्निहवसतीतिनोभिदध्यात् ॥ विज्ञातुंकथमिममीश्महेविचित्याप्या
सिंधुक्षितितलमन्यगात्रगूढं ॥ २१ ॥ गुरुणाकरुणानिधिनात्यधुनायदिनोनिहिताविहितात्यजिताः ॥ जग
तिक्वगतिर्भजतांत्यजतांस्वपदंविपदंतकरंतदिदं ॥ २२ ॥ निःशेषेंद्रियजाड्यहृन्नवनवाह्लादंमुहुस्तन्वतीनि
त्याश्लिष्टरजोयतीशचरणांभोजाश्रयाश्रेयसी ॥ निष्प्रत्यूहविजृंभमाणवृजिनस्योद्वासनावासनानिःसीमा
हृदयेनकल्पितपरारंभाचिरंभाव्यते ॥ २३ ॥

भवतांकथंजीवनमितितत्राहुः   सर्वेंद्रियजाड्यहृद्योनवीननवीनाह्लादस्तंमुहुर्वितन्वतीपुनश्चनित्यमाश्लिष्टमस्पृष्टंरजोयाभ्यांतरजोगुणलक्षण ॥
पांसुविनिर्मुक्तयतीशस्यचरणकमलेआश्रयोयस्यअतएवश्रेयसीअतिश्रेष्ठापुनश्चनिष्प्रत्यूहंनिर्विघ्नंयथास्यात्तथाविजृंभमाणस्यवृजिनस्यो
द्वासनाविनाशिकानिरवधिरूपावासनासाहृदयेनकल्पितनालिंगनाचिरंभाव्यते   तथाचगुरुचरणवासनाभावनमेवजीवनसाधनमितिभावः
स्रग० ॥ २३ ॥

तत्रकेचिदौत्सुक्यमाविष्कुर्वंतआहुः सत्वपादपैर्व्यवसायरूपवृक्षैःफलितैरिवयोगसंपदांपरिणामैरिववैदिकांश्रियासमयभासैरिव समयैःसिद्ध
भाससंपदोरितिविश्वप्रकाशः तत्वनिर्णयैःशरीरवद्भिरिवनिजलाभवैभवात्सधनैरिवउपशांतिलक्षणयाकांतयाकलत्रसहितैरिवतेभ्योन्यस्या
भावतयासकलात्मकैस्तेजोभिःकदानुगृह्लेयअनुगृहीताभूयास्मेतिद्वयोरर्थः वियोगिनी ॥ २४ ॥ २५॥ तत्रकश्चिदतीवदुःखितआचार्यएवम
मगतिंविधास्यतीत्याहासतामविनयंविनयन्दूरीकुर्वन्सतामतिवेगवंतंसंसाराग्निंतिरयन्अपगतंकरिष्यन्योयोगभृतांवरोजगतिजयतिएषमम

सध
फलितैरिवसत्वपादपैःपरिणामैरिवयोगसंपदां ॥ समयैरिववैदिकश्रियांसशरीरैरिवतत्वनिर्णयैः ॥ २४ ॥ अवि
नैर्निजलाभवैभवात्सकुटुंबैरुपशांतिकांतया ॥ अतदन्यतयाखिलात्मकैरनुगृह्येयकदानुधामभिः ॥ २५ ॥
नयंविनयन्नसतांसतामतिरयंतिरयन्भवपावकं ॥ जयतियोयतियोगभृतांवरोजगतिमेगतिमेषविधास्यति ॥
॥ २६ ॥ विगतमोहतमोहतिमाप्ययंविधुतमायतमायतयोभवन् ॥ अमृतदस्यतदस्यदृशःस्तृतावतरेमतरेम
शुगर्णवं ॥ २७ ॥ शुभाशुभविभाजकस्फुरणदृष्टिमुष्टिंधयःक्षपांधमतपांथदुष्कथकदंभकुक्षिंभरिः ॥ कदाभव
सिमेपुनःपुनरनाद्यविद्यातमःप्रमृज्यगलितद्वयंपदमुदंचयन्नद्वयं ॥ २८ ॥

केचित्तुतद्दर्शनेनैवशोकसागरस्यतरणंमत्वाआहुर्यंविगतामोहलक्षणतमसांसंहतिर्यस्मान्निरावरणतत्वज्ञानवंतं
गतिंविधास्यति द्रु० ॥ २६ ॥ प्राप्ययतयोविधूतमायतमाअतिशयेनविधूताकंपितामायायैस्तथाभूताअभवन् तस्यास्यामृतप्रदस्यचक्षुषोमार्गेयदाऽवतरेमतदाशोकसमुद्रंत
रेमं ॥२७॥ सकलानर्थनिवर्तकमद्वयानंदप्रापकंतदीयमुपदेशंस्मरन्कश्चिदाह पुनःपुनर्मेऽनाद्यविद्यातमोविमृज्यगलितद्वैतमद्वयंपदमुदंचयन्भ
काशयन्पुण्यापुण्यविभाजकस्फुरणदृष्टेर्मुष्टिंधयःसाराकर्षकःरात्र्यंधकारात्मकेषुमतेषुपांथानांमध्येपिदुष्कथकास्तेषांदंभस्यकुक्षिंभरिर्भक्ष
कःकदाभवसि पृथिवी ॥ २८ ॥

कश्चित्त्वतिविह्वलःसन्नवश्यंदर्शनंदेहीत्याशयेनाह हेआचार्येहजीवदृशायामेवंकिंकुर्वाणंकिंकरतांप्राप्तंनिर्वाणंयस्यास्तयाययावाचानिज
पादपद्मजुषांमर्त्यानांबुद्धिकल्मषंसमूलंरुंधानस्त्वंशीघ्रंनायास्यसिचेत्तर्हिसुबुद्धिभिःकृतःपरिहासोयस्यतस्यतेदासस्यमेदुःखांतोनभवेदिति हे
स्तुत्यसपुनस्त्वंजानीहिमांमामीनीहिनघातय शा० ॥ २९ ॥ इत्येवंमित्रजनेखेदमुपेयुषिसतिपरिज्ञातोयतिराजस्यस्वगुरोर्महिमायेनसपद्म
पादोऽर्थवतात्वचनेनशोकंशमयन्निदंवक्ष्यमाणमुवाच तो० ॥ ३० ॥ यदुवाचतदाह नोऽस्माकंक्लैब्यंपर्याप्तमतोहेसखायउपेत्यमिलित्वा

मर्त्यानांनिजपादपंकजजुषामाचार्यवाचाययारुंधानोमतिकल्मषंत्वमिहकिंकुर्वाणनिर्वाणया॥द्राङ्नाया
स्यसिचेत्सुधीकृतपरीहासस्यदासस्यतेदुःखांतोनभवेदितीड्यसपुनर्जानीहिमांनीहिमा ॥ २९ ॥ इतिखेद
मुपेयुषिमित्रजनेप्रतिपन्नयतिक्षितिभृन्महिमा ॥ शुचमर्थवताशमयन्वचसानिजगादसरोरुहपादइदं ॥
॥३०॥पर्याप्तंनःक्लैब्यमुपेत्यात्रसखायःकृत्वोत्साहंभूमिमशेषामपिधानात्॥अन्वेष्यामोभूविवराण्यप्यथच
घ्यांयद्वद्देवंदेवमनुष्यादिषुगूढं ॥ ३१ ॥ अनिर्विण्णचेताःसमास्थाययत्नंसुदुष्प्रापमप्यर्थमाप्नोत्यवश्यं॥ मु
हुर्विघ्नजालैःसुराहन्यमानाःसुधामप्यवापुर्ह्यनिर्विण्णचित्ताः॥ ३२ ॥

उत्साहंकृत्वासर्वांभूमिमपिधानात्तिरोधानादेवअन्वेष्यामोऽथानंतरंभूविवराणिपातालान् तदनंतरंदिवंदेवमनुष्योरगादिगूढंमहादेवमिव वेदै
रंध्रैर्मत्तैर्यसगामत्तमयूरं ॥ ३१ ॥ एवमुक्तेपिदुःसाध्यमालोच्योत्साहमकुर्वतआलक्ष्याहानिर्विण्णंनिर्वेदरहितंचित्तंयस्यसयत्नंसम्यगास्थाय
सुदुष्प्रापमप्यर्थमवश्यंप्राप्नोतिहियस्मान्मुहुर्विघ्नजालैर्हन्यमानाअपिसुराअनिर्विण्णचित्ताअतिदुर्लभामपिसुधांप्रापुःहियस्मादनिर्विण्णचि
त्ताअतएवंभूताअपिदेवाःसुधामप्यवापुरितिवा भुजंगप्रयातंभवेद्यैश्चतुर्भिः ॥ ३२ ॥

यद्यप्यन्यगात्रप्रतिच्छन्नरूपत्वान्नोऽस्माकंगुरुर्दुरन्वेषणःस्यात्तथापियथाराहूदरस्थोपिचंद्रःस्वीयैःप्रकाशैर्विज्ञातुंशक्यस्तद्वत्तदीयैर्गुणैरेवसगु
रुर्वेत्तुंशक्यः ॥ ३३ ॥ ननुतथापिक्वगतोयत्रान्वेष्यइतिचेत्तत्राह इक्षुधन्वनःकामस्यागमापेक्षयायतिशरीरान्निर्गतःसुभ्रुवांविभ्रमाणांप्र
दंकामशास्त्रस्योचितंराज्ञःशरीरंप्राप्तुमर्हति कामागमापेक्षयैवगतोनतुतज्जन्यसुखेच्छयेतिबोधयितुमाह कामविनिर्मुक्तानामग्रणीः रैश्वतुर्भि
र्वृतास्त्रग्विणीसंमता ॥ ३४ ॥ नन्वेवमपिराज्ञांबद्धत्वात्कथमस्यदेशस्यराज्ञःशरीरेप्रविष्टइतिविज्ञेयमितिचेत्तत्राह नित्यतृप्ताग्रगामिनाऽस्मद्गु

यद्यप्यन्यगात्रप्रतिच्छन्नरूपोदुरन्वेषणःस्याद्गुरुर्नस्तथापि॥ स्वभानूदरस्थःशशीवप्रकाशैस्तदीयैर्गुणैरेववे
त्तुंसशक्यः॥ ३३ ॥ इक्षुचापागमापेक्षयानिर्गतोवर्ष्मतस्योचितंकृष्णवर्त्मद्युति ॥ विभ्रमाणांपदंसुभ्रुवां
भूपतेःप्राप्तुमर्हत्यकामाग्रणीःसंयमी॥ ३४ ॥ नित्यतृप्ताग्रयाय्याश्रितेनिर्वृताःप्राणिनोरोगशोकादिनाने
क्षिताः॥ दस्युपीडोज्झिताःस्वस्वधर्मेरताःकालवर्षीस्वराण्मेदिनीकामसूः ॥ ३५ ॥ तदिहालस्यमपास्यविचे
तुंनिरवधिसंसृतिजलधेःसेतु॥ देशिकवरपदकमलंयामोनवृथाऽनेहसमत्रनयामः॥ ३६॥ इतिजलरुहपद
वचनंसर्वेमनसिनिधायनिराकृतगर्वे ॥ कांश्चित्तत्रनिवेश्यशरीरंरक्षितुमन्येनिरगुरुदारं॥ ३७॥

रुणाश्रितेदेशेप्राणिनआनंदितायतोरोगशोकादिनानावेक्षितायतश्चोरपीडाविनिर्मुक्ताःस्वस्वधर्मेरताश्चस्युःस्वराडिंद्रःकालवर्षीस्यात्भूमिश्च
कामसूःस्यात् ॥ ३५ ॥ तत्तस्मादस्मिन्कालेआलस्यंविहायानाद्यनंतसंसारसमुद्रस्यसेतुंदेशिकवरचरणारविंदंविचेतुंगच्छामोऽस्मिन्देशे
वृथाकालंननयामः मात्रासमकंनवमोलांतं ॥ ३६ ॥ इत्येवंपद्मपादस्यवचनंनिराकृतगर्वेमनसिसर्वेनिधायकांश्चिदुदारंगुरुशरीरंरक्षितुंत
स्मिन्स्थानेनिवेश्यान्येनिर्गताः ॥ ३७ ॥

तेपर्वतात्पर्वतंदेशाद्देशंभूमिमनिशंचिन्वंतोधिकृतादेवानांनिवेशायैस्तान्स्फीतानमरकनृपतेर्देशान्प्रापुःप्राप्तवंतः ॥ ३८ ॥ मृत्वापुनरप्युत्थितममरकसंज्ञंनृपंपृथुदिलीपतुल्यंश्रुत्वाचार्यंमत्वाऽमंदंविरहजन्यंदैन्यंहित्वाधैर्यंप्रापुः ॥ ३९ ॥ तेचतरुणीषुसक्तंगानविलोलंभूपालंज्ञात्वास्वीकृतगायकवेषानगरंविविशुर्यतोविदितसमस्तविशेषाः ॥ ४० ॥ राज्ञेज्ञापितगानविद्यातिशयाः यतस्तस्यराज्ञःसंग्रहणायविधृतोऽतिशयोयैस्तेत्ताराव्रतंचंद्रमिवतरुणीमध्यगतंभूमींद्रंददृशुः ॥ ४१ ॥ भूमींद्रंविशिनष्टि वरचामरकराणांतरुणीनांकंकणैरंजितोमनोहरःपश्चाद्भागोयस्यतं पुनश्चगीतिगतिज्ञैरुद्गीतेनश्रवणसुखेनतानेनसमुल्लसदग्रिमदेशोयस्यतं ॥ ४२ ॥ पुनश्चधृतश्चामीकरोहिरण्मयोदंडोयस्यतथाभूतेनसितेनातपवारणेनच्छत्रेणरंजितंरत्नकिरीटंयस्यतं स्वीकृतविग्रहंरतिपतिमनंगमिव यद्वा श्रितभूमिमंतःपुरसहितंदेवेशंपुरंदरमिव ॥ ४३ ॥

तेचिन्वंतःशैलाच्छैलंविषयाद्विषयंभुवमनुवेलं ॥ प्रापुर्धिकृतविबुधनिवेशान्स्फीतानमरकनृपतेर्देशान् ॥ ॥ ३८ ॥ मृत्वापुनरप्युत्थितमेनंश्रुत्वावैन्यदिलीपसमानं ॥ त्यक्त्वाविरहजदैन्यममंदंमत्वाचार्यंधैर्यमविंदन् ॥ ३९ ॥ तेचज्ञात्वागानविलोलंतरुणीसक्तंधरणीपालं ॥ विविशुःस्वीकृतगायकवेषानगरंविदितसमस्तविशेषाः ॥ ४० ॥ राज्ञेज्ञापितविद्यातिशयास्तेतत्संग्रहविधृतातिशयाः ॥ रमणीशतमध्यगमवनींद्रंददृशुस्ताराव्रतमिवचंद्रं ॥ ४१ ॥ वरचामरकरतरुणीकंकणरंजितमनोहरपश्चाद्भागं ॥ गीतिगतिज्ञोद्गीतश्रुतिसुखतानसमुल्लसदग्रिमदेशं ॥ ४२ ॥ धृतचामीकरदंडसितातपवारणरंजितरत्नकिरीटं ॥ श्रितविग्रहमिवरतिपतिमाश्रितभुवमिवसांतःपुरममरेशं ॥ ४३ ॥

एवंभूतंराजानंदृष्ट्वायत्कृतवंतस्तदाह रुचिरवेषाःतांसंसदंसमासाद्यनयनसंज्ञयादत्तासनाराज्ञासम्यगाज्ञप्तामूर्छनापदावदस्तसभामाहयतः
सुस्वरंजगुः मूर्छनालक्षणंतु क्रमात्स्वराणांसप्तानामारोहश्चावरोहणं सामूर्छेत्युच्यतेग्रामस्थाएताःसप्तसप्तचेति तत्रस्वराः श्रुतिभ्यःस्युः
स्वराःषड्जर्षभगांधारमध्यमाः पंचमोधैवतश्चाथनिषादइतिसप्ततेइत्युक्ताःसप्त सामान्यतःस्वरस्वरूपंतु श्रुत्यनंतरभावीयःस्निग्धोनुरंणनात्म
कः स्वतोरंजयतिश्रोतुश्चित्तंसस्वरउच्यतइति श्रुतिर्नामस्वरारंभकावयवविशेषस्तदुक्तं प्रथमश्रवणाच्छब्दःश्रूयतेह्रस्वमात्रकः साश्रुतिः
संपरिज्ञेयास्वरावयवलक्षणेति अथग्रामलक्षणंयथाकदंबिनःसर्वेप्येकीभूताभवंतिहि तथास्वराणांसंदोहोग्रामइत्यभिधीयते षड्जग्रामोभ

रुचिरवेषाःसमासाद्यतांसंसदंनयनसंज्ञावितीर्णासनाभूभुजा ॥ समतिसृष्टास्ततःसुस्वरंमूर्छनापदविदस्ते
जगुर्मोहयंतःसभां ॥ ४४ ॥ भृंगतवसंगतिमपास्यगिरिशृंगेतुंगविटपिनिसंगमजुषित्वदंगे ॥ स्वांगरक्षिताः
सकलुषांतरंगाःसंगमकृतेभंगमुपयांतिभृंगाः ॥ ४५ ॥

वेदादौमध्यमग्रामएवच गांधारग्रामइत्येतद्ग्रामत्रयमुदाहृतं नंदावर्तोऽथजीमूतःसुभद्रोग्रामकास्त्रयः षड्जमध्यमगांधारास्त्रयाणांजन्महेतवइति
तथाचैवंभूतग्रामत्रयेपिप्रत्येकंसप्तसप्तचमूर्छनाइत्येकविंशतिर्मूर्छनाभवंति तथाभूतमूर्छनापदविदस्तेसुस्वरंजगुरित्यर्थः यच्छंदोनोक्तमत्रगाथे
तितत्सूरिभिःप्रोक्तं ॥ ४४ ॥ गानव्याजेनस्वगुरुप्रतिबोधनंकृतवतांतद्गानमुदाहरंति हेभृंगश्रुतिसूच्यादिलक्षणकुसुममकरंदास्वादनशील त
वसंगतिसंगममपास्यविहायोच्चवृक्षवतिगिरिशृंगेसंगमजुषित्वदंगेतवशरीरेसतित्वच्छरीरस्यरक्षणायरक्षिताःसकलुषंदुःखयुक्तमंतरंगमंतःकरणं
येषांतेभृंगाःशिष्यास्तवसंगमार्थंभंगमुपयांतिभेदंप्राप्नुवंतीत्यर्थः इंदुवदनाभजंसनैःसगुरुयुग्मैः ॥ ४५ ॥

पंचशरस्यकामस्ययःसमयःकलादिरूपःसंकेतःसिद्धांतोवातस्यसंचयार्थंप्रांचंशिवगुरूद्धवंप्रपंचंशरीरंमुंचन्निवेहास्मिन्राजशरीरेस्थानेवासं
चरसि तथाच हेपंचजनेषुमनुजेषुमुखश्रेष्ठ यद्वा यस्मिन्पंचपंचजनाआकाशश्चप्रतिष्ठितस्तमेवमन्यआत्मानंविद्वान्ब्रह्मामृतोमृतमितिश्रु
त्युक्तानांसांख्यरीत्यामूलप्रकृतिरविकृतिर्महदाद्याःप्रकृतिविकृतयःसप्तषोडशकस्तुविकारोनप्रकृतिर्नविकृतिःपुरुषइतिपंचविंशतितत्वानांमु
खशुद्धात्मन् पंचजनपदस्यपंचपंचजनपरत्वाश्रयणात्सिद्धांतरीत्यावाक्यशेषस्थानांप्राणचक्षुःश्रोत्रान्नमनसांपंचजनानांमुखाधिष्ठानेत्यर्थः
पंचाननमप्यगच्छन्शिवंस्वस्वरूपमप्यनाप्नुवन् गतिश्चासौत्वमितिहेतोःकुतःखलुवंचितोसि गा॰ ॥ ४६ ॥ किंचहेशरत्पूर्णमासीचंद्रमुख

पंचशरसमयसंचयकृतेप्रांचमुदंचन्निवेहसंचरसिप्रपंचं॥ पंचजनमुखपंचमुखमप्यनंचन्त्वंचगतिरितिकिंच
किलवंचितोसि॥ ४६ ॥ पर्वशशिमुखसर्वमपहायपूर्वंकुर्वन्दिहगर्वमनुसृत्यत्वदपूर्वं॥ नस्मरसिवस्त्वस्मदीयमि
तिकस्मात्संस्मरतदस्मरपरमस्मदुक्त्या॥ ४७॥ नेतिनेत्यादिनिगमवचनेननिपुणंनिषिध्यमूर्तामूर्तराशिं॥ यद
शक्यनिह्नवंस्वात्मरूपतयाजानंतिकोविदास्तत्त्वमसितत्त्वं॥ ४८॥

पूर्वंसर्वंशांतिदांत्यादिकमपहायेहगर्वंकुर्वन्मानसमनुसृत्यास्मदीयवस्त्वितिकस्मान्नस्मरसितत्तस्मात् हेऽस्मराकामास्मदुक्त्यापरंस्वस्वरूपंसंस्म
रतत्परमितिवा ॥४७॥ अस्मदुक्त्यापरंस्मरेत्युक्त्वाऽथातआदेशोनेतिनेति अस्थूलमनण्वह्रस्वमदीर्घमनंतरमबाह्यमपूर्वमनपरमशब्दमस्पर्शमरू
पमव्ययं तथारसंनित्यमगंधवच्चयत्अनाद्यनंतंमहतःपरंध्रुवंनचाप्यंतंमृत्युमुखात्प्रमुच्यतइत्यादिश्रुतिभिस्तंस्मारयंति नेतिनेत्यादिनिगमवच
नेनमूर्तामूर्तराशिंसम्यङ्निषिध्यसर्वाधिष्ठानत्वात्निरवधिबाधायोगात् प्रतिषेद्धुःस्वरूपत्वेनप्रतिषेधसाक्षितयावस्थितत्वात्सत्यस्यापिसत्यंअ
स्तीत्येवोपलब्धव्यः असन्नेवसभवतिअसद्ब्रह्मेतिवेदविदित्यादिश्रुतेश्चनिषेद्धुमशक्यंयदहंब्रह्मास्मीतिस्वात्मरूपतयाविद्वांसोजानंतितत्त्वंपर
मार्थवस्तुत्वमसि ॥ ४८ ॥

तथापंचकोशविवेकेनकवयोयदात्मत्वेनप्रतिपद्यंतेतत्तत्त्वंत्वमसीतिस्मारयंति आकशादिकंविश्वमुत्पाद्यानुप्रविश्यान्नमयप्राणमयमनोमय विज्ञानमयानंदमयकोशलक्षणेतुषजालेगूढंयुक्तिलक्षणावघातेनकवयोविविच्यतंदुलवद्यदाददतितत्तत्त्वंत्वमसि तथाचश्रुतिः तस्माद्वाएतस्मा दात्मनआकाशःसंभूतआकाशाद्वायुर्वायोरग्निरग्नेरापअद्भ्यःपृथिवीपृथिव्याओषधयओषधीभ्योन्नमन्नात्पुरुषःसवाएषपुरुषोऽन्नरसमयस्त स्माद्वाएतस्मादन्नरसमयादन्योंतरआत्माप्राणमयस्तस्माद्वाएतस्मात्प्राणमयादन्योऽतंरआत्मामनोमयःतस्माद्वाएतस्मान्मनोमयादन्योंतरआ त्माविज्ञानमयस्तस्माद्वाएतस्माद्विज्ञानमयादन्योंतरआत्माआनंदमयःसोऽकामयतबहुःस्यांप्रजायेयेति सतपोतप्यतसतपस्तप्त्वाइदꣳसर्वम सृजत यदिदंकिंचतत्सृष्ट्वातदेवानुप्राविशत् तदनुप्रविश्यसच्चत्यच्चाभवदित्याद्यायुक्तिस्तावद्विमतोदेहआत्मानभवतिकार्यत्वात्घटवत् ननुविप

खाद्यमुत्पाद्यविश्वमनुप्रविश्यगूढमन्नमयादिकोशतुषजालेकवयो
विविच्ययुक्त्यवघाततोयत्तंदुलवदाददतितत्त्वमसितत्त्वं॥४९॥

क्षेबाधकाभावादप्रयोजकोयंहेतुरितिचेन्नाकृताभ्यागमकृतविप्रणाशाख्यबाधकसद्भावात् तथाविवादास्पदःप्राणआत्मानभवति जडत्वात् घटवत् तथामनोमयआत्मानभवति विकारत्वाद्देहवत् तथाविज्ञानमयआत्मानभवति विलयाद्यवस्थावत्त्वाद्घटादिवत् तथानंदमयोप्या त्मानभवति कादाचित्कत्वादभ्रवत्तस्मादानंदएवात्माभवितुमर्हतिनित्यत्वात् यआत्मानभवति नासौनित्योयथादेहादिः आत्मनआकाशः संभूतइत्यादिश्रुत्याआकाशादेरनित्यत्वावगमान्नानैकांतिकतेति नन्वाङ्पूर्वाद्दानास्यविहरणेवर्तमानाद्दधातेरात्मनेपदंस्यादित्यर्थकाङोदोना स्यविहरणइतिसूत्रादाददतइतिभवितव्यमितिचेन्न भिक्षामाददातीतिप्रयोगवदत्रङिद्विशिष्टस्याकारस्याग्रहणेनाददतीतिप्रयोगस्यसाधुत्वा त्सूत्रेङिद्विशिष्टाकारग्रहणस्याङिद्विशिष्टादाकारादुत्तरस्यंददातेरात्मनेपदाभावज्ञापनार्थत्वात् ॥ ४९ ॥

सर्वेंद्रियालंबनंतत्त्वंत्वमेवेतिस्मारयंति यथाविषमदेशेषुस्वैरंसंचारिणोऽश्वान्कशाभिघातेनरश्मिभिःसम्यङ्निवर्त्यशंकौवध्नंतितथाविषमेषुविष
यलक्षणेषुदेशेषुस्वैरंसंचारिणइंद्रियलक्षणान्हयान्दोषदर्शनलक्षणकशाभिघातेनमनोवृत्तिलक्षणरश्मिभिर्यस्मिन्परमात्मतत्त्वेधीमंतोबध्नंति
तत्तत्त्वंत्वमसि तथाचश्रुतिः आत्मानंरथिनंविद्धिशरीरंरथमेवतु बुद्धिंतुसारथिंविद्धिमनःप्रग्रहमेवच इंद्रियाणिहयानाहुर्विषयांस्तेषुगोचरान्
यस्तुविज्ञानवान्भवतियुक्तेनमनसासदा तस्येंद्रियाणिवश्यानिसदश्वाइवसारथेरिति ॥ ५० ॥ अथजाग्रत्स्वप्नसुषुप्त्युपाधिविलक्षणंत
त्त्वंत्वमसीतिस्मारयंतिआत्माजाग्रदाद्युपाधिभ्योऽन्योन्यव्यावर्तमानेषुतेष्वनुस्यूतत्वात्पुष्पेभ्यःसूत्रमिवेत्येवमुपाधित्रयपृथक्त्वेनयत्सूरयोजानंतित

विषमविषयेषुसंचारिणोक्षाश्वान्दोषदर्शनकशाभिघाततः ॥ स्वैरंसन्निवर्त्यस्वांतरश्मिभिर्धीराव
ध्नंतियत्रतत्त्वमसितत्त्वं ॥ ५० ॥ व्यावृत्तजाग्रदादिष्वनुस्यूतंतेभ्योन्यदिवपुष्पेभ्यइवसूत्रं ॥ इंद्रियप
दौपाधिकत्रयपृथक्त्वेनविदंतिसूरयस्तत्त्वमसितत्त्वं ॥ ५१ ॥ पुरुषएवेदमित्यादिवेदेषुसर्वकारणत
यायस्य ॥ सार्वात्म्यंहाटकस्येवमुकुटादितादात्म्यंसरसमाम्नायतेतत्त्वमसितत्त्वं ॥ ५२ ॥

त्त्वंत्वमसिस्पष्टंचेदंजनकयाज्ञवल्क्यादिसंवादेनश्रुत्याप्रतिपादितं ॥ ५१ ॥ किंचपुरुषएवेदंसर्वंयद्भूतंयच्चभव्यंसर्वंखल्विदंब्रह्मतज्जलानिस
देवसौम्येदमेकमेवाद्वितीयमैतदात्म्यमिदंसर्वंयथासौम्यैकेनलोहमणिनासर्वंलोहमयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयंलोहमित्येवसत्य
मित्यादिवेदेषुसर्वकारणतयासुवर्णस्ययथाकटकमुकुटादितादात्म्यंतथायस्यसार्वात्म्यंसरसंयथास्यात्तथाऽऽम्नायते उपक्रमोपसंहारावभ्या
सोऽपूर्वताफलं अर्थवादोपपत्तिश्चलिंगान्येतानिषट्क्रमादित्युक्तषड्विधतात्पर्यलिंगैःस्वारस्येनोपदिश्यते तत्तत्त्वंत्वमसि ॥ ५२ ॥

योसौरविमंडलेविभातिसोऽहमस्मीत्येवंव्यतिहारेणवेदवादिनः प्रयत्नतोयत्तत्त्व
किंच यश्चाहमस्मिन्शरीरेविभामिसोऽसौरविमंडलस्थोऽस्ति असौसआदित्योएषयएतस्मिन्मंडलेपुरुषोयश्चायंदक्षिणेक्षन्पुरुषस्तावेतावन्योन्यस्मि
मध्यापयंतितत्त्वंत्वमसि तथाचश्रुतिः तद्यत्तत्सत्यं हितमेध्याशनादिधर्मैःश्रद्धयाऽनुष्ठितैःविद्ययोपासनयाचयुक्तैरत्यंतनिर्मलानी
न्प्रतिष्ठितावित्याद्या ॥ ५२ ॥ किंच वेदानुवचनसद्दानयज्ञतपोहितमेध्याशनादिधर्मैः
द्रियाणियेषांतेब्राह्मणायद्ब्रह्मविविदिषंतिवेदितुमिच्छंति तत्त्वंत्वमसि तथाचश्रुतिः तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसा
नाशकेनयद्विद्ययोपनिषदाकरोतितद्वीर्यवत्तरंभवति दानादेःतत्त्वंतुभगवतोक्तं सात्विकत्ववेदानुवचनादेःप्रज्वलितार्धशिरस्कस्यजलराशिप्रवे

यश्चाहमत्रवर्ष्मणिभामिसोसौयोसौविभातिरविमंडलेसोहमिति ॥ वेदवेदिनोव्यतिहारतोयदध्यापयंतिय
ततस्तत्त्वमसितत्त्वं ॥ ५३ ॥ वेदानुवचनसद्दानमुखधर्मैःश्रद्धयानुष्ठितैर्विद्ययायुक्तैः ॥ विविदिषंत्यत्यंत
विमलस्वांताब्राह्मणायद्ब्रह्मतत्त्वमसितत्त्वं ॥ ५४ ॥ शमदमोपरमादिसाधनैर्धीराःस्वात्मनात्मनियदन्विष्य
कृतकृत्याः ॥ अधिगतामितसच्चिदानंदरूपानपुनरिहखिद्यंतितत्त्वमसितत्त्वं ॥ ५५ ॥

यद्वाऽश्वेनजिगमिषतीत्यत्रगमनंप्रत्य
शेच्छावदुत्कटेच्छाप्रतिकरणत्वं नतुसामान्येच्छांप्रतिअजागलस्तनायमानायास्तस्याःपूर्वमेवासिद्धत्वात्
श्वस्येवज्ञानंप्रत्येवकरणत्वमस्तु ॥ ५४ ॥ किंच शमदमोपरमक्षांतिसमाधिश्रद्धालक्षणैःसाधनैःस्वात्मस्वरूपेणात्मनिबुद्धौयदन्विष्यसाक्षात्कृतं
सत्यंज्ञानमनंतंब्रह्मविज्ञानमानंदंब्रह्मेत्यादिश्रुतिबोधितमनंतादिस्वरूपंयैस्तेकृतकृत्याःसंतःपुनरिहसंसारेजन्ममरणादिलक्षणंखेदंनाप्नुवंति त
त्त्वंत्वमसि तथाचश्रुतिः शांतोदांतउपरतस्तितिक्षुःसमाहितआत्मन्येवात्मानंपश्येदितिश्रद्धान्वितोभूत्वेतिचयंद्वताःशिष्याणांपृथक्पृथमुक्त
यइतिबोध्यं ॥ ५५ ॥

एवमविगीतमानंदितंवर्णितात्मवस्तुश्रुत्वा अर्थोविषयः.अर्थोविषयधनकारणवस्तुष्विइतिकोशः निर्ज्ञातंकर्तव्यंयेनसनृपतिःपूरिताआशायेषां तानेतान्शिष्यान्विससर्ज अर्थाद्वितीकेऽर्धेयद्गदितंलक्षणंतत्स्यात् यद्युभयोरपिदलयोरुपगीतिंतांमुनिर्ब्रूते ॥ ५६ ॥ सभायांतैःपद्मपादा

अविगीतमेवंनरपतिराकर्ण्यवर्णितात्मार्थं॥ विससर्जपूरिताशानेतान्निर्ज्ञातकर्तव्यः ॥५६॥ उद्बो धितःसदसितैरवलंब्यमूर्छांनिर्गत्यराजतनुतोनिजमाविवेश॰॥ गात्रंपुरोदितनयेनसदेशिकेंद्रःसंज्ञामवाप्यचपुरेवसमुत्थितोभूत् ॥५७॥ तदनुकुहरमेत्यपूर्वदृष्टंनरपतिभृत्यविसृष्टपावकेन॥ निज वपुरवलोक्यदह्यमानंझटितिसयोगधुरंधरोविवेश ॥ ५८ ॥

दिभिरुद्बोधितोमुर्छामवलंब्यपूर्वोक्तन्यायेनराजशरीरान्निर्गत्यनिजशरीरमाविवेश सदेशिकेंद्रःसंज्ञांचेतनामवाप्यचपुनरुत्थितोऽभूत् व॰ ॥ ॥ ५७ ॥ ननुराजभृत्यविसृष्टाग्निनादह्यमानंशरीरंकथंविवेशेत्याशंक्याह तस्मात्राजतनुतोनिर्गमनात्पश्चात्पूर्वदृष्टंगुहाछिद्रमेत्यनरपतिभृत्य विसृष्टपावकेनदह्यमानंनिजशरीरमवलोक्ययतोयोगधुरंधरोऽतोझटितिविवेश पुष्पिताग्रा ॥५८॥

एवमपिदहनंकथंशमितवानित्याकांक्षायामाह सपदितत्क्षणेआत्मविद्यधानःश्रीशंकराचार्यःदहनस्यशांतयेमहांतंशरणेसाधुंनरसिंहरूपम
धोक्षजमधोऽक्षिजन्यंज्ञानंयस्मात्तंविष्णुंअधिकंकलाभिर्लसंतिपदानियासुताभिःस्तुतिभिःशीघ्रमतोषयत् तथाहि श्रीमत्पयोनिधिनिकेतनच
क्रपाणेभोगींद्रभोगमणिरंजितपुण्यमूर्ते योगीशशाश्वतशरण्यभवाब्धिपोतलक्ष्मीनृसिंहममदेहिकरावलंबं १ ब्रह्मेंद्ररुद्रमरुदर्ककिरीट
कोटिसंघट्टितांघ्रिकमलामलकांतिकांत लक्ष्मीलसत्कुचसरोरुहराजहंसल० २ संसारघोरगहनेचरतोमुरारेमारोग्रभीकरमृगप्रवरार्दितस्य
आर्तस्यमत्सरनिदाघनिपीडितस्यल० ३ संसारकूपमतिघोरनिदाघमूलंसंप्राप्यदुःखशतसर्पसमाकुलस्य दीनस्यदेवकृपणापदमागतस्यल०

सपदिदहनशांतयेमहांतंनरमृगरूपमधोक्षजंशरण्यं ॥ स्तुतिभि
रधिकलालसत्पदाभिस्त्वरितमतोषयदात्मविद्यधानः ॥ ५९ ॥

४ संसारसागरविशालकरालकालनक्रग्रहग्रसजनिग्रहविग्रहस्य व्यग्रस्यरागरसनोर्मिनिपीडितस्यल० ५ संसारवृक्षमघबीजमनंतक
र्मशाखाशतंकरणपत्रमनंगपुष्पं आरुह्यदुःखफलितंपततोदयालोल० ६ संसारसर्पघनवक्त्रभयोग्रतीव्रदंष्ट्राकरालविषदग्धविनष्टमूर्तेः
नागारिवाहनसुधाब्धिनिवासशौरेल० ७ संसारदावदहनातुरभीकरोरुज्वालावलीभिरतिदग्धतनूरुहस्य त्वत्पादपद्मसरसीशरणागतस्य
ल०८ संसारजालपतितस्यजगन्निवाससर्वेंद्रियार्थबडिशार्धझषोपमस्य प्रोत्खंडितप्रचुरतालुकमस्तकस्यल० ९ संसारभीकरकरीस
कलाभिघातनिष्पिष्टमर्मवपुषःसकलार्तिनाश प्राणप्रयाणभवभीतिसमाकुलस्यल० १० अंधस्यमेहृतविवेकमहाधनस्यचौरैःप्रभोब
लिभिरिंद्रियनामधेयैः मोहांधकूपकुहरेविनिपातितस्यल० ११ लक्ष्मीपतेकमलनाभसुरेशविष्णोवैकुंठकृष्णमधुसूदनपुष्कराक्ष ब्रह्मण्य
केशवजनार्दनवासुदेवदेवेशदेहिकृपणस्यकरावलंबमिति १२ ॥ ५९ ॥

ततश्चनरहरिकृपयाप्रबलतरेहुताशनेप्रकर्षेणशांतेसतितस्मिन्गुहायांवाप्रविष्टःसश्रीशंकरोगिरींद्रकंदरामध्यान्निरगमत् विधुंतुदतिहिनस्तीति
विधुंतुदोराहुस्तस्यमुखलक्षणाद्बिलाच्छशीव ॥ ६० ॥ ततःपश्चाद्विरहादतिवर्धमानसौहार्दैःशिष्यैःसनंदनाद्यैरावृतःसनकइवशमधनाधिपोमं
डनस्यगेहंगंतुमिच्छुराजनिसम्यगभवत् ॥ ६१ ॥ तदनुगगनमार्गेणपूर्वदृष्टंमंडनगेहमेत्यगलितक्रियाभिमानंयतोविषयलक्षणविषान्निवृत्ताभि







नरहरिकृपयाततःप्रशांतेप्रबलतरेसहुताशनेप्रविष्टः॥ निरगमदचलेंद्रकंदरांताद्विधुरिववक्त्रबिला
द्विधुंतुदस्य ॥ ६० ॥ तदनुशमधनाधिपोविनेयैश्चिरविरहादतिवर्धमानहार्दैः॥ सनकइववृतःसनंद
नाद्यैर्जिगमिषुराजनिमंडनस्यगेहं ॥ ६१ ॥ तदनुसदनमेत्यपूर्वदृष्टंगगनपथाद्गलितक्रियाभिमा
नं॥ विषयविपनिवृत्ततर्षमुच्चैरतनुतमंडनमिश्रमक्षिपात्रं॥ ६२ ॥ तंसमीक्ष्यनभसश्च्युतंसचप्रांज
लिःप्रणतपूर्वविग्रहः॥अर्हणाभिरभिपूज्यतस्थिवानीक्षणैरनिमिषैःपिबन्निव॥६३॥ सविश्वरूपोव्र
तसत्यवादीपपातपादांबुजयोर्यतीशः॥ गृहंशरीरंममयच्चसर्वंतवेतिवादीमुदितोमहात्मा॥ ६४॥

लाषंमंडनमिश्रमुच्चैरक्षिपात्रमकृत ॥६२॥ आकाशादवतीर्णंतंश्रीशंकरंसम्यक्परप्रेम्णादृष्ट्वासचमंडनःप्रांजलिःपुनश्चप्रकर्षेणनम्रीकृतःपूर्व
विग्रहःशिरोभागोयेनसयोग्याभिःपूजाभिरभिपूज्यानिमिषैरीक्षणैःपिबन्निवतस्थिवान् रथोद्धता॥६३॥गृहंशरीरंयच्चान्यन्मदीयंतत्सर्वंतवेति
वादीकिंभयेनेत्याह मुदितोयतोमहात्माऽक्षुद्रस्वभावःसविश्वरूपोयतीनीष्टइतियतीट्तस्यपदकमलयोःपपात वर्ततिहर्षे उपेंद्रवज्रा॥६४॥

एवंमदनकृतंसत्कारमुपवर्ण्यशारदावाक्यमुदाहर्तुमाह अतिप्रियेणपत्याप्रथमंपूजितंप्राप्तासनंबुधैःसहसमीपेस्थितंमुनिंप्रश्रयेणप्रेम्णाप्रणतमूर्तिरभिकथनेऽतिकुशलासरस्वतीअब्रवीत् रथो० ॥६५॥ तदुदाहरति ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिरित्यादिमंत्रप्रतिपादितःसदाशिवोहेब्रह्मन्साक्षाद्भवानित्यर्थः ॥ ६६ ॥ ननुकामशास्त्रोक्तकलासुत्वामपरिजित्वातद्विज्ञानार्थंयत्नंकृतवंतंमांकथमेवंवदसीतिचेत्तत्राह सदसिमामविजित्यतथैवयत्कामशास्त्रेयास्तत्कलाःकामकलास्तास्वपितत्कलावबोधार्थंयत्नमाचरितवानसि तन्मनुष्यचरित्रानुकर

प्रेयसाप्रथममर्चितंमुनिंप्राप्तविष्टरमुपस्थितंबुधैः॥ प्रश्रयावनतमूर्तिरब्रवीच्छारदाभिवदनेविशारदा॥ ६५॥ ईशानःसर्वविद्यानामीश्वरःसर्वदेहिनां॥ ब्रह्मणोधिपतिर्ब्रह्मन्भवान्साक्षात्सदाशिवः॥ ॥ ६६॥ सदसिमामविजित्यतथैवयन्मदनशासनकामकलास्वपि॥ तदवबोधकृतेकृतिमाचरस्तदिहमर्त्यचरित्रविडंबनं ॥ ६७ ॥ त्वयायदावांविजितौपरात्मन्नतत्त्रपामावहतीज्यसर्वथा ॥ कृताभिभूतिर्नमयूखशालिनानिशाकरादेरपकीर्तयेखलु॥ ६८ ॥

णमात्रमित्यर्थः द्रुत० ॥ ६७ ॥ स्वपराजयस्त्वावयोर्लज्जाहेतुर्नभवतीत्याह त्वयायदावांविजितौतत्सर्वथापिलज्जांनावहति ननुब्रह्मणासहिताया:सरस्वत्यास्तत्त्रपावहंकथंनभवतीतिचेन्नब्रह्मादिभिरपिस्तुत्यास्त्वत्तःपराजयोनतत्करइत्याह हेईज्य तत्त्वंकुतइत्यतआह परात्मन्निति तत्रदृष्टांतमाह यथासहस्रभानुनादिवाकरेणकृताभिभूतिरभिभवश्चंद्रादेरपकीर्तयेनभवतीतिप्रसिद्धंतद्वदित्यर्थः उपें० ॥ ६८ ॥

एवंस्तुत्वाब्रह्मलोकगमनायानुज्ञांप्रार्थयते आदौयत्स्वच्छंस्वीयंधामतदवश्यंप्रयास्यामितस्मात्हेऽर्हन्मामनुज्ञातुंयोग्योसि मांडनधामव्याव
त्त्यर्थमादावित्युक्तं इत्यामंत्र्यांतर्हितांदेवींयोगशक्त्यापश्यन्भाष्यकारोजगाद शालि० ॥ ६९ ॥ तदाह हेदेवित्वांजानामि कथंभूतामित्यत
आह देवस्यधातुर्हिरण्यगर्भस्यभार्यांतत्रापीष्टामतिप्रियांपुनश्चाष्टमूर्तेःशिवस्यसगर्भ्यांसहोदरांवाचामाद्यांदेवतांचिन्मात्रामपिविश्वरक्षणार्थं
 स्वीकृतलक्ष्म्यादिरूपामेवंभूतांत्वांजानामीत्यर्थः ॥ ७० ॥ एवंस्तुत्वाऽभिमुखीकृत्यप्रार्थ्यमाह तस्मादृष्यश्रृंगादिकेपुक्षेत्रेषुअस्मन्निर्मितानि

आदावात्म्यंधामकामंप्रयास्याम्यर्हस्यच्छंमामनुज्ञातुमर्हन् ॥ इत्यामंत्र्यांतर्हितांयोगशक्त्यापश्यन्देवींभा
ष्यकर्ताविभाषे ॥ ६९ ॥ जानामित्वांदेविदेवस्यधातुर्भार्यामिष्टामष्टमूर्तेःसगर्भ्यां ॥ वाचामाद्यांदेवतांविश्व
गुप्त्यैचिन्मात्रामप्यात्तलक्ष्म्यादिरूपां ॥ ७० ॥ तस्मादस्मत्कल्पितेष्वर्च्यमानास्थानेपुत्वंशारदाख्यादिशंती ॥ इ
ष्टानर्थानृष्यश्रृंगादिकेषुक्षेत्रेष्वास्वप्राप्तसत्संनिधाना ॥ ७१ ॥ तथेतिसंश्रुत्यसरस्वतीसाप्रायात्प्रियंधामपिता
महस्य ॥ अदर्शनंतत्रसमीक्ष्यसर्वेआकस्मिकंविस्मयमीयुरुच्चैः ॥ ७२ ॥ तस्यायतीशाजितभर्तृयतित्वजातवैध
व्यसंभवशुचाभुवमस्पृशंत्याः ॥ अंतर्धिमीक्ष्यमुदिताजनिमंडनोपितत्साधुवीक्ष्यमुमुदेयतिशेखरश्च ॥ ७३ ॥

यानित्वस्थानानितेषुपूज्यमानाशारदाख्यात्वमिष्टानर्थान्दिशंती पुनश्चप्राप्तसतांसन्निधानंयथास्यात्तथाभूताआस्व ॥ ७१ ॥ तथास्त्वि
तिप्रतिज्ञायसासरस्वतीपितामहस्यप्रियंधामप्रायात् तत्रसंसदितस्याअदर्शनंसमीक्ष्यात्यंतमाकस्मिकंविस्मयमापुः ॥ ७२ ॥ एवंसदस्यानांम
नोवृत्तंप्रदर्श्यमंडनयतीशयोस्तदाह यतीशेनजितस्यभर्तुर्यतित्वाज्जाताद्वैधव्यात्संभवेनशोकेनभुवमस्पृशंत्यास्तस्याःस्वभार्यायाअंतर्धानमी
क्ष्यमंडनोपिमुदितोऽभूत् तत्साधुसमीचीनंवीक्ष्ययतिशेखरोपिमुदितोऽभूत् व० ॥ ७३ ॥

अथशारदांतर्धानाद्यनंतरंमंडनमिश्रोपि विधिपूर्वंतद्वैकेप्राजापत्यामेवेष्टिंकुर्वंति प्राजापत्यांनिरूप्येष्टिंसार्ववेदस
ततः किंवृत्तमित्यपेक्षायामाह अथशारदांतर्धानाद्यनंतरंमंडनमिश्रोपि विधिपूर्वंतद्वैकेप्राजापत्यामेवेष्टिंकुर्वंति आत्मनिआरोपितःशोचिष्केशोऽग्निहोत्राग्निर्ये
दक्षिणां आत्मन्यग्नीन्समारोप्यब्राह्मणःप्रव्रजेद्गृहादित्यादिश्रुतिस्मृत्युक्तमार्गेणसर्वंवित्तंयागेदत्वाआत्मनिआरोपितःशोचिष्केशोऽग्निहोत्राग्निर्ये
नास्तमितास्तंगताआशायस्यसशंकरंभेजेसेवितवान् उ० ॥ ७४ ॥ संन्यासप्रतिपादकगृह्यसूक्तविधिनाऽस्यविदुषःसर्वाणिकर्माणिअञ्जा
यअंजसासम्यक्कुर्वञ्छ्रीशंकरगुरुःसर्वस्याध्यात्मिकादिरूपस्यसंसृतिदुःखस्यहानेःकर्णेजपंसूचकं कर्णेजपःसूचकइत्यमरः किमपितत्त्वमसी

मंडनमिश्रोप्यथविधिपूर्वंदत्वावित्तंयागेसर्वं ॥ आत्मारोपितशोचिष्केशोभेजेशंकरमस्तमिताशः ॥ ७४ ॥
संन्यासगृह्यविधिनासकलानिकर्माण्यञ्जायशंकरगुरुर्विदुषोस्यकुर्वन् ॥ कर्णेजगौकिमपितत्त्वमसीतिवा
क्यंकर्णेजपन्निखिलसंसृतिदुःखहानेः ॥ ७५ ॥ संन्यासपूर्वंविधिवद्द्विभिक्षेपश्चादुपादिक्षदथात्मतत्त्वं ॥ आ
चार्यवर्यःश्रुतिमस्तकस्थंतदादिवाक्यंपुनरावभाषे ॥ ७६ ॥ त्वन्नासिदेहोघटवद्धयनात्मारूपादिमत्त्वादिहजा
तिमत्त्वात् ॥ ममेतिभेदप्रथनादभेदसंप्रत्ययंविद्धिविपर्ययोत्थं ॥ ७७ ॥

पश्चादाचार्यवर्यःश्रीशंकरःश्रुतिमस्तकस्थमात्मत
तिवाक्यंकर्णेजगौ वसंतति० ॥ ७५ ॥ मंडनोपिसंन्यासपूर्वकंविधिवद्दीक्षांयाचितवान् पश्चादाचार्यवर्यःश्रीशंकरःश्रुतिमस्तकस्थमात्मत
त्त्वमुपदिष्टवान् कथमितितत्राह तत्त्वमसिवाक्यंपुनरावभाषे अर्थसहितमुक्तवानित्यर्थः उ० ॥ ७६ ॥ तत्रादौत्वंपदार्थमाह इहदेहादौत्वंदे
हंनासियस्मात्सघटवदनात्मा तत्रहेतवोरूपादिमत्त्वान्मनुष्यत्वादिजातिमत्त्वात् ममेदंशरीरमितिभेदप्रथनाच्चात्मातु अशब्दमस्पर्शमरूपमव्य
यंअगोत्रमित्यादिश्रुत्युक्तोहमितिप्रत्ययगोचरः ननुमनुष्योहंस्थूलोहंकृशोहमित्यभेदसंप्रत्ययाद्देहआत्माकुतोनस्यादितितत्राह अभेदसंप्रत्ययं
विपर्ययादन्योन्यतादात्म्याध्यासादुत्थितंविद्धि उ० ॥ ७७ ॥

किंचलोप्योघटादिःस्वव्यतिरिक्तोदंडादिलोपकोयस्यतथाभूतोदृष्टः शरीरंचतादृशं स्वातिरिक्तलोपकमेवप्रसिद्धं तथाचलोप्यंयथास्वातिरिक्त
लोपकंतथादृश्यमपिस्वातिरिक्तद्रष्टृकंततश्चविमतंदृश्यंस्वातिरिक्तद्रष्टृकंदृश्यत्वाद्घटवद्यद्यत्कर्मतत्तत्स्वातिरिक्तकर्तृकं यथालोप्योघटादिःस्वा
तिरिक्तलोपकइत्याशयेनाह दृश्यत्वहेतोरिति एतस्माच्छरीराद्यतिरेकसाधनेस्वातिरिक्तद्रष्टृकत्वसाधकेतुदृश्यत्वहेतोःशरीरेआत्मत्वावगतिःके
॥ ११ ॥ नापिप्रकारेणनघटतेइत्यर्थः ॥७८॥ एवंदेहादात्मानंविविच्येंद्रियेभ्यस्तंविवेचयति नापींद्रियाण्यात्मातेषांसाधनत्वात्दात्रादिवत्तस्मादमीषु
इंद्रियेषुतवात्मभावःकेनापिप्रकारेणनोपपद्यते तेषामनात्मत्वेऽन्यदपिहेतुद्वयमाह चक्षुरादेर्घटादिवदनात्मत्वमेवचक्षुर्मदीयमित्यादिभेदावगतेः

लोप्योहिलोप्यव्यतिरिक्तलोपकोदृष्टोघटादिःखलुतादृशीतनुः ॥ दृश्यत्वहेतोर्व्यतिरेकसाधनेत्वत्तःशरीरेकथ
मात्मतागतिः ॥ ७८ ॥ नापींद्रियाणिखलुतानिचसाधनानिदात्रादिवत्कथममीषुतवात्मभावः ॥ चक्षुर्मदी
यमितिभेदगतेरमीषांस्वप्नादिभावविरहाच्चघटादिसाम्यं ॥ ७९ ॥ यद्यात्मतैषांसमुदायगास्यादेकव्ययेना
पिभवेन्नतद्धीः ॥ प्रत्येकमात्मत्वमुदीर्यतेचेन्नश्येच्छरीरंबहुनायकत्वात् ॥ ८० ॥ आत्मत्वमन्यतमगंयदिच
क्षुरादेश्चक्षुर्विनाशसमयेस्मरणंनहिस्यात् ॥ एकाश्रयत्वनियमात्स्मरणानुभूत्योर्दृष्टश्रुतार्थविषयावगति
श्चनस्यात् ॥ ८१ ॥

स्वप्नसुषुप्तिभावेतत्त्वेऽमीषांविरहाच्चपश्यामिशृणोमीत्यादिप्रत्ययस्तुपूर्ववद्द्रष्टव्यः व० ॥७९॥ इंद्रियसमुदायआत्माउतप्रत्येकमितिविकल्प्या
द्यंप्रत्याह यद्येषामिंद्रियाणांसमुदायगाआत्मतास्यात्तर्ह्येकस्येंद्रियस्यनाशेसमुदायनाशादात्मताबुद्धिर्नस्यात् द्वितीयमुत्थाप्यनिराचष्टे प्रत्येक
मात्मत्वमुच्यतेचेत्तर्हिबहुनायकत्वेनविरुद्धादिक्रियत्वावश्यकत्वाच्छरीरमेवनश्येत् इं० ॥ ८० ॥ किंचयदिचक्षुरादेरन्यतमगोचरमात्मत्वंस्या
त्तर्हिचक्षुर्विनाशसमयेस्मरणंनैवस्यात्तत्रहेतुः स्मरणानुभवयोरेकात्माश्रयत्वात् किंचयोहंदृष्टवान्सोहंशृणोमीतिदृष्टश्रुतार्थविषयप्रत्यभिज्ञा
चनस्यात्तस्मादिंद्रियाण्यप्यात्मानभवंतीत्यर्थः व० ॥ ८१ ॥

मनोप्यात्मानभवति करणत्वहेतोर्मदीयंमनोऽन्यतोगतमभूदितिभेदप्रतीतेः सुषुप्तौव्यभिचारितायाश्चचिन्मन
नन्वस्तुतर्हिमनएवात्मेतितत्राह
स्फुटत्वमावेदयति
सोर्वैलक्षण्यं उ० ॥ ८२ ॥ उक्तंन्यायंबुद्धावतिदिशति अनयैवदिशानिराकृतत्वात्बुद्धेरप्यात्मतास्पष्टंयथातथानास्ति
अस्तुतर्हिअहंप्रत्यय
मदीयाबुद्धिरन्यतोऽभूदितिभेदावगतेःसुषुप्तावनन्वयाच्चकरणादाविवबुद्धिमप्यात्मत्वेनमैवांगीकुरु वियो० ॥ ८३ ॥
तर्हिसुषुप्तावपिलयरहितः
गोचरोहंकारएवात्मेतितत्राह अहंकृतिरहंकारोप्यात्मानभवति तत्रहेतुश्चरमेऽस्त्येकृतिरितिधातुपदस्यप्रयोगात्

मनोपिनात्माकरणत्वहेतोर्मनोमदीयंगतमन्यतोभूत् ॥ इतिप्रतीतेर्व्यभिचारितायाःसुप्तौचतच्चिन्मनसोर्वि
विक्तता ॥ ८२ ॥ अनयैवदिशानिराकृतानचबुद्धेरपिचात्मतास्फुटं ॥ अपिभेदगतेरनन्वयात्करणादाविव
बुद्धिमुझ्झभो ॥ ८३ ॥ नाहंकृतिश्चरमधातुपदप्रयोगात्प्राणामदीयाइतिलोकवादात् ॥ प्राणोपिनात्माभवि
तुंप्रगल्भःसर्वोपसंहारिणिसन्सुषुप्तौ ॥ ८४ ॥ एवंशरीराद्यविविक्तआत्मात्वंशब्दवाच्योभिहितोत्रवाक्ये ॥
तदोदितंब्रह्मजगन्निदानंतथातथैक्यंपदयुग्मबोध्यं ॥ ८५ ॥

प्राणएवात्माऽस्त्वितितत्राह सर्वोपसंहारिणिसुषुप्तौसन्नपिप्रगल्भःप्राणआत्मानभवति तत्रहेतुर्मदीयाःप्राणाइतिलोकवादात् व० ॥ ८४ ॥
उपसंहरति एवंभूतोदेहादिविलक्षणआत्मातदविविक्तस्त्वंपदवाच्यस्तत्त्वमसिवाक्येऽभिहितस्त्वंपदार्थंप्रदर्श्यतत्पदार्थमाह तथात्रवाक्येतत्पदे
नजगत्कारणंब्रह्मोक्तं अखंडार्थमाह तथाऽत्रवाक्येपदद्वयबोध्यमैक्यमुदितं उ० ॥ ८५ ॥

तत्त्वंपदार्थयोरैक्यंवाक्यार्थंश्रुत्वाशिष्यउवाच सर्वज्ञसंमूढपदाभिषिक्तयोस्तत्त्वंपदार्थयोस्त्वदुक्तमैक्यंतत्त्वमसिवाक्यंकथंप्रतिपादयेत् हिय
तत्त्वंपदार्थयोरैक्यंवाक्यार्थंश्रुत्वाशिष्यउवाच सर्वज्ञसंमूढपदाभिषिक्तयोस्तत्त्वंपदार्थयोरैक्यंनसंभवतिविरुद्धधर्मवत्त्वात्तमः
स्मात्तमःप्रकाशयोरेकतापूर्वंनैवदृष्टानचाधुनादृश्यते तथाचायंप्रयोगस्तत्त्वमसिवाक्यस्थतत्त्वंपदार्थयोरैक्यंनसंभवतिविरुद्धधर्मवत्त्वात्तमः
प्रकाशवदिति ननुहेतुरस्तुसाध्यंमास्तु नचतमःप्रकाशयोरप्येकतापत्तिस्तयोर्भावाभावरूपतयातदनुपपत्तेस्तस्माद्भावाभावरूपोपाधिसत्त्वा
दप्रयोजकत्वमस्येतिचेन्न तमसोपिभावरूपत्वात्तमोऽभावरूपमितिवादीप्रष्टव्यः किमालोकाभावमात्रंतमःकिंवारूपदर्शनाभावमात्रं आद्ये
पिकिमेकैकंतमएकैकालोकाभावःकिंवासर्वालोकाभावः आद्येपिकिंप्रागभावउतप्रध्वंसाभावआहोस्विदन्योन्याभावः त्रितयमपिनसंभव
तिसवितृकिरणसंततेदेशेप्रदीपालोकजन्मविनाशयोःसतोस्त्रयाणांसत्वेपितमोबुद्ध्यदर्शनात् ननुप्रागभावाद्यवस्थासुतमोबुद्ध्यभावोविरोध्या
लोकनिबंधनइतिचेत्तथापिविरोध्यभावसहितप्रागभावादेस्तमोबुद्ध्यलंबनत्वस्यावश्यकवक्तव्यत्वेनविरोध्यभावगिराप्रागभावोक्तौप्रध्वंसेऽनु

**कथंतदैक्यंप्रतिपादयेद्वचःसर्वज्ञसंमूढपदाभिषिक्तयोः॥**
**नह्येकतासंतमसप्रकाशयोःसंदृष्टपूर्वानचदृश्यतेऽधुना॥ ८६॥**

पपत्तिस्तदुक्तौप्रागभावेऽन्योन्याभावोक्तावालोकसत्वेपितदभावस्यभावात्तमोबुद्धिःस्यात् द्वितीयेपिकिमस्यसर्वेषामालोकानांसन्निधानंनि
वर्तकमुतैकैकस्य आद्येसर्वालोकमंतरेणतन्निवृत्तिर्नस्यात् द्वितीयेप्येकैकस्यसर्वालोकाभावनिवर्तकत्वाभावात्तमोबुद्ध्यापत्तिः अंत्येपिकिमे
कैकस्यरूपस्यदर्शनाभावःउतसर्वस्य आद्येपिकिंरूपदर्शनमात्राभावःउतयत्रतमोबुद्धिस्तत्रत्यरूपदर्शनाभवः नाद्यः बहुलांधकारसंवृतापव
रकांतरवस्थितस्यापिबहीरूपदर्शनेनसहापवरकांतस्तमोदर्शनात् नद्वितीयः प्रागभावादिविकल्पासहत्वात् ननुरूपवतोद्रव्यस्यस्पर्शवत्त्वनि
यमात्तद्रहितंतमःकथंरूपवद्द्रव्यमवगम्यते तथाचप्रयोगस्तमोनीरूपंस्पर्शविधुरत्वादाकाशवदितिचेन्न वायोरन्यत्रस्पर्शवद्द्रव्यस्यरूपव
त्त्वनियमेऽपिरूपरहितस्यस्पर्शवतोवायोरभ्युपगमात्तथाचयत्स्पर्शवत्तद्रूपवद्यथाघटादिरितिव्याप्तेर्यथावायौभंगस्तथायद्रूपवत्तत्स्पर्शवदिति
तमालमालाश्यामलंतमइत्युपलंभादितिसंक्षेपः॥ ८६ ॥

एवमुक्तोगुरुराह सत्यमियंविरोधावगतिस्तुवाच्यगास्ति एवमर्थमंगीकृत्यैक्यंकथंप्रतिपादयेदितियदुक्तंतत्राह सोयंपुमानितिवाक्यवदस्मिंनुवाक्येविरोधहानेरविरोधिवाच्यमादायपदद्वयंतयोर्लक्ष्यैक्यबोधनपरमेवंसतिनकोपिविरोधः अयमर्थः यथासोऽयंपुमानितिवाक्येतच्छब्दार्थस्यतत्कालविशिष्टस्यपुंसःइदंशब्दार्थस्यैतत्कालविशिष्टस्यपुंसश्चैक्यासंभवेपिसोयमितिपदद्वयंजहदजहल्लक्षणयाविरुद्धंतत्कालैतत्कालविशिष्टत्वांशंविहायपुरुषमविरोधिवाच्यांशमादायतल्लक्ष्यैक्यबोधनपरंतद्वत्तत्त्वमसिवाक्यंसर्वज्ञत्वसंमूढत्वरूपस्यविरोधिनोंशस्यहानिंकृत्वाऽविरोधिवाच्यचिदंशमादायपदद्वयंतल्लक्ष्यैक्यबोधनपरमिति व० ॥ ८७ ॥ यस्मादेवंतस्माच्चिरार्जितांदेहादिगताषहंबुद्धिंपरित्यज कयाम

सत्यंविरोधगतिरस्तितुवाच्यगेयंसोयंपुमानितिवदत्रविरोधहानेः॥ आदायवाच्यमविरोधिपदद्वयंतल्लक्ष्यैकबोधनपरंननुकोविरोधः ॥ ८७ ॥ जहीहिदेहादिगतामहंधियंचिरार्जितांकर्मशठैःसुदुस्त्यजां ॥ विवेकबुद्ध्यापरमेवसंततंध्येयात्मभावेनयतोविमुक्तता॥८८॥साधारणेवपुषिकाकस्तृगालवह्निमात्रादिकस्यममतांत्यजदुःखहेतुं॥ तद्वज्जहीहिबहिरर्थगतांचविद्वन्चित्तंदधानपरमात्मनिनिर्विशंकं॥ ८९ ॥

त्येतितत्राहोक्तविवेकबुध्यायतःकर्मशठैरतिशयेनदुस्त्यजां तर्ह्यहंमतिःक्वविधेयेतितत्राह संततंपरमात्मानमेवात्मभावेनचिंतय किंततइति चेत्तत्राह यतःपरमेवात्मभावेनचिंतनाद्विमुक्तालभ्यतइत्यर्थः आत्मानंचेद्विजानीयादयमस्मीतिपूरुषः किमिच्छन्कस्यकामायशरीरमनुसंज्वरेदितिश्रुतेः उ० ॥ ८८ ॥ यत्रममताप्ययुक्तातत्राहंतायाःकाकथेत्याशयेनाह काकादेःसाधारणत्वाद्वपुषिदुःखहेतुंममतांत्यज तद्वद्बहिरर्थविषयांचदुःखकारणभूतांतांपरित्यज तदुक्तं यावतःकुरुतेजंतुःसंबंधान्मनसःप्रियान् तावंतएवखन्यंतेहृदयेशोकशंकवइति ममतादुःखहेतुभूतेतित्वंजानासीत्याशयेनाह हेविद्वन्निति कर्तव्यमुपदिशति निर्विशंकंसमस्तशंकाकलंकविनिर्मुक्तंविजातीयप्रत्ययरहितंचित्तंपरमात्मनिस्थापय व० ॥ ८९ ॥

ननुजाग्रत्स्वप्नसंचारिणस्तद्भिन्नत्वात्तद्धर्मकत्वाद्वाकथंपरमात्माभेदेनचिंतनीयत्वमितिचेत्तत्राह यथामहामत्स्यस्तीरात्तीरंसंचरन्तीराद्भिन्न
एवनत्वभिन्नोनापितेनतीरेणलिप्यते एवमाध्यासिकसंबंधेनदेहीआत्माजाग्रदादौसंचरन्तस्माद्भिन्नएवनापिजाग्रदादिरूपधर्मवान्वा तथा
चश्रुतिः तद्यथामहामत्स्यउभेकूलेसंचरतिपूर्वंचापरंचैवमेवायंपुरुषएतानृसंचरतिस्वप्नांतंचबुद्धांतंचेति शालि॰ ॥ १० ॥ तत्रैवानुभूयमानं
॥१२॥ जाग्रदाद्यवस्थात्रयंकस्येतिचेत्तत्राह जाग्रदादिलक्षणमिदमवस्थात्रयंव्यभिचारंगच्छन्बुद्धिसंज्ञकंचित्स्वरूपेत्वय्येवानुगतेकल्पितं तत्रेंद्रिय
जन्यज्ञानावस्थाजाग्रदवस्था इंद्रियाजन्यविषयापरोक्षज्ञानावस्थास्वप्नावस्था अविद्यागोचराऽविद्यावृत्त्यवस्थासुषुप्त्यवस्था अनुवृत्ते

तीरात्तीरंसंचरन्दीर्घमत्स्यस्तीराद्भिन्नोलिप्यतेनापितेन ॥ एवंदेहीसंचरन्जाग्रदादौतस्माद्भिन्नोनापितद्धर्मको
वा ॥ १० ॥ जाग्रत्स्वप्नसुषुप्तिलक्षणमदोवस्थात्रयंचित्तनौत्वय्येवानुगतेमिथोव्यभिचरद्धीसंज्ञमज्ञानतः ॥ कुल्पितं
रज्ज्ववदमंशकेवसुमतिच्छिद्राहिदंडादिवत्तद्ब्रह्मासितुरीयमुज्झितभयंमात्वंपुरेवभ्रमीः ॥ ११ ॥ प्रत्यक्तमंप
रपदंविदुषोंतिकस्थंदूरंतदेवपरिमूढमतेर्जनस्य ॥ अंतर्बहिश्चचितिरस्तिनवेतिकश्चिच्चिन्वन्बहिर्बहिरहोमहि
मात्मशक्तेः ॥ १२ ॥

व्यावृत्तंकल्पितमित्यत्रदृष्टांतमाह रज्जोरिदमंशेऽनुवृत्तेव्यावृत्तंभूमिच्छिद्रसर्पदंडादियथाकल्पितंतद्वत् तस्मादवस्थात्रयपरत्वात्तुरीयंशिवंचतु
र्थमित्युक्तमतएवपरित्यक्तनिखिलभयंब्रह्मासि तस्मात्पूर्ववद्भ्रमंमागाः शार्दू॰ ॥ ११ ॥ एवंभूतंस्वात्मानंजनःकिमितिनावगच्छतीतिनशं
कनीयमात्मशक्तेर्महिम्नोऽनिर्वचनीयत्वादित्याशयेनाह प्रत्यक्तमंप्रातिलोम्येनासज्जडदुःखात्मकाहंकारादिविलक्षणतयासच्चिदानंदात्मत्वेनां ॥१२॥
चतिप्रकाशतइतिप्रत्यगतिशयेनप्रत्यगितिप्रत्यक्तमंपरंपदंविदुषःसमीपस्थंपरिमूढमतेर्जनस्यतदेवदूरमेवंविधंचैतन्यमंतर्बहिरस्तितथापिकश्च
नाशुद्धचित्तोबहिर्बहिश्चिन्वन्नवेत्ति अहोआत्मशक्तेरयंमहिमा व॰ ॥ १२ ॥

अथतत्त्वज्ञानाव्यभिचारिसाधनायवैराग्यायाह यथाजलपानशालायांबहवोमिलंतिक्षणेद्वितीयेभिन्नमार्गाःप्रयांति तथागृहेबहुनामभा
जोभवंतिअंतेमरणानंतरमत्रगृहेकोपिनभवति उ० ॥ १२ ॥ किंचदिवानिशंसुखाययद्यत्क्रियतेततस्ततःकिंचिदपिसुखंनभवति प्रत्युततस्मा
द्वहुदुःखमेवयतःपुण्यरूपंहेतुंविनासुखजन्मनदृश्यतेहेतुश्चजन्मांतरीयहेतोःसन्निधौभवेत् पुण्यःपुण्येनकर्मणेतिश्रुतेः वंशस्थं ॥१४॥ तस्मादे
वंभूतसंसाराद्विमुक्तिमिच्छताश्रुतिवचसाआत्मसाक्षात्कारएवसंपादनीयःसचपरिपक्वमतेःसकृच्छ्रवणेनमंदमतेस्तुगुरुपादाब्जनिषेवणादिनाशै
नैःशनैरित्याशयेनाह परीति वियो० ॥ १५ ॥ शनैशनैरित्यादिविवृणोति प्रणवाभ्यासस्योक्तस्यत्रिकालस्नानादिरूपस्यकर्मणःकरणेन

यथाप्रपायांबहवोमिलंतेक्षणेद्वितीयेवतभिन्नमार्गाः ॥ प्रयांतितद्वद्बहुनामभाजोगृहेभवंत्यत्रनकश्चिदंते ॥
॥१३॥ सुखाययद्यत्क्रियतेदिवानिशंसुखंनकिंचिद्बहुदुःखमेवतत् ॥ विनानहेतुंसुखजन्मदृश्यतेहेतुश्चहेत्वंतरसं
निधौभवेत् ॥ १४ ॥ परिपक्वमतेःसकृच्छ्रुतंजनयेदात्मधियंश्रुतेर्वचः ॥ परिमंदमतेःशनैःशनैर्गुरुपादाब्जनिषेव
णादिना ॥ १५ ॥ प्रणवाभ्यसनोक्तकर्मणोःकरणेनापिगुरोर्निषेवणात् ॥ अपगच्छतिमानसंमलंक्षमतेतत्त्वमु
दीरितंततः ॥ १६ ॥ मनोनुवर्तेतदिवानिशंगुरौगुरुर्हिसाक्षाच्छिवएवतत्त्ववित् ॥ निजानुवृत्त्यापरितोषितोगु
रुर्विनेयवक्त्रंकृपयाहिवीक्षते ॥ १७ ॥

गुरोर्विशेषेणशुश्रूषणाच्चमानसंमलंगच्छति ततश्चकथितंतत्त्वंक्षमतेधारणाययोग्यंभवति अथेदानींयस्यदेवेपराभक्तिर्यथादेवेतथागुरौ तस्यै
तेकथिताह्यर्थाःप्रकाशंतेमहात्मनः गुरुप्रसादात्परमात्मलाभः तद्विद्धिप्रणिपातेनपरिप्रश्नेनसेवयेत्यादिशास्त्रमनुसृत्यगुरुभक्तेस्तत्त्वज्ञानांतरंग
सांधनत्वंबोधयितुमारभते अहर्निशंमनोगुरावनुवर्तेतात्यावश्यकताबोधनायलिङ्प्रयोगः हियस्मात्तत्त्वविद्गुरुःसाक्षाच्छिवएव तदुक्तं गुरुर्ब्र
ह्मागुरुर्विष्णुर्गुरुर्देवोमहेश्वरः गुरुःपितागुरुर्मातागुरुरेवपरःशिवइति ननुशिवस्वरूपगुरोरनुवृत्तिःकिमर्थंकर्तव्येतिचेत्तत्राह हियस्मात्स्वस्यगुरोर
नुवृत्त्यापरितोषितोगुरुःशिष्यमुखंकृपयावीक्षते वंश० ॥ १७ ॥

किंततइतितत्राह सागुरोराज्ञासम्यक्परिपालनीया यतःकल्पवल्लीवस्वेष्टमर्थमवश्यंफलति किमसाध्यमस्याअतःसाआज्ञामोदमानायहर्षं प्राप्यविधातुमिष्टा उ० ॥ ९८ ॥ किंचेष्टदेवादपिगुरुर्गरीयानित्याशयेनाह गुरूपदिष्टानिजदेवताकुप्येच्चेत्तदागुरुःपरिपालयितास्यात् रुष्टेगुरौतुपरिपालयिताकश्चिदपिनास्तितस्माद्गुरौकोपंकदापिनोत्पादयेत् तदुक्तंब्रह्मवैवर्ते शिवेरुष्टेगुरुस्त्रातागुरौरुष्टेनकश्चनेति ॥ ९९ ॥ ननु विहितानुष्ठानात्प्रतिषिद्धवर्जनाच्चेष्टलाभोऽनिष्टनिवृत्तिश्चभविष्यत्यतःकिंगुरुसेवयेत्याशंक्याह यद्यपिप्रतिषिद्धसेवनान्निवृत्तोविहितंभजन्पु 10

॥ १४ ॥

साकल्पवल्लीवनिजेष्टमर्थंफलत्यवश्यंकिमकार्यमस्याः ॥ आज्ञागुरोस्तत्परिपालनीयासामोदमानायविधा तुमिष्टा ॥ ९८ ॥ गुरूपदिष्टानिजदेवताचेत्कुप्येत्तदापालयितागुरुःस्यात् ॥ रुष्टेगुरौपालयितानकश्चिद्गुरौन तस्माज्जनयेतकोपं ॥ ९९ ॥ पुमान्पुमर्थंलभतेपिचोदितंभजन्निवृत्तःप्रतिषिद्धसेवनात् ॥ विधिंनिषेधंच निवेदयत्यसौगुरोरनिष्टच्युतिरिष्टसंभवः ॥ १०० ॥ आराधितंदैवतमिष्टमर्थंददातितस्याधिगमोगुरोःस्या त् ॥ नोचेत्कथंवेदितुमीश्वरोयमतींद्रियंदैवतमिष्टदंनो ॥ १ ॥ तुष्टेगुरौतुष्यतिदेवतागणोरुष्टेगुरौरुष्यतिदेव तागणः ॥ सदात्मभावेनसदात्मदेवताःपश्यन्नसौविश्वमयोहिदेशिकः ॥ २ ॥

॥ १॥

मान्पुमर्थंलभते तथापिविधिनिषेधौनस्वतोविज्ञातुंशक्यौ किंत्वसौगुरुरेवविधिनिषेधंचनिवेदयति तस्माद्गुरोरेवानिष्टच्युतिरिष्टोत्पत्तिश्च वंश० ॥ १०० ॥ नन्वाराधितंदैवतमेवेष्टमर्थंददातीत्याशंक्याह आराधितंदैवतमर्थंददातितथाप्यस्यदैवतस्यप्राप्तिःगुरोरेवभवतिनोचेन्नो ऽस्माकमिष्टदमतींद्रियंदैवतमयमज्ञोवेदितुंविज्ञातुमीश्वरःसमर्थःकथंस्यान्नकेनापिप्रकारेणेत्यर्थः उ० ॥ १ ॥ देवगणस्यगुरुतुष्ट्याद्यनुतुष्ट्या

एवंपुराणगुरुणाश्रीशंकराचार्येणपरमात्मतत्त्वंप्रतिशिक्षितः हेगुरोतवकटाक्षपातेनदूरीकृताज्ञानोहंधन्योस्मीतिभाषमाणस्तस्यगुरोश्चरणयोर्नि पपात व० ॥ ३ ॥ ततःदिगंगनाभिःसमंक्रियमाणसख्यांसर्वदिग्व्याप्तांसुरेश्वराख्यांसमादिश्यतुच्छीकृतंहिरण्यगर्भसौख्यंययातांभाष्यकार स्यमुख्यांशिष्यतांचावाप उ० ॥ ४ ॥ • सुरेश्वरसंज्ञांप्राप्यवासंककृतवानित्याकांक्षायामाह निखिलवेदांतैश्चितयायावत्स्वपदंस्वस्यब्रह्मणो लोकादप्यधिकसौख्यं योनिर्विशंकंविशंकारहितंनिर्विशन् बहुकालंनर्मदांकौतुकदांतांनर्मदांनदीमभितोऽसौनिर्ममानांममतारहितानामिंद्रः

एवंपुराणगुरुणापरमात्मतत्त्वंशिष्टोगुरोश्चरणयोर्निपपाततस्य॥ धन्योस्म्यहंतवगुरोकरुणाकटाक्षपातेन पातितमाइतिभाषमाणः॥ ३॥ ततःसमादिश्यसुरेश्वराख्यांदिगंगनाभिःक्रियमाणसख्यां॥ सच्छिष्यतां भाष्यकृतश्चमुख्यामवापतुच्छीकृतधातृसौख्यां॥ ४॥ निखिलनिगमचूडाचिंतयाहंतयावत्स्वपदमधिक सौख्यंनिर्विशन्निर्विशंकं॥ बहुतिथमभितोसौनर्मदांनर्मदांतांमगधभुविनिवासंनिर्ममेनिर्ममेंद्रः॥ ५॥ इतिवशीकृतमंडनपंडितःप्रणतसत्करणत्रयदंडितः ॥ सकलसद्गुणमंडलमंडितःसनिरगात्कृतदुर्मतखं डितः॥ ६ ॥ कुसुमितविविधपलाशभ्रमदलिकुलगीतमधुरस्वनं॥ पश्यन्विपिनमयासीदाशांकीनाश पालितामेषः ॥ ७ ॥

सुरेश्वरोमगधभूमौवासंनिर्ममे मा० ॥ ५ ॥ अथाचार्यवृत्तांतमाह इत्येवंवशीकृतोमंडनपंडितोयेनप्रणतानांसतांकरणत्रयंदंडितंयेनतत्रम नःप्राणायामाद्युपदेशेनकर्मानीहोपदेशेनसर्वैःसद्गुणमंडलैरलंकृतः कृतंदुर्मतानांखंडितंखंडनंयेनसनिरगात् द्रुत० ॥ ६ ॥ कामाशांप्रतिनि रगादित्याकांक्षायामाह कुसुमितेषुविविधपत्रेषुभ्रमद्भिर्भ्रमरकुलैर्गीतोमधुरशब्दोयत्रतथाभूतंवनंपश्यन्यमपालितांदक्षिणांदिशमेषःश्रीशंक रोऽयासीत् आर्याशकलद्वितयंव्यत्ययरचितंभवद्यस्याः सोद्गीतिःकिलकथितातद्वद्यत्यंशभेदसंयुक्ता ॥ ७ ॥

आर्यापूर्वार्धयदिगुरुणके
तस्यांयमाशायांमहाराष्ट्रप्रमुखेदेशेयंथान्प्राज्ञतमःशमितोमतांतराभिमानोयेनससनकोपमःश्रीशैलंपर्वतमगमत् ॥८॥ तंविशिनष्टि प्रफुल्लमल्लिकानांवनानांप्रसंगोयस्यंसचासौसंग
नाधिकेननिधनेयुक्तं इतरत्तद्वन्निखिलंभवतियदीयमुदितेयमार्यागीतिः सदामदानांगजा
तानामसंख्यातानांप्रकांडानांशाखानांगंधेनबंधुरःसुंदरःप्रवातस्तेनकंपितास्त्क्षायत्रतं प्रकांडोविटपेशस्तइतिविश्वप्रकाशः पुरालघुर्गुरुस्ततोभवेच्चपंच
धिपानांप्रहारेशूराणांकेसरिणांसिंहानांसमूहोयत्रतं भुजंगभूषणस्यशिवस्यप्रियंहिरण्यगर्भस्यकौशलमित्यर्थः तथाभू
चामरं ॥९॥ अद्रेःसमीपंचलंतस्तरंगायस्याःपुनश्चाधरीकृतस्तुंगःपर्वतोयया तुंगःपुन्नागनगयोस्तुंगःस्यादुन्नतेन्यवदितिविश्वप्रकाशः

तत्रमहाराष्ट्रमुखेदेशेग्रंथान्प्रचारयन्प्राज्ञतमः ॥ शमितमतांतरमानःशनकैःसनकोपमोगमच्छ्रीशैलं ॥
॥८॥ प्रफुल्लमल्लिकावनप्रसंगसंगतामितप्रकांडगंधबंधुरप्रवातधूतपादपं ॥ सदामदद्विपाधिपप्रहारशूर
केसरिव्रजंभुजंगभूषणप्रियंस्वयंभुकौशलं ॥९॥ कलिकल्मषभंगायांसोद्रेराराच्चलत्तरंगायां ॥ अधरीकृत
तुंगायांसस्नौपातालगामिगंगायां ॥ १० ॥ नमन्मोहभंगंनभोलेडिश्रृंगंत्रुटत्पापसंगंरटत्पक्षिभृंगं ॥ समा
श्लिष्टगंगंप्रहृष्टांतरंगंतमारुह्यतुंगंददर्शैशलिंगं ॥ ११ ॥

आर्याप्रथमदलोक्तंयदिकथमपिलक्षणंभवेदुभयोः दल
तायांकलिकल्मषविनाशसमर्थायांपातालगामिगंगायांसश्रीशंकरःस्नानंकृतवान् नमतांमोहस्यभंगोयस्मात्गगनास्वादन ॥१५
योःकृतयतिशोभांतांगीतिगीतवान्भुजंगेशः ॥ १० ॥ तंतुंगमारुह्यशिवलिंगंददर्श तुंगंविशिनष्टि जशीलानिशृंगाणियस्यत्रुटत्पापस्यसंगोयस्माद्रटंतःपक्षिणोभ्रमराश्चयस्मिन्सम्यगालिंगितापातालगामिगंगायेनप्रहृष्टमंतरंगंमनोयस्येति
डस्यसमनस्त्वमारोप्येयमुक्तिःक्रियाविशेषणंवा भुजं० ॥ ११ ॥

तथाभू
ततश्च प्रणमतांसंसृतिबीजानामविद्याकामकर्मवासनानांभर्जनं पुनश्चमोक्षलक्षणामृतस्यसंपादकंभ्रमराख्यांबासहायंनतोऽर्जुनोयस्मै
तंमल्लिकार्जुनसंज्ञंपरमेशलिंगंप्रणिपत्यप्रकर्षेणमोदमवाप वियो० ॥ १२ ॥ ततश्चतीररुहैराम्रादिवृक्षैःश्यामायास्तिरोहितमुष्णंयस्यांययावा
आवर्जितातृद्भूतृष्णाचयस्यानिरस्तंकार्ष्ण्यंयस्यास्तथाभूतायानद्यास्तीरेआचार्येंद्रोऽवात्सीत् गीतिः ॥१३॥ तत्रतस्मिन्तीरेपवित्रकीर्तिर्विचि

प्रणमद्भवबीजभर्जनंप्रणिपत्यामृतसंपदार्जनं॥ प्रमुमोदसमल्लिकार्जुनंभ्रमरांबासचिवंनतार्जुनं॥ १२॥
तीररुहैःकृष्णायास्तीरेवात्सीत्तिरोहितोष्णायाः॥ आवर्जिततृष्णायाआचार्येंद्रोनिरस्तकार्ष्ण्यायाः॥ १३॥
तत्रातिचित्रपदमत्रभवान्पवित्रकीर्तिर्विचित्रसुचरित्रनिधिःसुधींद्रान् ॥ अग्राहयत्कृतमसद्ग्रहनिग्रहार्थम
ग्र्यान्समग्रसुगुणान्महदग्रयायी ॥ १४॥ अध्यापयंतमसदर्थनिरासपूर्वंकिंत्वन्यतीर्थयशसंश्रुतिभाष्यजा
तं॥ आक्षिप्यपाशुपतवैष्णववीरशैवमाहेश्वराश्चविजिताहिसुरेश्वराद्यैः॥ १५॥

त्राणांसुचरित्राणांनिधिर्महदग्रयायीअत्रभवान्पूज्यःश्रीशंकरोऽतिचित्राणिपदानियस्मिन्असद्ग्रहाणांदुराग्रहाणांनिग्रहोर्थःप्रयोजनंवायस्य
तथाभूतंकृतंशारीरकादि सुधींद्रान्समग्राःसुगुणाःशांतिदांत्यादयोयेषुतानग्र्यान्श्रेष्ठानग्राहयत् व० ॥ १४ ॥ तिरस्कृतान्यशास्त्रयशसंश्रुति
भाष्यसमूहमसदर्थनिरासपूर्वमध्यापयंतंभाष्यकारमाक्षिप्यस्थिताःपाशुपतादयः सुरेश्वरपद्मपादादिभिराक्षिप्यविशेषेणजिताः ॥ १५॥

तत्रकेचित्स्वीयंमतंपरित्यज्यविगतमत्सरादिदोषाःसंतःअमुष्यश्रीशंकरस्यशिष्यत्वंप्राप्ताः अन्येतुकोपवशंगत्वायतोमलिनचित्ताअस्यमरणंनि
रीक्षमाणाःकालंनिन्युः॥१६॥ तथाचैवंविधावेदांतीकृतानिनीचानांशूद्राणांवचांसियैःपुनश्चपापिष्ठाःस्वकल्पनाएववेदःकृतःस्वंवेदांतरप्रतिपा
द्यमात्मानमपिवेदत्रयीपथमपिप्रायोदहंतेयेखलाःसाक्षाद्ब्रह्मणिशंकरेस्पर्धयानिबद्धांवुद्धिंश्रीकृष्णेमिथ्यावासुदेववद्विदधतितेतद्वक्तिमंत्यांगतिं



॥ १६ ॥

केचिद्विसृज्यमतमात्यममुष्यशिष्यभावंगताविगतमत्सरमानदोषाः ॥ अन्येतुमन्युवशमेत्यजघ
न्यचित्तानिन्युःक्षणंनिधनमस्यनिरीक्षमाणाः ॥ १६ ॥ वेदांतीकृतनीचशूद्रवचसोवेदःस्वयंकल्प
नाःपापिष्ठाःस्वमपित्रयीपथमपिप्रायोदहंतःखलाः॥ साक्षाद्ब्रह्मणिशंकरेविदधतिस्पर्धानिबद्धांम
तिंकृष्णेपौंड्रकवत्तथानचरमांकिंतेलभंतेगतिं ॥ १७॥ वार्णाकाणभुजीचनैवगणितालीनाक्वचि
त्कापिलीशैवंचाशिवभावमेतिभजतेगर्हापदंचार्हतं॥ दौर्गंदुर्गतिमश्नुतेभुविजनःपुष्णातिकोवैष्ण
वंनिष्णातेषुयतीशसूक्तिषुकथाकेलीकृतासूक्तिषु॥ १८॥

विनाशंमोक्षंवानलभंतेऽपितुप्राप्नुवंत्येव शार्दू० ॥१७॥ शंकरसूक्तिषुनिष्णातेष्वाचार्यविनेयेषुसत्सुकथाकेलीकृताःसुनर्मकथात्वंप्राप्तासूक्ति ॥१६
षुमध्येकाणादीतुवार्णीनैवगणिता कापिलीसातुक्वचिल्लीनाक्वगतेत्यपिनज्ञाता शैवंपाशुपतानांतुवचोऽशिवत्वमाप्नोति आर्हतंचतद्गर्हापदंभज
ते दौर्गंशाक्तानांचतद्दुर्गतिमश्नुते वैष्णवंतत्पालयितुंसमर्थःकोपिजनोनास्तीत्यर्थः ॥ १८ ॥

विनिर्दयंयथास्यात्तथाविनिर्दलन्विशीर्णतांप्राप्नुवन्विरुद्धमतानांसंकरोयेनतथाभूतेशंकरसतितथागतानांसुगतानांकथागताविलयंप्राप्तानै
यायिकवचस्तदनुयायितदनुगाम्यजनितदपितथैवगतं तौतातितः कौमारिलः चोदितःप्रेरितोपिनचवदतीति पुनश्चविदितचापलंकापिलं

तथागतकथागतातदनुयायिनैयायिकंवचोजनिनचोदितोवदतिजातुतौतातितः ॥ विदग्धतिनद
ग्धधीर्विदितचापलंकापिलंविनिर्दयविनिर्दलद्विमतसंकरेशंकरे ॥ १९ ॥ इतिश्रीमाधवीयेतत्क
लाज्ञत्वप्रपंचनं ॥ संक्षेपशंकरजयेसर्गोयंदशमोऽभवत् ॥ १० ॥ ॥ ६ ॥ ॥ ६ ॥

वचोदग्धापुष्टास्थिताबाधीर्यस्यसंनविदग्धतिनाभिनंदतिनैवपुष्णातीतिवातेनापितथैवविलयंगतं पृथ्वी ॥ १९ ॥ इतिश्रीमत्परमहंसपरि
व्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिकृतेश्रीशंकराचार्यविजयडिंडिमेदशमःसर्गः ॥ १० ॥
टी० सं० ॥ ३४६ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

श्री० ॥ अथोयभैरवनिर्जयंसपरिकरंवर्णयितुमुपक्रमते तत्रतस्मिन्देशएकदांआच्छादितस्वीयदोषःसीताहरणायागतरावणवत्कल्पितःसाधुवे
षोयेनस्थितःकार्यस्यशेषोयस्य अनल्पादोषायस्मिन् तथाभूतःकश्चिदसौकापालिकोमायामानविनिर्मुक्तंमुनिमपश्यदित्यन्वयः इंद्र०॥ १ ॥
मुनिंविशिनष्टि कामक्रोधादीनांवश्यंनभवतीतितथातंवश्येंद्रियाश्चैर्मुनिभिर्विमृग्यं प्रशस्यंभाप्यंसपदिआदिश्य रहस्यमेकांतमाश्रित्यासीनं
उ० ॥ २ ॥ सकापालिकश्चिरादभीष्टंदृष्ट्वास्वमिष्टंसंसिद्धमिवनिर्धार्यहृष्टोमहद्भ्योविशिष्टंश्रेष्ठंनिजलाभेनतुष्टंकृत्यशिष्टंस्वकर्त्तव्यशेषंस्पष्टं

श्री०॥अथैकादशःसर्गः॥तत्रैकदाच्छादितनैजदोषःपौलस्त्यवत्कल्पितसाधुवेषः॥निर्मानमायंस्थितकार्यशे
षःकापालिकःकश्चिदनल्पदोषः॥ १॥ असावपश्यन्मदनाद्यवश्यंवश्येंद्रियाश्चैर्मुनिभिर्विमृग्यं॥ आदिश्यभा
प्यंसपदिप्रशस्यमासीनमाश्रित्यमुनिंरहस्यं॥ २ ॥ दृष्ट्वैवहृष्टःसचिरादभीष्टंनिर्धार्यसंसिद्धमिवस्वमिष्टं॥ मह
द्विशिष्टंनिजलाभतुष्टंविस्पष्टमाचष्टकृत्यशिष्टं॥३॥गुणांस्तवाकर्ण्यमुनेनवद्यान्सार्वज्ञ्यसौशील्यदयालुता
द्यान्॥ द्रष्टुंसमुत्कंठितचित्तवृत्तिर्भवंतमागांविदितप्रवृत्तिः॥४॥त्वमेकएवात्रनिरस्तमोहःपराकृतद्वैतिवचः
समूहः॥ आभासिदूरीकृतदेहमानःशुद्धाद्वयोयोजितसर्वमानः॥ ५॥

यथास्यात्तथोक्तवान् ॥३॥ तद्वचनमुदाहरति हेमुनेऽनवद्यान्सर्वज्ञताद्यान्तवगुणानाकर्ण्यभवंतंद्रष्टुंसम्यगुत्कंठिताचित्तवृत्तिर्यस्य विदितातव
प्रवृत्तिर्येनतादृशोहमागतवानस्मि ॥४॥ स्वप्रयोजनसिद्धयेस्तौति अत्रलोकेनिरस्तमोहस्त्वमेवैकः यतःपराकृतोद्वैतिवचसांसमूहोयेनस्वयंदूरी
कृतदेहमानोयोजितःसर्वस्मैमानोयेनतथाभूतस्त्वममानीमानदइत्युक्तः शुद्धाद्वयःपरमात्मैवाभासि पाठांतरेशुद्धाद्वयेयोजितानिसर्वाणिप्रमा
णानियेनसत्वमेकःसर्वोत्तमत्वेनप्रकाशसइतिव्याख्येयं ॥ ५ ॥

अमर्त्यलोकेषुइंद्रादिदेवलोकेष्वपिगीताकीर्त्तिर्यस्यसकटाक्षलेशेनार्दितानाशितासज्जनानामार्त्तिःपीडायेनससदुक्तिभिःसंपादिताविश्वस्य
मूर्त्तिर्येन ॥ उपं० ॥ ६ ॥ विजित्वरत्वात् विजयनशीलत्वाद्गलेहस्तिताहस्तेनगलेगृहीताअन्येवादिनोयेनमहावदान्योऽतिशयेनविश्राणनशी
लः ॥ ७ ॥ तथाचैवंविधेषुभवादृशेषुकार्यार्थिनोत्यंतदुष्प्रापमपिकाममनवाप्यक्कापिकस्यांचिदप्यवस्थायांनगच्छंतिकिंतुप्राप्यैववयांति ॥८॥

परोपकृत्यैप्रगृहीतमूर्तिरमर्त्यलोकेष्वपिगीतकीर्तिः ॥ कटाक्षलेशार्दितसज्जनार्तिःसदुक्तिसंपादितविश्वमूर्तिः
॥ ६ ॥ गुणाकरत्वाद्भुवनैकमान्यःसमस्तवित्त्वादभिमानशून्यः ॥ विजित्वरत्वाद्गलहस्तितान्यःस्वात्मप्रदत्वा
न्महावदान्यः ॥ ७ ॥ अशेषकल्याणगुणालयेषुपरावरज्ञेषुभवादृशेषु ॥ कार्यार्थिनःक्काप्यनवाप्यकामंनयां
तिदुष्प्रापमपिप्रकामं ॥ ८ ॥ तस्मान्महत्कार्यमहंप्रपद्यनिर्वर्तितंसर्वविदात्वयाद्य ॥ कपालिनंप्रीणयितुंयतिष्ये
कृतार्थमात्मानमतःकरिष्ये ॥ ९ ॥ अनेनदेहेनसहैवगंतुंकैलासमीशेनसमंचरंतुं ॥ अतोषयंतीव्रतपोभिरुग्रैःसु
दुष्करैरब्दशतंसमग्रं ॥ १० ॥ तुष्टोऽब्रवीन्मांगिरिशःपुमर्थमभीप्सितंप्राप्स्यसिमत्प्रियार्थं ॥ जुहोषिचेत्सर्ववि
दःशिरोवाहुताशनेभूमिपतेःशिरोवा ॥ ११ ॥ एतावदुक्त्वांतरधान्महेशस्तदाहितत्संग्रहणेधृताशः ॥ चराम्यथा
पिक्षितिपोनलब्धोनसर्ववित्तत्रमयोपलब्धः ॥ १२ ॥

एवंस्तुत्वाचार्यमभिमुखीकृत्यकथनीयमाह यस्मात्सर्वविदात्वयानिष्पादितंमहत्कार्यमासाद्यकपालिनंभैरवंप्रीणयितुंयत्नंकरिष्ये ततःकपालि
प्रीणनादात्मानंकृतार्थंकरिष्ये इं० ॥९॥ सर्वविदात्वयानिर्वर्त्तितमित्युक्तंतद्विवृणोति अनेनेति उग्रःकपर्दीश्रीकंठइत्यमरादुग्रंरुद्रं उ० ॥ १० ॥
॥ ११ ॥ तयोःसर्वज्ञक्षितिपयोःसंग्रहणेधृताआशायेनतत्रतयोर्मध्ये ॥ १२ ॥

दिष्ट्याभद्रंजातं मेऽनुबंधःप्रकृतस्यकार्यस्यानुवर्त्तनंसेत्स्यति दोषोत्पादेनुबंधःस्यात्प्रकृतस्यानुवर्त्तनेइत्यमरः यतोजनस्यबंधोभवद्दर्शनावधिरे
व ॥१३॥ इतःपरंमेनुबंधःसेत्स्यतीत्युक्तेरतःपरंराजासर्वज्ञोवामिलिष्यतीत्यभिप्रायंनोपादद्यादित्याशयेनाह मूर्द्धेति तस्मात्सर्वविदिभवानेवपरं
प्रमाणं आख्या० ॥१४॥ तस्मात्स्वस्यममचलाभंदेहस्यचनश्वरत्वमालोच्यशिरःप्रदानमुचितमेवेत्याशयेनाह शिरइति उ० ॥१५॥ नन्वेवंया
चितुंमनस्तेकुतःक्षमतइत्याशंक्यभवतोविरक्तत्वादित्याह तच्छिरोयाचितुंमनोमेनोत्सहते यतइष्टदायिस्वशरीरंकोवात्यजतुभवांस्तुविरक्तत्वान्न

दिष्ट्याद्यलोकस्यहितेचरंतंसर्वज्ञमद्राक्षमहंभवंतं॥ इतःपरंसेत्स्यतिमेऽनुबंधःसंदर्शनांतोहिजनस्यबंधः॥ १३॥
मूर्धाभिषिक्तस्यशिरःकपालंमुनीशितुर्वाममसिद्धिहेतुः ॥ आद्यंपुनर्मेमनसाप्यलभ्यंततःपरंतत्रभवान्प्रमा
णं॥ १४॥ शिरःप्रदानेद्भुतकीर्तिलाभस्तवापिलोकेममसिद्धिलाभः॥ आलोच्यदेहस्यचनश्वरत्वंयद्रोचतेसत्तम
तत्कुरुत्वं॥ १५॥ तद्याचितुंनक्षमतेमनोमेकोवेष्टदायिस्वशरीरमुज्झतु॥ भवान्विरक्तोनशरीरमानीपरोपकाराय
धृतात्मदेहः॥ १६॥ जनाःपरक्लेशकथानभिज्ञानक्तंदिवास्वार्थकृतात्मचित्ताः॥ रिपुंनिहंतुंकुलिशायवज्रीदा
धीचमादात्किलवांछितास्थि॥ १७॥

देहमानीसंप्रतिदेहधारणमपिपरोपकारायैवनत्वभिमाननिमित्तमित्याह परोपकारायेति॥१६॥ यद्यप्येवंतथापित्वंपरक्लेशावहंकर्मानुष्ठातुंकि
मितिप्रवृत्तोसीत्याशंक्याह सर्वेपिजनाःपरक्लेशकथानभिज्ञायतोदिवानिशंस्वार्थेतत्परआत्मादेहेंद्रियादिचित्तंचयेषां तत्रोदाहरणमाहशत्रुंनिहं
तुंवज्रनिर्माणायेंद्रोदाधीचमभिलषितमस्थिस्वीकृतवान् तथाचयदासात्विकमुख्यानामियंदशातदाऽस्मद्विधानांकाकथेतिभावः वि० ॥१७॥

शं०वि० वदान्यैर्भवादृशैस्तुस्थिरस्य सर्वगतस्यप्राप्तमयेक्षणिकत्वात्शरीरमपिसुत्याज्यमेवेत्याशयेनाह दधीचिमुख्याइति उ० ॥ १८ ॥ तथाचकेचित्प्र शांतादयया व्याप्ताः भवादृशाः परतुष्टिहेतोः शरीरंधरंतेअस्मादृशास्तुकेचनदययाविहीनाःस्वार्थैकनिष्ठालोकेसंति ॥ १९ ॥ तस्मात्परोपकारि णात्वयावश्यंशिरोदेयमित्याशयवानाह परोपकारंविनाकिंचित्प्रयोजनंतवनास्तियतःपुत्रवित्तलोकैषणाविनिर्मुक्तोभवानित्याह विधुतैषण ॥२॥ स्येति ननुत्वयापिममेदंयुक्तंनवेतिविचार्यवक्तव्यमित्याशंक्याहास्मादृशास्तुहेयोगिन् कामवशत्वादहोकष्टं युक्तायुक्तेनविजानंति ॥ २० ॥

दधीचिमुख्याःक्षणिकंशरीरंत्यक्त्वापरार्थेस्मयशःशरीरं ॥ प्राप्यास्थिरंसर्वगतंजगंतिगुणैरनर्घ्यैःखलुरंजयंति ॥१८॥ वपुर्धरंतेपरतुष्टिहेतोःकेचित्प्रशांतादययापरीताः॥ अस्मादृशाःकेचनसंतिलोकेस्वार्थैकनिष्ठादययाविहीनाः॥ १९ ॥ परोपकारंनविनास्तिकिंचित्प्रयोजनंतेविधुतैषणस्य॥ अस्मादृशाःकामवशास्तुयुक्तायुक्तेविजानंतिनहंतयोगिन्॥ २० ॥ जीमूतवाहोनिजजीवदायीदधीचिरप्यस्थिमुदाददानः ॥ आचंद्रतारार्कमपायशून्यंप्राप्तौयशःकर्णपथंगतौहि॥ २१ ॥ यद्यप्यदेयंननुदेहवद्भिर्मयार्थितंगर्हितमेवसद्भिः ॥ तथापिसर्वत्रविरागवद्भिःकिमस्त्यदेयंपरमार्थविद्भिः॥ २२॥

स्वशरीरप्रदानसदृशंयशःसाधनंत्वन्यन्नास्त्येवेत्याह जीमूतवाहाख्योनिजजीवनदायीदधीचिश्चस्वास्थिदायीद्वावपिप्रलयपर्यंतंनाशशून्यंय शःप्राप्तौकर्णपथंगतौहिप्रसिद्धंहियस्मात्कर्णपथंगतावितिवा ॥ २१ ॥ ननुदेहस्यादेयत्वंजानन्नूकिमिदमार्तिनिंदितंप्रार्थयसेइत्याशंक्ययद्यप्ये ॥२ वंतथापिपरमार्थविद्त्वात्सर्वत्रविरागवतांभवादृशानांकिमप्यदेयंनास्तीत्यालोच्यप्रार्थनांकरोमीत्याह यद्यपीति ॥ २२ ॥

नन्वन्यः कश्चिदेवंविधोऽन्विष्यप्रार्थ्यइत्याशंक्ययथाविधस्यशिरोममसिद्धिहेतुस्तथाविधोभवानेवनत्वन्यइत्याह साधकश्रेष्ठेभ्यः संसिद्धिदमखं डमूर्धन्यस्याखंडितरेतसः कपालमाहुर्नचभवंतंविनाहेभगवंस्तथाविधवीर्यवंतः पुमांसोबहवः पृथिव्यांसंति ॥२३॥ अतोऽवश्यंत्वमेवशिरःप्रयच्छ तेनमोस्त्वित्युक्त्वाऽग्रेपतितमधस्ताद्वीक्ष्य सुधीः कृपालुः समस्तादाकृष्टमनाअब्रवीत् ॥ उपं०॥२४॥ तद्वचनमुदाहरति नैवेति यतइहलोकेबहुना शनिमित्तवंतंनृकायंजानन्कोवाप्राज्ञतमोऽर्थिसात्नकुर्यात् अपितुकुर्यादेव अन्यथातस्यप्राज्ञतमत्वमेवकुतस्त्यमित्यर्थः॥इंद्र०॥२५॥ यतोय

अखंडमूर्धन्यकपालमाहुःसंसिद्धिदंसाधकपुंगवेभ्यः ॥ विनाभवंतंबहवोनसंतितद्वत्पुमांसोभगवन्पृथि
व्यां ॥ २३ ॥ प्रयच्छशीर्षंभगवन्नमःस्तादितीरयित्वापतितंपुरस्तात् ॥ तमब्रवीद्वीक्ष्यसुधीरधस्तात्कृपा
लुरावृत्तमनाःसमस्तात्॥ २४ ॥ नैवाभ्यसूयामिवचस्त्वदीयंप्रीत्याप्रयच्छामिशिरोऽस्मदीयं॥ कोवार्थिसा
त्प्राज्ञतमोनृकायंजानन्नकुर्यादिहबह्वपायं॥ २५॥ पतत्यवश्यंहिविकृष्यमाणंकालेनयत्नादपिरक्ष्यमाणं॥
वर्ष्मामुनासिध्यतिचेत्परार्थःसएवमर्त्यस्यपरःपुमर्थः॥ २६॥ वर्तेविविक्तेऽधिसमाधिसिद्धिविन्मिथःसमा
याहिकरोमितेमतं॥ नाहंप्रकाशंवितरीतुमुत्सहेशिरःकपालंविजनंसमाश्रय॥ २७॥

त्पादपिरक्ष्यमाणंशरीरंकालेनाकृष्यमाणंअवश्यंपतति ततोऽनेनवर्ष्मणापरप्रयोजनंसिध्यतिचेत्तर्हिसएवमरणधर्मकस्यपरःपुरुषार्थः ॥ उ० ॥ २६ ॥ तस्मोद्धेसिद्धिवित्यथाविविक्तेहमधिसमाधिसमाधौवर्त्ततथामिथोरहसिसमायाहि तेऽभिमतंकरोमियतोशिरःकपालंप्रकटंदातुंअहं नोत्सहेअतोविजनंसमाश्रय ॥ २७ ॥

शिष्यायद्येतांचिंतितंकार्यंजानंतितर्हिहे योगिन् विहर्ति विदध्युस्तवकार्यस्य विनाशंकुर्युः यतोमदेकशरणाःस्वशरीरत्यागव
कुतइतिचेत्तत्राह ॥ शिष्यायद्येतांचिंतितंकार्यंजानंतितर्हिहे योगिन् विहर्ति विदध्युस्तवकार्यस्य विनाशंकुर्युः यतोमदेकशरणाःस्वशरीरत्यागव
न्निजनाथशरीरमोक्षोप्यसह्यइत्याहैतत्स्वंशरीरंत्यक्तुंकोवासहेतनिजनाथशरीरस्यमोक्षंचकोवाक्षमेत ॥ व० ॥२८॥ इत्येवंतौश्रीशंकरकापा
लिकौसंविदंवितनुतांसंभाषणंसंकेतंवाकृतवंतौ ततोयोगीमनस्वीमुदितःसन् जगाम श्रीशंकरोऽपिनिजधामनिजोषमास तूर्ष्णींबभूव ममोगंभाव
मसौकिंचिदपिनप्रोक्तवान् ॥ २९ ॥ कंकालानांशरीरास्थिनांमालयाकृतागात्रभूषायेन ॥ इंद्र० ॥ ३० ॥ श्रेष्ठेषुशिष्येषुस्नानादिकार्यायवि

शिष्याविदंतियदिचिंतितकार्यमेतद्योगिन्मदेकशरणाविहतिंविदध्युः ॥ कोवासहेतवपुरेतदपोहितुंस्वंकोवाक्ष
मेतनिजनाथशरीरमोक्षं ॥ २८ ॥ तौसंविदंवितनुतामितिसंप्रहृष्टोयोगीजगाममुदितोनिलयंमनस्वी ॥ श्रीशं
करोऽपिनिजधामनिजोषमासप्रोचेनकिंचिदपिभावमसौमनोगं ॥ २९ ॥ शूलीत्रिपुंड्रीपुरतोवलोकीकंकाल
मालाकृतगात्रभूषः॥ संरक्तनेत्रोमदघूर्णिताक्षोयोगीययौदेशिकवासभूमिं ॥३०॥ शिष्येषुशिष्टेषुविदूरगेषुस्ना
नादिकार्यायविविक्तभाजि ॥ श्रीदेशिकेंद्रेतुसनंदनाख्यभीत्यास्वदेहंव्यवधायगूढे॥ ३१॥ तंभैरवाकारमुदीक्ष्यदे
शिकस्त्यक्तुंशरीरंव्यधितस्वयंमनः॥ आत्मानमात्मन्युदयुंक्तयोजयन्समाहितात्माकरणानिसंहरन् ॥ ३२॥ तंभैर
वोलोकतलोकपूज्यंस्वसौख्यतुच्छीकृतदेवराज्यं ॥ योगीशमासादितनिर्विकल्पंसनत्सुजातप्रभृतेरनल्पं ॥३३॥

दूरगेषुसत्सुश्रीदेशिकेंद्रेतुसनंदनाख्याद्भीत्यादेहंगूढेव्यवधायविविक्तभाजिसतियया वित्यन्वयः॥ ३१॥ तंभैरवाकारंकपालिनंवीक्ष्यश्रीशंकरःश ॥ २
रीरंत्यक्तुंस्वयंमनोव्यधात् समाहितांतःकरणःप्रणवंजपन्यःकरणानिसंहरन् आत्मानंत्वंपदार्थमात्मनितत्पदार्थेऽयुंक्त ॥ उ० ॥ ३२ ॥ भैरवो
भैरवाकारःकापालिकःसनत्सुजातादेःसकशादनल्पं ॥ आ० ॥ ३३ ॥

सामिअर्द्धं कांतंशोभंतं ॥ उ० ॥ ३४ ॥ उ
अंससंधिप्रदेशेचिबुकमधरोष्ठाधःप्रदेशंनिधाय व्यात्तास्यंविवृतमुखंजानूपरिउत्तानकरौनिधाय सिद्धाः सिद्धासनंविदुरित्युक्तेआ
च्चीकृतमुच्चैःकृतंपूर्वंगात्रंशिरोभागोयेन सिद्धासने मेढ्रादुपरिविन्यस्यसव्यंगुल्फंतथोपरि गुल्फांतरंचविन्यस्य
सीनंशेषितंचिन्मात्रंयेनतत्रैवविन्यस्तइंद्रियवर्गोयेनसमाधिनाविस्मारितःसर्वसर्गोयेन ॥ २५ ॥ एवंतंश्रीशंकरंविलोक्यापास्तशंकःस्वबुद्धिपू
र्वमर्जितस्तीव्रःपंकःपापंयेन प्रोद्यतखड्गःसकापालिकोहंतुंयावत्तस्विधंआचार्यसमीपंप्राप पद्मपदोऽपितावद्विज्ञातवान् ॥ २६ ॥ त्रिशूलमुद्य

जत्रुप्रदेशेचिबुकंनिधायव्यात्तास्यमुत्तानकरौनिधाय ॥ जानूपरिप्रेक्षितनासिकांतंविलोचनेसामिनिमील्यकां
तं ॥ ३४ ॥ आसीनमुच्चीकृतपूर्वगात्रंसिद्धासनेशेषितबोधमात्रं ॥ चिन्मात्रविन्यस्तहृषीकवर्गसमाधिविस्मा
रितविश्वसर्गं ॥ ३५ ॥ विलोक्यतंहंतुमपास्तशंकःस्वबुद्धिपूर्वार्जिततीव्रपंकः ॥ प्रापोद्यतासिःसविधंसयाव
द्विज्ञातवान्पद्मपदोऽपितावत् ॥ ३६ ॥ त्रिशूलमुद्यम्यनिहंतुकामंगुरुंयतात्मासमुदैक्षतांतः ॥ स्थितश्रुकोपज्व
लिताग्निकल्पःसपद्मपादःस्वगुरोर्हितैषी ॥ ३७ ॥ स्मरन्नथैपस्मरदार्तिहारिप्रह्लादवश्यंपरमंमहस्तत् ॥ समंत्रसि
द्धोनृहरेर्नृसिंहोभूत्वाददर्शोग्रदुरीहचेष्टां ॥ ३८ ॥ सतत्क्षणक्षुब्धनिजस्वभावःप्रवृद्धरुड्विस्मृतमर्त्यभावः ॥ आ
विष्कृतात्युग्रनृसिंहभावःसमुत्पपाताप्रतुलितप्रभावः ॥ ३९ ॥

दृष्ट्वाचतत्रस्थितएवसपद्मपादोज्वलदग्निकल्पश्रुकोपयतःस्वगुरोर्हितैषी ॥ उपें० ॥
म्यंगुरुंनिहंतुकामंकापालिनंयतात्मामनसिसमुदैक्षत स्मरन्नेषपद्मपादोनृसिंहोभूत्वातस्योग्रांदु
॥ २७ ॥ अथानंतरंस्मरतामार्त्तिहरणं प्रह्लादवश्यंप्रह्लादाधीनं नृहरेस्तत्परमंस्वरूपभूतं महस्तेजः
रीहचेष्टांदर्शयतोमंत्रसिद्धः ॥ वि० ॥ ३८ ॥ सपद्मपादःप्रवृद्धरुट्प्रवृद्धरोषः ॥ उ० ॥ ३९ ॥

सटानांस्कंधरोम्णां छटयासमूहेनस्फोटितोमेघसंघोयेन तीव्रशब्देनत्रासितोभूतसंघोयेन संवेगेनसंमूर्छितोसंमोहितोलोकसंघोयेन किमेतदित्याकुलोदेवसंघोयस्मात्ससमुत्पपातेतिपूर्वेणसंबंधः ॥ ४० ॥ क्षुभ्यत्समुद्रमित्यादिक्रियाविशेषणं क्षुभ्यत्समुद्रोयस्यांक्रियायां समुद्धूढंरौद्रमत्यंतभयानकं रटंतोनिशाटाराक्षसादयोयस्यां ज्वलंतोदिशामंताःप्रांतभागायस्यां प्रचलद्भूमेरंतोयस्यां भ्रश्यंतिअक्षाणिजनानामिंद्रियाणियस्यां दलदंतरिक्षंयस्यां तथाजवादभिद्रुत्येतिपरेणान्वयः ॥ ४१ ॥ जवादभिद्रुत्यशितस्वरूपैःशितस्वरुःतीक्ष्णंवज्रंतद्वद्दुपैर्नखाग्रैःपुरादैत्येश्व

सटाच्छटास्फोटितमेघसंघस्तीव्रारवत्रासितभूतसंघः॥ संवेगसंमूर्छितलोकसंघःकिमेतदित्याकुलदेवसंघः ॥४०॥ क्षुभ्यत्समुद्रंसमुदूढरौद्रंरटन्निशाटंस्फुटदद्रिकूटं॥ ज्वलद्दिशांतंप्रचलद्धरांतंप्रभ्रश्यदक्षंदलदंतरिक्षं॥ ॥ ४१ ॥ जवादभिद्रुत्यशितस्वरूग्रैर्दैत्येश्वरस्येवपुरानखाग्रैः ॥ क्षिपत्त्रिशूलस्यसतस्यवक्षोददारविक्षिप्तसुरारिपक्षः॥४२॥ तत्ताद्दगत्युग्रनखायुधाग्र्योदंष्ट्रांतरप्रोतदुरीहदेहः॥ निन्येतदानींनृहरिर्विदीर्णद्युपट्टणाट्टालिकमट्टहासं॥ ४३॥



रस्यहिरण्यकशिपोरिवक्षिपत्त्रिशूलस्यतस्यकापालिकस्यवक्षः क्षिप्तःसुरारिपक्षोयेन सनृसिंहोददार ॥ ४२ ॥ ततश्चतत्ताद्दगत्युग्रनखायुधानांसिंहानांअग्र्योदंष्ट्रांतरेप्रोतोदुरीहस्यदुश्चेष्टस्यकापालिकस्यदेहोयेन सनृहरिस्तदानींविदीर्णाद्युपट्टणानांस्वर्गनगराणांआट्टालिकायेन तथाभूतंअट्टहासंविस्तारितवान् ॥ ४३ ॥

बहिर्गताःसर्वेविनेयास्तंशब्दंआकर्णयन्नाकुलचित्तवृत्तयः समीपमागतवंतआगत्यचाग्रतोमृतंभैरवसंज्ञंकापालिकं ततोभैरवाद्विमुक्तंचसुखे
नस्थितंगुरुंदृष्टवंतः ॥४४॥ सनंदनःपद्मपादःसस्मितंयथास्यात्तथाइतिवक्ष्यमाणमुक्तवान् ॥ ४५ ॥ तद्वचनमुदाहरति पूर्वंखलुअहोबलसंज्ञ
स्यपर्वतस्याग्रेपुण्यंकिमपिवनंसमाश्रित्यभक्तैकवश्यमेनंनृहरिंभगवंतंध्यायन्ननेकान्दिवसानहंनीतवान् ॥ ४६ ॥ हेवाचंयमास्मिन्गिरिगह्वरे

आकर्णयंस्तंनिनदंबहिर्गतानुपागमन्नाकुलचित्तवृत्तयः ॥ व्यलोकयन्भैरवमग्रतोमृतंततोविमुक्तंचगुरुं
सुखोषितं ॥ ४४ ॥प्रह्लादवश्योभगवान्कथंवाप्रसादितोयंनृहरिस्त्वयेति ॥ सविस्मयैःस्निग्धजनैःसपृष्टःस
नंदनःसस्मितमित्यवादीत् ॥ ४५ ॥ पुराकिलाहोबलभूधराग्रेपुण्यंसमाश्रित्यकिमप्यरण्यं ॥ भक्तैकवश्यंभ
गवंतमेनंध्यायन्ननेकान्दिवसाननैषं ॥ ४६ ॥ किमर्थमेकोगिरिगह्वरेस्मिन्वाचंयमत्वंवससीतिशश्वत् ॥
केनापिपृष्टोऽत्रकिरातयूनाप्रत्युत्तरंप्रागहमित्यवोचं ॥ ४७॥ आकंठमत्यद्भुतमर्त्यमूर्तिःकंठीरवात्मापरतश्च
कश्चित् ॥ मृगोवनेस्मिन्मृगयोवसन्मेभवत्यहोनाक्षिपथेकदाऽपि ॥ ४८ ॥ इतीरयत्येवमपिक्षणेनवनेचरो
यंप्रविशन्वनांतं ॥ निबध्यगाढंनृहरिंलताभिःपुण्यैरगण्यैःपुरतोन्यधान्मे ॥ ४९ ॥

किमर्थमेकस्त्वंवससीतिकेनापिकिरातयूनापुराशश्वत्पृष्टोहमितिवक्ष्यमाणंप्रत्युत्तरमुक्तवान् ॥ ४७ ॥ तदाह कंठपर्यंतमत्यद्भुतानरमूर्त्तिर्य
स्य परतश्चसिंहात्माकश्चिन्मृगोस्मिन्वनेवसन् हेमृगयोव्याधममाक्षिमार्गेकदापिनभवति अहोऽतिकष्टं ॥ ४८ ॥ इत्येवंमयिकथयत्येवसति
अयंवनेचरोवनमध्यंक्षणमात्रेणप्रविशन्नृहरिंलताभिर्गाढंनिबध्यमेपुण्यैरगण्यैर्ममाग्रेस्थापितवान् ॥ ४९ ॥

अद्भुतेनाश्चर्येणाविष्टंमनोयस्य तथाभूतेनमयेत्येवंविज्ञाप्यमानोऽसौविभुर्नृहरिरितिवक्ष्यमाणमुक्तवान् ॥ ५० ॥ तदुदाहरति यथाऽमुनाकिरा
तयूनैकाग्रचित्तेनाहंध्यातस्तथापूर्वैर्ब्रह्मादिभिरपिनध्यातोऽतस्त्वंनोपालभेथाइतिकथयन्मेप्रसादंकृत्वातिरोधानंकृतवान् ॥ इंद्र० ॥ ५१ ॥
पद्मपादस्यतांवाणींश्रुत्वाऽखिलैरानंदमग्नैरभाविसर्वेप्यानंदमग्नाअभूवन् अनल्पेनस्वतेजसाजगद्ब्रह्मांडंदलयन्नृसिंहोजगर्जच ॥ उ० ॥ ५२ ॥

॥ ५-॥

महर्षिभिस्त्वंमनसाप्यगम्योवनेचरस्यैवकथंवशेभूः ॥ इत्यद्भुताविष्टहृदामयासौविज्ञाप्यमानोविभुरित्य
वादीत् ॥ ५० ॥ एकाग्रचित्तेनयथामुनाहंध्यातस्तथाधात्रमुखैर्नपूर्वैः ॥ नोपालभेथास्त्वमितीरयन्मेकृत्वा
प्रसादंकृतवांस्तिरोधिं ॥ ५१ ॥ आकर्ण्यतांपद्मपदस्यवाणीमानंदमग्नैरखिलैरभावि ॥ जगर्जचोच्चैर्जगदं
डभांडंभूम्नास्वधाम्नादलयन्नृसिंहः ॥ ५२ ॥ ततस्तदाभाटचलत्समाधिःस्वात्मप्रबोधोन्मथितत्र्युपाधिः ॥ उन्मी
ल्यनेत्रेविकरालवक्रंव्यलोकयन्मानवपंचवक्रं ॥ ५३ ॥ चंद्रांशुसोदर्यसटाजटालंतार्तीयनेत्राब्जकनन्निटा
लं ॥ सहोद्यदुष्णांशुसहस्रभासंविध्यंडविस्फोटकृदट्टहासं ॥ ५४ ॥

ततस्तस्यगर्जनानंतरंतस्याभाटेनसाहंकारनादेनचलत्समाधिर्यस्य स्वात्मसाक्षात्कारेणोन्मथिताःकारणादित्रयउपाधयोयस्य सश्रीशंकरोने ॥ ५
त्रेउन्मील्यकरालवक्रंमानवपंचास्यंनृसिंहमवलोकयत् ॥ ५३ ॥ तंविशिनष्टि चंद्रकिरणसदृशाभिःसटाभिर्जटालंव्याप्तं तृतीयनेत्रकमलेनक
नत्स्फुरन्निटालंमस्तकंयस्य सहोद्यतांसूर्यसहस्राणांभाइवभायस्य ब्रह्मांडविस्फोटकरोऽट्टहासोयस्यतं ॥ ५४ ॥

श्रीवत्सोनामरोम्णामावर्त्तस्तेनयुक्तंदक्षिणवक्षोयस्यतं
नखाग्रेणनिर्भिन्नात्कपालिवक्षस्थलादुच्चलच्छोणितस्यपंकेनव्याप्तान्यंगानियस्यतं
वत्सःपुत्रादिवर्षयोः तर्णकेनोरसिक्लीबमितिमेदिनी गलेवैजयंत्याश्रीरत्नेनकौस्तुभमणिनाचसंस्पर्धिनीतस्यकपालिनआंत्राणांमालायस्यतं
॥ ५५ ॥ देवासुरत्रासकरस्यातिघोरस्यस्वाकारस्यसारेणबलेनव्यथितोंडकोशोयेनदंष्ट्राभिःकरालान्मुखान्निर्गच्छदग्निज्वालालिभिः संलीढः
समास्वादितोनभोवकाशोयेनतं ॥ ५६ ॥ स्वरोमकूपेभ्यउद्गतानांविस्फुलिंगानांप्रचारेणसंदीपिताःसर्वलोकायेन जंभमसुरविशेषंद्वेष्टीतिजंभ

नखाग्रनिर्भिन्नकपालिवक्षस्थलोच्चलच्छोणितपंकिलांगं ॥ श्रीवत्सवत्संगलवैजयंतीश्रीरत्नसंस्पर्धितदांत्र
मालं ॥ ५५ ॥ सुरासुरत्रासकरातिघोरस्वाकारसारव्यथितांडकोशं ॥ दंष्ट्राकराललाननिर्यदग्निज्वालालिसंली
ढनभोवकाशं ॥ ५६ ॥ स्वरोमकूपोद्गतविस्फुलिंगप्रचारसंदीपितसर्वलोकं ॥ जंभद्विडुज्जृंभितशंभुदंभसंस्तं
भनारंभकदंतपेपं ॥ ५७ ॥ माभूदकालप्रलयोमहात्मन्कोपंनियच्छेतिगृणद्भिरारात् ॥ ससाध्वसैःप्रांजलि
भिःसगात्रकंपैर्विरंच्यादिभिरर्थ्यमानं ॥ ५८ ॥ विलोक्यविद्युच्चपलोग्रजिह्वंयतिक्षितीशःपुरतोनृसिंहं ॥ अ
भीतिरैडिष्टतदोपकंठंस्थितोऽपिहर्षाश्रुपिनद्धकंठः ॥ ५९ ॥

द्विड्द्विट्ःउज्जृंभितउल्लसितःशंभुर्महादेवस्तयोर्दंभस्यक्ष्मापनकैतवस्ययत्संस्तंभनंतस्यारंभकोदंतपेषोयस्य ॥ ५७ ॥ हेमहात्मन् असमयेप्रलयो
माभूत् अतःकोपंनियच्छेत्येवंससाध्वसैःसगात्रकंपैःप्रांजलिभिरादरात्स्तुवद्भिःब्रह्मादिभिःप्रार्थ्यमानं ॥ ५८ ॥ विद्युद्वच्चपलोग्रजिह्वमेवंभूतंनृह
रिंपुरतोविलोक्यतदासमीपंस्थितोपिभीतिरहितोहर्षाश्रुभिःपिनद्धःकंठोयस्यसयतिराजःश्रीशंकरःस्तुतवान् ॥ उपें० ॥ ५९ ॥

हेनरहरेकोपमुपसंहर यतोऽनर्थदं यदर्थमाविष्कृतःसतुतवशत्रुर्निहतःसन्भुविवर्त्ततेऽतोहेदेवसनातनींमयिकृपांकुरु किंच भवत्कोपदृष्ट्यास
र्वमिदंजगद्भयमेति ॥ ६० ॥ किंच तवविष्णोःवपुःखलुसत्वंउदाहृतं हियतस्तवकोपनमण्वपिनोचितं तत्तस्मादस्मिन्कालेसुखायशांतिप्राप्नु
हि तवैतन्नोचितमितिसाक्षेपमाह रुद्रगुणंतमःसत्वगुणोविष्णुःत्वंकथमाश्रयसे ॥ ६१ ॥ एवंकोपशांतिंप्रार्थयित्वास्तौति हेदैवतमसकलभीति
॥६॥ पुस्मरन्सन्सर्वभयमपोह्यपुमान्सुखीभवति तवदर्शनेसतिकिंप्रवदामि सयद्भवतिनतद्वक्तुंशक्यमित्यर्थस्तस्मात्तवदर्शनंपरमदुर्लभमेव ॥ ६२ ॥





नरहरेहरकोपमनर्थदंतवरिपुर्निहतोभुविवर्तते ॥ कुरुकृपांमयिदेवसनातनींजगदिदंभयमेतिभवद्दशा ॥
॥६०॥तववपुःकिलसत्वमुदाहृतंतवहिकोपनमण्वपिनोचितं॥तदिहशांतिमवाप्नुहिशर्मणेहरगुणंहरिराश्र
यसेकथं॥६१॥सकलभीतिषुदैवतमस्मरन्सकलभीतिमपोह्यसुखीपुमान् ॥ भवतिकिंप्रवदामितवेक्षणे
परमदुर्लभमेवतवेक्षणं ॥ ६२ ॥ स्मृतवतस्तवपादसरोरुहंमृतवतःपुरुषस्यविमुक्तता ॥ तवकराभिहतोमृ
तभैरवोनहिसएषपुनर्भवमेष्यति॥६३॥ दितिजसूनुममुंव्यसनार्दितंसकृदरक्षदुदारगुणोभवान् ॥ सकल
गत्वमुदीरितमस्फुटंप्रकटमेवविधित्सुरभूत्पुरा॥ ६४॥

अथकापालिकस्यविमोक्षायव्याजेनाह तवपादकमलंस्मृतवतोमृतवतःपुरुषस्यविमुक्ताभवति अयंतुभैरवस्तवकरेणाभिहतःसन्मृतातःसै
षपुनःसंसृतिनप्राप्स्यतीत्यर्थः ॥ ६३ ॥ भक्तरक्षणंतद्वचनपालनंचतवस्वभावएवेत्याह दितिजस्यहिरण्यकशिपोःपुत्रंप्रल्हादंअमुमुदारगुणोभ ॥६॥
वान्सकृदरक्षत् क्वासावितिपित्रापृष्टेनतेनोदीरितंसर्वत्रैवास्तीतिसर्वगत्वमस्फुटंप्रकटमेवविधातुमिच्छुःपुराअग्रेभवान्प्रादुरभूत् ॥ ६४ ॥

त्वमेवब्रह्मादिरूपेणसृष्ट्यादिकंकरोषीत्याह रजसावृतोविश्वंसृजसि स्थितिविधौस्वीकृतसत्वःउद्यतायुधःपालयसि तस्यहरणसमये हेदेवतमसा वृतस्तदाहरसंज्ञितोहरसि॥६५॥वस्तुतस्तुअजस्यजन्म निर्गुणस्यगुणाश्चनैवसं ति तर्हिजन्मादिकंकिमर्थमित्यतआह तवजन्मादिकंजगदनुग्रहणा ययतस्तवपदंवाङ्मनसातिगं यतोवाचोनिवर्त्ततेअप्राप्यमनसासहेत्यादिश्रुतेः तर्हितंत्वौपनिषदंपुरुषंपृच्छामीतिकथंश्रुतिगम्यतेतिचेत्तत्राह श्रु तिवचश्चकितंसत्तवबोधकं अस्थूलमनण्वित्येवंनिषेधमुखेनलक्षणावृत्त्याचबोधयति नतसाक्षादित्यर्थः॥६६॥ यद्यपिनामरूपादिविनिर्मुक्तस्त्वं

सृजसिविश्वमिदंरजसावृतःस्थितिविधौश्रितसत्वउदायुधः॥ अवसितद्धरणेतमसावृतोहरसिदेवतदाहर संज्ञितः॥६५॥तवजनिर्नगुणास्तवतत्वतोजगदनुग्रहणायभवादिकं॥ तवपदंखलुवाङ्मनसातिगंश्रुति वचश्चकितंतवबोधकं॥ ६६ ॥ नरहरेतवनामपरिश्रवात्प्रमथगुह्यकदुष्टपिशाचकाः॥ अपसरंतिविभो ऽसुरनायकानहिपुरःस्थितयेप्रभवंत्यपि ॥ ६७ ॥ त्वमेवसर्गस्थितिहेतुरस्यत्वमेवनेतान्नृहरेऽखिलस्य ॥ त्वमेवचिंत्योहृदयेनवद्येत्वामेवचिन्मात्रमहंप्रपद्ये॥६८॥ हतोवराकोहिरुषंनियच्छविश्वस्यभूमन्नभयंप्र यच्छ॥ एतेहिदेवाःशममर्थयंतेनिरीक्ष्यभीताप्रतिखेदयंते॥६९॥

तथापिहेनरहरेतवनामपरिश्रवणात्प्रमथादयोऽपसरंतिदूरतरंगच्छंति हेविभोदैत्यनायकास्तुपुरःस्थितयेऽपिसमर्थानभवंति ॥ ६७ ॥ तथाच य तःसर्गादिहेतुःनियंत्रादिश्चत्वमेवातस्त्वामेवचिन्मात्रमहंप्रपद्येइत्याह त्वमेवेति ॥ ७० ॥ ६८ ॥ एवंस्तुत्वारोषशांतिपुनःप्रार्थयते हियस्मादयंव राकोहतोऽतःकोपंनियच्छ हेभूमन्नतेनचविश्वस्याभयंप्रयच्छ हियस्मादेतेदेवाःशमंप्रार्थयंते निरीक्ष्यभीताःप्रतिखेदंप्राप्नुवंति ॥ ६९ ॥

किंच हियस्मात्तवानुकंपार्हानैर्जनैर्द्रष्टुंनशक्या तत्तस्माद्धेआत्मन्निमांतिरस्कृतकोटिविद्युतंमूर्त्तिमुपसंहर तेतवभयात्समतिक्रांतसीमांत्रिलोकींपाहि ॥ ७० ॥ अथेदानींश्रीनृसिंहाट्टहासंवर्णयंस्तस्माद्दुरितशमंप्रार्थयति कल्पांतउज्जृंभमाणस्यप्रमथपरिवृढस्यरुद्रस्यप्रौढोयोलालाटवह्निस्तस्यज्वालाभिरालीढायांत्रिलोक्यांजनितस्यचटचटाशब्दस्यधिक्कारेधुर्यः पुनश्चमध्येब्रह्मांडोदरकुहरंब्रह्मांडात्मकपात्रजठरच्छिद्रमध्ये योअनैकांत्येनाव्यभिचारेणदुस्थादुर्घटाएकरूपेणस्थितिर्यस्याः अनेकरूपांजन्ममरणादिलक्षणावस्थांप्रतिस्त्यानस्त्यानोघनानलघनोवह्निमू

द्रष्टुंनशक्याहितवानुकंपाहीनैर्जनैर्निकृत्तकोटिशंपां॥मूर्तिंतदात्मन्नुपसंहरेमांपाहित्रिलोकींसमतीतसीमां ७०॥
कल्पांतोज्जृंभमाणप्रमथपरिवृढप्रौढलालाटवह्निज्वालालीढत्रिलोकीजनितचटचटाध्वानधिक्कारधुर्यः ॥ मध्ये
ब्रह्मांडभांडोदरकुहरमनैकांत्यदुस्थामवस्थांस्त्यानस्त्यानोममायंदलयतुदुरितंश्रीनृसिंहाट्टहासः ॥ ७१ ॥ मध्ये
व्यानद्धवातंधयगुणवलनाधानमंथानभूभृन्मंथेनोत्क्षोभिदुग्धोदधिलहरिमिथःस्फालनाचारघोरः ॥ कल्पांतो
न्निद्ररुद्रोच्चतरडमरुकध्वानवद्धाभ्यसयाघोषोयंकर्णघोरःक्षपयतुनृहरेरंहसांसंहतिंनः ॥ ७२ ॥

र्तिः स्त्यानंस्निग्धेपिचघनेत्वनलालस्ययोरपीतिमेदिनी एवंभूतोयंश्रीनृसिंहाट्टहासोममदुरितंदलयतु स्रग्धरा ॥ ७१॥ किंच मध्येव्यानद्धस्य सम्यग्बद्धस्यवातंधयोवायुपोवासुकिसंज्ञःसर्पःतल्लक्षणस्यगुणस्यवलनस्यावेष्टनस्याधानंस्थापनंयत्रसचासौमंथनाद्रिर्मंदराचलस्तेनयोमंथो मंथनंतेनक्षोभितःक्षीरसमुद्रस्यलहरीणांयोमिथःस्फालनाचारस्ताडनाचारस्तद्वत्घोरस्तस्मात्घोरइतिवा श्रुतश्चकल्पांतउन्निद्रस्यरुद्रस्योच्चैः डमरुकशब्देनबद्धाऽभ्यसूयायेनतथाभूतोऽयंकर्णघोरोनृहरेर्घोषोनोंऽहसांपापानांसमुदायंक्षपयतु ॥ ७२ ॥ ॥७

किंच कल्पांतसमयेसमुज्जृंभतांअंभोदानांगुंफेसमूहेस्फूर्जतामशनीनांस्फुरंत्यापुरुरटितायाबृहद्गर्जनायाअनल्पान्गर्वप्ररोहान्मंक्षुक्षुंदानआ शुचूर्णीकुर्वाणः पुनश्चक्रीडायैयोवराहेंद्रस्तस्यनासायाःसरभसंसवेगंविसरन्योघोरोघूर्घोलक्षणःशब्दस्तस्यश्रीरिवश्रीर्यस्यसगंभीरःतेन्नृहरेर हृहासोहेहरहरेतिसंभ्रमेवीप्सा वेगेननःपापानिहन्यात् ॥७२॥ एवंविशिष्टस्तुतिभिर्नृहरौप्रशांतेसतिएषमुनिःपद्मपादःस्वंभावमेत्यशांतोबभूव

क्षुंदानोमंक्षुकल्पावधिसमयसमुज्जृंभदंभोदगुंफस्फूर्जद्दंभोलिसंघस्फुरदुरुरटिताखर्वगर्वप्ररोहान् ॥ क्रीडाक्रोडेंद्रघोणासरभसविसरद्घोरघूर्घोरवश्रीर्गंभीरस्तेट्टहासोहरहरनृहरेरंहसांहांसिहन्यात् ॥ ७३ ॥ एवंविशिष्टनुतिभिर्नृहरौप्रशांतेस्वंभावमेत्यमुनिरेषबभूवशांतः ॥ स्वप्नानुभूतिमिवशांतमनाःस्वमेनमात्मानमात्मगुरवेप्रणतिंचकार ॥ ७४ ॥ चारित्र्यमेतत्प्रयतस्त्रिसंध्यंभक्त्यापठेद्यःशृणुयादवंध्यं ॥ तीर्त्वापमृत्युंप्रतिपद्यभक्तिंसभुक्तभोगःसमुपैतिमुक्तिं ॥ ७५ ॥ इतिश्रीमाधवीयेतदुग्रभैरवनिर्जयः ॥ संक्षेपशंकरजयेसर्गएकादशोऽभवत् ॥ ११ ॥ मूल ॥ संख्या ॥ १०८ ॥

ततश्चशांतमनाःस्वमानुभूतिमिवैनंस्वात्मानंस्वगुरवेप्रकर्षेणनतिंचकार ॥ ७० ॥ ७४ ॥ उक्तचारित्र्यपठनादेःफलमाह चारित्र्यमिति प्रयतः सावधानःअवंध्यमनिष्फलं ॥ ऊ० ॥ ७५ ॥ इतिश्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपूज्यपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिकृतेश्रीशंकराचार्यविजयडिंडिमेएकादशःसर्गः ॥ ११ ॥ ॥ टीकासंख्या ॥ १७१ ॥

श्री० ॥ अथहस्तामलकादिप्रसंगंसपरिकरंवर्णयितुमारभते अथानंतरमेकस्मिन्कालेयतिचक्रवर्त्तीश्रीशंकरः शिष्यैःसह सर्वाणितीर्थानिचरन् घोरात्कलेर्गोपितोरक्षितोधर्मोयेनतं अभ्यर्णःअविदूरःचलःसमुद्रस्यौघोरयोयस्यतंगोकर्णमागात् अभेश्चाविदूरइत्यनेनादेर्निष्ठायाइण्निषेधः ॥ उ० ॥ १॥ गत्वाचप्रणमन्महेशंतुष्टाव॰कथंभूतमितितत्राह विरिंचिनाब्रह्मणा विरिच्योथविरिंचिश्चब्रह्मण्यपिविरंचिनइतिविश्वप्रकाशः कमलनाभेनविष्णुनाचवंद्यं यतःप्रपंचलक्षणस्यनाट्यस्याद्भुतसूत्रधारं कूटस्थत्वेसतितत्कर्तृत्वेनाश्चर्यरूपंनाटकाचार्यंयतोमायासचिवमित्याह वामार्द्धेवधूटिर्वधूर्यस्यतं तथाप्यस्तोदुष्टानांकामक्रोधादीनांलेपोयस्मात्तं ॥ २ ॥ कामारेर्वपुःस्मरामि क्वचनदक्षिणभागेबलाहकेनमेघेनाद्वैत

श्री० ॥ अथद्वादशःसर्गः॥अथैकदासौयतिसार्वभौमस्तीर्थानिसर्वाणिचरन्सतीर्थ्यैः॥घोरात्कलेर्गोपितधर्ममा
गाद्गोकर्णमभ्यर्णचलार्णवौघं॥ १ ॥ विरिंचिनांभोरुहनाभवंद्यंप्रपंचनाट्याद्भुतसूत्रधारं ॥ तुष्टाववामार्द्धवधू
टिमस्तदुष्टावलेपंप्रणमन्महेशं॥ २ ॥ वपुःस्मरामिक्वचनस्मरारेर्बलाहकाद्वैतवदावदश्रि ॥ सौदामिनीसाधित
संप्रदायसमर्थनादेशिकमन्यतश्च॥ ३ ॥ दामांगसीमांकुरदंशुतृण्याचंचन्मृगांचत्तरदक्षपाणि ॥ सव्यान्यशो
भाकलमाग्रभक्षसाकांक्षकीरान्यकरंमहोस्मि॥ ४ ॥

स्याभेदस्यवदावदावादिनीश्रीर्यस्मिन् अन्यतोवामभागतश्चविद्युतासाधितस्यमेघाविनाभावादिरूपस्यसंप्रदायस्यसमर्थनायांदेशिकंगुरुं॥ ३ ॥ किंच वामांगलक्षणेसीम्निक्षेत्रे सीमाघटिस्थितिक्षेत्रेष्वंडकोशेपिचस्त्रियामितिमेदिनी अंकुरंत्यारोहंत्यांकिरणलक्षणायांतृण्यायांतृणसमूहेचंचन्मृगेणस्फुरत्तरोदक्षिणहस्तोयस्यतत्तथा सव्यान्यस्यदक्षिणभागस्यशोभैवकलमःसस्यं कलमःपुंसिलेखन्यांशालौपाटच्चरेपिचेतिमेदिनी तस्याग्रस्यभक्षणेसाकांक्षःकीरःशुकोन्यकरेवामहस्तेयस्यतंमहोहमस्मि तत्रशिवकरेमृगःपार्वतीहस्तेशुकइतिबोध्यं ॥ ४ ॥

किंच धराधरस्य हिमाचलस्य कन्यायागलेनसंलग्नोऽपिमांगल्यतंतुःसौभाग्यसूत्रंयस्यकंठदेशेहालाहलंकुंठशक्तिमकृत सोयंभूमाऐक्यानुभ
वादहमेवास्मि ॥ ५ ॥ गुणातीतैर्विभाव्यंविभावनीयंगोकर्णनाथमित्थंवचसार्चयित्वा तिस्रःरात्रीस्त्रिजगत्पवित्रेक्षेत्रेसैषमुदाकालंक्षिपतिस्म





॥ ६ ॥ ततश्चवैकुंठकैलासयोर्विवर्तभूतंस्वातिरिक्ताकारेणवर्त्तनंविवर्त्तस्तद्रूपंतयोरूपांतरंनताघंहरत् हरिशंकराख्यंदिव्यंस्थलंतीर्थप्रवासीदे



महीध्रकन्यागलसंगतोऽपिमांगल्यतंतुःकिलहालहालं॥ यत्कंठदेशेकृतकुंठशक्तिमैक्यानुभावादयमस्मिभू
मा॥ ५॥ गुणत्रयातीतविभाव्यमित्थंगोकर्णनाथंवचसार्चयित्वा ॥ तिस्रःसरात्रीस्त्रिजगत्पवित्रेक्षेत्रेमुदै
षक्षिपतिस्मकालं॥ ६॥ वैकुंठकैलासविवर्तभूतंहरन्नताघंहरिशंकराख्यं ॥ दिव्यस्थलंदेशिकसार्वभौमस्ती
र्थप्रवासीनचिरादयासीत्॥ ७॥ भ्रमापनोदायभिदावदानामद्वैतमुद्रामिहदर्शयंतौ॥ आराध्यदेवौहरिशंक
रौसद्व्यर्थाभिरित्यर्चयतिस्मवाग्भिः॥ ८॥

शिकसार्वभौमःशीघ्रमेवागात् ॥ ७॥भेदवादिनांभ्रमापनोदायास्मिन्लोकेअद्वैतमुद्रांदर्शयंतौहरिशंकरौदेवावाराध्यःसश्रीशंकरइतिवक्ष्यमाणप्र
कारेणद्व्यर्थाभिर्वाग्भिरर्चयतिस्म ॥ ८ ॥

ताएवोदाहरति वंद्यंसप्तर्ष्यादिभिर्वंदनीयं महतःसोमस्यप्रलयाब्धिनीरस्यकलाभिरंशैःकलायांमूलेवाविलासःक्रीडायस्य सोमःकुबेरेपितृदेवतायांवसुप्रभेदेचसुधाकरेच दिव्यौषधीश्यामलतासमीरकर्पूरनीरेषुचवानरेचेतिविश्वप्रकाशः कलास्यान्मूलरैवृद्धौशिल्पादावंशमात्रकइतिमेदिनी सोमकस्यवेदापहारकस्यासुरस्यलावीनाशकोलासःक्रीडायस्येतिवा तथाभूतमनादिसर्वकारणत्वादकारणंमैनंमात्स्यंदिव्यमप्राकृतंकिंचनाचिंत्यंतेजोंगीकुर्वन्गांनौकारूपांभूमिमादरेणाकलयन्विकर्षन्विभुरनंतशक्तिव्यापकोविभुर्मेकुशलानिकुर्यात् तथाचोक्तं रूपंसजगृहेमात्स्यंचाक्षुषोदधिसंप्लवे नाव्यारोप्यमहीमय्यामपाद्वैवस्वतंमनुमिति अहंत्वामृषिभिःसाकंमहानावमुदन्वति विकर्षन्विचरिष्यामियाव

वंद्यंमहासोमकलाविलासंगामादरेणाकलयन्ननादिं॥ मैनं
महःकिंचनदिव्यमंगीकुर्वन्विभुर्मेकुशलानिकुर्यात् ॥ ९ ॥

द्ब्राह्मीनिशाप्रभोइतिच अनादिभूतांगांवेदवाचमादरादाकलयन्प्रत्याहरन्नितिवा तथाचोक्तं अतीतेप्रलयापायेउत्थितायसवेधसे हत्वासुरंहयग्रीवंवेदान्प्रत्याहरद्धरिरिति पक्षेसोमस्यचंद्रस्यकलायाविलासोयस्मिस्तयासहविलासोयस्येतिवा सोमानांहिमालयोद्भवानांदिव्यौषधीनांकलाभिरितिवा सोमस्यकर्पूरस्येतिवा अनादिभूतांगांश्रुतिमादरेणाकलयन्विचारयन् गांवृषभमादरेणप्रेरयन्नितिवा मेनायाहिमाचलभार्यायाजातंकिंचनपार्वतीलक्षणंमहोंगीकुर्वन्नितिव्याख्येयंइति ॥ इंद्र० ॥ ९ ॥

एवंमत्स्यावतारमभिधायाथकमठावतारंनिरूपयन्नाह योमंदराख्यमचलंदधत् आदितेयान्देवान्सुधाभुजआननुतेस्मा विषादीखेदरहितःस
भवानद्रेमंदराचलस्यलीलायांभ्रमणात्मविलासार्थमुचितायोग्याचारुमूर्त्तिर्यस्यतस्यसंबोधनंहेअद्रिलीलोचितचारुमूर्त्तेकूर्ममूर्त्ते स्वामपारां

कृपांविधत्तां पक्षेयोमंदरागंमंदराख्यपादपंदधद्विषादीस्वयंविषभक्षकोदेवान्सुधाभुजोव्यातनुतेस्माद्रौकैलासेयालीलाविलासःतस्यामुचिता
चारुमूर्त्तिर्यस्येतिव्याख्येयं अगःस्यान्नगवत्पृथ्वीधरपादपयोःपुमान् मंदरस्तुपुमान्मंथशैलेमंदारपादपइतिमेदिनी ॥ ३० ॥ १० ॥ अथवा
राहावतारंवर्णयन्नाह यउच्चैर्महेर्महिमानंचित्तोन्नतिमुल्लासयन्स्फुरन्योवराह्याःसूकर्याईशोवराहीशस्तत्कलेवरस्तद्विग्रहोऽभूत् मानश्चचि


योमंदरागंदधदादितेयान्सुधाभुजःस्मातनुतेऽविषादी ॥ स्वामद्रिलीलोचितचारुमूर्त्तेकृपामपारांसभवा
न्विधत्तां ॥ १० ॥ उल्लासयन्योमहिमानमुच्चैःस्फुरद्वराहीशकलेवरोऽभूत् ॥ तस्मैविदध्मःकरयोरजस्रं…यंत
नांभोरुहसामरस्यं ॥ ११ ॥ समावहन्केसरितांवरांयःसुरद्विपत्कुंजरमाजघान ॥ प्रह्लादमुल्लासितमादधा
नंपंचाननंतंप्रणुमःपुराणं ॥ १२ ॥

त्तोन्नतौग्रहइतिविश्वप्रकाशः पक्षेवराहीशकलेवरःशेषविग्रहस्तस्मैवराहीशोवामुकिःकलेवरेयस्येतिवा हस्तयोर्मुकुलितपद्मसाम्यमजस्रंवि
दध्मः ॥ ११ ॥ अथनृसिंहावतारंनिरूपयन्नाह तंपंचास्यंसिंहंपरमात्मानं पुराणंसदैकरसं प्रणुमस्तंकमितितत्राह योवरांकेसरितांनृहरितां
सुमावहन्सुरद्विषतांकुंजरंहिरण्यकशिपुमाजघान तंपुनःप्रह्लादमुल्लासितमादधानं पक्षेपंचमुखंसदाशिवं यःकेशिरसिसरितांनदीनांमध्ये
वरांश्रेष्ठांगंगांसमावहन् सुरशत्रुंगजासुरमाजघान प्रकर्षेणाल्हादमुल्लासितमादधानमित्यर्थः ॥ १२ ॥

अथवामनावतारंवर्णयन्नाह योबलेःसकाशात्त्रैलोक्याहरणाभिलाषः सुंदरंमृगचर्मवसानोवामनः उदीतउदितोभूत् कांतयारहितः तपांसि
व्यतानीत्सोयमाश्रमिणामाद्योब्रह्मचारीनोऽस्मानवतात् पक्षेयोमनोहारिमनोज्ञमजिनंवसानोदक्षाध्वराद्बलेराहरणाभिलाषोउदीतकांतयास
त्या ॥ वि० ॥ १३ ॥ अथपरशुरामावतारंनिरूपयन्नाह येनाधिकंयथास्यात्तथोद्यत्तरेणवारिणाबालकेनपरशुरामेणार्जुनःकार्त्तवीर्यः शी
घ्रंसंगररंगभूमौयुद्धरंगभूमौजितः वारिर्वाग्गजबंधन्योःस्त्रीकंर्विबुनिबालके अर्जुनःककुभेपार्थेकार्त्तवीर्यमयूरयोः मातुरेकसुतेऽपिस्याद्धवलेषु
नरन्यवदितिमेदिनी नक्षत्रनाथवच्चंद्रवत्स्फुरितेनतेनकेनापिनाथेनवयंसनाथाः पक्षेअधिकंशिरसिवारिजलंयस्यार्जुनःपार्थः नक्षत्रनाथेनस्फु

उदीनवल्याहरणाभिलाषोयोवामनोहार्यजिनंवसानः ॥ तपांसिकांतारहितोव्यतानीदाद्योवतादाश्रमिणा
मयंनः ॥ १३ ॥ येनाधिकोद्यत्तरवारिणाशुजितोर्जुनःसंगररंगभूमौ ॥ नक्षत्रनाथस्फुरितेनतेननाथेनकेना
पिवयंसनाथाः ॥ १४ ॥ विलासिनालीकभवेनधाम्नाकामंद्विपंतंसदशास्यमस्यन् ॥ देवोधरापत्यकुचोष्म
साक्षीदियादमंदात्मसुखानुभूतिं ॥ १५ ॥

रितोन्यश्चेत्यर्थः ॥ १४ ॥ श्रीरामचंद्रावतारंनिरूपयन्नाह अलीकोऽसत्योभवःसंसारोयस्मिंस्तथाभूतेनविलासिनास्वधाम्नास्वज्योतिषायथेष्टंद्विषं
तं रावणमस्यन्नुत्क्षिपन्नाशयन् धराभूमिस्तस्याअपत्यंसीतातस्याःकुचयोरुष्णतायाःसाक्षीसाक्षाद्द्रष्टासदेवोऽमंदसुखानुभूतिमर्मितब्रह्मानंदा
नुभवंदेयात् पक्षेदशेंद्रियाणिमुखानियस्य तथाभूतंद्विपंतंकाममस्यन्धरस्यपर्वतस्यापत्यंपार्वतीतस्याःकुचोष्मसाक्षीतिव्याख्येयं धरोगिरौ
कार्पासतूलकेकूर्मराजेवस्वंतरेऽपिचेतिमेदिनी ॥ १५ ॥

अथबलरामावतारंवर्णयन्नाहोच्चतालकेतुः स्थिराधर्ममसीधर्मीयवामूर्त्तिर्यस्यहालाहलयोःसुराहलयोःस्वीकरणे हालासुरायामितिमेदिनी तथापिश्रेष्ठकंठोरोहिणीशेनवसुदेवेनानिशंचुंब्यमानमुत्तमांगंशिरोयस्यसकोपिभूमाअवाङ्मनसगोचरोयत्रनान्यत्पश्यतिनान्यच्छृणोतिनान्य द्विजानातिसभूमायोवैभूमातत्सुखमितिश्रुत्युपलक्षितःपरमात्माऽवतु पक्षेउत्कृष्टतालेगीतकालेकेतुःरुक्यस्य मोक्षधर्ममयीमोक्षधर्मायवामूर्त्तिर्यस्यमोक्षधर्मस्यमूर्त्तिःकार्यंतत्प्राप्यइतिवा हालाहलस्यविषस्यस्वीकरणेनोग्रकंठोहालाहलस्वीकरणेपिश्रेष्ठकंठइतिवा रोहिणीशश्चंद्रः ताल:करतलेंगुष्ठमध्यमायांचसंमिते गीतकालक्रियामानेकरस्फालेद्रुमांतरे केतुर्नारुक्पताकारियहोत्पातेषुलक्ष्मणि स्थिराभूशालपर्ण्योर्नासि

उत्तालकेतुःस्थिरधर्ममूर्तिर्हालाहलस्वीकरणोग्रकंठः ॥ सरोहिणीशानिशचुंब्यमाननिजोत्तमांगोवतुकोपिभूमा॥ १६॥ विनायकेनाकलिताहितापंनिषेदुषोत्संगभुविप्रहृष्यन् ॥ यःपूतनामोहिकचित्तवृत्तिरव्यादसौकोऽपिकलापभूषः॥ १७॥

नेमोक्षेबलेत्रिषु मूर्त्तिःकार्यकाठिन्ययोःस्त्रियामितिमेदिनी ॥ १६ ॥ अथश्रीकृष्णावतारंवर्णयन्नाह कलितंसमासादितमहितापंयथास्यात्तथोत्संगभुविसमीपस्थानेनिषेदुषानिषण्णेनोपविष्टेनविनायकेनगरुडेनोपलक्षितोयःपूतनायामोहिकाचित्तवृत्तिर्यस्य कलापःबर्हंभूषालंकारोयस्यासौकोपिवर्णयितुमशक्यःप्रहृष्यन्सन्नव्यात् संसृतिलक्षणादनर्थादवतु पक्षेआकलिताःशुंडयासमासादिताःशिवशिरसिस्थापिताआपोयस्यांक्रियायां तथांकस्थानेनिषेदुषाविनायकेनविघ्नराजेनोपलक्षितोयः पूतंपवित्रंनामयस्योहिकेषुस्वर्चितकेषुचित्तवृत्तिर्यस्यतेषांचित्तवृत्तिर्यस्मिन्नितिवा कलापस्तूणंभूषायस्यासावित्यर्थः ॥ १७ ॥

अथबुद्धावतारंनिरूपयन्नाह पाठीनकेतोःमीनकेतोःकामस्यजयिने मारजिल्लोकजिज्जिनइत्यमरः प्रतीतःप्रख्यातःसर्वज्ञभावोयस्यतस्मैदयैक सीम्ने प्रायःक्रतुषुयज्ञेषुद्वेषोयेषांतेषुकृतआदरोयेन तैःकृतआदरोयस्मिन्नितिवा तस्मैबोधैकधाम्नेभूम्नेस्पृहयामि एवंभूतंप्राप्तुमिच्छामि पक्षे क्रतौसंकल्पेद्वेषोयेषांतेषु कृतआदरोयेन यद्वा दक्षक्रतौद्वेषवत्सुवीरभद्रादिषुकृतादरसंयेतिव्याख्येयं ॥ इंद्र० ॥ १८ ॥ कल्क्यवतारंवर्णय न्नाह जनानांचेतोविषयंव्यतीत्य विद्योतमानायाचिंत्यविग्रहंस्वीकृत्यप्रकाशमानाय कल्पात्मतमोनिहंत्रे सतामावासायकृतःआशयोये न सतःसत्ययुगस्येतिवा सतामासवोयस्मिंस्तथाभूतेकृतयुगेभिप्रायोयस्येतिवा परिच्छिन्नतांशातयतिभम्नेममभूयांसिनमांसिनमस्काराअ

पाठीनकेतोर्जयिनेप्रतीतसर्वज्ञभावायदयैकसीम्ने ॥ प्रायःक्रतुद्वेषकृतादरायबोधैकधाम्नेस्पृहयामिभूम्ने ॥
॥ १८ ॥ व्यतीत्यचेतोविषयंजनानांविद्योतमानायतमोनिहंत्रे ॥ भूम्नेसदावासकृताशयायभूयांसिमेसंतु
तमांनमांसि ॥ १९ ॥ वृषाकपायीवरयोःसपर्यांवाचातिमोचाररसयेतितन्वन् ॥ मुनिप्रवीरोमुदितात्मका
मोमूकांबिकायाःसदनंप्रतस्थे ॥ २० ॥

तिशयेनसंतु पक्षेचेतोगोचरतयाप्रकाशमानायस्वयंप्रकाशायातएवचक्षुःसहकृतभानुवद्वृत्त्यारूढःसन्तमोनिहंतेत्याहाज्ञानलक्षणतमोनिहं त्रेपुनःपरिपूर्णानंदरूपाय परब्रह्मणे सदैववासायकृतःसर्वस्याशयोंतःकरणंयेन सतामावासेकाश्यादौकृतोऽभिप्रायोयेनेतिवा ॥ उ० ॥१९॥ उपसंहरति इत्येवमतिक्रांतकदलीफलरसयावाचा लक्ष्मीपार्वत्यधीशयोःपूजांवितन्वन् मुदितश्चासावात्मकामश्च मुदिताआत्मकामायेनेति वा समुनिप्रवीरोमूकांबिकायाःसदनंप्रतस्थे ॥ विप० ॥ २१॥

तत्रजातंवृत्तांतमावेदयति विगतप्राणमात्मजमंकेनिधाय हंतेत्यतिकष्टे मुहुःप्ररुद्य महाव्याकुलौयतःसएवैकःपुत्रोययोस्तौदंपतीदृष्ट्वासश्रीशंकरोदयाधीनतयाशुशोच ॥ उ० ॥ २१ ॥ एवमस्मिन्श्रीशंकरेऽपारंशोकंगच्छतिसति उच्चैरशरीरवाचाअभूयताशरीरणीवागभूत् तामुदाहरति संरक्षितुमक्षमस्यनरस्यदयापरंकेवलंदुःखायैवजायेतेत्येवमभूयतेत्यर्थः ॥ २२ ॥ तामशरीरिर्णीवाचमाकर्ण्यासौविज्ञःश्रीशंकरइतिव्याहरतिस्म तदाहेदंसत्यंजगत्त्रयीरक्षणकुशलस्यैवंवक्तुस्त्वैवैकस्यतुसादयाशोभते तथादययासमर्थेनत्वयैतयोःशोकोपाकरणीयइतिभावः ॥ २३ ॥

अंकेनिधायव्यसुमात्मजातंमहाकुलौहंतमुहुःप्ररुद्य ॥ तदेकपुत्रौद्विजदंपतीसद्दृष्ट्वादयाधीनतयाशुशोच ॥
॥ २१ ॥ अपारमंचत्यथशोकमस्मिन्नभूयतोच्चैरशरीरवाचा ॥ जायेतसंरक्षितुमक्षमस्यजनस्यदुःखायपरंदयेति ॥ २२ ॥ आकर्ण्यवाणीमशरीरिर्णींतामसाविति व्याहरतिस्मविज्ञः ॥ जगत्त्रयीरक्षणदक्षिणस्यसत्यंतवैकस्यतुशोभतेसा ॥ २३ ॥ इतीरयत्येवयतौद्विजातेस्तुतःसुखंसुप्तइवोदतिष्ठत् ॥ समीपगैःसर्वजनीनमस्यचारित्र्यमालोक्यविसिस्मयेच ॥ २४ ॥ रम्योपशल्यंकृतमालसालरसालहिंतालतमालशालैः ॥ सिद्धिस्थलंसाधकसंपदांतन्मूकांबिकायाःसदनंजगाहे ॥ २५ ॥

इत्येवंयतौकथयत्येवब्राह्मणस्यसुतःसुखंसुप्तइवोत्थितःसर्वस्मैजनायहितंसार्वजनीनमस्यश्रीशंकरस्यचारित्र्यमालोक्य समीपगैर्विशेषेण विस्मयश्चप्राप्तः सर्वजनादिभ्यःठञ्खश्चेतिखः ॥ २४ ॥ कृतमालैःसालादिवृक्षविशेषैः रम्यमुपशल्यंग्रामांतंयस्य ग्रामांतमुपशल्यंस्यादित्यमरः साधकसंपदांसिद्धिस्थलंतन्मूकांबिकायाःसदनंजगाहे ॥ व० ॥ २५ ॥

उच्चोब्रह्मलोकानंदोऽवचोनीचोयस्मात्तथाभूतानंदजन्यंबाष्पमुच्चैरुद्गीर्णरोमांचंचयथास्यात्तथोदारभक्तिःसःश्रीशंकरइहलोकेऽपारकृपावलं बामंबांपूजयन्निस्तुलंनिरुपमंयथास्यात्तथास्तुतवान् ॥ इंद्र० ॥ २६ ॥ स्तुतिमेवदर्शयति परार्द्धस्यपरार्द्धसंख्यायाःपारतामतिक्रांतायास्तव चरणकमलभासोमयूखास्तासुषष्ट्युत्तरंत्रिशतंतुभासोवह्निसूर्यचंद्रानाविश्यजगंत्यालोकवंत्यादधतेकुर्वंति भासस्तुअणिमादिभिरावृतांमयूखै रित्यादिवदताश्रीनाथेनोक्तावेदितव्याः ॥ २७ ॥ हेदेविमहांतोंऽतर्मनसि आवाहनासनारोपणसुगंधितैलाभ्यंगमज्जनशालाप्रवेशनाद्यैश्चतुः

उच्चावचानंदजबाष्पमुच्चैरुद्गीर्णरोमांचमुदारभक्तिः ॥ अंबामिहापारकृपावलंबांसंभावयन्नस्तुतनिस्तुलं सः ॥ २६ ॥ पारेपरार्द्धंपदपद्मभास्सुषष्ट्युत्तरंतेत्रिशतंतुभासः ॥ आविश्यवह्न्यर्कसुधामरीचीनालोकवंत्याद धतेजगंति ॥ २७ ॥ अंतश्चतुःषष्ट्युपचारभेदैरंतेवसत्कांडपटप्रदानैः ॥ आवाहनाद्यैस्तवदेविनित्यमाराधना मादधतेमहांतः ॥ २८ ॥ अंबोपचारेष्वधिसिंधुपष्टिशुद्धाज्ञयोःशुद्धिदमेकमेकं ॥ सहस्रपत्रेद्वितयेचसाधुतन्वं तिधन्यास्तवतोषहेतोः ॥ २९ ॥

षष्ट्युपचारभेदैस्तथांतेवसत्कांडपटप्रदानैरंतेवसतांकांडपटानांदूष्याधोलंबिवायुसंचारार्थानांपटानांप्रदानैर्हेदेविमहांतोनित्यमाराधनामादध तेकुर्वंति अपटीकांडपटःस्यादितिवैजयंती ॥ २८ ॥ किंचहेंबचतुःषष्ट्युपचारेषुमध्येएकमेकमुपचारंशुद्धाज्ञयोर्द्वितयेसहस्रदलेध्रुवमंडलसंज्ञे पद्मेचधन्याःपुरुषास्तवतोषार्थंसाधुसम्यक्तन्वंतिविस्तारयंति ॥ ३० ॥ २९ ॥

तत्रजातंवृत्तांतमावेदयति विगतप्राणमात्मजमंकेनिधाय हंतेत्यतिकष्टे मुहुःप्ररुद्य महाव्याकुलौयतःसएवैकःपुत्रोययोस्तौदंपतीदृष्ट्वासश्रीशंकरोदयाधीनतयाशुशोच ॥ उ० ॥ २१ ॥ एवमस्मिन्श्रीशंकरेऽपारंशोकंगच्छतिसति उच्चैरशरीरवाचाअभूयताशरीरणीवागभूत् तामुदाहरति संरक्षितुमक्षमस्यनरस्यदयापरंकेवलंदुःखायैवजायेतेत्येवमभूयतेत्यर्थः ॥ २२ ॥ तामशरीरिणींवाचमाकर्ण्यासौविज्ञःश्रीशंकरइतिव्याहरतिस्म तदाहेदंसत्यंजगत्त्रयीरक्षणकुशलस्यैवंवकुस्तवैवैकस्यतुसादयाशोभते तथादययासमर्थेनत्वयैतयोःशोकोपाकरणीयइतिभावः ॥ २३ ॥

अंकेनिधायव्यसुमात्मजातंमहाकुलौहंतमुहुःप्ररुद्य ॥ तदेकपुत्रौद्विजदंपतीसदृष्ट्वादयाधीनतयाशुशोच ॥
॥ २१ ॥ अपारमंचत्यथशोकमस्मिन्नभूयतोच्चैरशरीरवाचा ॥ जायेतसंरक्षितुमक्षमस्यजनस्यदुःखायपरंदये
ति ॥ २२ ॥ आकर्ण्यवाणीमशरीरिणींतामसावितिव्याहरतिस्मविज्ञः ॥ जगत्त्रयीरक्षणदक्षिणस्यसत्यंतवैक
स्यतुशोभतेसा ॥ २३ ॥ इतीरयत्येवयतौद्विजातेस्सुतःसुखंसुप्तइवोदतिष्ठत् ॥ समीपगैःसर्वजनीनमस्यचारित्र्य
मालोक्यविसिस्मयेच ॥ २४ ॥ रम्योपशल्यंकृतमालसालरसालहिंतालतमालशालैः ॥ सिद्धिस्थलंसाधकसं
पदांतन्मूकांबिकायाःसदनंजगाहे ॥ २५ ॥

इत्येवंयतौकथयत्येवब्राह्मणस्यसुतःसुखंसुप्तइवोत्थितःसर्वस्मैजनायहितंसार्वजनीनमस्यश्रीशंकरस्यचारित्र्यमालोक्य समीपगैर्विशेषेणविस्मयश्चप्राप्तः सर्वजनादिभ्यःठञ्खश्चेतिखः ॥ २४ ॥ कृतमालैःसालादिवृक्षविशेषैः रम्यमुपशल्यंग्रामांतंयस्य ग्रामांतमुपशल्यंस्यादित्यमरः साधकसंपदांसिद्धिस्थलंतन्मूकांबिकायाःसदनंजगाहे ॥ व० ॥ २५ ॥

उच्चोब्रह्मलोकानंदोऽवचोनीचोयस्मात्तथाभूतानंदजन्यंबाष्पमुच्चैरुद्गीर्णरोमांचंचयथास्यात्तथोदारभक्तिःसःश्रीशंकरइहलोकेऽपाररूपावलं बामंबांपूजयन्निस्तुलंनिरुपमंयथास्यात्तथास्तुतवान् ॥ इंद्र० ॥ २६ ॥ स्तुतिमेवदर्शयति परार्द्धस्यपरार्द्धसंख्यायाःपारतामतिक्रांतायास्तव चरणकमलभासोमयूखास्तासुषष्ट्युत्तरंत्रिशतंतुभासोवह्निसूर्यचंद्रानाविश्यजगंत्यालोकवंत्यादधतेकुर्वंति भासस्तुअणिमादिभिरावृतांमयूखैः रित्यादिवदताश्रीनाथेनोक्तावेदितव्याः ॥ २७ ॥ हेदेविमहांतोंऽतर्मनसि आवाहनासनारोपणसुगंधितैलाभ्यंगमज्जनशालाप्रवेशनाद्यैश्चतुः

उच्चावचानंदजबाष्पमुच्चैरुद्गीर्णरोमांचमुदारभक्तिः ॥ अंबामिहापाररूपावलंबांसंभावयन्नस्तुतनिस्तुलं सः॥२६॥ पारेपरार्द्धंपदपद्मभास्सुषष्ट्युत्तरंतेत्रिशतंतुभासः॥ आविश्यवह्न्यर्कसुधामरीचीनालोकवंत्याद धतेजगंति॥ २७॥ अंतश्चतुःषष्ट्युपचारभेदैरंतेवसत्कांडपटप्रदानैः॥ आवाहनाद्यैस्तवदेविनित्यमाराधना मादधतेमहांतः॥२८॥ अंबोपचारेष्वधिसिंधुषष्टिशुद्धाज्ञयोःशुद्धिदमेकमेकं॥ सहस्रपत्रेद्वितयेचसाधुतन्वं तिधन्यास्तवतोषहेतोः॥ २९॥

षष्ट्युपचारभेदैस्तथांतेवसत्कांडपटप्रदानैरंतेवसतांकांडपटानांदूष्याधोलंबिवायुसंचारार्थानांपटानांप्रदानैर्हेदेविमहांतोनित्यमाराधनामादध तेकुर्वंति अपटीकांडपटःस्यादितिवैजयंती ॥ २८ ॥ किंचहेंबचतुःषष्ट्युपचारेषुमध्येएकमेकमुपचारंशुद्धाज्ञयोर्द्वितयेसहस्रदलेध्रुवमंडलसंज्ञे पद्मेचधन्याःपुरुषास्तवतोषार्थंसाधुसम्यक्तन्वंतिविस्तारयंति ॥ उ० ॥ २९ ॥

हेंऽवकेचित्याकृतास्तवाराधनंवहिरेवकुर्युरेकतमेमध्यमास्त्वंतर्वहिश्चैवान्येउत्तमास्त्वंतरेवापरेऽप्युत्तमास्तत्त्वविदस्तु हेअंव कदापिनकुर्युःकुतइति
चेत्तत्राह यतस्त्वदैक्यानुभवैकनिष्ठास्त्वयासहस्वस्यपदैक्यंवक्यानुभवेविज्ञानेमुख्यानिष्ठायेषांते ॥ इंद्र० ॥ ३० ॥ हाँआधारशक्तिः १ यँधू
म्रार्चिः २ रंउष्मा ३ लंज्वलिनी ४ वंज्वालिनी ५ शंविस्फुलिंगिनी ६ षंसुश्रीः ७ संसुरूपाया ८ हँकविता ९ हंकव्यवाहा १० कँभौंतपि
नी ११ खंवंतापिनी १२ गंकंधूम्रा १३ पंपंमरीची १४ डं नंज्वालिनी १५ चंधंरुचिः १६ छंदंसुपुम्ना १७ जंधंभोगदा १८ जंतंवि

आराधनंतवबहिरेवकेचिदंतर्बहिश्चैकतमेंतरेव ॥ अन्येपरेत्वंवकदापिकुर्युर्नैवत्वदैक्यानुभवैकनि
ष्ठाः ॥ ३० ॥ अष्टोत्तरत्रिंशतियाःकलास्तास्वर्ध्याःकलाःपंचनिवृत्तिमुख्याः ॥ तासामुपर्यंवतवांघ्रि
पद्मंविद्योतमानंविबुधाभजंते ॥ ३१ ॥

श्वा १९ जंणंवोधिनी २० रंहंधारिणी २१ णंवंक्षमा २२ अंअमृता २३ आंमानदा २४ इंपुष्या २५ ईंतुष्टिः २६ उंपुष्टिः २७ ऊंरतिः
२८ ऋंधृतिः २९ ॠंशशिनी ३० लृंचंद्रिका ३१ लृंकांतिः ३२ एंज्योत्स्ना ३३ ऐंश्रीः ३४ ओंप्रीतिः ३५ औंगदा ३६ अँपूर्णा ३७
अःपूर्णामृता ३८ इत्येतायाअष्टोत्तरत्रिंशतिकलास्तासुपंचकलाबोधिनीप्रमुखानिवृत्तिप्रधानास्तासामुपरि हेंऽबविद्योतमानंप्रकाशमानंतव
चरणारविंदंविबुधाःदेवाःपंडिताश्चभजंते ॥ ३१ ॥

यनत्वदीयभजनंसृष्टिकर्तृत्वादिसामर्थ्यसंपादकमित्याह कालाग्निरूपेणजगंतिदग्ध्वासुधात्मनाप्लाव्यसमुत्सृजंती ममृतात्मनैवचपालयतांत्वा
येध्यायंति तेसृष्टिकर्त्तारोभवंतीतियोजना ॥ उ० ॥ ३२ ॥ तथाचयेसविशेषांत्वामेवंध्यायंतेतएवंभूताभवंति येतुनिर्विशेषांत्वामभेदेनजानं
तितेतुधन्याएवेत्याह येतुगुरूक्त्यादौविदितांसमाधियोगात्सैवाहमस्मीतित्वांप्रत्यभिज्ञाविपर्यंविदध्युस्तेसच्चिदानंदलक्षणंब्रह्माहमस्मीतिप्रत्य
भिज्ञामतस्त्वाद्वैतमतस्यपारंजानंतीतितेतथाभूताधन्याइत्यर्थः ॥ इंद्र० ॥ ३३ ॥ इदानींतत्तच्चक्रेध्यानस्यफलंवदन्स्तौति ऐहिकभोगलुब्धाहे

कालाग्निरूपेणजगंतिदग्ध्वासुधात्मनाप्लाव्यसमुत्सृजंतीं ॥ येत्वामवंतीमम्टतात्मनैवध्यायंतितेसृष्टिकृतोभवं
ति ॥ ३२ ॥ येप्रत्यभिज्ञामतपारविज्ञाधन्यास्तुतेप्राग्विदितांगुरूक्त्या ॥ सैवाहमस्मीतिसमाधियोगात्त्वांप्रत्यभि
ज्ञाविपर्यंविदध्युः ॥ ३३ ॥ आधारचक्रेचतदुत्तरस्मिन्नाराधयंत्यैहिकभोगलुब्धाः ॥ उपासतेयेमणिपूरकेत्वांवा
सस्तुतेपांनगराद्बहिस्ते ॥ ३४ ॥ अनाहतेदेविभजंतियेत्वामंतःस्थितिस्त्वन्नगरेतुतेपां ॥ शुद्धाज्ञयोर्येतुभजंतितेपांक्र
मेणसामीप्यसमानभोगौ ॥ ३५ ॥ सहस्रपत्रेध्रुवमंडलाख्येसरोरुहेत्वामनुसंदधानः ॥ चतुर्विधैकानुभवास्त
मोहःसायुज्यमंवांचतिसाधकेंद्रः ॥ ३६ ॥

मनिभेचतुर्दलेमूलाधारसंज्ञेचक्रेतथातस्मादाधारचक्रादुत्तरस्मिंन्षड्दलेविद्रुमाभेस्वाधिष्ठानसंज्ञेआराधयंते येतुदशदलेधूम्रवर्णेमणिपूरकाख्ये
त्वामुपासते तेषांतुवासस्त्वन्नगराद्बहिरेवभवति ॥ उ० ॥ ३४ ॥ हेदेव्यनाहतसंज्ञेद्वादशदलेपिंगलवर्णेचक्रेतुयेत्वांभजंतितेपांतुत्वन्नगरेंतःस्थि
तिः शुद्धेषोडशदलेधूम्रवर्णेविशुद्धसंज्ञेचक्रेतुयेभजंतितेपांसामीप्यं सहस्रदलेकर्पूरवर्णेआज्ञाचक्रेयेभजंतितेषांत्वत्समानोभोगोभवति ॥ ३५ ॥
ध्रुवमंडलाख्येसहस्रपत्रेकमलेत्वामनुसंदधानःचतुर्विधैक्यानुभवेननिरस्तोमोहोयस्यसअतएवसाधकेंद्रोहंऽवसायुज्यंप्राप्नोति ॥ ३६ ॥

अनुभवस्यचातुर्विध्यंविवृणोति पुरआदौ बिंदुत्रिकोणवसुकोणदशारयुग्ममन्वस्रनागदशसंयुतषोडशारं वृत्तत्रयंचधरणीसदनत्रयंचश्रीच
क्रमेतदुदितंपरदेवतायाः चतुर्भिःशिवचक्रैश्चशक्तिचक्रैश्चपंचभिः नवचक्रैश्चसंसिद्धंश्रीचक्रंशिवयोर्वपुः त्रिकोणमष्टकोणंचदशकोणद्वयंत
॥ ६ ॥ था चतुर्दशारंचैतानिशक्तिचक्राणिपंचच बिंदुश्चाष्टदलंपद्मंतथाषोडशपत्रकं चतुरस्रंचतुर्द्वारंशिवचक्राण्यनुक्रमात् त्रिकोणेचैंदवेश्लिष्टमष्टा १२
रेष्टदलांबुजं दशारयोःषोडशारंभूगृहंभुवनास्रके शैवानामपिशाक्तानांचक्राणांचपरस्परं अविनाभावसंबंधंयोजानातिसचक्रवित् त्रिकोण
रूपिणीशक्तिर्बिंदुरूपःसदाशिवः अविनाभावसंबंधंतस्माद्बिंदुत्रिकोणयोः एवंविभागमज्ञात्वाश्रीचक्रंयःसमर्चयेत् नतत्फलमवाप्नोतिललि

श्रीचक्रषट्चक्रकयोःपुरोथश्रीचक्रमन्त्रोरपिचिंतितैक्यं॥चक्रस्यमंत्रस्यततस्तवैक्यंक्रमादनुध्यायतिसाध
केंद्रः॥ ३७॥ इतितांवचनैःप्रपूज्यभैक्षोदनमात्रेणसतुष्टिमाकृतार्थः॥ वहुसाधकसंस्तुतःकियंतंसमयंतत्र
निनायशांतचेताः॥ ३८॥ अश्रयतिस्मततोग्रहारकंश्रीवलिसंज्ञंसकदाचनस्वशिष्यैः॥ अनुगेहहुताग्निहोत्र
दुग्धप्रसरत्पावनगंधलोभनीयं॥ ३९॥

तावानतुष्यति इत्यादिवचनैरुक्तस्यश्रीचक्रस्योक्तचक्रषट्कस्यचचिंतितंयोगिभिःस्मृतमैक्यंसाधकेंद्रोऽनुध्यायति अथानंतरंश्रीचक्रमंत्रयोर
पिचिंतितैक्यमनुध्यायति ततस्तदनंतरंचक्रस्यतवैक्यंमंत्रस्यचैक्यमित्येवंक्रमादनुध्यायति॥ ३७॥ उपसंहरतीति कियंतंसमयंकालंनिनाय ॥ ६
नीतवान्॥ उपे०॥ ३८॥ ततःकदाचित्स्वशिष्यैःसहश्रीशंकरःश्रीवलीतिसंज्ञायस्यतंद्विजग्रामकंश्रयतिस्म तंविशिनष्टि प्रतिगृहंहुतादग्निहो
त्रदुग्धात्प्रसरतापावनेनगंधेनलोभनीयंप्राप्य विषमेससजागुरूसमेचेत्सभरायश्चवसंतमालिकासा॥ ३९॥

पुनस्तमेववर्णयति शनैर्भ्रांत्वानिजकर्मनिष्ठान्दूरान्निषिद्धंत्यजतःप्रमादशून्यान्द्विजातीन्नरान्दृष्ट्वा प्रदेशमलब्ध्वाऽपमृत्युर्यस्माद्बहिरेवया
ति ॥ उ० ॥ ४० ॥ यस्मिन्नाहिताग्नीनांवेदपाठकानांजनानांद्विसहस्रमवश्यंवेदविहितासुक्रियासुदक्षंप्रथितप्रभावंवसति ॥ ४१ ॥ किंचगि
रिजासहायःपिनाकपाणिर्मध्येवसन्यस्यभूषांकरोति तत्रदृष्टांतद्वयमाह यथाहारस्ययष्टेर्लतिकायाःतरलोमध्यमणिःयथाभूषांकरोति तरल
श्चंचलेखिगेभास्करेपित्रिलिंगकः हारमध्यमणौपुंसीतिमेदिनी यथावा गगनाधिरूढश्चंद्रोरात्रेर्भूषांकरोतितद्वत् ॥ ४२ ॥ तत्रतस्मिन्ग्रामेशा

यतोपमृत्युर्बहिरेवयातिभ्रांत्वाप्रदेशंशनकैरलब्ध्वा॥दृष्ट्वाद्विजातीन्निजकर्मनिष्ठान्दूरान्निषिद्धंत्यजतोऽप्रमत्ता
न् ॥४०॥ यस्मिन्सहस्रद्वितयंजनानामग्न्याहितानांश्रुतिपाठकानां॥वसत्यवश्यंश्रुतिचोदितासुक्रियासुदक्षंप्र
थितानुभावं॥४१॥ मध्येवसन्यस्यकरोतिभूषांपिनाकपाणिर्गिरिजासहायः॥ हारस्ययष्टेस्तरलोयथावैरात्रेरि
वेंदुर्गगनाधिरूढः॥४२॥ तत्रद्विजःकश्चनशास्त्रवेदीप्रभाकराख्यःप्रथितानुभावः॥ प्रवृत्तिशास्त्रैकरतःसुबुद्धिरा
स्तेक्रतून्मीलितकीर्त्तिवृंदः॥४३॥ गावोहिरण्यंधरणीसमग्रासद्वांधवाज्ञातिजनाश्चतस्य॥ संत्येवकिंतैर्नहितोप
एभिःपुत्रोयदस्याजनिमुग्धचेष्टः ॥ ४४ ॥ नवक्तिकिंचिन्नशृणोतिकिंचित्ध्यायन्निवास्तेकिलमंदचेष्टः ॥ रूपे
पुमारोमहसामहस्वान्मुखेनचंद्रःक्षमयामहीसमः॥ ४५॥

ख्यःप्रभाकरसंज्ञःकश्चनास्तेस्म तंविशिनष्टि प्रवृत्तीति क्रतुभिरुन्मीलितंकीर्त्तिवृंदंयेनसः ॥ ४३ ॥ तैःसद्भिःकिं नकिमपि हियस्मादेभिःसर्वै
स्तोषोनास्ति तोषाभावेहेतुर्यद्यस्मादस्यपुत्रोमुग्धचेष्टोऽजनि ॥ इंद्र० ॥ ४४ ॥ तदीयांतांचेष्टामेवदर्शयति नेति तदीयंरूपंवर्णयति रूपेपुमा
रःकामः महसातेजसामहस्वान्सूर्यः ॥ उ० ॥ ४५ ॥

अधुनातत्पितृचेष्टांदर्शयति तत्पिताइत्येवमनिशंसंचिंतयन् समागतान्बहुश्रुतान्प्रष्टुमनास्तिष्ठतिस्म ॥ ४६ ॥ ततःकदाचिद्बहुपुस्तकभारैः शिष्यैःसहतंग्रामंप्रतिसमागतंकंचनपूज्यपादंशुश्राव ततश्चानिंदितात्मासप्रभाकरस्तस्यपूज्यपादस्यनिकटंपुत्रंनीतवान् ॥ आ० ॥ ४७ ॥ किंशून्यहस्तएवगतोनेत्याह शून्यहस्तइति रिक्तहस्तस्तुनोपेयाद्राजानंदैवतंगुरुमितिशास्त्रवित्स्वयंसोपायनोगुरुंश्रीशंकरंप्राप किंतदुपायनमित्यपेक्षायामाह फलंव्यशिश्रणत्प्राबच्छत् अस्यगुरोःपादकमलेननामच ॥ उ० ॥ ४८ ॥ भस्मनानिगूढवह्निवज्जडतुल्याकृतिंतंपुत्रंचतदीयपा

ग्रहग्रहात्किंजडवद्विचेष्टतेकिंवास्वभावादुतपूर्वकर्मणः ॥ संचिंतयंस्तिष्ठतितत्पितानिशंसमागतान्प्रष्टुमनाबहुश्रुतान् ॥ ४६ ॥ शिष्यैःप्रशिष्यैर्बहुपुस्तभारैःसमागतंकंचनपूज्यपादं ॥ शुश्रावतंग्राममनिंदितात्मानिनायसूनुंनिकटंसतस्य ॥ ४७ ॥ नशून्यहस्तोनृपमिष्टदेवंगुरुंचयायादितिशास्त्रवित्स्वयं ॥ सोपायनःप्रापगुरुंव्यशिश्रणत्फलंननामास्यचपादपंकजे ॥ ४८ ॥ अनीनमत्तंचतदीयपादयोर्जडाकृतिंभस्मनिगूढवह्निवत् ॥ सनोदतिष्ठत्पतितःपदांबुजेप्रायःस्वजाड्यंप्रकटंविधित्सति ॥ ४९ ॥ उपात्तहस्तःशनकैरवाङ्मुखंतंदेशिकेंद्रःकृपयोदतिष्ठयत् ॥ उत्थापितेस्वेतनयेपिताब्रवीद्वदप्रभोजाड्यममुष्यकिंकृतं ॥ ५० ॥ वर्षाण्यतीयुर्भगवन्नमुष्यपंचाष्टजातस्यविनाववोधं ॥ नाध्यष्टवेदानलिखच्चनार्णानचीकरंचोपनयंकथंचित् ॥ ५१ ॥

दयोरनीनमत् भस्मनीतिभिन्नंवापदं सपुत्रःप्रायःस्वजाड्यंप्रकटंविधातुंइच्छति ॥ ४९ ॥ उपात्तोगृहीतस्तदीयहस्तोयेन सदेशिकेंद्रःश्रीशंकरःउदतिष्ठयत् उत्थापितवान् ॥ ५० ॥ तज्जाड्यमेववर्णयति वर्षाणीति पंचाष्टत्रयोदश नाध्यष्ट वैवाधीतवान् अर्णान्वर्णान् यथाकथंचिदुपनयंकृतवानस्मि ॥ ५१ ॥

एवंजाड्यंप्रदर्श्याद्भुतांतस्यचेष्टांवर्णयति क्रीडापरइतिद्वाभ्यां ॥ ५२ ॥ यद्यप्येवंतथापिरुष्टेनममायंनताड्यते ॥ ५३ ॥ इत्येवंकथयित्वाप्रभा करेउपरते सतंशंकरदेशिकेंद्रःपप्रच्छ ॥ ५४ ॥ कस्त्वमितिप्रश्नस्योत्तरंवक्तुमादौकिमेवंजडवत्प्रवृत्तःइत्यत्राह नाहंजडःकिंतुमत्संनिधानेनज डःप्रवर्त्तते हेगुरोऽस्मिन्नर्थेअहंनसंदिहे तस्मात्शोकमोहक्षुधापिपासाजरामृत्युलक्षणषडूर्मिभिर्जायतेऽस्तिवर्द्धतेविपरिणमतेऽपक्षीयतेनश्यती

क्रीडापरःक्रोशतिबालवर्गस्तथापिनक्रीडितुमेषयाति ॥ बालाःशठामुग्धमिमंनिरीक्ष्यसंताडयंतेऽपिनरो षमेति ॥ ५२ ॥ भुंक्तेकदाचिन्नतुजातुभुंक्तेस्वेच्छाविहारीनकरोतिचोक्तं ॥ तथापिरुष्टेननताड्यतेऽयंस्वकर्म णावर्धतएवनित्यं ॥ ५३ ॥ इतीरयित्वोपरतेचविप्रेपप्रच्छतंशंकरदेशिकेंद्रः ॥ कस्त्वंकिमेवंजडवत्प्रवृत्तःस चाब्रवीद्बालवपुर्महात्मा ॥ ५४ ॥ नाहंजडःकिंतुजडःप्रवर्ततेमत्संनिधानेननसंदिहेगुरो ॥ षडूर्मिषड्भावविकारवर्जितंसुखैकतानंपरमस्मितत्पदं ॥ ५५ ॥

त्युक्तषड्भावविकारैश्चरहितं सुखैकतानंपरंसर्वोत्तमं तत्पदमहमस्मि परंदेहेंद्रियाद्यतिरिक्तंप्रत्यक्चैतन्यंतत्पदंशोधिततत्पदार्थाभिन्नमितिवा ॥ ५५॥ हेविद्वन् ममैवैषाऽनुभूतिर्मुमुक्षुवर्गस्यभूयादितिनिरूप्यान्यैर्द्वादशभिःपद्यैर्विधुतप्रपंचचिदात्मतत्त्वंबभाषे तथाहि निमित्तंमनश्चक्षुरादि

प्रवृत्तौनिरस्ताखिलोपाधिराकाशकल्पः रविर्लोकचेष्टानिमित्तंयथायःसनित्योपलब्धिस्वरूपोऽहमात्मा ॥ १ ॥ यमग्र्युष्णवन्नित्यबोधस्वरूपं मनश्चक्षुरादीन्यबोधात्मकानि प्रवर्त्ततआश्रित्यनिष्कंपमेकं स० ॥ २ ॥ मुखाभासकोदर्पणेदृश्यमानोमुखत्वात्पृथक्त्वेननैवास्तिवस्तु चिदाभासकोधीषुजीवोपितद्वत् स० ॥ ३ ॥ यथादर्पणाभावआभासहानौमुखंविद्यतेकल्पनाहीनमेकं तथाधीवियोगेनिराभासकोयः स० ॥ ४ ॥ मनश्चक्षुरादेर्वियुक्तःस्वयंयोमनश्चक्षुरादेर्मनश्चक्षुरादिः मनश्चक्षुरादेरगम्यस्वरूपः स० ॥ ५ ॥ यएकोविभातिस्वतःशुद्धचेताःप्रकाशस्वरूपोऽपिनानेवधीषु सएवोदकस्थोयथाभानुरेकः स० ॥ ६ ॥ यथाऽनेकचक्षुःप्रकाशोरविर्नक्रमेणप्रकाशीकरोतिप्रकाश्यं अनेकाधि

ममेवभूयादनुभूतिरेषामुमुक्षुवर्गस्यनिरूप्यविद्वन् ॥ प
द्यैःपरैर्द्वादशभिर्वभाषेचिदात्मतत्त्वंविधुतप्रपंचं ॥ ५६ ॥

योयस्तथैकप्रबोधः स० ॥ ७ ॥ विवस्वत्प्रभातंयथारूपमक्षंप्रगृह्णातिनाभातमेवंविवस्वान् तथाभातआभासयत्येकमक्षं स० ॥ ८ ॥ यथासूर्यएकोप्यनेकश्चलासुस्थिरास्वप्यनन्वग्विभाव्यस्वरूपः चलासुप्रभिन्नास्वधीष्वेकएव स० ॥ ९ ॥ घनच्छन्नदृष्टिर्घनच्छन्नमर्कंयथामन्यतेनिःप्रभंचातिमूढः तथावद्धवद्भातियोमूढदृष्टेः स० ॥ १० ॥ समस्तेषुवस्तुष्वनुस्यूतमेकःसमस्तानिवस्तूनियंनस्पृशंति वियद्वत्सदाशुद्धमच्छस्वरूपः स० ॥ ११ ॥ उपाधौयथाभेदतासन्मणीनांतथाभेदताबुद्धिभेदेषुतेऽपि यथाचंद्रिकाणांजलेचंचलत्वंतथाचंचलत्वंतवापीहविष्णो ॥ १२ ॥ इतिउपदेशः ॥ ५६ ॥

यदेकंपरमात्मतत्त्वंतत्करस्थामलकफलवत्प्रकाशयंतेऽतस्ते श्लोकास्तुहस्तामलकाःप्रसिद्धास्तेषांकर्तुराख्यापितथैवहस्तामलकइतिवृत्ताप्रवृत्ता ॥ उ० ॥ ५७ ॥ उपदेशंविनास्वतएवद्विजवर्यसूनोःपरात्मबोधोजातइतिसंप्रेक्ष्य विस्मयंप्राप्तोदेशिकेंद्रोद्विजवर्यसूनोःशिरसिस्वहस्तंन्यधात् ॥ ५८ ॥ उदात्ततपद्यान्युक्त्वा सुतेनिवृत्तेसतिदेशिकेंद्रस्तदीयंपितरंवचनंबभाषे तदाह भवतासहायंवस्तुंयोग्योनभवति किंचामुनाजड

प्रकाशयंतेपरमात्मतत्त्वंकरस्थधात्रीफलवद्यदेकं ॥ श्लोकास्तुहस्तामलकाःप्रसिद्धास्तत्कर्तुराख्यापितथैववृत्ता॥५७॥ विनोपदेशंस्वतएवजातःपरात्मबोधोद्विजवर्यसूनोः॥ व्यस्मेयंप्रेक्ष्यसदेशिकेंद्रोन्यधात्स्वहस्तंकृपयोत्तमांगे॥५८॥ सुतेनिवृत्तेवचनंबभाषेसदेशिकेंद्रःपितरंतदीयं ॥ वस्तुंनयोग्योभवतासहायंन तेऽमुनार्थोजडिमास्पदेन॥५९॥ पुराभवाभ्यासवशेनसर्वंसवेत्तिसम्यक्नचवक्तिकिंचित् ॥ नोचेत्कथं स्वानुभवैकगर्भपद्यानिभाषेतनिरक्षरास्यः॥६०॥ नसक्तिरस्यास्तिगृहादिगोचरानात्मीयदेहेभ्रमतोऽस्यविद्यते॥ तादात्म्यतान्यत्रममेतिवेदनंयदानसास्वेकिमुबाह्यवस्तुषु॥६१॥

तास्पदेनतवकिंचित्प्रयोजनंनास्ति ॥ ५९ ॥ नन्वेवंभूतेनतवापिकिंप्रयोजनमित्याशंक्याह पुराभवस्यपूर्वजन्मनोऽभ्यासस्यवशेनसतवपुत्रः सर्वंजानाति ॥ ६० ॥ नवस्तुंयोग्योभवतासहायमित्यत्रहेतुमाह अस्यगृहादिविषयासक्तिरासक्तिर्नास्ति तथात्मीयदेहेभ्रमात्तादात्म्यतास्यनविद्यते तथादेहादन्यत्रममेतिज्ञानमस्यनविद्यते सातादात्म्यतातुयदास्वेदेहेनास्तितदाबाह्यवस्तुषुसानास्तीतिकिमुवक्तव्यं ॥ ६१ ॥

इतीरयित्वाभगवान्द्विजात्मजंगृहीत्वापुनरीप्सितांदिशंययौ प्रभाकरसंज्ञोविप्रोऽपिकियत्प्रदेशमनुव्रज्यस्वमंदिरंययौ ननुस्वपुत्रवियोगेव्या
कुलतांकिमितिनप्रापेत्याशंक्याह स्थिरधीर्यतोबद्धश्रुतः ॥ ६२ ॥ ततस्तदनंतरंविष्णुप्रमुखैर्देववृंदैरुपगीयमानःपद्मपादादिभिःसहाप्तकामोरा
जाश्रृंगगिरिंप्रतस्थे शतानंदोमुनेर्भेदेदेवकीनंदनेऽपिचेतीमेदिनी ॥६३॥ यस्मिन्शृंगगिरावधुनापिआत्मभूतामंतरंगःऋष्यशृंगउत्तमंतपश्चरतिय
त्रचसंस्पर्शमात्रेणवितीर्णसमर्पितंभद्रंकल्याणंययासातुंगभद्राख्यानदीविद्योतते ॥ ६४ ॥ यत्रयेसंतोवसंतितान्विशिनष्टि अभ्यागतानांपू

इतीरयित्वाभगवान्द्विजात्मजंययौगृहीत्वादिशमीप्सितांपुनः ॥ विप्रोप्यनुव्रज्यययौस्वमंदिरंकियत्प्रदेशं
स्थिरधीर्बद्धश्रुतः ॥ ६२ ॥ ततःशतानंदमहेंद्रपूर्वैःसुपर्ववृंदैरुपगीयमानः ॥ पद्मांघ्रिमुख्यैःसममाप्तकामःक्षो
णीपतिःशृंगगिरिंप्रतस्थे ॥ ६३ ॥ यत्राधुनाप्युत्तममृष्यशृंगस्तपश्चरत्यात्मभृदंतरंगः ॥ संस्पर्शमात्रेणविती
र्णभद्राविद्योततेयत्रचतुंगभद्रा ॥ ६४ ॥ अभ्यागतार्चाल्पितकल्पशाखाकूलंकषाधीतसमस्तशाखाः ॥ इ
ज्याशतैर्यत्रसमुल्लसंतःशांतांतरायानिवसंतिसंतः ॥ ६५ ॥ अध्यापयामाससभाष्यमुख्यान्ग्रंथान्निजांस्त
त्रमनीषिमुख्यान् ॥ आकर्णनप्राप्यमहापुमर्थानादिष्टविद्याग्रहणेसमर्थान् ॥ ६६ ॥

जयाप्यल्पीकृतानांकल्पवृक्षशाखानांकूलंकषाधीताःसर्वशाखायैरिज्याशतैःसम्यगुल्लसंतःशांतांतरायाःशांतविघ्नाः ॥ इंद्र० ॥ ६५ ॥ तस्मि
न्पर्वतेमनीषिमुख्यान्श्रवणमात्रेणप्राप्यौमहापुरुषार्थोमोक्षोयैस्तानुपदिष्टविद्याग्रहणेसमर्थान्सश्रीशंकरोभाष्यप्रमुखान्निजान्ग्रंथानध्याप
यामासआकर्णनेनप्राप्योमहापुमर्थोयैस्तान्ग्रंथानितिवा ॥ ६६ ॥

शेषमनंतंमदाक्षनमंलज्जयानम्रंकलयन्कुर्वन्निवाशेषंयथास्यात्तथाप्राणिनामांतरतमांसिअज्ञानानिप्राणुदत्अपाकरोत् यतोवाचस्पतिना निर्विशेषंयथाभवतितथानिरस्तंजीवेश्वरयोर्विशेषंव्याचष्ट ॥ ३० ॥ ६७ ॥ ततश्चतस्मिन्पर्वतइंद्रविमानसदृशमाविष्कृतसर्वशिल्पंप्रासादंप्र कल्प्याजाद्यैरपिपूजितायादेवतायाःपूजांसप्रवर्त्तयामास अत्रप्राचःमठंकृत्वातत्रविद्यापीठनिर्माणंकृत्वा भारतीसंप्रदायंनिजशिष्यंचकार य स्त्वद्वैतमतेस्थित्वाभारतीपीठंनिंदकः सयातिनरकंघोरंयावदाभूतसंप्लवं कंचिच्छिष्यंसुरेश्वराख्यंपीठाध्यक्षमकरोदिति ॥ ६८ ॥ सादेवताकेत्या

मंदाक्षनम्रंकलयन्नुशेषंपराणुदत्प्राणितमांस्यशेषं ॥ निरस्तजीवेश्वरयोर्विशेषंव्याचष्टवाचस्पतिनिर्विशेषं ॥ ॥ ६७॥ प्रकल्प्यतत्रेंद्रविमानकल्पंप्रासादमाविष्कृतसर्वशिल्पं ॥ प्रवर्तयामाससदेवतायाःपूजामजाद्यैरपि पूजितायाः॥ ६८ ॥ याशारदांचेत्यभिधांवहंतीकृतांप्रतिज्ञांप्रतिपालयंती ॥ अद्यापिशृंगेरिपुरेवसंतीप्रद्योतते ऽभीष्टवरान्दिशंती॥ ६९ ॥ चित्तानुवर्तीनिजधर्मचारीभूतानुकंपीतनुवाग्विभूतिः ॥ कश्चिद्दिनेयोजनिदेशि कस्ययंतोटकाचार्यमुदाहरंति॥ ७० ॥ स्नात्वापुराक्षिपतिकंबलवस्त्रमुख्यैरुच्चासनंमृदुसमंसददातिनित्यं ॥ सं लक्ष्यदंतपरिशोधनकाष्ठमग्र्यंबाह्यादिकंगतवतेसलिलादिकंच॥ ७१ ॥ श्रीदेशिकायगुरवेतनुमार्जवस्त्रंविश्रा णयत्यनुदिनंविनयोपपन्नः॥ श्रीपादपद्मयुगमर्दनकोविदश्चछायेवदेशिकमसौभृशमन्वयाद्यः॥ ७२ ॥

कांक्षायामाह येति ॥ ६९ ॥ अथतत्रयद्वृत्तंतद्दर्शयितुमारभते चित्तानुवर्तीति तन्वीसूक्ष्मावाग्विभूतिर्यस्यसमंदभाषणइत्यर्थः देशिकस्यक श्चिच्छिष्योऽजनि॥ ७०॥ ससदैवगुरुशुश्रूषणपरइत्याह पुरागुरुस्नानात्पूर्वंस्नात्वाकंबलवस्त्रप्रमुखैरुच्चासनंमृदुकोमलंसमंसमानंक्षिपतिकरोति तंतंकालंसंलक्ष्यैवनत्वाज्ञप्तो नित्यंदंतपरिशोधनकाष्ठंअग्र्यंशास्त्रोक्तंददाति बाह्यादिकंगतवतेजलमृत्तिकादिचददाति ॥ ७०॥ ७१॥ विश्राणयति प्रयच्छतिस्म योसौदेशिकंछायेवान्वगच्छत् ॥ ७२ ॥

वक्तव्यंनोपेक्षतेवावद्वबानभाषते वंशस्थेंद्रवंशामिश्रितत्वादुपजातिः इत्थंकिलान्यास्व पि मिश्रितासुस्मरंतिजातिष्विदमेवनामेत्युक्तत्व
किंच गुरौ तिष्ठ तसतितिष्ठन् तस्मिन्संप्रयातेगच्छन् ब्रुवाणे विनयेनशृण्वन्सन्नकथ्यमानोऽपिहितंविधत्ते यच्चास्यगुरोरहितंतन्नतनोतिनविस्तारयति



॥ ७४ ॥ एवंभूतेतस्मिञ्छिष्यवरेकदाचित्स्वशाटीप्रक्षालनायापवर्त्तनींगाःनदीजलानिप्रतिगतवतिसतितस्यागममनर्मक्ष्यमाणोभक्तेषुवत्सलत

गुरोःसमीपेनतुजातुजृंभतेप्रसारयन्नोचरणौनिषीदति॥ नोपेक्षतेवावद्दुवानभाषतेनपृष्ठदर्शीपुरतोऽस्यति
ष्ठति॥७३॥ तिष्ठन्गुरौतिष्ठतिसंप्रयातेगच्छन्ब्रुवाणेविनयेनशृण्वन्॥ अनुच्यमानोऽपिहितंविधत्तेयच्चाहि
तंतच्चतनोतिनास्य॥ ७४॥ तस्मिन्कदाचनविनेयवरेस्वशाटीप्रक्षालनायगतवत्यपवर्तनींगाः॥ व्याख्या
नकर्मणितदागममीक्ष्यमाणोभक्तेषुवत्सलतयाविललंबएषः॥ ७५॥ शांतिपाठमथकर्तुमसंख्येपूद्यतेषुस
विनेयवरेषु॥स्थीयतांगिरिरपिक्षणमात्रादेष्यतीतिसमुदीरयतिस्म॥ ७६॥ तांनिशम्यनिगमांतगुरूक्तिं
मंदधीरनधिकार्यपिशास्त्रे॥ किंप्रतीक्ष्यतइतिस्महभीतिःपद्मपादमुनिनासमदर्शि॥ ७७॥

याव्याख्यानाख्येकर्मणिविललंब गौःस्वर्गेचबलीवर्देरश्मौचकुलिशेपुमान् स्त्रीसौरभेयीदृग्बाणदिग्वाग्भूम्यप्सुभूम्निचेतिमेदिनी ॥व०॥७५॥
अथानंतरमसंख्यातेषुशिष्यवरेषुशांतिपाठंकर्तुंउद्यतेषुसत्सु सदेशिकेंद्रःस्थीयतांगिरिरपिक्षणमात्रादेष्यतीतिगिरंतिस्म ॥ स्वा० ॥ ७६ ॥ तांवे
दांतरूपांगुरूक्तिंनिशम्यमंदबुद्धित्वाद्भीतिःकुड्यतुल्योजडःशास्त्रेऽनधिकार्यपिकिमर्थंप्रतीक्ष्यतइतिस्महपद्मपादमुनिनाभीतिःसमदर्शि ॥ ७७॥

अखर्वमनल्पं तस्यपद्मपादस्यगर्वमपाकर्तुंस्वयमेवआश्रयोयेषांतथाभूतेषुस्वभक्तेषुकरुणायाअतिशयाच्च सश्रीशंकरस्तत्क्षणएव गिरिनाम्ने
चतुर्द्दशविद्यामनसाआदिदेश ॥ ७८ ॥ सगिरिरयं अग्र्यंतस्यगुरोरनुग्रहमधिगम्य तत्क्षणेन विदिताखिलविद्यः भगवन्नुदधौमृतिजन्मजलेसु
खदुःखझषेपतितंव्यथितं कृपयाशरणागतमुद्धरमामनुशाध्युपसन्नमनन्यगतिं ॥ १ ॥ विनिवर्त्यरतिं विषये विषमांपरिमुच्यशरीरविबद्धमतिं
परमात्मपदेभवनित्यरतोजहिमोहमयंभ्रममात्ममते ॥ २ ॥ विसृजान्नमयादिषुपंचसुतामयमस्मिममेतिमतिंसततं दृशिरूपमनंतमजंविगुणंहृ

तस्यगर्वमपहर्तुमखर्वंस्वाश्रयेषुकरुणातिशयाच्च ॥ व्यादिदेशसचतुर्दशविद्यासद्यएवमनसागि
रिनाम्ने॥ ७८॥ सोधिगम्यतदनुग्रहमग्र्यंतत्क्षणेनविदिताखिलविद्यः ॥ एषदेशिकवरंपरतत्वव्यंज
कैर्ललिततोटकवृत्तैः॥ ७९ ॥

दयस्थमवेहिसदाहमिति ॥ ३ ॥ जलभेदकृतावहुतेवरवेर्घटिकादिकृतानभसोपियथा मतिभेदकृतानुतथाबहुतातवबुद्धिदृशोऽविकृतस्यसदा
॥ ४ ॥ दिनकृत्पभयासदृशेनसदाजनवित्तगतंसकलंस्वचिता विदितंभवताऽविकृतेनसदायतएवमतोसिसदेवसदा ॥ ५ ॥ इत्यादिभिर्गुरुशि
ष्यसंवादेनपरतत्त्वव्यंजकैरिहतोटकमंबुधिसैःप्रथितमित्युक्तलक्षणैस्तोटकवृत्तैःसह देशिकवरंश्रीशंकरं प्रत्यामंत्रयामित्यर्थः स्वा० ॥ ७९ ॥

श्रीमद्देशिकस्यपादपंकजयुगलंमूलंयस्याः सश्रीशंकरएवएकआश्रयोयस्यास्तस्यकारुण्यसुधावसेकेनसहिता तस्यगिरेर्भक्तिलक्षणासद्व
ल्लरी तोटकवृत्तलक्षणेनवृत्तेनप्रबंधेन हृद्यंसुंदरं भोकुमनोयेषांतैःसत्तमलक्षणैःशुकैर्मुहुरास्वाद्यमानं पद्यात्मकंफलंलेभे ॥ शा० ॥ ८० ॥
अत्रविस्मयोनकार्यइत्याशयेनाह येनौन्नत्यंप्रापितासती भूमौयथेष्टंकृतपदालब्धास्पदा अधरीकृतत्रिभुवनपंक्तिः गुर्वीश्रेष्ठा गुरूणांसेवा
उन्नतंपरंपदंमोक्षंगंतुमिच्छोः कापिवंशोद्भवानिःश्रेणिरधिरोहिणी तस्ययतीशितुर्गिरस्तमोऽज्ञानंविरलंकथंनकुर्वीत ॥ ८१ ॥ अथानंतरमयम

श्रीमद्देशिकपादपंकजयुगीमूलातदेकाश्रयातत्कारुण्यसुधावसेकसहितातद्भक्तिसद्वल्लरी॥हृद्यंतोटकवृत्तवृ
त्तरुचिरंपद्यात्मकंसत्फलंलेभेभोकुमनोतिसत्तमशुकैरास्वाद्यमानंमुहुः॥ ८० ॥ येनौन्नत्यमवापिताकृतप
दाकामंक्ष्मायामियंनिःश्रेणिःपदमुन्नतंजिगमिषोर्व्योमस्पृशंतींपरं॥ वंश्याकाप्यधरीकृतत्रिभुवनश्रेणीगु
रूणांकथंसेवातस्ययतीशितुर्नविरलंकुर्वीतगुर्वींतमः ॥ ८१ ॥ अथतोटकवृत्तपद्यजातैरयमज्ञातसुपर्वसू
क्तिकोऽपि॥दययैवगुरोस्त्रयीशिरोर्थंस्फुटयन्नैक्षिविचक्षणःसतीर्थ्यैः ॥ ८२ ॥ अथतस्यबुधस्यवाक्यगुंफं
निशमय्यामृतमाधुरीधुरीणं॥ जलजांघ्रिमुखाःसतीर्थ्यवर्याःस्मयमन्यस्यसविस्मयावभूवुः॥ ८३ ॥

ज्ञाताःसुप्रस्तावायासुतथाभूताःसूक्तयोयेन तथाभूतोऽपि पर्वक्लीबेपहेयंथौप्रस्तावेलक्षणांतरइतिमेदिनी गुरोर्दययैवतोटकवृत्तपद्यजातैस्त्रयी
शिरसामर्थंस्फुटयन्सतीर्थ्यैर्गुरोःशिष्यैर्विचक्षणऐक्षिदृष्टः॥ वियो०॥८२॥ अथानंतरंतस्यवाक्यानांसंदर्भममृतमाधुरीधुरीणं निशम्य पद्मपाद ॥१
प्रमुखाःसतीर्थ्यवर्याः गर्वंपरित्यज्य सविस्मयावभूवुः ॥ ८३ ॥

भक्तीति यतोऽस्माद्गिरेःसंतिसमीचीनानितोटकसंज्ञानिपद्यानिप्रादुरासंस्तस्मा
तोटकाख्यपद्यप्रादुर्भावएवतदाख्याप्रवृत्तिनिमित्तमित्याह ॥ शालि० ॥ ८४ ॥ वेदांतवेद्यपरतत्त्वनिवेदनंयत्तत्प्रकरणमद्यापि पृथिव्यांतत्संज्ञ
देनंशिष्टवंशप्रसूतं शिष्टावेदाचाररताः तोटकाचार्यमाहुः ॥ शालि० ॥ ८४ ॥ वेदांतवेद्यपरतत्त्वनिवेदनंयत्तत्प्रकरणमद्यापि पृथिव्यांतत्संज्ञ
याप्रथितं तद्विशिनष्टि लघुसन्महांतोऽर्थायस्मिन्ननल्पानीतयोयुक्तयोयस्मिन्नतिश्रेष्ठपदैरनुविद्धंयुक्तंतदतएवशिष्टैर्गृहीतं ॥ व० ॥ ८५ ॥ म
हर्षेःश्रीशंकरात्तोटकाख्यामवाप्य तदारभ्यआशासुख्यातिमाप ॥ स्वा० ॥ ८६ ॥ हस्तामलकपद्मपादसुरेश्वरतोटकाख्येष्वाचार्यशिष्येषु वि

भक्त्युत्कर्षात्प्रादुरासन्यतोस्मात्पद्यान्येवंतोटकाख्यानिसंति ॥ तस्मादाहुस्तोटकाचार्यमेनंलोकेशिष्टाःशि
ष्टवंश्यंमुनींद्रं ॥ ८४ ॥ अद्यापितत्प्रकरणंप्रथितंपृथिव्यांतत्संज्ञयालघुमहार्थमनल्पनीति ॥ शिष्टैर्गृहीतम
तिशिष्टपदानुविद्धंवेदांतवेद्यपरतत्त्वनिवेदनंयत् ॥ ८५ ॥ तोटकाह्वयमवाप्यमहर्षेःख्यातिमापसदिशासुत
दादि ॥ पद्मपादसदृशप्रतिभावान्मुख्यशिष्यपदवीमपिलेभे ॥ ८६ ॥ पुमर्थाश्चत्वारःकिमुतनिगमाकक्प्रभृ
तयःप्रभेदावामुक्तेर्विमलतरसालोक्यमुखराः ॥ सुखान्याहोधातुश्चिरमितिविमृश्यार्थविबुधाविदुःशिष्या
न्हस्तामलकमुखरान्शंकरगुरोः ॥ ८७ ॥

बुधकृतविमर्शंदर्शयति धर्मार्थकाममोक्षाख्याश्चत्वारः किमुतऋग्यजुःसामाथर्वणाख्यावेदाः किंवासालोक्यप्रमुखाःसालोक्यसामीप्यसारू
प्यसायुज्याख्यामुक्तेर्भेदाःआहोस्विद्ब्रह्मणोमुखानीति विबुधादेवाःपंडितावा. चिरंविमृश्यविचार्य हस्तामलकादीन्शंकरगुरोःशिष्यान्विदुः
॥ शि० ॥ ८७ ॥

स्फारद्वाराणांविस्तीर्णद्वाराणांप्रघाणेषुबाह्यप्रकोष्ठेषु द्विरदानामैरावतप्रभृतीनांगजानांमदस्यसमुल्लोलेषु अतिचंचलेषु कल्लोलेषु याभंग्यस्तासां संमीतस्योल्लासभंग्यामुखरितामुखरीकृताध्वनिताहरितोदिशोयासुताः स्वर्गसंपदः अधिगतायाभगवत्पादसिद्धांतकाष्ठातस्यांनिष्ठायाःसंपद उल्लसन्निरवधिकसुखदस्य स्वात्मनोलाभस्यैकोमुख्योलाभोयेषतैरांकिंपचानैरल्पुदारैर्निष्ठूयंते थूत्क्रियंते ॥ स्व० ॥ ८८ ॥ मंथाचलेन मथितात्सिंधोर्भवंत्याःसुधायाःफेनस्याआवदाभायस्यामृतकांतिनिभेनतत्तुल्येनस्वयशसा देदीप्यमानःस्वदृष्ट्याऽपरंनिकृष्टंपरमन्यंवाऽसतांनिरुं

स्फारद्वारप्रघाणद्विरदमदसमुल्लोलकल्लोलभंगीसंगीतोल्लासभंगीमुखरितहरितःसंपदोऽकिंपचानैः॥ निष्ठूयंतेतिदूरादधिगतभगवत्पादसिद्धांतकाष्ठानिष्ठासंपद्विजृंभन्निरवधिसुखदस्वात्मलाभैकलोभैः॥८८॥ संमिधानोमंथाचलमथितसिंधूदरभवत्सुधाफेनाभेनामृतरुचिनिभेनात्मयशसा॥ निरुंधानोदृष्ट्यापरमहहपंथानमसतांपराधृष्यैःशिष्यैररमतविशिष्यैषमुनिराट्॥८९॥ इतिश्रीमाधवीयेतद्वत्तधाम्यादिसंश्रयः॥ संक्षेपशंकरजयेसर्गोयंद्वादशोऽभवत्॥१२॥ मू॰सं॰११२ ॥ ७॥ ॥ ७॥ ॥ ७॥

धानः परैरधृष्यैःशिष्यैःसहमुनिराट्श्रीशंकरोविशेषेणारमत ॥ शि० ॥८९॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिकृतेश्रीशंकराचार्यविजयडिंडिमेद्वादशःसर्गःसमाप्तिमवीभजत् ॥ ॥ श्रीशंकराचार्यायभगवते नमः ॥ टी०सं ॥ २४० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥



इति श्रीशंकरदिग्विजये द्वादशःसर्गःसमाप्तः

॥ श्री॰ ॥ अथवार्तिकांतब्रह्मविद्याप्रवृत्तिसपरिकरांनिरूपयितुमारभते ततःकदाचिदात्मोपदेष्टारं यद्वाआत्मदानामीशंगुरुं भक्त्याप्रणिपत्य
सुरेश्वरार्यो ऽत्यंतगभीरोभावोयस्य तथाभूतेशारीरकभाष्ये. वृत्तिस्फुटंयथास्यात्तथाकर्तुमनावभाषे उपजातिः ॥ १ ॥ यदुवाचतदाह
ममयत् करणीयमस्ति तत्त्वमिमंमामसंशयमनुशाधिआज्ञापय यतोयदयंगुरौभक्तिमान्सन्जीवति तदिदमेवपुरुषस्यजीवितं वियो॰

श्री॰॥अथत्रयोदशःसर्गः॥ततःकदाचित्प्रणिपत्यभक्त्यासुरेश्वरार्योगुरुमात्मदेशं॥शारीरकेत्यंतगभीरभावे
वृत्तिस्फुटंकर्तुमनाजगाद॥१॥ममयत्करणीयमस्तितत्त्वमिमंमामनुशाध्यसंशयं॥ तदिदंपुरुषस्यजीवितंय
दयंजीवतिभक्तिमान्गुरौ॥२॥इतीरितेशिष्यवरेणशिष्यंप्रोचद्गरीयानतिहृष्टचेताः ॥ मत्कस्यभाष्यस्यवि
धेयमिष्टंनिबंधनंवार्तिकनामधेयं ॥ ३ ॥ द्रष्टुंसतर्कंभवदीयभाष्यंगंभीरवाक्यंनममास्तिशक्तिः ॥ तथापि
भावत्ककटाक्षपातेयतेयथाशक्तिनिबंधनाय ॥ ४ ॥ अस्त्वेवमित्यार्यपदाभ्यनुज्ञामादायमूर्ध्नासविनिर्जगा
म॥अथांबुजांघ्रेर्दयिताःसतीर्थ्यास्तंचित्सुखाद्यारहसीत्थमूचुः ॥५॥

॥ २ ॥ मत्कस्यमदीयस्यभाष्यस्य वार्तिकनामधेयमिष्टंनिबंधनं त्वयाविधेयं ॥ ३ ॥ इत्युक्तःशिष्यउवाच तर्कयुक्तंगंभीरवाक्यं
भवदीयभाष्यं. द्रष्टुमपिममशक्तिर्नास्ति तद्वार्तिकविधानसामर्थ्यंतुदूरनिरस्तं यद्यप्येवंतथापिभवदीयकटाक्षपातेसति यथाशक्तिनिबं
धनार्थंयत्नंकुर्वे ॥ ४ ॥ अस्त्वेवमित्यार्यपादाभ्यनुज्ञांमूर्ध्नाआदायससुरेश्वरोविनिर्जगाम अथानंतरंपद्मपादस्यप्रियाःसतीर्थ्याःशिष्या
श्चित्सुखाद्यास्तंश्रीशंकराचार्यरहस्यनेनवक्ष्यमाणप्रकारेणोचुः ॥ ५ ॥

योयंप्रयत्नोहितायक्रियते तुभ्यंहितायनभवति किंत्वयंअनर्थंविशेषेणफलत्वितिसंभावनायांलोट् इत्येवंप्रत्येकंगुरवेनिवेद्योचुरित्यन्वयः तद्दुदाहरति स्वयंविद्वान्कर्मणितत्परश्चयइतिपरेणसंबंधः, ॥ ६ ॥ योमंडनःसार्वलोकप्रसिद्धं ईश्वराणांब्रह्मादीनांईश्वरमपि बहुयुक्तिभिरुत्तरज्ञःप्रत्याख्यातवान् एवंविधेनक्रियतइतिव्यवहितेनान्वयः कथमित्याकांक्षायामाहुः कर्मैवस्वर्गनरकादिफलंददाति नत्वेवंविधोऽन्योजगदीशितास्तीत्येवंप्रत्यादिदेश वसंततिलका ॥ ७ ॥ ननुतस्यकोदोषोजैमिनेरेवाभिप्रायस्यतथाविधत्वादित्याशंक्याहुः

योऽयंप्रयत्नःक्रियतेहितायहितायनायंविफलत्वनर्थं ॥ प्रत्येकमेवंगुरवेनिवेद्यवोद्वास्वयंकर्मणितत्परश्च ॥ ॥ ६ ॥ यःसार्वलौकिकमपीश्वरमीश्वराणांप्रत्यादिदेशबहुयुक्तिभिरुत्तरज्ञः ॥ कर्मैवनाकनरकादिफलंददातिनैवंपरोस्तिफलदोजगदीशितेति ॥ ७॥ प्रत्येकमस्यप्रलयंवदंतिपुराणवाक्यानिसतस्यकर्ता ॥ व्यासोमुनिर्जैमिनिरस्यशिष्यस्तत्पक्षपातीप्रलयावलंबी ॥ ८ ॥ गुरोश्चशिष्यस्यचपक्षभेदेकथंतयोःस्याद्गुरुशिष्यभावः ॥ तथापियद्यस्तिसपूर्वपक्षःसिद्धांतभावस्तुगुरूक्तएव ॥ ९ ॥

अस्यप्रत्यक्षादिभिःसन्निधापितस्यजगतःप्रलयंप्रत्येकंपुराणवाक्यानिवदंति तस्यपुराणवाक्यजातस्यसप्रसिद्धोव्यासोमुनिःकर्त्ताजैमिनिरस्यशिष्योऽतस्तत्पक्षपातित्वावश्यंभावेनप्रलयावलंबीत्यवश्यमभ्युपगंतव्यं उ० ॥ ८ ॥ विपक्षेबाधकमाहुः गुरोश्चशिष्यस्यचपक्षभेदेसति तयोर्गुरुशिष्यभावःकथंस्यात् अंगीकृत्याहुः यदिपक्षभेदोऽस्तितथापिसशिष्यपक्षःपूर्वपक्षःसिद्धांतत्वंतुगुरूक्तेगुरुप्रतिपादितेपक्षएवेत्यर्थः ॥ ९ ॥ ॥१॥

किंच सखलुमंडनः आजन्मनःकर्मणियोजितात्माऽनिशमिहलोकेकर्मकुर्वन्नेवावस्थितः समाहिताःप्रयत्नात्कर्मकुरुत स्वर्गादिकंसुखं
प्राप्स्यथ व्यर्थमार्गेकिमितिपरांश्चब्रूते व० ॥ १० ॥ तथाचैवंविधेन त्वदाज्ञामवलंब्य भाष्यकेयदिनिबंधनंक्रियते तर्हिसभाष्यंकेवलं
कर्मपरंयोक्ष्यते तस्माद्वृद्धिमिच्छतात्वया मूलादपिमाच्यावि॥ प्रच्युतिर्नविधेयेत्यर्थः उ० ॥ ११ ॥ नन्विदानींतुस्वीकृतसंन्यासेइयंसंभाव
नानास्तीत्याशंक्याह संन्यासमपीति तस्मान्नोऽस्माकंविश्वासस्थानंनविभाति तथाचहेगुरोऽनेननिबंधनंमाचीकरः नैवकारय ॥ १२ ॥

**आजन्मनःसखलुकर्मणियोजितात्माकुर्वन्नवस्थितइहानिशमेवकर्म ॥ ब्रूतेपरांश्चकुरुतावहिताःप्रयत्ना**
**त्स्वर्गादिकंसुखमवाप्स्यथकिंवृथाध्वे ॥ १०॥ एवंविधेनक्रियतांनिबंधनंयदित्वदाज्ञामवलंब्यभाष्यके॥**
**भाष्यंपरंकर्मपरंसयोक्ष्यतेमाच्याविमूलादपिवृद्धिमिच्छता ॥ ११ ॥ संन्यासमप्यर्पयनबुद्धिपूर्वकंव्यध**
**त्तवादेविजितोवशोव्यधात् ॥ तस्मान्नविश्वासपदंविभातिनोमाचीकरोनेननिबंधनंगुरो ॥ १२ ॥ यः**
**शक्नुयात्कर्मविधातुमीप्सितंसोयंनकर्माणिविहातुमर्हति ॥ यद्यस्तिसंन्यासविधौदुराग्रहोजात्यंधमूकादिर**
**मुष्यगोचरः॥ १३॥ एवंसदाभट्टमतानुसारिणोब्रुवंत्यसौतन्मतपक्षपातवान् ॥ एवंस्थितेयोग्यमदोविधी**
**यतांननोस्तिनिर्बंधनमत्रकिंचन ॥ १४ ॥**

यःकर्मविधातुमीप्सितंकर्मविधातुंयःशक्नुयात् सोयंकर्माणित्यक्तुंनार्हति यदिसंन्यासविधौदुराग्रहोऽस्ति तर्ह्यमुष्य
भाट्टमतपक्षपातित्वादयंयोग्यएवेत्याहुरीप्सितंकर्मविधातुंयःशक्नुयात् सोयंकर्माणित्यक्तुंनार्हति यदिसंन्यासविधौदुराग्रहोऽस्ति तर्ह्यमुष्य
संन्यासविधेर्जात्यंधादिभिर्विषयइत्येवंभट्टमतानुसारिणोवदंति असावपिभट्टमतपक्षपातवान् एवंस्थितेयद्योग्यंतद्विधीयतां अस्माकंत्वत्र
किंचननिर्बंधनमाग्रहोनास्तीत्यर्थः तथाचोक्तंभट्टैः. तत्रैवंशक्यतेवक्तुंयेन्येपंग्वादयोनराः गृहस्थत्वंनशक्ष्यंतेकर्तुंतेषामयंविधिः नैष्ठिकब्र
ह्मचर्यंवापरिव्राजकतापिच तैरवश्यंगृहीतव्यातेनादावेतदुच्यतेइत्यादि इंद्रवंशा० ॥ १३ ॥ १४ ॥

केनतर्हिवृत्तिर्विधेयाइत्यपेक्षायांपद्मपादेनेतिवक्तुंतद्योग्यतामाविष्कुर्वंति पुरेति सुरापगायादेवनद्यागंगायाः ॥ १५ ॥ तस्मिन्काले तदा कारणमाकर्ण्यसमाकुलेषु नौकार्थमितस्ततःपरिभ्रमत्सुअस्मासु एषसनंदनस्तुवियन्नद्याझरीमाशुअभिप्रस्थितएव ॥ १६ ॥ त्रिवर्त्मा त्रिमार्गागंगा ॥१७ ॥ तेषुतुष्टयात्रिपथगयाप्रादुष्कृतेषुवरकमलेषुपदानिसंस्थाप्यभवत्सकाशं यतोअयंमहात्मागतवान् ततोऽतिसंतुष्टोभवां

पुराकिलास्मासुसुरापगायाःपारेपरस्मिन्विचरत्सुसत्सु ॥ आकारयामासभवानशेषान्भक्तिंपरिज्ञातुमि
वास्मदीयां ॥ १५ ॥ तदातदाकर्ण्यसमाकुलेषुनावार्थमस्मासुपरिभ्रमत्सु ॥ सनंदनस्त्वेषवियत्तटिन्याझरी
मभिप्रस्थितएवतूर्णं ॥ १६ ॥ अनन्यसाधारणमस्यभावमाचार्यवर्येभगवत्यवेक्ष्य ॥ तुष्टात्रिवर्त्माकनकां
बुजानिप्रादुष्करोतिस्मपदेपदेच ॥ १७ ॥ पदानितेषुप्रणिधाययुष्मत्सकाशमागाद्यदयंमहात्मा ॥ ततोऽ
तितुष्टोभगवांश्चकारनाम्नातमेनंकिलपद्मपादं ॥ १८ ॥ सएवयुष्मच्चरणारविंदसेवाविनिर्धूतसमस्तभेदः ॥
आजानसिद्धोऽर्हतिसूत्रभाष्येवृत्तिंविधातुंभगवन्नगाधे ॥ १९ ॥ यद्वायमानंदगिरिर्यदुग्रतपःप्रसन्नापर
मेष्ठिपत्नी ॥ भवत्स्वबंधेषुयथाभिसंधिव्याख्यानसामर्थ्यवरंदिदेश ॥ २० ॥ कर्मैकतानमतिरेषकथंगुरोतेवि
श्वासपात्रमवपद्यतविश्वरूपः ॥ भाष्यस्यपद्मपदएवकरोतुटीकामित्यूचिरेरहसियोगिवरंविधेयाः ॥ २१ ॥

स्तमेनंनाम्नाखलुपद्मपादंचकार ॥ १८ ॥ आजानसिद्धःस्वभावतएवसिद्धः ॥ १९ ॥ यद्वायमानंदगिरिःसूत्रभाष्येवृत्तिंविधातुमर्हति यतोयस्योग्रतपसाप्रसन्नासरस्वती भवदभिप्रायानुसारिव्याख्यानसामर्थ्यवरंदिदेश ॥ २० ॥ हेगुरोकर्मैकतानमतिरेषविश्वरूपः तवकथं विश्वासपात्रमवपद्यत तत्पात्रभूतोजातोऽतःकर्मैकतानमतेर्विश्वरूपस्याविश्वसनीयत्वाद्भाष्यस्यपद्मपादएवटीकांकरोतु इतिरहसियोगिवरंश्रीशंकरं शिष्याऊचिरे इंद्र० ॥ २१ ॥

तदाहहेआचार्य भवत्कृतौवार्त्तिकंकर्तुंएषहस्तामलकोऽपिसमर्थः आं०
अत्रांतरे समीपमागतःससनंदनःशीघ्रंवाक्यंसमुदाजहार उ० ॥ २३ ॥ सनंदनस्यवा
॥ २२ ॥ यतःकरस्थामलकसदृशंसर्वंसिद्धांतमेषजानाति अतएवामुष्मैभवतएवहस्तामलकाभिधानमदायि तदाहास्यहस्तामलकस्यनैपुण्यमनुपमंपरंतुसमाहितत्वात् अस्यबहिःप्रवृत्तिर्न
चंसमाकर्ण्यविस्मितंयथास्यात्तथाभाष्यकारोजगाद

अत्रांतरेऽभ्यर्णगतःसतूर्णंसनंदनोवाक्यमुदाजहार ॥ आचार्यहस्तामलकोऽपिकल्पोभवत्कृतौवार्त्तिक
मेषकर्त्तुं॥ २२॥ यतःकरस्थामलकाविशेषंजानातिसिद्धांतमसावशेषं ॥ अतोऽस्यमुष्मैभवतैवपूर्वमदायि
हस्तामलकाभिधानं॥ २३॥ वाणींसमाकर्ण्यसनंदनस्यसास्मितंभाष्यकृदावभाषे ॥ नैपुण्यमन्यादृश
मस्यकिंतुसमाहितत्वान्नबहिःप्रवृत्तिः ॥ २४ ॥ अयंतुबाल्येनपपाठपित्रानियोजितःसादरमक्षराणि ॥ न
चोपनीतोऽपिगुरोःसकाशादध्यैष्टवेदान्परमार्थनिष्ठः ॥ २५ ॥ बालैर्नचिक्रीडनचान्नमैच्छन्नचारुवाचंव्य
वदत्कदापि॥ निश्चित्यभूतोपहतंतमेनमानिन्यिरेऽस्मन्निकटंकदाचित्॥ २६॥ अस्मानवेक्ष्यैवमुहुःप्रणम्य
कृतांजलौतिष्ठतिबालकेऽस्मिन्॥ इमामपूर्वांप्रकृतिंविलोक्यविसिस्मयेतत्रजनःसमेतः ॥ २७॥

तेनोपनीतोऽपिगुरोःसका
भवति इं० ॥ २४ ॥ समाहितत्वादित्याद्युक्तंविवृणोति अयंतुबाल्येपित्रासादरंनियोजितोप्यक्षराणिनपपाठ
शात्परमार्थनिष्ठोवेदान्नचाधीतवान् उ० ॥२५॥ नचिक्रीडंक्रीडांनचकार ॥२६ ॥ प्रकृतिंस्वभावं तत्रतस्मिन्स्थाने समेतःसंमिलितः॥२७॥

 कस्त्वंशिशोकस्यकुतोसिगंताकिन्नामतत्वंकुतआगतोसि एतन्मयोक्तंवदचार्भकत्वंसप्रीतयेप्रीतिविवर्धनोसि इत्यस्माभिःपृष्टःपद्यमयैर्वचो 
भिर्विस्मापयन्नात्मानमानंदघनस्वरूपमाचष्ट उपजाति० ॥ २८ ॥ तस्मिन्काले कदाप्यश्रुतिगोचरं पुत्रस्यतद्वाग्वैभवं आक
र्ण्य अस्यपितापरंप्रहर्षंप्राप्य विज्ञःसप्रश्रयांवाचमुवाच विप० ॥ २९ ॥ तामुदाहरति जनैरिति प्रज्ञयोन्नतानामपिदुर्विभाव्यं परमात्मत 


कस्त्वंशिशोकस्यसुतःकुतोवेत्यस्माभिराचष्टकिलैपपृष्टः ॥ आत्मानमानंदघनस्वरूपंविस्मापयन्वृत्तमयै
र्वचोभिः ॥ २८ ॥ तदाकदाप्यश्रुतिगोचरंतदाकर्ण्यवाग्वैभवमात्मजस्य ॥ पितात्रपद्यास्यपरंप्रहर्षंस
प्रश्रयांवाचमुवाचविज्ञः॥ २९ ॥ जनैर्जडत्वेनविनिश्चितोऽपिब्रवीतियद्यैपपरात्मतत्त्वं ॥ प्रज्ञोन्नतानाम
पिदुर्विभाव्यंकिंवर्ण्यतेऽर्हन्भवतःप्रभावः॥ ३० ॥ आजन्मनःसंसृतिपाशमुक्तःशिष्योस्त्वयंविश्वगुरोस्तवै
व ॥ प्रफुल्लराजीववनेविहारीकथंरमेतक्षुरकेमरालः ॥ ३१ ॥ विज्ञाप्यतस्मिन्निति निर्गतेऽसौतदाप्रभृत्यंत्र
वसत्युदारः ॥ आशैशवादात्मविलीनचेताःकथंप्रवर्तेतमहाप्रबंधे ॥ ३२ ॥ श्रुत्वेतिपप्रच्छुरमुंविनेयाःस्वा
मिन्विनैवश्रवणाद्युपायैः ॥ अलब्धविज्ञानमयंकथंवाभवानिदंसाधुविदांकरोतु ॥ ३३ ॥

त्त्वं यद्येपत्वत्समीपमागतोऽब्रवीति तर्हि हेऽर्हन् भवतःप्रभावःकिंवर्ण्यते उ० ॥ ३० ॥ तस्मादाजन्मनोजन्मप्रभृति संसृतिपाशमुक्तोऽयंवि 
श्वगुरोस्तवैवशिष्योस्तु यतःप्रफुल्लपद्मवनेविहारीहंसः क्षुरकेवनेकथंरमेत ॥ ३१ ॥ इतिविज्ञाप्य तस्मिन्नाकरे निर्गतेसति ॥ ३२ ॥
अयंविज्ञानंकथंलब्धवान् इदंभवान्साधुसम्यक्बोधयतु ॥ ३३ ॥

एवंपृष्टआचार्यःतस्यप्राग्भवीयंवृत्तांतमुक्तवानित्याह तानिति ॥ ३४ ॥ जातुकदाचित्तस्यसिद्धस्यसमीपेकाचनविप्रकन्याद्विवर्षंबालकंस्थाप्य हेद्विज क्षणमात्रंबालंप्रतीक्षस्वेत्युक्त्वा सखीभिःसह स्नातुं निर्जगाम ॥ ३५ ॥ महर्षेःपुरतःचक्रंदुराक्रोशंचक्रुः ॥ ३६ ॥ तस्य पृथुकस्यबालस्यांगंशरीरंप्रविवेशसतपस्वीएषहस्तामलकः ॥ ३७ ॥ यस्मादेवंतस्मादयमुपदेशंविनैवानंताःश्रुतीः सकलाःस्मृतीश्च

तानब्रवीत्संयमिचक्रवर्तीकश्चित्पुरायामुनतीरवर्ती ॥ बभूवसिद्धःकिलसाधुवृत्तःसांसारिकेभ्यःसुतरांनिवृत्तः ॥ ३४ ॥ तस्यांतिकेकाचनविप्रकन्याद्विहायनंजातुनिवेश्यबालं ॥ क्षणंप्रतीक्षस्वशिशुंद्विजेतिस्नातुंसखीभिःसहनिर्जगाम ॥ ३५ ॥ अत्रांतरेदैववशात्सबालश्चंक्रम्यमाणोनिपपातनद्यां ॥ मृतंतमादायशिशुंतदीयाश्चक्रंदुरुच्चैःपुरतोमहर्षेः ॥ ३६ ॥ आक्रोशमाकर्ण्यमुनिःसतेषामत्यंतखिन्नोनिजयोगभूम्ना ॥ प्राविक्षदंगंपृथुकस्यतस्यसएषहस्तामलकस्तपस्वी ॥ ३७ ॥ तस्मादयंवेदविनोपदेशंश्रुतीरनंताःसकलाःस्मृतीश्च ॥ सर्वाणिशास्त्राणिपरंचतत्त्वमज्ञातमेतेननकिंचिदस्ति ॥ ३८ ॥ तत्तादृगात्मानबहिःप्रवृत्तौनियोगमर्हत्ययमत्रवृत्तौ ॥ समंडनस्त्वर्हतिबुद्धतत्त्वःसरस्वतीसाक्षिकसर्ववित्त्वः ॥ ३९ ॥ तत्तादृशोत्युज्ज्वलकीर्तिराशिःसमस्तशास्त्रार्णवपारदर्शी ॥ आसीदितोधर्महितःप्रयत्नात्सचेन्नरोचेतनदृश्यतेऽन्यः ॥ ४० ॥

सर्वाणिचशास्त्राणिपरंचतत्त्वंजानाति किंबहुनाऽनेनाज्ञातंकिंचिदपिनास्ति ॥ ३८ ॥ तत्तस्मात्तादृगात्माअयंहस्तामलकोबहिःप्रवृत्तावत्रभाष्येवृत्तौनियोगंनार्हति समंडनस्त्वर्हति यतोबुद्धतत्त्वःसरस्वतीसाक्षिकंसर्वज्ञत्वंचयस्यसः ॥ ३९ ॥ प्रयत्नाल्लब्धएवंविधःसनरोचेतचेत्तर्हितथाविधोऽन्योनदृश्यते आ० ॥ ४० ॥

ननुभवदभीष्टंचेत्तर्हिकारयितव्यमितितत्राह अहमिति महानिबंधैबहूनामनभीष्टंकार्यंनकारयिष्ये किंचयतएकस्मिन्कार्येबहवःप्रतिकूला अतोऽत्रसंशयोममोत्पन्नइत्यर्थः उ० ॥४१॥ एवमुक्ताविनेयानदृश्यतेऽन्यइत्युक्तमसहमानाऊचुः हेभगवन्भवदाज्ञातः सनंदनईप्सितंभाष्ये निबंधंकरिष्यति यतःसब्रह्मचर्यादंगीकृताश्रमोमतेःप्रकर्षोयस्य सर्वतोविज्ञातश्च ॥वंश० ॥४२॥ एवमुक्तआचार्यउवाच जनानांनंदयित



॥ ४ ॥

अहंबहूनामनभीष्टकार्यंनकारयिष्येहिमहानिबंधे ॥ किंचात्रसंशीतिरभून्ममातोयदेककार्येबहवःप्रतीपाः ॥ ४१ ॥ भवन्निदेशाद्भगवन्सनंदनःकरिष्यतेभाष्यनिबंधमीप्सितं ॥ सब्रह्मचर्यादुररीकृताश्रमोमतिप्रकर्षोविदितोहिसर्वतः ॥ ४२ ॥ सनंदनोनंदयिताजनानांनिबंधमेकंविदधातुभाष्ये ॥ नवार्त्तिकंतत्तुपरप्रतिज्ञंव्यधात्प्रतिज्ञांसहिनूत्नदीक्षः ॥ ४३ ॥ आदिश्येत्थंशिष्यसंघंयतींद्रःप्रोवाचेत्थंनूत्नभिक्षुंरहस्तं ॥ भाष्येभिक्षोमाकृथावार्तिकंत्वंनेमेशिष्यासेहिरेदुर्विदग्धाः ॥ ४४ ॥ तात्पर्यंतेगेहिधर्मेषुदृष्ट्वातत्संस्कारंसांप्रतंशंकमानाः॥ भाष्येकृत्वावार्त्तिकंयोजयेत्सभाष्यंप्रादुःस्वीयसिद्धांतशेषं॥ ४५॥

सनंदनोभाष्येनिबंधमेकंविदधातुनतुवार्तिकं तत्तुपरप्रतिज्ञंपरस्यप्रतिज्ञायस्मिन् हियतःस्वीकृतदीक्षःसुरेश्वरःप्रतिज्ञांव्यधात् उपें० ॥ ४३ ॥ इत्थंशिष्यसंघमादिश्ययतींद्रोरहसिस्थितंनूत्नभिक्षुंसुरेश्वरंवक्ष्यमाणप्रकारेणप्रोवाच हेभिक्षोभाष्येत्वंवार्तिकंमाकृथाः यतोदुर्विदग्धाइमेशिष्यानसेहिरे ॥ इंद्र० ॥ ४४ ॥ शंकमानैस्तैर्यदुक्तंतद्दर्शयति गेहिधर्मेषुतवतात्पर्यंवीक्ष्यसांप्रतंतत्संस्कारंशंकमानाःप्राहुः भाष्येवार्तिकंकृत्वा स्वीयसिद्धांतशेषंभाष्यंसयोजयेत् संभावनायांलिङ् शा० ॥ ४५ ॥ ॥ ४ ॥

किंच तुर्याश्रमोवेदेसिद्धोनास्त्येवेतिमांडनःसिद्धांतोभिक्षमाणाद्वारिद्वास्थैर्वार्यमाणास्तेमंडनस्यवेश्मांतःप्रवेशंनलभंतइत्याद्यांकिंवदंतींजनश्रु
तिंविदित्वा तेषामनल्पेअक्षुद्रेपित्वयिप्रत्ययोनासीत्तर्हिमयाकिंकर्तव्यमितिचेत्तत्राह स्वातंत्र्यात्त्वमध्यात्मनिष्ठमेकंग्रंथंकृत्वा मह्यंदर्शय
॥ ४६ ॥ ४७ ॥ हेविद्वन्यथाग्रंथंसंदर्शनेन नोऽस्माकममीषांशिष्याणांप्रत्ययःस्यादितिसुरेश्वरमुक्त्वा हाहासूत्रभाष्येवार्तिकंनाभू

नास्त्येवासावाश्रमस्तूर्यइत्थंसिद्धांतोयंतावकोवेदसिद्धः ॥ द्वारिद्वास्थैर्वारिताभिक्षमाणावेश्मांतस्तेनप्रवे
शंलभंते ॥ ४६ ॥ इत्याद्यांतांकिंवदंतींविदित्वातेषांनासीत्प्रत्ययस्त्वय्यनल्पे ॥ स्वातंत्र्यात्त्वंग्रंथमेकंमहात्म
न्कृत्वामह्यंदर्शयाध्यात्मनिष्ठं ॥ ४७ ॥ विद्वन्यद्वत्प्रत्ययःस्यादमीषांशिष्याणांनोग्रंथसंदर्शनेन ॥ इत्युक्त्वैनं
वार्तिकंसूत्रभाष्येनाभूद्धाहेत्यापखेदंचकिंचित् ॥ ४८ ॥ शिष्योक्तिभिःशिथिलतात्ममनोरथोसावेनंस्वतं
त्रकृतिनिर्मितयेन्ययुंक्त ॥ नैष्कर्म्यसिद्धिमचिराद्विदधत्सचेत्थंन्याय्यामविंदतसुरेश्वरदेशिकाख्यां ॥ ४९ ॥
नैष्कर्म्यसिद्धिमथतांनिरवद्ययुक्तिंनिष्कर्मतत्त्वविषयावगतिप्रधानां ॥ आद्यंतहृद्यपदबंधवतीमुदारामाद्यं
तमैक्षततरांपरितुष्टचेताः ॥ ५० ॥ ग्रंथंदृष्ट्वामोदमानोमुनींद्रस्तंचान्येभ्योदर्शयामासहृद्यं ॥ तेषांचासीत्प्र
त्ययस्तद्वदस्मिन्यद्वच्चान्यस्तत्त्वविन्नापरोस्ति ॥ ५१ ॥

दिति किंचित्खेदंप्राप ॥ ४८ ॥ एवंशिष्योक्तिभिः शिथिलितःस्वमनोरथोयस्यासौ श्रीशंकरएनंसुरेश्वरंस्वतंत्रकृतिनिर्मितये न्ययुंक्त स
चनियुक्तोऽचिरादेवनैष्कर्म्यसिद्धिंविदधत् इत्थंयोग्यांसुरेश्वरदेशिकाख्यामविंदत व० ॥ ४९ ॥ निष्कर्मतत्वविषयाऽवगतिःप्रधानंयस्या
माद्यादंतपर्यंतं मनोज्ञपदबंधवतीमेवंभूतां तांपरितुष्टचेताआचार्यआद्यंतंसम्यगैक्षत ॥ ५० ॥ यथायोऽस्मादन्यःसएवंतत्त्वविन्नास्तीति त
थातेषामस्मिन्प्रत्ययश्चासीत् शा० ॥ ५१ ॥

यत्रग्रंथेऽद्यापियतींद्रैर्निष्कर्मात्माश्रूयते यत्रनैष्कर्म्यस्यमोक्षस्यसिद्धिः तस्मान्नैष्कर्म्यसिद्धिर्नाम्नायंग्रंथवर्योवबधे तस्मान्माहात्म्यात्सर्वलो
कैरादृतोऽभूत् ॥ ५२ ॥ आचार्यैर्यद्भविष्यमालक्ष्यहाहेत्युक्तंतद्दर्शयति आचार्यवाक्येनास्मिन्वार्त्तिकेविधातुमिष्टेसति यतोऽन्येविघ्नंव्यधु
रस्मिन्नृकृतेऽस्मान्निमित्तात्सुरेश्वरःशापमुत्ससर्ज सूत्रभाष्यस्यवार्तिकमुदारैःकृतमपिपृथिव्यांनप्रसरेत् इ० ॥ ५३ ॥ विश्वासंचप्राप्या
चार्येत्याद्युक्त्वाथपुनरुवाच उ० ॥ ५४ ॥ यदुवाचतदाह नेति इ० ॥ ५५ ॥ तात्पर्यंतेगेहिधर्मेषुदृष्टेत्युक्तंतत्राह. पूर्वंगृहित्वेऽपितत्स्वभावो

यत्राद्यापिश्रूयतेमस्करींद्रैर्निष्कर्मात्मायत्रनैष्कर्म्यसिद्धिः ॥ तत्राम्नायंवद्धेग्रंथवर्यस्तन्माहात्म्यात्सर्वलो
कादृतोभूत् ॥ ५२ ॥ आचार्यवाक्येनविधित्सितेऽस्मिन्विघ्नंयदन्येव्यधुरुत्ससर्ज ॥ शापंकृतेऽस्मिन्कृतमप्यु
दारैस्तद्वार्त्तिकंनप्रसरेत्पृथिव्यां ॥ ५३ ॥ नैष्कर्म्यसिद्ध्याख्यनिबंधमेकंकृत्वात्मपूज्यायनिवेद्यचोक्त्वा ॥ वि
श्वासमुक्त्वाथपुनर्बभाषेसविश्वरूपोगुरुमात्मदेवं ॥ ५४ ॥ नख्यातिहेतोर्नचलाभहेतोर्नाप्यर्चनायैविहितःप्र
बंधः ॥ नोल्लंघनीयंवचनंगुरूणांनोल्लंघनेस्याद्गुरुशिष्यभावः ॥ ५५ ॥ पूर्वंगृहित्वेऽपिनतत्स्वभावोनबाल्यम
न्वेतिहियौवनस्थं ॥ नयौवनंवृद्धमुपैतितद्वद्व्रजन्हिपूर्वस्थितिमौज्झ्यगच्छेत् ॥ ५६ ॥ अहंगृहीनात्रविचार
णीयंकिंतेनपूर्वंमनएवहेतुः ॥ बंधेचमोक्षेचमनोविशुद्धोगृहीभवेद्वाप्युतमस्करीवा ॥ ५७ ॥

गृहिस्वभावोनभवामि हियतोयौवनस्थंबाल्यंनान्वेति तथावृद्धंपुरुषंयौवनंनोपैति तद्वत्तथाव्रजन्गमनंकुर्वन्पूर्वस्थितिंपरित्यक्त्वैवगच्छेदि ॥ ५ ॥
त्यर्थः उ० ॥ ५६ ॥ किंचात्रास्मिँल्लोकेऽहंगृहीतिनविचारणीयं यतस्तेकिंपूर्वमिहजन्मांतरेवागृहिणोनबभूवुरपित्वासुरेव तस्माद्गृहित्वे
यतित्वेवामनएवहेतुः नकेवलमेतावदेवापितु बंधेचमोक्षेचमनएवहेतुः मनएवमनुष्याणांकारणंबंधमोक्षयोरित्युक्तत्वात् तस्माद्विशुद्धोगृही
भवेद्वामस्करीवाभवेदुभयथापिन्यूनाधिक्यंनास्तीत्यर्थः ॥ ५७ ॥

नास्त्येवासावाश्रमस्तूर्यइत्थमित्युक्तंतत्राह नास्त्येवेति हेउत्तमादिराश्रमोनास्त्येवचेत्तत्प्रातिनिवृत्तिगामिनौनौआवयोःप्रतिश्रवो अहंपराजितः संन्यासंप्राप्स्यामि अहंपराजितस्त्वंहास्यामि इत्येवंरूपौकथंस्तस्तत्राप्यल्पकालो यदितुर्याश्रमोममाभिमतोनाभूत्तर्हिप्रतिज्ञामयानिरुद्धाऽभूदित्याशयेनाह नहीति ॥ ५८॥ यच्चद्वारिद्वास्थैरित्याद्युक्तंतत्राह संभिक्षमाणाइति गुरुणाभगवताप्रवेशनंकथंविहितंकथंचमद्गृहेननूत्तमा

नास्त्येववेदाश्रमउत्तमादिःकथंचतत्प्रातिनिवृत्तिगामी ॥ प्रतिश्रवौनौकथमल्पकालौनहिप्रतिज्ञाभगवन्निरुद्धा ॥ ५८ ॥ संभिक्षमाणानलभंतएवचेद्गृहप्रवेशंगुरुणाप्रवेशनं॥ कथंहिभिक्षाविहितानन्नूत्तमा कोनामलोकस्यमुखापिधायकः॥५९॥तत्त्वोपदेशाद्विदितात्मतत्त्वोव्यधामहंसंन्यसनंकृतात्मा ॥ विरागभावान्नपराजितस्तुवादोहितत्त्वस्यविनिर्णयाय ॥ ६० ॥ पुरागृहस्थेनमयाप्रबंधानैयायिकादौविहितामहार्थाः॥इतःपरंमेत्हृदयंचिकीर्षुत्वदंघ्रिसेवांनविलंघ्यकिंचित् ॥६१ ॥

भिक्षांविहिता यदापिकिंवदंतीत्याद्युक्तंतत्राप्याह लोकस्यमुखस्यापिधायकःकोनामनकोप्यस्तीत्यर्थः ॥ ५९ ॥ यत्तुसंन्यासमप्येवंनबुद्धिपूर्वमित्याद्युक्तवंतस्तत्राह पूर्वकृतालापश्चात्तत्त्वोपदेशाद्विदितात्मतत्त्वोहं वैराग्यात्संन्यसनंव्यधां नतुपराजितोहियस्माद्वादस्तत्त्वविनिर्णयाय ॥ ६० ॥ यत्तुभाष्यंकृत्वेत्यादितत्राह पुरेति इतःपरंमेहृदयंत्वदंघ्रिसेवांविलंघ्यनाकिंचित्कर्तुमिच्छु ॥ ६१ ॥

तथाचैवंविधस्यसद्गुरोस्तवसेवाकेनापिकथमपिकर्त्तुंनशक्येत्याह अद्वैतेवस्तुनि आदरोयैस्तथाभूतबुद्धपरिषच्छेमुष्यांसन्निषण्णां अद्वैत बद्धादरायाबुधसमुदायबुद्धिस्तस्यांसम्यक्स्थितामितिवा अर्वाचीनानांदुर्वादिनांगर्वलक्षणस्यानलस्यविपुलतरज्वालालक्षणयामालया विपुलयाज्वालामालयाइतिवा अवलीढामास्वादितांश्रद्धांसूक्तामृतौघैः सिक्त्वाऽहहाद्यसद्यःपरिहसन्नूजीवयसि ततोरणतरणविधानसदृशा

श्रद्धामद्वैतबद्धादरबुधपरिषच्छेमुषीसन्निषण्णामर्वाग्दुर्वादिगर्वानलविपुलतरज्वालमालावलीढां ॥
सिक्त्वासूक्तामृतौघैरहहपरिहसन्जीवयस्यद्यसद्यःकोवासेवापटुःस्याद्रणतरणविधौसद्गुरोर्नैवजाने ॥
॥ ६२ ॥ इत्युक्तोपरतेसुरेश्वरगुरौतेनैवशारीरकेनोसंभाव्यहहात्रवार्तिकमितिप्रौढंशुगाग्निंशनैः ॥ धी
राग्र्यःशमयन्विवेकपयसादेवेश्वरेणत्रयीभाष्येकारयितुंसवार्त्तिकयुगंबद्धादरोऽभून्मुनिः ॥ ६३ ॥ भा
वानुकारिमृदुवाक्यनिवेशितार्थंस्वीयैःपदैःसहनिराकृतपूर्वपक्षं ॥ सिद्धांतयुक्तिविनिवेशिततत्स्वरूपं
दृष्ट्वाभिनंद्यपरितोषवशादवोचत् ॥ ६४ ॥

यामेवंभूतस्यसद्गुरोस्तवसेवायांकोवापटुःस्यात् स्र० ॥ ६२ ॥ इत्युक्त्वासुरेश्वरगुरावुपरतेसति अहहेत्यत्यंतखेदे तेनसुरेश्वरेणैवात्रशारी रकेवार्त्तिकंनोसंभावि इतिप्रौढंशोकाग्निंधीराग्र्यःश्रीशंकरोविवेकपयसाशनैःशमयन् वेदत्रयीभाष्येसुरेश्वरेणवार्तिकद्वयंकारयितुंसमु निर्बद्धादरोऽभूत् शा० ॥ ६३ ॥ भावानुसारिभिर्मृदुभिर्वाक्यैर्विनिवेशितोऽर्थोयत्र स्वीयैःपदैर्निराकृतःपूर्वपक्षोयत्र सिद्धांतयुक्तिभिर्वि निवेशितंतस्यसिद्धांतस्यस्वरूपंयत्र तंतदीयंग्रंथंदृष्ट्वा अभिनंद्यसश्रीशंकरः परितोषवशादवोचत् व० ॥ ६४ ॥ ॥ ६

तदाह हेविनयिन् त्वंयदुक्तवान्असि तत्सर्वंसत्यमतोममयाजुषीतैत्तिरेयीशाखातस्याअंतर्गतोयोभाष्यलक्षणोममग्रंथ।निबंधस्तस्यवार्तिक
कंमदर्थंभवताप्रणेयं यतःसतांचेष्टितंपरहितैकफलंप्रसिद्धं ॥६५॥ तद्वत्त्वदीयाखलुयाकाण्वशाखातत्रापिममतदंतर्भाष्यमस्ति तस्यवार्तिक
मपीष्टंविधेयं यतःसतांप्रवृत्तिःपरोपकारायेत्यर्थः॥६६॥ आवश्यकताबोधनायपुनराह तत्रोभयत्रतापत्रयनिबर्हणंवार्तिकंकुरु जिताकार्तिक

सत्यंयदात्थविनयिन्ममयाजुषीयाशाखातदंतगतभाष्यनिबंधइष्टः ॥ तद्वार्तिकंममकृतेभवताप्रणेयं
सच्चेष्टितंपरहितैकफलंप्रसिद्धं ॥ ६५ ॥ तद्वत्त्वदीयाखलुकाण्वशाखाममापितत्रास्तितदंतभाष्यं ॥
तद्वार्त्तिकंचापिविधेयमिष्टंपरोपकारायसतांप्रवृत्तिः ॥ ६६ ॥ तत्रोभयत्रकुरुवार्त्तिकमार्त्तिहारिकीर्तिं
त्वयाहिजितकार्तिकचंद्रिकाभां ॥ माशंकिपूर्वमिवदुःशठवाक्यरोधोमद्वाक्यमेवशरणंव्रजमाविचारीः
॥ ६७ ॥ इत्थंसउक्तोभगवत्पदेनश्रीविश्वरूपोविदुषांवरिष्ठः ॥ चकारभाष्यद्वयवार्त्तिकेद्वेत्याज्ञागुरू
णांत्यविचारणीया॥ ६८ ॥

चंद्रिकायाःआभाययातथाभूतांकीर्तिंचप्रामुहि ननुपूर्ववदधुनापिविनेयवाक्यैरोधस्यावश्यंभावित्वात्किमर्थंतत्करणेमयादीक्षास्वीकार्येतिशं
कात्वयानकर्तव्याइत्याह माशंकीति कुतइतिचेत्तत्राह मद्वाक्यमेवशरणमतस्तत्करणार्थंगच्छविचारंमाकुरु व० ॥ ६७ ॥ इत्थंभगवत्पदे
नश्रीशंकरेणोक्तोविदुषांवरिष्ठः सश्रीसुरेश्वरोभाष्यद्वयस्यवार्तिकेद्वेचकार हियस्मादुरूणामाज्ञाऽविचारणीयाएव उ० ॥ ६८ ॥

एतदेव विवृणोति गुरोराज्ञाऽनुचरैर्नहिलंघनीयेत्युक्त्वा वेदांतयोस्तैत्तिरीयबृहदारण्यसंज्ञयोस्तयोर्भाष्ययोरुदारं वार्तिकद्वयं निर्माय सीमारहिता
निरुपमा धीर्यस्य स सुरेश्वरो निजदेशिकाय उपदां चकार उपायनभूतं कृतवान् व० ॥ ६९ ॥ सनंदनो नाम गुरोरनुज्ञया प्रेरितः परां भाष्यस्य टीकां
व्यधात् यस्याः पूर्वभागः पंचपादिका तच्छेषगा वृत्तिरिति प्रथीयसी प्रख्याता ॥७०॥ व्यासाख्यर्षिसूत्रकदंबस्य विवेचनाय आत्मकीर्तिविजयडिंडि

आज्ञागुरोरनुचरैर्नहिलंघनीयेत्युक्त्वा तयोर्निगमशेखरयोरुदारं ॥ निर्मायवार्तिकयुगं निजदेशिकाय
निःसीमनिस्तुलनधीरुपदां चकार ॥ ६९ ॥ सनंदनो नाम गुरोरनुज्ञया भाष्यस्य टीकां व्यधित ईरितः परां ॥
यत्पूर्वभागः किल पंचपादिका तच्छेषगा वृत्तिरिति प्रथीयसी ॥ ७० ॥ व्यासर्षिसूत्रनिचयस्य विवेचनाय
टीकाभिधं विजयडिंडिममात्मकीर्तेः ॥ निर्माय पद्मचरणो निरवद्ययुक्तिस्यूतं प्रबंधमकरोद्गुरुदक्षिणां सः
॥ ७१ ॥ आलोचयन्नथ तदानुगतिं ग्रहाणामूचे सुरेश्वरसमाह्वमुपह्वरे सः ॥ पंचैव वत्स चरणाः प्रथिताइ
हस्युस्तत्रापि सूत्रयुगलद्वयमेव भूम्ना ॥ ७२ ॥ प्रारब्धकर्मपरिपाकवशात्पुनस्त्वं वाचस्पतित्वमधिगम्य व
सुंधरायां ॥ भव्यां विधास्यसि तमां मम भाष्यटीकामाभूतसंलयमधिक्षितिसा च जीयात् ॥ ७३ ॥

मं यतो निरवद्ययुक्तिभिर्ग्रथितं टीकासंज्ञं प्रबंधं निर्माय स पद्मपादो गुरुदक्षिणामकरोत् व० ॥ ७१ ॥ अथानंतरं सूर्यादिग्रहाणां गतिमालोचयन् सु
रेश्वरसमाख्यमेकांते सः श्रीशंकरो बभाषे हे वत्स इह लोके पंचैव चरणाः प्रथिताः स्युरिह टीकायामिति वा तत्रापि बाहुल्येन सूत्रचतुष्टयमेव प्रथि
तं स्यात् ॥ ७२ ॥ एवं तद्वृत्तशापस्य सार्थक्यं प्रदर्श्य सूत्रभाष्यवृत्तिकरणसंकल्पस्यापि तत्त्वमाह प्रारब्धेति भूमौ वाचस्पतित्वं प्राप्य भव्यां म
म भाष्यटीकां सम्यक् विधास्यसि सनंदनकृतटीकासाम्यं वारयति प्रलयपर्यंतं क्षितौ सा च जीवनं प्राप्नुयादिति वरप्रदानं ॥ ७२ ॥

इत्येवंसुरेश्वरमुक्त्वाऽथानंतरमसौयतीश्वरआनंदगिर्यादिमुनीनाहूयाद्वैतपरान्निबंधान्कुरुध्वंइतिसनिर्ममचक्रवर्तीआज्ञप्तवान् उ० ॥ ७४ ॥ तेसर्वेप्यानंदगिरिमुख्यामहानुभावादेशिकेंद्रोरनुमतिमाप्य स्वमात्मानमनतिक्रम्ययथामति आत्मतत्त्वांभोजार्कान्विशदतरान्निबंधाना

इत्येवमुक्त्वाथयतीश्वरोसावानंदगिर्यादिमुनीन्सहूत्वा॥ कुरुध्वमद्वैतपरान्निबंधानित्यन्वशान्निर्ममसार्वभौमः ॥ ७४ ॥ तेसर्वेप्यनुमतिमाप्यदेशिकेंद्रोरानंदाचलमुखरामहानुभावाः ॥ आतेनुर्जगतियथास्वमात्मतत्वांभोजार्कान्विशदतरान्बहून्निबंधान् ॥ ७५ ॥ इतिश्रीमाधवीयेतद्वार्तिकांतप्रवर्तनः॥ संक्षेपशंकरजयेपूर्णःसर्गस्त्रयोदशः ॥ १३ ॥ मू० सं० १११ ॥ ९ ॥ ॥ ९ ॥

समंताद्विस्तारितवंतः प्रहर्षणी ॥ ७५ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिकृतेश्रीशंकराचार्यविजयडिंडिमेत्रयोदशःसर्गःसंपूर्णः ॥ १३ ॥ ॥ ९ ॥ ॥ ९ ॥ ॥ ९ ॥

॥ श्री० ॥ अथपद्मपादकृतांतीर्थयात्रांनिरूपयितुमुपक्रमते अथानंतरं सपद्मपादस्तीर्थयात्रांकर्तुमनागुरोरनुज्ञामयाचिष्ट याज्ञामेवा
ह हेभगवन्गुरो अनुज्ञादेया बहुतीर्थयुक्तान्देशान् द्रष्टुमिच्छामि उ० ॥ १ ॥ एवंप्रार्थितोगुरुरुवाच गुरोर्निकटेयोवासःसएवक्षेत्रवासः ॥
॥ २ ॥ यस्माद्गुरुसमीपेस्थितस्यदेशांतरगमनप्राप्यंसमस्तंप्राप्तमेवाभूत् शुश्रूषमाणेनशिष्येणगुरोःसमीपेस्थेयं गुरुसमीपादन्यदेशेनैवगंत
व्यं यतोऽन्यत्रगमनेसंन्यासधर्मदौर्लभ्यदुःखबाहुल्यादित्वतिरिच्यतइत्याशयेनाह अतिशयेनमार्गश्रमेणकर्शितस्यनिद्राभिभूत्याकिमपित्वं

श्री ॥ अथचतुर्दशःसर्गः ॥ अथाब्जपात्कर्तुमनाःसतीर्थयात्रामयाचिष्टगुरोरनुज्ञां ॥ देयागुरोमेभगवन्ननु
ज्ञादेशान्दिदृक्षेबहुतीर्थयुक्तान् ॥१॥ सक्षेत्रवासोनिकटेगुरोर्योवासस्तदीयांघ्रिजलंचतीर्थं ॥ गुरूपदेशनय
दात्मदृष्टिःसैवप्रशस्ताखिलदेवदृष्टिः ॥२॥ शुश्रूषमाणेनगुरोःसमीपेस्थेयंननेयंसततोऽन्यदेशे ॥ विशिष्यमा
र्गश्रमकर्शितस्यनिद्राभिभूत्याकिमुचिंतनीयं ॥३॥ द्विधाहिसंन्यासउदीरितोयंविबुद्धतत्त्वस्यचतद्बुभुत्सोः ॥
तत्त्वंपदार्थैक्यउदीरितोयंयत्नात्समर्थःपरिशोधनीयः ॥ ४ ॥ संभाव्यतेक्वचजलंक्वचनास्तिपाथःशय्यास्थ
लंक्वचिदिहास्तिनचक्वचास्ते ॥शय्यास्थलीजलनिरीक्षणसक्तचेताःपांथोनशर्मलभतेकलुषीकृतात्मा ॥५॥

पदादिचिंतनीयंनसंभवति ॥ ३ ॥ अयंसंन्यासश्चद्विधा विद्वत्संन्यासोविविदिषासंन्यासश्चेतिद्विप्रकारकउक्तस्तत्रविबुद्धतत्त्वस्यविक्षेपनि
वृत्त्याजीवन्मुक्तिसुखार्थआयस्तत्त्वबुभुत्सोस्तत्त्वंपदैक्यतदर्थोयंभवदादिभिराश्रितोद्वितीयउक्तः तस्मात्तदर्थत्वमर्थःप्रयत्नाच्छोधनीयः न
तुतदपघातकंतीर्थाटनादिकर्त्तव्यमितिभावः ॥ ४ ॥ तीर्थयात्रायास्तदभिघातकंस्फुटयन्नाह संभाव्यतइति पाथोजलं इहमार्गे व० ॥५॥

 किंच यदिचेज्ज्वरातिसारादिरोगजालंबाधेततर्हिकोऽप्युपायोनास्ति नपारयेतनैवशक्नुयात् ॥ उ० ॥ ६ ॥ नचक्कचेतिवामध्यमणिन्यायेनो 
भयत्रसंबंधनीयं ॥ ७ ॥ एवमुक्तःपद्मपादउवाच यद्यपिगुरुवचसउत्तरंनास्तितथापीहोत्तरंवक्ष्ये एवंप्रतिज्ञांविधाययत्सक्षेत्रवासइत्याद्यु 
क्तंतत्राह सत्यमिति गुरुसमीपवासःश्रेयानितिभगवान्यदाहतत्सत्यं तथापिआद्यायेसंयमिनस्तेषामनेकान्देशानवीक्ष्यमेहृदयमव्याकुलं
 नभवति हेसंयमिनांप्रथमेतिवा व० ॥ ८ ॥ संभाव्यतइत्यादियदुक्तंतत्राप्याह सर्वत्रेति नविद्यतेसुव्यवस्थायस्यसयद्यप्येवंतथाप्यधुनासु

ज्वरातिसारादिचरोगजालंबाधेतचेत्तर्हिनकोप्युपायः ॥ स्थातुंचगंतुंचनपारयेततदासहायोऽपिविमुंचतीमं
॥ ६ ॥ स्नानंप्रभातेनचदेवतार्चनंक्कचोक्तशौचंक्कचवाससमाधयः ॥ क्कचाशनंकुत्रचमित्रसंगतिःपांथोनशाकं
लभतेक्षुधातुरः ॥ ७ ॥ नास्त्युत्तरंगुरुगिरस्तदपीहवक्ष्येसत्यंयदाहभगवान्गुरुपार्श्ववासः ॥ श्रेयानितिप्रथ
मसंयमिनामनेकान्देशानवीक्ष्यहृदयंननिराकुलंमे ॥ ८ ॥ सर्वत्रनक्कापिजलंसमस्तिपश्चात्पुरस्तादथवाविदि
क्षु ॥ मार्गोहिविघ्नेतनसुव्यवस्थःसुखेनपुण्यंक्कनुलभ्यतेऽधुना ॥ ९ ॥ जन्मांतरार्जितमघंफलदानहेतोर्व्याध्या
त्मनाजनिमुपैतिननोविवादः ॥ साधारणादिहचवापरदेशकेवाकर्मत्यभुक्तमनुवर्ततएवजंतुं ॥ १० ॥ इहस्थि
तंवापरतःस्थितंवाकालोनमुंचेत्समयागतश्चेत् ॥ तद्देशगत्यामृतदेवदत्तइत्यादिकंमोहकृतंजनानां ॥ ११ ॥

खेनपुण्यंक्कापिनलभ्यतेऽतस्तदर्थंदुःखमपिसोढव्यमित्यर्थः उ० ॥ ९ ॥ यदपिज्वरातिसारादीत्युक्तंतत्राप्याह जन्मांतरार्जितंपापंफलदाना
र्थंरोगात्मनाजन्मोपैतीत्यत्रअस्माकंविवादोनास्ति तथापीहवापरदेशकेवासाधारणाज्जनिमुपैति हियस्मादभुक्तंकर्मजंतुमनुवर्त्ततएव व० ॥ 
॥ १० ॥ कालोमृत्युःस्वसमयआगतश्चेदिहस्थितंपरदेशेस्थितंवानैवमुंचेत् यत्तुतद्देशगमनेनदेवदत्तोमृतवानित्यादिकंजनानांवचस्तत्त्वविवे
कक्रुतमित्याह तद्देशगत्येति उ० ॥ ११ ॥

यत्तुस्नानमित्याद्युक्तंतत्राह मनुपराशरादयोमुनिवराःकिलधर्मशास्त्रेदेशाद्यवेक्ष्यातिप्रसिद्धंधर्मादिसंकुचितमाहुस्तथाचस्मृतिः देशकाले तथात्मानंद्रव्यंद्रव्यप्रयोजनं उपपत्तिमवस्थांचज्ञात्वाशौचंसमारभेदित्याद्या तथाच देशाद्यवेक्ष्यतेषांसरणिगतानामस्माकंशौचाद्यतिक्रमनिमित्तमघंनप्रभवेत् व० ॥१२॥ यत्तुक्वचाशनंपांथोनशाकंलभतेक्षुधातुरइत्युक्तंतत्राह दैवइति तस्मिन्दैवेप्रतीपेप्रतिकूलेऽतस्ततएवप्रतीपादनुकलाद्वादैवादेव उ० ॥१३॥ किंच गृहंपरित्यज्यविदेशगस्तीर्थदृश्वानापुमान्सुखंयथास्यात्तथासमागच्छगृहेस्थितस्तदागमात्पूर्वमेह

मन्वादयोमुनिवराःखलुधर्मशास्त्रेधर्मादिसंकुचितमाहुरतिप्रवृद्धं ॥ देशाद्यवेक्ष्यनतुतत्सरणिगतानांशौचाद्यतिक्रमकृतंप्रभवेदघंनः ॥ १२ ॥ दैवेऽनुकूलेविपिनंगतोवासमाप्नुयाद्वांछितमन्नमेषः ॥ हीयेतनश्येदपिवापुरस्थंतस्मिन्प्रतीपेततएवसर्वं ॥ १३ ॥ गृहंपरित्यज्यविदेशगोनासुखंसमागच्छतितीर्थदृश्वा ॥ गृहंगतोयातिमृतिंपुरस्तात्तदागमादत्रचकिंनिमित्तं ॥ १४ ॥ देशेकालेऽवस्थितंतद्विमुक्तंब्रह्मानंदंपश्यतांतत्रतत्र ॥ चित्तैकाग्र्येविद्यमानेसमाधिःसर्वत्रासौदुर्लभोनैवमन्ये ॥ १५ ॥ सत्तीर्थसेवामनसःप्रसादिर्नादेशस्यवीक्षामनसःकुतूहलं ॥ क्षिणोत्यनर्थान्सुजनेनसंगमस्तस्मान्नकस्मैभ्रमणंविरोचते ॥ १६ ॥

यत्तुकिमुचितनीयंक्वचवासमाधयइत्युक्तंतत्राह देशइति वस्तुमरणंयातीत्यत्रचकिंनिमित्तंतस्यपरदेशगमनादेरभावात् उप० ॥ १४ ॥ यत्तुकिमुचितनीयंक्वचवासमाधयइत्युक्तंतत्राह देशइति वसु तस्ताभ्यांदेशकालाभ्यांविमुक्तंब्रह्मानंदंपश्यतांतत्रतत्रदेशेकालेचित्तैकाग्र्येविद्यमानेसतिसर्वत्रासौसमाधिर्दुर्लभोनेतिमन्ये शा० ॥ १५ ॥ किंचसत्तीर्थसेवामनसोविशोधिर्नादेशस्यापूर्वस्यदर्शनं मनसःकुतूहलं सुजनेनसंगोऽनर्थान्नाशयति तस्मादेवंविधंभ्रमणंकस्मैविशेषेणनरोचते उ० ॥ १६ ॥

यदपिकुत्रचमित्रसंगतिरित्युक्तंतत्राप्याह विदेशेसम्यग्गतिमटमानःकुर्वाणोऽपिविद्वान्विदुषाभिसंगतिंलभेत् बुधानांबुधएवखलुमित्रं कथितं यतोखलेनमैत्रीचिरायनतिष्ठति वंश० ॥ १७ ॥ यत्तुगुरोःसमीपेस्थेयमित्याद्युक्तंतत्राह गुरोःसमीपेवासोऽयंकथितोविदेशगो यदिहृदयेनगुरुंधारयेत् समीपगोप्येषसमीपेनस्थितोयदिभक्तिहीनोहृदितंनधारयेत् ॥ १८ ॥ सुजनसमागमोऽपिसुजनस्यैवफलतीत्याह सुजनःसुजनेनसंगतः शनैस्तत्संगेनबुद्धिवर्धयति परिपुष्टमतिर्विवेकवान्सन्हेयंगुणंदुःखादिरजआदिवाविमुंचति वि० ॥ १९ ॥ एवमुक्तो

॥२॥

अटाट्यमानोपिविदेशसंगतिंलभेतविद्वान्विदुषाभिसंगतिं ॥ बुधोबुधानांखलुमित्रमीरितंखलेनमैत्रीनचिरा यतिष्ठति ॥ १७ ॥ समीपवासोयमुदीरितोगुरोर्विदेशगोयद्धृदयेनधारयेत् ॥ समीपगोप्येपनसंस्थितोंतिकेन भक्तिहीनोयदिधारयेद्धृदि ॥ १८ ॥ सुजनःसुजनेनसंगतःपरिपुष्णातिमतिंशनैःशनैः ॥ परिपुष्टमतिर्विवेकवा न्छनकैर्हेयगुणंविमुंचति ॥ १९ ॥ यद्याग्रहोऽस्तितवतीर्थनिषेवणायांविघ्नोमयात्रनखलुक्रियतेपुमर्थे ॥ चित्त स्थिरत्वगतयेविहितोनिषेधोमाभूद्विशेषगमनंत्वतिदुःखहेतुः ॥ २० ॥ नैकोमार्गोबहुजनपदक्षेत्रतीर्थानियातां श्चौराध्वानंपरिहरसुखंत्वन्यमार्गेणयाहि ॥ विप्राग्र्याणांवसतिविततिर्यत्रवस्तव्यमापन्नोचेत्सार्धपरिचितज नैःशीघ्रमुद्दिष्टदेशं ॥ २१ ॥

गुरुरुवाच यदीति अत्रतीर्थसेवारूपेपुरुषार्थेचित्तस्थैर्याऽवगतयेमयानिषेधोविहितएवमनुज्ञाप्यशिक्षणंकरोति अतिदुःखहेतुर्विशेषग मनंमाभूत् व० ॥ २० ॥ किंचयतोबहुजनपदक्षेत्रतीर्थानिगच्छतोमेकोमार्गोनभवत्यतश्चौराध्वानंपरित्यजसुखंयथास्यात्तथात्वन्यमार्गेण गच्छ किंचविप्राणांवसतिविततिर्निकेतनविपुलायत्रतत्रवस्तव्यं तत्रापीषन्नतुबहुकालंविप्राणांवसतिविततिर्नास्तिचेत्परिचितजनैःसहोद्दि ष्टदेशंशीघ्रंयाहि मंदा० ॥ २१ ॥



॥२

यतस्तैः प्रशांतैःश्राव्यमाणाअध्यात्म्यैक्यकथाःका
किंचसद्भिःसंगोविधेयः हियस्मात्सत्संगःसज्जनानांसुखनिचयंजनयति कुतइत्यतआह
यक्लेशंविभिद्युस्ताविशिनष्टि घटितोबहुरसोयासु सततंयद्भयंसंसृतिलक्षणंतद्भिंदंतीतितथा सततंभयंभिंदंतीतिवा तथासंसृतिमार्गेश्रांतानां
विश्रामवृक्षाःपुनश्चमनःश्रोत्राभिरामाःपरिमार्जितातृड्वांछापिपासाचयाभिः क्षोभितःक्षुल्लक्षणःकलंकोयैस्ताभिस्ताः सू० ॥ २२ ॥ यत्स्व

सद्भिःसंगोविधेयःसहिसुखनिचयंसूयतेसज्जनानामध्यात्म्यैक्यकथास्ताघटितबहुरसाःश्राव्यमाणाःप्रशां
तैः ॥ कायक्लेशंविभिद्युःसततभयभिदःश्रांतविश्रांतवृक्षाःस्वांतश्रोत्राभिरामाःपरिम्लपिततृपःक्षोभितक्षु
त्कलंकाः॥२२॥ सत्संगोयंबहुगुणयुतोथैकदोषेणदुष्टोयत्स्वांतेयंतपतिचपरंसूयतेदुःखजालं॥ खल्वासंगा
वसतिसमयेशर्मदःपूर्वकालेप्रायोलोकेसततविमलंनास्तिनिर्दोषमेकं ॥ २३ ॥ मार्गेयास्यन्नबहुदिवसा
न्पाथसःसंग्रहीस्यात्तस्माद्दोषोजिगमिषुपदप्राप्तिविघ्नस्ततःस्यात् ॥ प्राप्योद्दिष्टंवसनिरसनंतत्रकार्यस्य
सिद्धेर्मूलाद्ध्वंशोऽभिलषितपदप्राप्त्यभावोऽन्यथाहि ॥ २४ ॥

यतोवियोगात्पूर्वकालेयाससमयेसंगःसुखदःप्रसिद्धस्तथाचलोकएकमपिव
स्यांतेऽयंसंगस्तपतिसंतापयति चहेतौ यतोदुःखजालंप्रसूयते यतस्तस्मात्संप्रहात्सर्वस्वहर
स्तुसततंविमलंनिर्दोषंप्रायोनास्ति सू० ॥ २३ ॥ किंच बहुदिवसान् मार्गेयास्यन्जलमात्रस्यापिसंग्रहीनस्यात्
णरूपोदोषःस्यात्ततस्तस्माद्दोषाद्गंतुमिच्छोरभिलषितपदप्राप्तिविघ्नःस्यात् किंचोद्दिष्टंदेशंप्राप्यतत्रवसवासंकुरु अन्यथामध्येवासेक्रियमाणे
कार्यस्यनिरसनंबाधःसिद्धेर्मूलाद्ध्वंशोऽभिलषितपदप्राप्त्यभावश्चस्यात् ॥ २४ ॥

किंच मार्गेमाययासाधुवपुषाबहुगुणैराछादितस्वस्वरूपादुर्विधाःखलाश्चौराःसहैववसेयुः तेप्रयत्नात्सम्यक्परीक्ष्यायतस्तेदुष्टादेवान्वस्त्रंपुस्तकंवानेतुकामाः अतोअपरिचितनरेषुप्रकर्षेणहेयोविश्वासःकदापिनकर्त्तव्यः ॥ २५ ॥ किंच मार्गस्यमध्येततोबहिर्योजनाभ्यंतरेवाभिक्षवश्चतिष्ठेयुः तर्हितेऽभिगम्यायतःपूज्याःपूजायोग्याःपूजनीयायतस्तेषांव्यतिक्रांतिरुग्रायतःश्रेयस्कार्यंनिष्फलीकर्त्तुंसमर्थाः शालिनी ॥

मार्गेचोरानिकृतिवपुषःसंवसेयुःसहैवछन्नात्मानोबहुविधगुणैःसंपरीक्ष्याःप्रयत्नात् ॥ देवान्वस्त्रंलिखितमथवादुर्विधानेतुकामाविश्वासोतोपरिचितनृषुप्रोज्झनीयोनकार्यः ॥ २५ ॥ मध्येमार्गंयोजनाभ्यंतरेवातिष्ठेयुश्चेद्भिक्षवस्तेभिगम्याः ॥ पूज्याःपूज्यांस्तद्व्यतिक्रांतिरुग्राश्रेयस्कार्यंनिष्फलीकर्तुमीशाः ॥ २६ ॥ यदापदपदंसदायतिवरस्थितंवस्तुतन्मतंभजमितंपचान्मनसिमाकृथाःप्राकृतान् ॥ कषायकलुषाशयक्षतिविनिर्वृतःसन्मतःसुखीचरसुखेचिरात्स्फुरतिसंततानंदता ॥ २७ ॥ इत्थंगुरोर्मुखगुहोदितवाक्सुधांतामापीयहृष्टहृदयःसमुनिःप्रतस्थे ॥ प्रस्थाप्यतंगुरुवरोथसुरेश्वराद्यैःकालंकियंतमनयत्सहशृंगकुध्रे ॥ २८ ॥

॥ २६ ॥ उपदेशसारमाह हेयतिवर आपदामपदंसर्वानर्थशून्यंवस्तुयस्मिन्स्थितंतन्मतंसदाभज मितंपचान्कदर्यानन्यापरान्मनसिमाकृथाः पुनश्चकषायेणकलुषस्याशयस्यक्षत्याविशेषेणनिष्पन्नंसन्मतंयस्यतथाभूतःसुखीचर यतःसुखेऽचिरात्संततानंदतास्फुरति पृ० ॥ २७ ॥ इत्थंगुरोर्मुखलक्षणायागुहायाउदितांवाक्सुधांतामापीय हृष्टहृदयःसमुनिःपद्मपादःप्रतस्थे तंप्रस्थाप्यगुरुवरोथानंतरंसुरेश्वराद्यैःसहकियंतंकालंऋष्यशृंगाख्यभूधरेऽनयत् व० ॥ २८ ॥

तदात्मयोगशक्तेरनुभावेनमातुर्वृत्तांतमधिगम्याश्रवेभ्योवचनस्थितेभ्योयतिभ्योविनिवेद्य तंवृत्तांतंविज्ञाप्यचावलंबितःतारकामार्गोगगनमा
गोयेनासौश्रीशंकरोचिरान्मातुःसमीपमाससाद उपें० ॥ २९ ॥ निदाघेनग्रीष्मसंतापेनार्तःसंतप्तः आ० ॥ ३० ॥ हेंऽबायंतवपुत्रोस्तिशुचं
शोकंत्यज उ० ॥ ३१ ॥ आमयरहितंपुत्रंचिरात्दृष्ट्वा इं० ॥ ३२ ॥ आनुषंगिकंकृत्यमप्याहेतइति ननुनेदंसतांवृत्तमितिचेत्तत्राह हेसद्वृत्त

अधिगम्यतदात्मयोगशक्तेरनुभावेननिवेद्यचाश्रवेभ्यः॥अवलंबिततारकापथोसावचिरादंतिकमाससाद
मातुः॥२९॥ तत्रातुरांमातरमैक्षतासौननामतस्याश्चरणौकृतात्मा ॥ साचैनमुद्वीक्ष्यशरीरतापंजहौनिदाघा
र्तइवांबुदेन ॥ ३० ॥ असावसंगोऽपितदार्द्रचेतास्तामाहमोहांधतमोपहर्ता ॥ अंबायमस्म्यत्रशुचंजहीहि
ब्रवीहिकिंतेकरवाणिकृत्यं ॥ ३१ ॥ दृष्ट्वाचिरात्पुत्रमनामयंसाह्रष्टांतरात्मानिजगादमंदं ॥ अस्यांदशायां
कुशलीमयात्वंदिष्ट्यासिदृष्टःकिमतोऽस्तिकृत्यं॥३२॥ इतःपरंपुत्रकगात्रमेतद्वोढुंनशक्नोमिजरातिशीर्णं॥
संस्कृत्यशास्त्रोदितवर्त्मनात्वंसद्वृत्तमांप्रापयपुण्यलोकान् ॥ ३३ ॥ सुतानुगांसूक्तिमिमांजनन्याःश्रुत्वाथ
तस्यैसुखरूपमेकं ॥ मायामयाशेपविशेषशून्यंमानातिगंस्वप्रभमप्रमेयं ॥ ३४ ॥ उपादिशद्ब्रह्मपरंसना
तनंनयत्रहस्तांघ्रिविभागकल्पना॥ अंतर्बहिःसंन्निहितंयथांबरंनिरामयंजन्मतदादिवर्जितं॥३५॥

तवातितेजस्वित्वादेतावतासद्वृत्तताभंगोनास्तीत्याशयः उ० ॥ ३३ ॥ एवमुक्तःश्रीशंकरोंतर्भूतसर्वलोकसुखंब्रह्मानंदंप्रापयितुंप्रवृत्तइत्याह
सुतविषयांजनन्याःसूक्तिंश्रुत्वाऽनंतरंतस्यैसुखरूपमेकंपरंब्रह्मोपादिशदितिपरेणान्वयः तद्विशिनष्टि मायेति अतएवप्रत्यक्षादिप्रमाणातीतं न
हिकथंभातीतिचेत्तत्राह स्वप्रभंस्वप्रकाशं अतएवाप्रमेयंफलव्याप्त्यभावात् ॥ ३४ ॥ ३५ ॥

एवमुपदिष्टाजनन्युवाच हेसौम्य निर्गुणेमे चित्तंनरमते अतोरम्यंसगुणंतुदेवंत्वंवद कुतोनरमतेइतिचेत्तत्राह यदेकंस्थूलत्वादिनिर्मुक्तंतत्त्वमात्रं
तद्बुद्धिनारोहति यद्यस्मादितिवा॥ ३६॥ एवंमातुर्वचनंनिशम्यदयालुर्मुनिःश्रीशंकराचार्योऽष्टमूर्तिमहादेवं भुजंगप्रयातंभवेद्येश्चतुर्भिरित्युक्तल
क्षणैर्भुजंगप्रयाताख्यैःपद्यैर्भक्त्यानुष्टाव तथाहि अनाद्यंतमाद्यंपरंतत्त्वमर्थंचिदाकारमेकंतुरीयंत्वमेयं हरिब्रह्ममृग्यंपरब्रह्मरूपंमनोवागतीतं
महःशैवमीडे १ स्वशक्त्यादिशक्त्यंतसिंहासनस्थंमनोहारिसर्वांगरत्नादिभूषं जटाचंद्रगंगास्थिसंपर्कमौलिपराशक्तिमित्रंनमःपंचवक्त्रं
२ शिवेशानतत्पूरुषाघोरवामादिभिर्ब्रह्मभिर्हृन्मुखैःषड्भिरंगैः अनौपम्यषड्त्रिंशतंतत्त्वविद्यामतीतंपरंत्वांकथंवेत्तिकोवा ३ प्रवालप्रवाह
प्रभाशोणमर्धंमरुत्वन्मणिश्रीमहःश्याममर्धं गुरुस्फूर्तिमेकंवपुश्चैकमंतःस्मरामिस्मरापत्तिसंपत्तिहेतुं ४ स्वसेवासमायातदेवासुरेंद्रानमन्मौलि

सौम्यागुणेमेरमतेनचित्तंरम्यंवदत्वंसगुणंतुदेवं॥ नबुद्धिमारोहतितत्त्वमात्रं
यदेकमस्थूलमनण्वगोत्रं ॥ ३६॥ निशम्यमातुर्वचनंदयालुस्तुष्टावभक्त्यामु
निरष्टमूर्त्तिं॥ वृत्तैर्भुजंगोपपदैःप्रसन्नःप्रस्थापयामाससचस्वदूतान् ॥ ३७॥

मंदारमालाभिषिक्तं नमस्यामिशंभोपदांभोरुहंतेभवांभोधिपोतंभवानीविभाव्यं ५ जगन्नाथमन्नाथगौरीशनाथप्रपन्नानुकंपिन्विपन्ना
र्त्तिहारिन् महःस्तोममूर्तेसमस्तैकबंधोनमस्तेनमस्तेपुनस्तेनमोऽस्तु ॥ ६ ॥ महादेवदेवेशदेवादिदेवस्मरारेपुरारेयमारेहरेति ब्रुवाणःस्मरिष्या
मिभक्त्याभवंतंततोमेदयाशीलदेवप्रसीद ७ विरूपाक्षविश्वेशविश्वाधिकेशत्रयीमूलशंभोशिवत्र्यंबकत्वं प्रसीदस्मरत्राहिपश्यावपुष्य
क्षमस्वाप्नुहीतिक्षपाहिक्षिपामः ८ त्वदन्यःशरण्यःप्रपन्नस्यनेतिप्रसीदस्मरन्नोवहन्यास्तुदैन्यं नचेत्तेभवद्भक्तवात्सल्यहानिस्ततोमेदयालो
दयांसन्निधेहि ९ अयंदानकालस्त्वहंदानपात्रंभवान्नाथदातात्वदन्यंनयाचे भवद्भक्तिमेवस्थिरांदेहिमह्यंकृपाशीलशंभोकृतार्थोऽस्मित
स्मात् १० पशुंवेत्सिचेन्मांत्वमेवाधिरूढःकलंकीतिवामूर्ध्निधत्सेत्वमेव द्विजिह्वःपुनःसोऽपितेकंठभूषात्वदंगीकृताःशर्वसर्वेऽपिधन्याः ११

स्तुतिध्यानम १२
नशक्नोमिकर्त्तुंपरद्रोहलेशंकथंप्रीयसेत्वंनजानेगिरीश तथाहिप्रसन्नोसिकस्यापिकांतासुतद्रोहिणोवापितृद्रोहिणोवा १२ अकंठेकलंकादनंगेभुजंगादपा
चांयथावद्विधातुंभजन्नप्यजानन्महेशावलंबे त्वसंतंसुतंत्वातुमयेमृकंडोर्यमप्राणनिर्वापणंत्वत्पदाब्जं १३ अमौलौशशांकादवामेकलत्रादहंदेवमन्यंनमन्येनमन्ये १४ इतिसचमहादेवःस्तुत्याप्रसन्नःस्वदूतान्प्रेषयामा
णौकपालादभालेनलाक्षात् अमौलौशशांकादवामेकलत्रादहंदेवमन्यंनमन्येनमन्ये १४ इतिसचमहादेवःस्तुत्याप्रसन्नःस्वदूतान्प्रेषयामा
स ॥ ३७ ॥ शूलपिनाकहस्तांस्तान्शिवदूतान्दृष्ट्वाऽदृष्टाहंनैवानुगच्छेयमितिब्रुवंत्यांतस्यांजनन्यांसत्यांशिवदूताननुनयेनविसृज्यलक्ष्मी

विलोक्यतान्शूलपिनाकहस्तान्नैवानुगच्छेयमितिब्रुवंत्यां ॥ तस्यांविसृज्यानुनयेनशैवानस्तौदथोमाध
वमादरेण ॥ ३८ ॥ भुजगाधिपभोगतल्पभाजंकमलांकस्थलकल्पितांघ्रिपद्मं ॥ अभिवीजितमादरेण
नीलावसुधाभ्यांचलमानचामराभ्यां ॥ ३९ ॥ विहितांजलिनानिषेव्यमाणंविनतानंदकृताग्रतोरथेन ॥
धृतमूर्तिभिरस्त्रदेवताभिःपरितःपंचभिरंचितोपकंठं ॥ ४० ॥ महनीयतमालकोमलांगंमुकुटीरत्नचयंमहार्ह
यंतं ॥ शिशिरेतरभानुशीलिताग्रंहरिनीलोपलभूधरंहसंतं ॥ ४१ ॥

पतिस्तुतवान् ॥३८॥ माधवंविशिनष्टि भुजगाधिपस्यशेषस्यभोगात्मकंदेहात्मकतल्पंशय्यांभजतीतितथातंकमलायालक्ष्याअंकस्थलउत्संग
स्थलेकल्पितेस्थापितेचरणकमलेयेनतं नीलावसुधाख्याभ्यांस्वभार्याभ्यांचलमानाभ्यांचामराभ्यांवीजितं वसंतमालिका ॥३९॥ विहितांज
लिनाविनतानंदकृतागरुडेनरथेनायतोनिषेव्यमाणं धृतमूर्तिभिःपंचभिःशंखचक्रगदाधनुःखड्गाख्यास्त्रदेवताभिःपरितोंचितोपकंठंस्फुरत्सर्मा
पं ॥ ४० ॥ पूजनीयंतमालवत्कोमलमंगंयस्यकुमुटीकृतंरत्नसमुदायंमहार्हयंतंअतएवशिशिरेतरभानुरुष्णगुःसूर्यस्तेनशीलिताग्रंशोभिताग्रंइं
द्रनीलमणिभूधरंहसंतं ॥ ४१ ॥

मृतिकालउपागतेचित्तेनतंहृदिभावयंती साऽवलायोगिवद्देहंतत्याज व० ॥४२॥ विचि

 तत्तादृशंनिजसुतोदितंकमलनयनंमाधवंचित्तेदधार मृतिकालउपागतेचित्तेनतंहृदिभावयंती ॥ ४४ ॥ अर्चिरग्निरहर्दिनंवलक्षपक्षःशुक्लपक्षःषडुद

त्रैःकंपमानैर्ध्वजैराढ्यं उ० ॥४३॥ विराजमानंविमानमारोप्यसातैर्बहुमानपूर्वमानीता ॥ ४४ ॥ अर्चिरग्निरहर्दिनंवलक्षपक्षःशुक्लपक्षःषडुद

ङ्मासाउत्तरायणमासाःसमासंवत्सरः इयंसतीअर्चिराद्यभिमानिदेवताःवायुसूर्यचंद्रविद्युद्वरुणादिलोकांश्चक्रमशोऽतीत्यपरंपदंवैकुंठंप्रपे 



तत्तादृशंनिजसुतोदितमंबुजाक्षंचित्तेदधारमृतिकालउपागतेऽपि ॥ चित्तेनकंजनयनंहृदिभावयंतीतत्या

जदेहमबलाकिलयोगिवत्सा ॥ ४२ ॥ ततःशरच्चंद्रमरीचिरोचिर्विचित्रपारिप्लवकेतनाढ्यं ॥ विमानमा

दायमनोज्ञरूपंप्रादुर्बभूवुःकिलविष्णुदूताः ॥ ४३ ॥ वैमानिकांस्तान्नयनाभिरामानवेक्ष्यहृष्टाप्रशशंसपु

त्रं ॥ विमानमारोप्यविराजमानमनायितैःसाबहुमानपूर्वं ॥ ४४ ॥ इयमर्चिरहर्वलक्षपक्षान्षडुदङ्मास

समानिलार्कचंद्रान् ॥ चपलावरुणेंद्रधातृलोकान्क्रमशोतीत्यपरंपदंप्रपेदे ॥४५॥ स्वयमेवचिकीर्षुरेपमा

तुश्चरमंकर्मसमाजुहावबंधून् ॥ किमिहास्तियतेस्तवाधिकारःकितवेत्येनममीनिनिंदुरुच्चैः ॥४६॥ अनलंबहु

धार्थितापितस्मैवननादत्तचबंधुतानदीया ॥ अथकोपपरीवृतांतरोसावखिलांस्तानशपच्चनिर्ममेंद्रः ॥४७॥

॥५॥

दे वसंतमाला ॥ ४५ ॥ मातुरंत्यंदाहादिकर्मस्वयमेवकर्तुमिच्छुः बंधून्समाहूतवान् हेयतेकितववंचकास्मिन्कर्मणितवाधिकारःकिमस्ति

इत्येवममीबंधवउच्चैर्निनिंदुः ॥ ४६ ॥ नकेवलंनिंदामेवकृतवंतोऽपितुबहुधाप्रार्थितापितदीयाबंधुता बतेतिखेदआश्चर्येवा अग्निनादत्त अ

थानंतरंकोपव्याप्तांतःकरणोसौनिर्ममेंद्रःश्रीशंकरस्तान्सर्वान्बंधूनशपत् ॥ ४७ ॥

गृहसमीपेसुशुष्कवंतिकाष्ठानिसंचित्यधृतंजलपात्रंयेनसमातुर्दक्षिणेबाहौवह्निममंथ तेनचतांमातरंसंयतात्मादवाह उ० ॥ ४८ ॥ अश पदित्युक्तंविवृणोति यद्यस्माद्याचितावह्निमस्मैनादुस्तस्मात्सरोषस्तान्स्वीयजनान्शशाप इतःपरंतेद्विजावेदवहिःकृताभवंतुयतीनांभिक्षा चैषांगृहेनभवेत् उपं० ॥ ४९ ॥ वोयुष्माकंगृहसमीपेचाद्यप्रभृतिश्मशानमस्तु इत्येवंतान्शशाप ग्रंथकृदाहाद्यापितद्देशभवावेदाध्यय

संचित्यकाष्ठानिसुशुष्कवंतिगृहोपकंठेधृततोयपात्रः ॥ सदक्षिणेदोष्णिममंथवह्निंददाहतांतेनचसंयतात्मा ॥ ४८ ॥ नयाचितावह्निमदुर्यदस्मैशशापतान्स्वीयजनान्सरोपः ॥ इतःपरंवेदवहिःकृतास्तेद्विजायतीनांनभवेच्चभिक्षा ॥ ४९ ॥ गृहोपकंठेषुचवःश्मशानमद्यप्रभृत्यस्त्वितितांश्चशशाप ॥ अद्यापितद्देशभवानवेदमधीयतेनोयमिनांचभिक्षा ॥ ५० ॥ तदाप्रभृत्येवगृहोपकंठेष्वासीत्श्मशानंकिलहंततेषां ॥ महत्सुधीपूर्वकृतापराधोभवेत्पुनःकस्यसुखायलोके ॥ ५१ ॥ शांतःपुमानितिनपीडनमस्यकार्यंशांतोपिपीडनवशात्क्रुधमुद्वहेत्सः ॥ शीतःसुखोऽपिमथितःकिलचंदनद्रुस्तीव्राद्धुताशजनकोभवतिक्षणेन ॥ ५२ ॥

नंनकुर्वंति यतीनांभिक्षाचनास्ति उ० ॥ ५० ॥ अत्रविस्मयोनकार्योयतोमहत्सुबुद्धिपूर्वंकृतोऽपराधोऽपिलोकेपुनःकस्यापिसुखाय नभवति ॥ ५१ ॥ महत्सुबुद्धिपूर्वमपराधोनकार्यइतिबोधितमथशांतोऽपिनपीडनीयइत्याह शांतःपुमानितिविश्रंभेणास्यशांतस्यपीडनं नकार्यं इतिक्रुधंक्रोधं तत्रदृष्टांतःशीतइति चंदनद्रुमस्तीव्रस्याद्धुताशस्याग्नेर्जनकः ॥ ५२ ॥

नन्वशास्त्रीयमेतत्कर्मकिमित्याचार्यैरनुष्ठितमित्याशंक्याह यद्यप्यशास्त्रीयतयाविभातितथापितेजस्विनांकर्मनिंद्यंनभवति तदुक्तं धर्म
व्यतिक्रमोदृष्टईश्वराणांचसाहसं तेजीयसांनदोषायवह्नेःसर्वभुजोयथा भार्गवस्यपरशुरामस्यविनिंद्यंकृत्यंसमातृकभ्रातृहननरूपं य
थाचकेचिन्मुनयोरकायपुत्रानददुः भृगुवंश्यस्यकस्यचिन्मुनेरपत्यंप्रार्थिताप्रदानरूपंविनिंद्यंददुरितिवा उ० ॥ ५३ ॥ इत्येवंमुनिजनै

यद्यप्यशास्त्रीयतयाविभातितेजस्विनांकर्मतथाप्यनिंद्यं ॥ विनिंद्यकृत्यंकिलभार्गवस्यददुःस्वपुत्रान्कति
चिद्वकाय ॥ ५३ ॥ इतिस्वजननीमसौमुनिजनैरपिप्रार्थितांपुनःपतनवर्जितामतनुसौख्यसंदोहिनीं ॥
यतिक्षितिपतिर्गतिंवितमसंसनीत्वाततस्ततोन्यमतशातनेप्रयततेस्मपृथ्वीतले ॥ ५४ ॥ अथतत्सहाय
जलजांघ्र्युपागमेच्छुरभीप्सितेत्रविलंबएषकः ॥ जलजांघ्रिरप्यथपुरानिजाज्ञयाकृतवानुदीच्यबहुतीर्थ
सेवनं ॥ ५५ ॥ आससादशनकैर्दिशंमुनेर्यस्यजन्मवसुधाघटीस्मृता ॥ साश्रुतिःसकलरोगनाशिनीयोऽ
पिवज्जलधिमेकबिंदुवत् ॥ ५६ ॥

रपिप्रार्थितांपुनःपतनवर्जितां अनल्पसौख्यस्यसंदोहिनींतमोरहितांगतिंसोऽसौयतिराजःस्वजननींनीत्वा पृथ्वीतलेततस्ततोऽन्यमतनिवर्ह ॥६॥
णेप्रयत्नंकृतवान् पृ० ॥ ५४ ॥ अथतस्मिन्नन्यमतशातनेसहायस्यपद्मपादस्योपागमनमिच्छुरभिलषितेतस्मिन्नेषश्रीशंकरोविलंबंचक्रे
अथजलजांघ्रिरपिनिजाज्ञयापूर्वंप्रथममुदीच्यबहुतीर्थसेवनंकृतवान् मंजुभाषिणी ॥ ५५ ॥ मुनेरगस्त्यस्यदिशंदक्षिणांवसुधाघटीमृतकुंभी
यस्य साप्रसिद्धाश्रुतिःश्रवणं सकलरोगनाशिनीयच्छ्रुतिरितिवापाठः यःसमुद्रमेकबिंदुवदपिबत् रथो० ॥ ५६ ॥

तस्य दिशि लिंगे सन्निहितं श्रीकालहस्तीश्वरं मुनिरद्राक्षीत्तं विशिनष्टि सुभगेनाहिना भूषिता तनुर्यस्य अनिशं चांद्रीं कलां मस्तके दधानं करुणा रसेनार्द्रं मनो यस्यास्तया पार्वत्या आलिंगितं प्रमोदस्थानं मिंद्रप्रमुखैर्देवैर्जयजयेत्याभाष्यमाणं शा० ॥ ५७ ॥ सुवर्णमुखर्यानद्याः सलिला शयें तः स्नात्वा पुनर्गत्वा भवान्या सहितं शिवं प्रणमति स्म भावपुष्पैरर्चयित्वा मनसा स्तुतिं चकार व० ॥ ५८ ॥ ५९ ॥ स्वीयभाग्यातिशयेन

अद्राक्षीत्सुभगाहिभूषिततनुं श्रीकालहस्तीश्वरं लिंगे सन्निहितं दधानमनिशं चांद्रीं कलां मस्तके ॥ पार्वत्या करुणारसार्द्रमनसाश्लिष्टं प्रमोदास्पदं देवैरिंद्रपुरोगमैर्जयजयेत्याभाष्यमाणं मुनिः ॥ ५७ ॥ स्नात्वा सुवर्णमुखरीसलिलाशयें तर्गत्वा पुनः प्रणमति स्म शिवं भवान्या ॥ आनर्च भावकुसुमैर्मनसानुनाव स्तुत्वाच तं पुनरयाचत तीर्थयात्रां ॥ ५८ ॥ लब्ध्वानुज्ञां तज्ज्वराट्कालहस्तिक्षेत्रात्कांचीक्षेत्रमागात्पवित्रं ॥ संसाराब्धिं संतितीर्षोः प्रसिद्धं द्वाः प्राहुर्यद्धि लोकेत्यमुष्मिन् ॥ ५९ ॥ तत्रैकांत्याधीश्वरं विश्वनाथं नत्वागम्यं स्वीयभाग्यातिशीत्या ॥ देवींधामांतर्गतामंतकारेर्हार्दं रुद्रस्येव जिज्ञासमानां ॥ ६० ॥ कल्लालेशं द्राक् ततोनातिदूरे लक्ष्मीकांतं संवसंतं पुराणं ॥ कारुण्यार्द्रस्वांतमंतादिशून्यं दृष्ट्वा देवं संतुतोषैकभक्त्या ॥ ६१ ॥ पुंडरीकपुरमाययौ मुनिर्यत्र नृत्यति सदाशिवोऽनिशं ॥ वीक्षते प्रकृतिरादिमा तदा पार्वतीपरिणतिः शुचिस्मिता ॥ ६२ ॥

प्राप्यं धामांतर्गतामंतकस्यारेः रुद्रस्य हार्दं जिज्ञासमानामिव स्थितां देवीं च नत्वा ॥ ६० ॥ ततो झटिति नातिदूरे संवसंतं कल्लालेशाख्यं लक्ष्मीकांतं देवं दृष्ट्वा एकभक्त्या तुतोषेति परेणान्वयः स्वांतं मनः आद्यंतरहितं आद्यंतादिसर्वविकारशून्यं शालिनी ॥ ६१ ॥ आदिमा आद्या प्रकृतिः पार्वतीरूपेण परिणता नृत्यंतं शिवं सदा वीक्षते रथो० ॥ ६२ ॥

जन्ममृत्युभयभेदियद्दर्शनंतस्मा
जन्ममृत्युभयभेदकंदर्शनान्नेत्रमानसविनोदकारकंतांडवं दिव्यचक्षुरमलाशयोमुनिजनोऽत्रानिशंवीक्षते संप्रार्थितोमहादेवोऽत्रगंगांसस्मारा
दितिवा ॥ ६३ ॥ किंचात्रतीर्थमितिपद्मपादादिभिक्षुगणेनपृष्टःकश्चिच्छिवपदांबुजसक्तचित्तोऽब्रवीत् एतत्तीर्थंशिवाज्ञयाऽभूदितिहेतोरेतत्तीर्थंशिवगंगामितिलोकेप्रवदंति ताना
थस्मरणानंतरंदिव्यसरित्सुतीर्थंसन्निधापितवती व० ॥ ६४ ॥ शिवगंगानाम्न्यन्यप्रवृत्तिनिमित्तमाह नाट्यश्रमकर्शित
हाभुष्यांगंगायांस्नानाद्विधुतोरुपापाःशनैःशनैस्तांडवमीक्षमाणाः उ० ॥ ६५ ॥



तांडवंमुनिजनोत्रवीक्षतेदिव्यचक्षुरमलाशयोनिशं ॥ जन्ममृत्युभयभेदिदर्शनान्नेत्रमानसविनोदकारकं
॥ ६३ ॥ किंचात्रतीर्थमितिभिक्षुगणेनकश्चित्पृष्टोऽब्रवीच्छिवपदांबुजसक्तचित्तः ॥ संप्रार्थितःकरुणया
स्मरदत्रगंगांदेवोथसंन्यधितदिव्यसरित्सुतीर्थं ॥ ६४ ॥ शिवाज्ञयाभूदितितीर्थमेतच्छिवस्यगंगांप्रवदंति
लोके ॥ स्नानादमुष्यांविधुतोरुपापाःशनैःशनैस्तांडवमीक्षमाणाः ॥ ६५ ॥ शिवस्यनाट्यश्रमकर्शि
तस्यश्रमापनोदायविचिंतयंती ॥ शिवेतिगंगापरिणाममगाभूत्ततोऽथचैतत्प्रथितंतदाख्यं ॥ ६६ ॥ नृत्यत्सी
रहतस्खलज्जलगतेःपर्यापतद्बिंदुकंपार्श्वेस्वावसतेर्विनोदवशतोयज्जह्नुकन्यापयः ॥ नृत्यंतन्वतिधूर्जटौवि
गलितंप्रेंखज्जटामंडलात्तेनैतच्छिवजान्हवीतिकथयंत्यन्येविपश्चिज्जनाः ॥ ६७ ॥

॥७॥

उपे० ॥ ६६ ॥ यज्जह्नुक
स्यशिवस्यश्रमापनोदायविचिंतयंतीशिवपार्वतीगंगेतिपरिणाममगाऽभूत् ततोथवाशिवगंगाख्यमेतत्तीर्थंप्रथितं प्रेंखज्जटामंडलंविशिनष्टि
न्यापयोधूर्जटौनृत्यतिसतिप्रेंखतश्चलतोजटामंडलाद्गलितंतेनैतत्तीर्थमन्येविपश्चिज्जनाःशिवजाह्नवीतिकथयंति पार्श्वेपर्यापतंतःबिंदुकाबिंदवोयस्य शा० ॥ ६७ ॥
नृत्यतातीरेणहतस्यस्खलतोजलस्यगतिर्यस्मिन् स्वस्यावसतेर्निकेतनात्पयोविशिनष्टि

तस्मादस्मिन्तीर्थवर्येस्नात्वास्नात्वादेवपादाब्जयुग्मंदृष्ट्वादृष्ट्वामनःशोधयित्वाशोधयित्वाऽसौशुद्धचित्तोमानवइदंतांडवंवीक्षेत शालि०॥६८॥
एतच्छुद्धंपुण्यंवर्णयितुंशिवातिरिक्तोनक्षमइत्याशयेनाह शुद्धमिति यःअमुष्यांशंभुघुसरिति निमज्यदाक्षायणीनाथंवीक्षतेतस्य उ० ॥
॥ ६९ ॥ इत्येवंकेनापिकथितःशंकरेयोजितमंतःकरणंयेनसभिक्षुःपद्मपादोमुदितोजगाहेऽवगाहनंकृतवान् ॥ ७० ॥ पुनरनुत्तमोमुनिःप

स्नायंस्नायंतीर्थवर्येऽत्रनित्यंवीक्षंवीक्षंदेवपादाब्जयुग्मं॥ शोधंशोधंमानसंमानवोसौवीक्षेतेदंतांडवंशुद्धचे
ताः॥६८॥शुद्धंमहद्वर्णयितुंक्षमेतपुण्यंपुरारिःस्वयमेवतस्य॥निमज्यशंभुघुसरित्यमुष्यांदाक्षायणीनाथमुदी
क्षतेयः ॥ ६९ ॥ इतीरितःशंकरयोजितात्माकेनापिभिक्षुर्मुदितोजगाहे ॥ तीर्थंतदाप्लुत्यननामशंभोरंघ्रिं
जितात्माभुवनस्यगोप्तुः॥ ७० ॥रामसेतुगमनायसंदधेमानसंमुनिरनुत्तमःपुनः ॥ वर्त्मनिप्रयतमानसो
व्रजन्संददर्शसरितंकवेरजां ॥ ७१ ॥ यत्पवित्रपुलिनस्थलंपयःसिंधुवासरसिकायविष्णवे ॥ अभ्यरोचत
हिरण्यवाससेपद्मनाभमुखनामशालिने ॥ ७२ ॥ सह्यपर्वतसुतातिनिर्मलांभोभिषिक्तभगवत्पदांबुजे॥
आकलय्यबहुशिष्यसंवृतःप्रास्थिताभिरुचितस्थलायसः॥ ७३ ॥

द्मपादोरामसेतुगमनायमनोदधे प्रयतंमनोयेनसपथिगच्छन्कवेरजांकावेरींनदींददर्श रथो० ॥ ७१ ॥ यस्याःपवित्रपुलिनंस्थलंचक्षीर
समुद्रवासरसिकायापिव्यापकायापिहिरण्यवाससेपद्मनाभादिनाम्नाशोभमानायाभ्यरोचत ॥ ७२ ॥ सह्यपर्वतसुतायाअतिनिर्मलेनांभ
साभिषिक्तेभगवत्पदांबुजेआकलय्यध्यात्वा बहुशिष्यसंवृतःसअभिरुचितस्थलायप्रास्थितप्रस्थानंकृतवान् रथो० ॥ ७३ ॥

शिष्यैःसहितं शा॰लि० ॥ ७४ ॥ उ० ॥ ७५ ॥ ७६ ॥ अथानंतरंतंदृष्ट्वाप्रमोदीज्ञातिजनऊचे यतश्चिरकालात्त्वमक्षिमार्गप्राप्तोऽस्यतोज नतातिस्नेहात्त्वांदिदृक्षते तथापित्वंवीक्षणायनशक्नोषि तथाचस्नेहबाधातवनास्तीत्यर्थः ॥ ७७ ॥ किंचसर्वबाधाविनिर्मुक्तत्वात्कृतार्थ

॥८॥ गच्छन्गच्छन्मार्गमध्येऽभियातंगेहंभिक्षुर्मातुलस्याजगाम ॥ दृष्ट्वाशिष्यैस्तंचिरेणाभियातंमोदंप्रापन्मातुलःशास्त्रवेदी ॥ ७४ ॥ शुश्रावतंबंधुजनःसशिष्यंस्वमातुलागारमुपेयिवांसं ॥ आगत्यदृष्ट्वाचिरमागतंतंजहर्षहर्षातिशयेनसाश्रुः ॥ ७५ ॥ रुरोदकश्चिन्मुमुदेत्रकश्चिज्जहासपूर्वाचरितंबभाषे ॥ कश्चित्प्रमोदातिशयेदिनंकिंचिद्वचस्खलद्गीःप्रणनामकश्चित् ॥ ७६ ॥ ऊचेथतंज्ञातिजनःप्रमोदीदृष्ट्वाचिरायाक्षिपथंगतोभूः ॥ दिदृक्षतेत्वांजनतातिहार्दात्तथापिशक्नोपिनवीक्षणाय ॥ ७७ ॥ पुत्राःसमित्राननबंधुवर्गोनराजबाधानचचोरभीतिः ॥ कृतार्थतामूलपदंयतित्वंप्रसूनवंतंफलितंमहांतं ॥ ७८ ॥ शाखोपशाखांचितमेववृक्षंबाधंतआगत्यनतद्विहीनं ॥ यथातथाबाधनिनंदरिद्राबाधंतआगत्यदिनेदिनेस्म ॥ ७९ ॥ कुटुंबरक्षागतमानसानांनायातिनिद्रापिसुखंनजातु ॥ कुदेवतार्चाकृचतीर्थयात्राकुवानिषेवामहतांभवेन्नः ॥ ८० ॥ ॥८॥

तामूलपदंयतित्वमेवेत्याह पुत्राइति तेषामभावेतत्कृताबाधानास्तीत्यर्थः धनिनामेवबाधानतुनिःकिंचनानामितिसदृष्टांतमाह पुष्पवंतंफलितंमहांतंवृक्षमितिपरेणान्वयः ॥ ७८ ॥ शाखोपशाखाभिरंचितंव्याप्तमलंकृतंवा तथातथैव ॥ ७९ ॥ किंच कुटुंबरक्षागतमानसानामस्माकंसुखंनभवति तथाकदाचिन्निद्रापिनायाति तथाचैवंविधानांनःकुदेवतार्चादि ॥ ८० ॥

कस्माच्चिद्देशान्नोगृहमागतात्कस्माच्चिद्विप्रादितिवा इं०द्र० ॥ ८१ ॥ तीर्थस्यहेतोस्त्वंगृहमागतोऽसि नतुममतावशायते:स्वीयत्वेनगृहपरिग्रहाभावादित्याशयेनसदृष्टांतमाह यथाशकुंता:पक्षिण:परवर्धितान्वृक्षान्सुखदान्समाश्रयंतेत्यजंत्यपि तथायति:परप्रकृप्तान्मठान्देवतागृहांश्चसुखदान्समाश्रित्यध्रुवमुज्झत्यपिव० ॥ ८२ ॥ तत्रापितत्तद्गृहेयतेर्गमनंधमरवत्पीडाकरंनभवतीत्याह यथेति सुखंयथास्यात्तथा उ०

अश्रौष्मसंन्यासकृतंभवंतंविप्रात्कुतश्चिद्गृहमागतान्नः ॥ कालोत्यगात्तेबहुरघदैवात्तीर्थस्यहेतोर्गृहमागतस्त्वं ॥ ८१ ॥ यथाशकुंता:परवर्धितान्द्रुमान्समाश्रयंतेसुखदांस्त्यजंत्यपि ॥ परप्रकृप्तान्मठदेवतागृहान्यति:समाश्रित्यतथोज्झतिध्रुवं ॥ ८२ ॥ यथाहिपुष्पाण्यभिगम्यषट्पदा:संगृह्यसारंरसमेवभुंजते ॥ तथायति:सारमवाप्नुवन्सुखंगृहाद्गृहादोदनमेवभिक्षते ॥ ८३ ॥ यतेर्विरज्यात्मगति:कलत्रंदेहंगृहंसंयतमेवसौख्यं ॥ विरक्तिभाजस्तनया:स्वशिष्या:किमर्थनीयंयतिनोमहात्मन् ॥ ८४ ॥ मनोरथानांनसमाप्तिरिष्यतेपुन:पुन:संतनुतेमनोरथान् ॥ दारानभीप्सुर्यततेदिवानिशंताम्प्राप्यतेभ्यस्तनयानभीप्सति ॥ ८५ ॥ अनाप्नुवन्दु:खमसौसुतीव्रंप्राप्नोतिचेष्टेनवियुज्यतेपुन: ॥ सर्वात्मनाकामवशस्यदु:खंतस्माद्विरक्ति:पुरुषेणकार्या ॥ ८६ ॥

॥ ८३ ॥ किंचयते:किमपिप्रार्थनीयंनास्तीत्याह यतेर्विरज्यया आत्मावगति:सैवभार्या हेमहात्मन् ॥ ८४ ॥ कामवशस्यतुदु:खमेवेत्याह मनोरथानामितिद्वाभ्यां तेभ्योदारेभ्य: ॥ ८५ ॥ दारादीननाप्नुवन्दु:खमेवसुतीव्रंप्राप्नोति पुनरिष्टेनचवियुज्यते ॥ ८६ ॥

विरक्तिश्चभवद्विधानांमहतांसेवयाशुद्धचेतसोभवतीत्याह मनसोविशुद्धिर्विरक्तेर्मूलमाहुः तस्याअपिविशुद्धेर्मूलंमहतांसेवामाहुस्तेनकारणे नचभवादृशाःपरोपकारायदूरदेशेभूमिमटंति ॥ ८७ ॥ यदृच्छयोपनतंसमीपप्राप्तंभोग्यंयेभ्यस्ते ॥ ८८ ॥ तीर्थान्यपिलोकसंग्रहार्थंचरंति नतुस्वशुध्यर्थं यतःशुद्धभावाःयतःशुद्धात्मविद्याक्षपितोरुपापाः तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशादितिन्यायात् तथा

विरक्तिमूलंमनसोविशुद्धिंतन्मूलमाहुर्महतांनिषेवां ॥ भवादृशास्तेनचदूरदेशेपरोपकारायरसामटंति ॥ ॥ ८७॥ अज्ञातगोत्राविदितात्मतत्त्वालोकस्यदृष्ट्याजडवद्विभांतः ॥ चरंतिभूतान्यनुकंपमानाःसंतोयदृच्छो पनतोपभोग्याः ॥ ८८ ॥ चरंतितीर्थान्यपिसंग्रहीतुंलोकंमहांतोननुशुद्धभावाः ॥ शुद्धात्मभावाक्षपितोरु पापास्तज्जुष्टमंभोनिगदंतितीर्थं ॥ ८९ ॥ वस्तव्यमत्रकतिचिद्दिवसानिविद्वंस्त्वद्दर्शनंवितनुतेमुदितादिभ व्यं ॥ एष्यद्वियोगचकिताजनतेयमास्तेदुःखंगतेऽत्रभवितेतिभवत्यसंगे ॥ ९० ॥

चैवंविधैस्तैर्जुष्टंजलंतीर्थंनिगदंति तेषांतत्रगमनंलोकसंग्रहार्थमेवेत्यर्थः ॥ ८९ ॥ एवंस्तुत्याऽभिमुखीकृत्यप्रार्थयते हेविद्वन्नत्रकतिचि द्दिवसानिवस्तव्यं यतोभव्यंशुभंयोग्यंवाभवद्दर्शनंमुदितादिवितनुते इयंजनतातुअसंगेभवतित्वयिगतेसत्यत्रदुःखंभविष्यतीतिविचार्यैवाधु नाएवभविष्यद्दुःखेनचकिताआस्ते व० ॥ ९० ॥

अत्रनिवासंविधायवर्यंत्वयासंशोध्याइतिवंधवःसाक्रोशमाहुः क्लेशमलस्यकोशंपात्रमपिचोत्कटरंहसामतिसाहसानामालयंपैशून्यस्यपरदो षसूचकतायानिशांतमोकः निशांतंत्रिपुशांतेस्यात्क्लीबंतुभवनौकसोरितिमेदिनी उत्कटमृषाभाषणस्यविशेषेणाश्रयंभाषाविशेषाणामिति वा हिंसयामांसलंव्याप्तंत्यक्तुंयोग्यं दुर्जनानांसंगमोयत्रतथाभूतंस्फुरद्गृहमाश्रिताः अतएवघनीभूतयाधनतृष्णयाक्रूराः घनादृढाधनाशं येषांइतिभिन्नंवापदं घनधनस्याशंसायेषामितिवासमासः एवंभूतावयं हेयतींदोत्वयाकरुणयाशोध्याइत्यर्थः शा० ॥ ९१ ॥एवमुक्तःपद्मपा

कोशंक्लेशमलस्यलास्यगृहमप्युद्रंहसामालयंपैशून्यस्यनिशांतमुत्कटमृषाभाषाविशेषाश्रयं ॥ हिंसामांसलमाश्रिताघनधनाशंसानृशंसावयंवर्ज्यदुर्जनसंगमंकरुणयाशोध्यायतींदोत्वया ॥ ९१ ॥ संयुनक्तिवियुनक्तिदेहिनंदैवमेवपरमंमनागपि॥इष्टसंगतिनिवृत्तिकालयोर्निर्विकाररहृदयोभवेन्नरः॥ ९२ ॥ मध्याह्नकालेक्षुधितस्तृषार्तःक्रमेणन्नदातेतिवदन्नुपैति ॥ यस्तस्यनिर्वापयिताक्षुधार्तेःकस्तस्यपुण्यंवदितुंक्षमेत ॥ ॥ ९३ ॥ सायंप्रातर्वह्निकार्यंवितन्वन्मज्जंस्तोयेदंडकृष्णाजिनीच॥ नित्यंवर्णीवेदवाक्यान्यधीयन्क्षुध्वाशीघ्रंगेहिनोगेहमेति॥ ९४ ॥ उच्चैःशास्त्रंभाषमाणोऽपिभिक्षुस्तारंमंत्रंसंजपन्वायतात्मा ॥ मध्येघस्रंजाठराग्नौप्रदीप्तेदंडीनित्यंगेहिनोगेहमेति ॥ ९५ ॥

दउवाच परमंब्रह्मादिकंक्षुद्रंस्तंबादिकमपिदेहिनंदैवमेवसंयुनक्तिवियुनक्तिच तस्मादिष्टसंगतिनिवृत्तिकालयोर्नरोनिर्विकारहृदयोभवेत् ॥ ९२ ॥ यत्तुप्रसूनवंतंइत्याद्युक्तंतत्राह मध्याह्नकालइति उ० ॥ ९३ ॥ किंचाश्रमत्रयोपजीव्यत्वादपिपुण्यभाग्गृहस्थइत्याशयेनब्रह्मचारिणस्तदुपजीवकतामाह सायमिति दंडकृष्णाजिनेऽस्यस्तइति तथाभूतोवर्णीब्रह्मचारीनित्यंवेदवाक्यानिपठन् क्षुध्वाक्षुधांप्राप्य शीघ्रंगेहिनोगेहमेति शालि० ॥ ९४ ॥ अथयतेस्तामाह उच्चैरिति तारंप्रणवं घस्रस्यदिनस्यमध्ये इंद्रव० ॥ ९५ ॥

रा०वि० वानप्रस्थस्यतामाह यस्यान्नदानेननिजंशरीरंपुष्णन्नयंतपस्वीसुतीव्रंतपःकुरुते तपःकर्तुस्तस्यतपसोऽर्धंतस्यान्नंददतोऽर्धमितिस्मृतिःप्रवदते उ० डि०
॥ ९६ ॥ नन्वेवमपिगृहस्थस्यगृहस्थस्यतीर्थादिसेवाजन्यंपुण्यंतुदुर्लभमेवेतिचेत्तत्राह विचक्षणेनगृहस्थेनप्रयासाद्विनापिप्रयासकं
तृनिषेवणेनपुण्यंसंचेतुमलंशक्यते तीर्थादिसेवायाःप्रयाससाध्यत्वंप्रसिद्धमेवेत्याह तीर्थादीति ॥ ९७ ॥ नकेवलंब्रह्मचार्यादयएवगृहस्थमु १
॥१०॥ कर्तुस्तदर्धंददतोऽन्नमर्धमितिस्मृतिःसंवदतेऽनवद्या ॥
यदन्नदानेननिजंशरीरंपुष्णंस्तपोयंकुरुतेसुतीव्रं ॥ कर्तुस्तदर्धंददतोऽन्नमर्धमितिस्मृतिःसंवदतेऽनवद्या ॥
विनापितत्कर्तृनिषेवणेनतीर्थादिसेवावहुदुः
॥ ९६ ॥ पुण्यंगृहस्थेनविचक्षणेनगृहेपुसंचेतुमलंप्रयासात् ॥ विनापितत्कर्तृनिषेवणेनतीर्थादिसेवावहुदुः
खसाध्या ॥ ९७ ॥ गृहीधनीधन्यतरोमतोमेतस्योपजीवंतिधनंहिसर्वे ॥ चौर्येणकश्चित्पणयेनकश्चिद्दानेन
कश्चिद्बलतोपिकश्चित् ॥ ९८ ॥ संतोपयेद्वेदविदंद्विजंयःसंतोपयत्येपससर्वदेवान् ॥ तद्वेदविप्रेनिवसंतिदे
वाइतिस्मसाक्षाच्छ्रुतिरेववक्ति ॥ ९९ ॥ स्वधर्मनिष्ठाविदिताखिलार्थाजितेंद्रियाःसेवितसर्वतीर्थाः ॥ परो
पकारव्रतिनोमहांतआयांतिसर्वेगृहिणोगृहाय ॥ १०० ॥ गृहीगृहस्थोपितदश्नुतेफलंयत्तीर्थसेवाभिरवाप्य
तेजनैः ॥ तत्तस्यतीर्थंगृहमेवकीर्तितंधनीवदान्यःप्रवसेन्नकश्चन ॥ १ ॥ अंतःस्थितामूषकमुख्यजीवावहिः
स्थितागोमृगपक्षिमुख्याः ॥ जीवंतिजीवाःसकलोपजीव्यस्तस्माद्गृहीसर्ववरोमतोमे ॥ २ ॥
पजीवंत्यपितुसर्वएवेत्याह गृहीति हियस्मात् ॥ ९८ ॥ किंच योवेदविप्रंसंतोषयेत्सैपसर्वान्देवान्संतोपयति तद्वेदविप्रेवेदविद्ब्राह्मणे ॥ ९९ ॥ ॥१०॥
ननुतथापिस्वयमेवप्रवासंकृत्वापुण्यंकुतोनसंपादनीयमितिचेत्तत्राह स्वेतिद्वाभ्यां ॥ १०० ॥ तत्तस्मात्तस्यगृहमेवतीर्थंकीर्तितमतोधनीवदा
न्योदातास्यान्नतुकश्चनापिप्रवासंकुर्यादित्यर्थः ॥ १०१ ॥ गृहिणःसर्वश्रेष्ठत्वंपुनरुपपादयंति अंतःस्थितमिति ॥ १०२ ॥

किंच शरीरंमूलंयस्यतथाविधंपुरुषार्थसाधनंतच्चशरीरमन्नंमूलंयस्यतत्तथाभूतमन्नादेवखल्विमानिभूतानिजायंतइतिश्रुतेरवगम्यते ॥ ३ ॥
एवमुक्त्वापुनःपरमहितोपदेशायससाधनतामापादयति ब्रवीमीति युष्माकंगृहानागतमातुरमतिथिमादरेणपूजयतेत्यादरपदमत्राप्यनुषंजनी
यं किमतइतिचेत्तत्राह संपूजितोऽतिथिर्वःकुलमुद्धरेन्निराकृतात्तस्मात्किंभवतीतिचेत्तदत्यंतमनिष्टत्वान्मयानोच्यते॥ ४॥किंच श्रुतिचोदितंनि

शरीरमूलंपुरुषार्थसाधनंतच्चान्नमूलंश्रुतितोवगम्यते ॥ तच्चात्रमस्माकममीपुसंस्थितंसर्वंफलंगेह
पतिद्रुमाश्रयं॥ ३ ॥ ब्रवीमिभूयःशृणुतादरेणवोगृहागतंपूजयतातुरातिथिं॥ संपूजितोवोऽतिथिरु
द्धरेत्कुलंनिराकृतात्किंभवतीतिनोच्यते ॥ ४ ॥ विनाभिसंधिंकुरुतश्रुतीरितंकर्मद्विजानांजगताम
धीश्वरः॥ तुष्येदितिप्रार्थनयागतेनस्वांतस्यशुद्धिर्भविताऽचिरेणवः ॥ ५॥ ससंरंभश्लिष्यत्सुफणि
तिवधूटीकुचतटीपटीवत्पाटीरागरवनवपंकांकितहृदः ॥ तथाप्येतेपूतायतिपतिपदांभोजभजन
क्षणक्षीणक्लेशाःसदयहृदयाभाःसुकृतिनः॥ ६ ॥

त्यादिकर्मफलाभिसंधिंविनाकुरुत हेद्विजा जगतामधीश्वरस्तुष्येदितिप्रार्थनयापिनोकुरुत तेनतथाभूतेननिष्कारणकर्मणावोंतःकरणस्यशुद्धि
रचिरादेवभविष्यति ॥५॥ यदपिभवादृशाइत्याद्युक्तंतत्राप्याह ससंरंभंयथाभवतितथाश्लिष्यंत्योयाःसुफणितिवधूट्यःप्रियवादिन्योवध्वस्ता
सांकुचतट्याःपटीवदाचरतापाटीरेणचंदनमयेनागरवेणागरुमयेनचनवेनपंकेनांकितमंतर्बहिश्चांतःकरणंयेषांयद्यप्येवंभूताएतेवयं तथापि
यतिपतेःश्रीशंकरस्यपदकमलयोर्भजनोत्सवेनक्षीणाःक्लेशायेषां भजनक्षणइतिवा कालविशेषोत्सवयोःक्षणइत्यमरः शि० ॥ ६ ॥

उपसंहरति संदिश्येति शा०॥ ७॥ एवंश्रुत्वाभाष्यगाटीकेतिब्रुवाणंपद्मपादंतांटीकांदेहीतिमातुलःप्रोवाच पद्मपादादत्तवांश्चकिंचित्खेदंचप्रा
पत् ॥ ८ ॥ तस्येत्यादिविवृणोति प्रेति विवेदंशाप खेदमित्यादिस्फोटयति मतांतराणामिति उ० ॥ ९ ॥ किंचस्वाभिमतंप्र
भाकरमतंविशेषात्तत्रनिबंधेनिराकृतमालुलोचेआलोकितवान् . तत्रेतिपदद्वयंमध्यमणिन्यायेनोभयत्रापिसंबंधनीयं यतएवमतस्तत्रनिबं

संदिश्येत्थंबंधुतांभिक्षुराजोभिक्षांचक्रेमातुलस्यैवगेहे॥पप्रच्छैनंमातुलोभुक्तवंतंकिंस्विच्छन्नंपुस्तकंशिष्य
हस्ते ॥ ७ ॥ टीकाविद्वन्भाष्यगेतिब्रुवाणंतांदहीतिप्राचिपदत्तवांश्च ॥ अद्राक्षीत्तांमातुलस्तस्यबुद्धिंदृष्ट्वानं
दीत्खेदमापच्चकिंचित् ॥ ८ ॥ प्रबंधनिर्माणविचित्रनैपुणींदृष्ट्वाप्रमोदंसविवेदकिंचित्॥ मतांतराणांकिल
युक्तिजालैर्निरुत्तरंबंधनमालुलोचे॥ ९ ॥ गुरोर्मतंस्वाभिमतंविशेषान्निराकृतंतत्रसमत्सरोभूत् ॥ साधुर्नि
बंधोयमितिब्रुवाणस्तंसाभ्यसूयोपिकृताभिनंदः ॥ १० ॥ सेतुंगच्छाम्यालयेपुस्तभारंतेन्यस्यमंवर्ततेमेत्र
जीवः॥ विद्वन्यद्वद्धोगृहादौपरेषांप्रीतिःपूर्णानस्तथापुस्तभारे॥ ११ ॥ इत्युक्त्वातेमातुलंमस्करीशःशिष्यैर्हृष्य
न्सेतुमेपप्रतस्थे ॥ प्रस्थातुःश्रीपद्मपादस्यजातंकष्टंचैष्यत्सूचनायैनिमित्तं॥ १२ ॥

धेसमत्सरोभूत् साधुर्निबंधोयमिति तंब्रुवाण.साभ्यसूयोतिकृताभिनंदोभूत् ॥ १० ॥ अथपद्मपादउवाचेमंपुस्तकभारंतवालयेन्यस्यसेतुंग
च्छामीत्यत्रमेमनोवर्तते स्थापनस्यरक्षार्थत्वात्सम्यक्त्वयारक्षाकार्येत्याशयेनाह हेविद्वन्निति तवेदंविदितमितिसंबोधनाशयः शा० ॥ ११ ॥
भविष्यत्सूचनायकष्टंनिमित्तंजातं ॥ १२ ॥

किंतदित्यपेक्षायामाहास्यगंतुर्वामंनेत्रमस्पंदत तथैषवामोबाहुरपिपुस्फोर तथाचवामऊरूरपि हंतखेदेकश्चित्पुरस्तादुच्चैश्चुक्षावक्षुतंकृतवान् तत्सर्वंसोऽगणयित्वाझटितिजगाम ॥ १३ ॥ अस्मिन्पद्मपादेगतेसति अत्रास्मिन्ग्रंथेदग्धेसतिगुरुपक्षस्यमहान्प्रचारः ननुवाचैतन्मतंनिराकर्तव्यमित्याशंक्याहोक्त्यानिराकर्तुंप्रभुत्वंनास्तिइदमसंगतमित्युक्त्यापीतिवा उ० ॥ १४ ॥ तस्मात्स्वगृहेणसहैवपुस्तकंदहामि यतः स्व

वामंनेत्रंगंतुरस्पंदतैषबाहुःपुस्फारापिवामस्तथोरूः ॥ चुक्षावोच्चैर्हंतकश्चित्पुरस्तात्तत्सर्वंद्राक्तज्ञोऽगणित्वा जगाम ॥ १३ ॥ गतेत्रमेनेकिलमातुलोस्यग्रंथेस्थितेस्मिन्गुरुपक्षहानिः ॥ दग्धेत्रजायेतमहान्प्रचारो नोक्त्यानिराकर्तुमपिप्रभुत्वं ॥ १४ ॥ पक्षस्यनाशाद्गृहनाशएवनोवरंगृहेणैवदहामिपुस्तकं ॥ एवंनिरूप्यंन्य दधाद्धुताशनंचुक्रोशचाग्निर्दहतीतिमेगृहं ॥ १५ ॥ ऐतिह्यमाश्रित्यवदंतिचैवंतदेवमूलंममभाषणेपि ॥ यावत्कृतंतावदिहास्यकर्तुःपापंततःस्याद्द्विगुणंप्रवक्तुः ॥ १६ ॥ गच्छन्नसौफुल्लमुनेर्जगामतमाश्रमंयत्रचरा मचंद्रः ॥ अश्वत्थमूलेन्यधितस्वचापंस्वयंकुशानामुपरिन्यषीदत् ॥ १७ ॥

पक्षनाशाद्गृहनाशएवनोऽस्माकंवरमितिस्वमनसिविचार्य गृहेवह्निस्थापितवान्मेगृहमग्निर्दहतीतिचुक्रोश ॥ १५ ॥ ननुगुप्तमेवमयाप्रकाशितं यतोयावत्कृतंतावदेवेहकर्तुःपापंस्यात्प्रवक्तुस्तुततःकर्तुःसकाशाद्द्विगुणंस्यात् अप्रकाशितप्रकाशकंकथंनद्विगुणपापावहमितिबोधनायप्रशब्दः ॥ १६ ॥ गच्छन्नसौपद्मपादःफुल्लमुनेस्तंप्रसिद्धमाश्रमंजगाम यत्रचरामचंद्रोऽश्वत्थमूलेचापंन्यधित स्वयंकुशानामुपरिन्यषीदत्उपविष्टवान् आ० ॥ १७ ॥

समुद्रंतीर्त्वाजानक्यायद्दर्शनंतत्रोपायमनीक्षमाणः प्लवंगावानराभूमौप्रवणाः प्लवनशीलावारिराशौप्लवनंनक्षमंतेइतिसंचिंतयन्कुशासनसन्निवि ष्टःश्रीरामचंद्रस्तदाविदूरगमेवकिंचिज्ज्योतिरैक्षत तद्विशिनष्टि संव्यामुवदिति उ०व० ॥ १८ ॥ १९॥ एतज्ज्योतिः उ० ॥ २० ॥ प्रभामंडलस्यमध्येस्फुरत्शिवाकृतितपोमयंज्योतिरैक्षत पुनःलोपाआदिर्यस्यास्तथाभूतयामुद्रयालोपामुद्रेतियावत्तयासहितंकुंभोद्भवमगस्त्यंजनैःसह

तीर्त्वासमुद्रंजनकात्मजायाःसंदर्शनोपायमनीक्षमाणः ॥ वसुंधरायांप्रवणाःप्लवंगानवारिराशौप्लवनंक्षमंते ॥ १८ ॥ संचिंतयन्नितिकुशासनसन्निविष्टोज्योतिस्तदैक्षतविदूरगमेवकिंचित् ॥ संव्याप्नुवज्जगदिदंसुखशीतलंयत्संप्रार्थनीयमनिशंमुनिदेवताभिः ॥ १९ ॥ आगच्छदात्माभिमुखंनिरीक्ष्यसर्वंतदुत्तस्थुरुदारवीर्याः ॥ ततःपुमाकारमदृश्यतैतन्महाप्रभामंडलमध्यवर्ति ॥ २० ॥ मध्येप्रभामंडलमैक्षतांचितंशिवाकृतिं सर्वतपोमयंपुनः ॥ लोपादिमुद्रासहितंमहामुनिंप्राबोधिकुंभोद्भवमादराज्जनैः ॥ २१ ॥ अगस्त्यदृष्ट्वारघुनंदनस्ततःसखेदमंतःकरणोत्थमत्यजत् ॥ प्रायोमहद्दर्शनमेवदेहिनांक्षिणोतिखेदंरविवन्महातमः ॥ ॥ २२ ॥ सभार्यमर्घ्यादिभिरर्चयित्वारामस्तदंघ्रिंशिरसाननाम ॥ तूर्ष्णींमुहूर्तंव्यसनार्णवस्थोधृतिंसमास्थायपुनर्बभाषे ॥ २३ ॥ दृष्ट्वाभवंतंपितृवत्प्रमोदेयन्मामगादुःखमहार्णवस्थं ॥ मन्येममात्मानमवाप्तकामंवंशोमहान्मेतपनात्प्रवृत्तः ॥ २४ ॥

प्राबोधि जनैःकरणैरितिवा ॥ २१ ॥ अगस्त्यदृष्ट्वाअगस्त्यंदृष्टवान् तद्दर्शनानंतरंअंतःकरणोत्थंखेदमत्यजत् ॥ २२ ॥ दुःखसागरस्थोमुहूर्तंतूर्ष्णींभूत्वाधृतिंसमास्थायपुनरुवाच ॥ २३ ॥ पितृवद्भवंतंदृष्ट्वाप्रमोदे यस्माद्दुःखमहार्णवस्थंमांत्वमगाआगतवानसि अहमात्मानंप्राप्तकामंमन्ये एवंमुनिमभिमुखीकृत्यस्वदुःखमावेदयति मेमहान्वंशस्तपनादादित्यात्प्रवृत्तः नतत्रेतिपरेणान्वयः इं० ॥ २४ ॥

तस्मिन्वंशेममसदृशोनोत्पत्स्यतेनाप्यजनिष्ट कुतइतिचेदेवंविधत्वान्ममेत्याहादौसभार्यःपदाद्राज्यात्प्रच्युतस्तत्राप्ययोध्यायांनास्थतःाकतुस
लक्ष्मणोवनमुपागतः तत्रापिमारीचमायुयानिहृतांतःकरणः उ० ॥ २५ ॥ तत्रापिराक्षसपुंगवोरावणोमेभार्यांछलेनाहृत तन्वीकृशांगी ॥

नतत्रमादृग्जनितानजातःपदच्युतोहंप्रथमंसभार्यः॥ सलक्ष्मणोरण्यमुपागतश्चमारीचमायानिहतांतरंगः
॥ २५ ॥ तत्रापिभार्यामह्रतच्छलेनसरावणोराक्षसपुंगवोमे ॥ साचाधुनाशोकवनेसमास्तेकृशावियोगा
त्त्वतएवतन्वी ॥ २६ ॥ तीर्त्वासमुद्रंविनिहत्यदुष्टंबलेनसीतांमहताहरामि ॥ यथातथोपायमुदाहरत्वंनमेत्वद
न्योस्तिहितोपदेष्टा ॥ २७ ॥ इतीरितोवाचमुवाचविद्वान्मारामशोकस्यवशंगतोभूः ॥ वंशद्वयेसंतिनृपामहां
तःसंप्राप्यदुःखंपरिमुक्तदुःखाः ॥ २८ ॥ त्वमग्रणीर्दाशरथेधनुर्भृतांतवानुजस्यापिसमोनलक्ष्यते ॥ प्लवंगमा
नामधिपस्यकोटिशोमामुंचमामुंचवचोविनाथवत् ॥ २९ ॥ सहायसंपत्तिरियंतवास्तिहितोपदेष्टाप्यहम
स्मिकश्चित् ॥ वारांनिधिःकिंकुरुतेतवायंस्मराधुनागोष्पदमात्रमेनं ॥ ३० ॥ पुरेवचार्वब्धिमहंपिबामि
शुष्केत्रतेनप्रतियाहिलंकां ॥ एवंमयाकीर्तिरुपार्जितास्याद्बद्धेतुवार्धौतवसार्जितास्यात् ॥ ३१ ॥ सेतुंवार्धौवं
धयित्वाजहित्वंदुष्टंचौर्याद्येनसीताहृतासीत् ॥ प्राप्नोषित्वंकीर्तिमाचंद्रतारंतेनात्राब्धिंवंधयत्वंकपींद्रैः ॥ ३२ ॥

॥ २६ ॥ २७ ॥ २८ ॥ यदुक्तंनतत्रमादृगितितत्राह त्वमिति तस्माद्विनाथवदनाथवद्दीनंवचोमामुंचमामुंचेतिसंभ्रमेवीप्सा ॥ २९ ॥ जलानांनिधिः
समुद्रः ॥ ३० ॥ चारुःसुंदरश्चासावब्धिश्चतंचारुयथास्यात्तथेतिवा तेनपानेनास्मिन्समुद्रेशुष्केसतिसाकीर्त्तिः ॥ ३१ ॥ यस्मादेवंतस्मात्स
मुद्रेसेतुंवंधयित्वादुष्टंजहि येनचौर्यात्सीताहृताआसीत् शालि० ॥ ३२ ॥

तुंगैरुच्छ्रितैस्तेनसेतुनातंरावणंआजौसंग्रामे ॥ ३३ ॥३४॥ केनसमासेनोपपन्ना ॥ ३५॥ रामस्येशइतितत्पुरुषंकेवलंश्रीरामचंद्रोजगौ शिव
स्तुरामईशोयस्येतिबहुव्रीहिसमासंकेवलमुक्तवान् ·इंद्रादयस्तुरामश्चासावीश्वरश्चेतिकर्मधारयंपरंसमाहुःस्म उ० ॥ २६ ॥ तस्यारामे



॥१३॥ इत्थंयत्रप्रेरितोऽगस्त्यवाचासेतुंरामोवंधयामासवार्धौ॥तुंगैःशृंगैर्वानरैस्तेनगत्वातंहत्वाजौजानकीमानिना 1
य॥३३॥ तत्ताद्दक्षेतत्रतीर्थेसभिक्षुःस्नात्वाभक्त्यारामनाथंप्रणम्य॥तत्रश्रद्धोत्पत्तयेमानुपाणांशिष्येभ्यस्तद्वै
भवंसम्यगूचे॥३४॥तन्माहात्म्यंवर्णयंतंमुनितंपप्रच्छैनंकश्चिदेवंविपश्चित्॥रामेशाख्याकिंसमासोपपन्ना
पृष्टस्त्वेधावोचदेवंसमासं ॥ ३५॥ रघूद्वहस्तत्पुरुषंपरंजगौशिवोवहुव्रीहिसमासमैरयत् ॥ रामेश्वरेनामनिक
र्मधारयंपरंसमाहुःस्मसुरेश्वरादयः ॥ ३६ ॥ एवंनिश्चित्योदितंतत्समासंश्रुत्वातत्रत्योवुधोयोभ्यनंदत् ॥
अंभोजांघ्रिस्तैरथस्तूयमानःकंचित्कालंतत्रयोगींडनैषीत् ॥ ३७ ॥ तस्मादार्यःप्रस्थितोभूत्सशिष्यस्तीर्थ
स्नानोपात्तचित्तामलत्वः ॥पश्यन्देशान्मातुलीयंजगाहेगेहंदाहंतस्यपुस्तेनसार्धं ॥ ३८ ॥ श्रुत्वाकिंचित्खेद
मापेदिवांसंमत्वामत्वाधैर्यमापेदिवांसं॥श्रावंश्रावंमातुलेयस्यतीव्रंदाहंगेहस्यानुकंपांव्यधत्त॥ ३९॥

शाख्यायाःसमासंतत्रत्योविपश्चित्समुदायः योगीट्योगीशः शालि० ॥ ३७॥ स्नानेनोपात्तंचित्तनिर्मलत्वंयेनसतस्यगृहस्यपुस्तकेनसहदाहं ॥१३
श्रुत्वेतिपरेणान्वयः ॥ ३८ ॥ मत्वामत्वापदार्थस्वरूपंज्ञात्वाज्ञात्वाधैर्यमाभुवंतंमातुलसंबंधिनोगेहस्यतीव्रंदाहंश्रुत्वाश्रुत्वाकरुणांविहितवान्
तंमातुलःआहेतिशेषः एवंभूतोपद्मपादोविश्वस्येत्येवमादिप्रकारेणब्रुवंतंमातुलंइतिवासंबंधः इं० ॥ ३९ ॥

निहितवानसिस्थापितवानसिवर्त्तमानसामीप्येलट् तंचप्रमादात्पतितोहुताशोऽदहत् व० ॥ १४० ॥ न्यगादीदुक्तवान् टीकांकर्तुमारंभं कृतवान् इं० ॥ ४१ ॥ प्रास्यत्प्राक्षिपत् नक्षमीष्टसमर्थोनाभूत् शालि० ॥ ४२ ॥ अत्रांतरेस्वयंतीर्थयात्रांचरद्भिर्दयितैःस्वीयैःसतीर्थ्यैराश्रमात्कनिष्ठैर्यदृच्छयोपेत्यज्ञातःसखेदैःसमुनिःसमैक्षिसंदृष्टः इं० ॥ ४३ ॥ अनेककालायोगजन्यादैक्यात् झटिति अन्योन्यंनमांसिनमस्कारान्ददुरादडुश्च शालि० ॥ ४४ ॥ वाण्यानिर्जिताःशेषगुरुवाल्मीकयोययासा चेतसामुनेःश्रीशंकरस्यचरणंबिभ्राणारेजे चरणंविशिनष्टि वि

विश्वस्यमांनिहितवानसिपुस्तभारंतंचादहद्धुतवहःपतितःप्रमादात् ॥ तावन्नमेसदनदाहकृतोनुतापोयावांस्तुपुस्तकविनाशकृतोममस्यात् ॥ ४० ॥ इत्थंब्रुवंतंतमथान्यगादीत्पुस्तंगतंबुद्धिरवस्थितामे ॥ उक्तासमारभ्यपुनश्चटीकांकर्तुंसधीरोयतिवृंदवंद्यः ॥ ४१ ॥ दृष्ट्वाबुद्धिमातुलस्तस्यभूयोभीतःप्रास्यद्द्राजनेतन्मनोघ्नं ॥ किंचिद्दव्यंपूर्ववन्नक्षमीष्टटीकांकर्तुंकेचिदेवंब्रुवंति ॥ ४२ ॥ अत्रांतरेऽन्यैर्निजवच्चरद्भिःस्वैस्तीर्थयात्रांदयितैःसतीर्थ्यैः ॥ अर्थादुपेत्याश्रमतःकनिष्ठैर्ज्ञातःसखेदैःसमुनिःसमैक्षीत् ॥ ४३ ॥ दृष्ट्वापद्मांघ्रिक्रमात्तेप्रणेमुस्तत्पादांभोजीयरेणून्दधानाः ॥ अन्योन्यंद्रागाददुस्तेददुश्चानेकानेहोयोगजैक्यान्नमांसि ॥ ४४ ॥ वाणीनिर्जितपन्नगेश्वरगुरुप्राचेतसाचेतसाविभ्राणाचरणंमुनेर्विरचितव्यापल्लवंपल्लवं ॥ धुन्वंतंप्रभयानिवारिततमाशंकापदंकामदंरेजेंतेवसतांसमष्टिरसुहृत्तत्याहितात्याहिता ॥ ४५ ॥

रचितव्यंभवितव्यमापल्लवंपल्लववत् धुन्वंतंप्रभयानिवारिततममतिशयेननिवारितमाशंकानांपदमाश्चर्यभूतमज्ञानंयेनपुनश्चकामदंपुरुषार्थचतुष्टयप्रदं शिष्याणांसमष्टिविशिनष्टि असुहृतांप्राणहृतांक्षुत्पिपासादीनांतत्यापंक्त्यानिमित्तभूतयाआहितंस्वीकृतमत्याहितंजीवनापेक्षंकर्मययासा अत्याहितंमहाभीतौजीवनापेक्षकर्मणीतिमेदिनी शा० ॥ ४५ ॥

सांतेवसतांसमष्टिःकुतश्चिद्देशादर्थात्समीपमागतात्सेवितसर्वतीर्थाद्द्विजात्स्वदेशकीयांसुसुखदांसुवार्त्तांशुश्राव इं० ॥ ४६ ॥ अथानंतरंगुरुवरंश्रीशंकरमनवेक्ष्यात्यंतंव्यथितंहृद्येषां कथमपिविदिताभगवत्पादाःकेरलेषुसंतीतिगुरुसंबंधिनीवार्त्तायैस्तेमुनिवर्यशिष्याःकेरलाख्यदेशा

शुश्रावसांतेवसतांसमष्टिःस्वदेशकीयांसुखदांसुवार्त्तां ॥ अर्थात्समीपागततःकुतश्चिद्द्विजेंद्रतःसेवित सर्वतीर्थात् ॥ ४६ ॥ अथगुरुवरमनवेक्ष्यनितांतंव्यथितहृदोमुनिवर्यविनेयाः ॥ कथमपिविदित तदीयसुवार्त्ताःसमधिगताःकिलकेरलदेशान् ॥ ४७ ॥ अत्रांतरेयतिपतिःप्रसुवोंत्यकृत्यांकृत्वास्व धर्मपरिपालनसक्तचित्तः ॥ आकाशलंघिवरकेरमहीरुहेषुश्रीकेरलेषुमुनिरास्तचरन्विरक्तः ॥ ४८ ॥ विचरन्नथकेरलेषुविष्वङ्निजशिष्यागमनंनिरीक्ष्यमौनी ॥ विनयेनमहासुरालयेशंविनमन्नस्तुतनिस्तु लानुभावः ॥ ४९ ॥

न्संप्राप्ताः नवमेभवतिगुरावुपचित्रा ॥ ४७ ॥ आकाशलंघिनोऽत्यंततुंगाःश्रेष्ठाःकेराख्यवृक्षायेषुतेषुकेरलेषुमुनिश्चरन्नास्तस्थितः व० ॥ ४८ ॥ अथानंतरंविष्वक्सर्वगोनिरुपमःप्रभावोयस्यश्रीशंकरः केरलेषुविचरन्सन्निजशिष्यागमनंनिरीक्ष्यमौनीतैर्भाषणमकुर्वाणोमहासुराख्यसद्मेशंश्रीविष्णुंविनयेननमस्कुर्वन् स्तुतिंकृतवान् वसंतमालिका ॥ ४९ ॥

स्तुतिमुदाहरति हेजगदीशसत्त्वासत्त्वाभ्यांविमुक्तयाऽनिर्वाच्ययाप्रकृत्यामाययाजडचेतनात्मकमिदंविचित्रंजगल्लीलयात्वंकुरुषे हियस्मा
त्परिपूर्णत्वात्तवप्रयोजनेच्छानास्तिलोकवत्तुलीलाकैवल्यमितिन्यायात् ॥ १५० ॥ ननुब्रह्मासर्वंजगत्कुरुतेइतिचेत्तत्राह हेईशत्वमेवब्रह्मा
सन्रजसात्सृजसिसत्ववृत्तिर्विष्णुःसन्तमसाशिवःसन् अतश्चसत्वमेवैकोविध्यादिसंज्ञाभिर्बहुधापरिकीर्त्यसे ॥ ५१ ॥ नकेवलमेतावदेवापि

सदसत्त्वविमुक्तयाप्रकृत्याचिदचिद्रूपमिदंजगद्विचित्रं ॥ कुरुषेजगदीशलीलयात्वंपरिपूर्णस्यनहिप्रयोजने
च्छा ॥ ५० ॥ रजसासृजसीशसत्ववृत्तिस्त्रिजगद्रक्षसितामसःक्षिणोषि ॥ बहुधापरिकीर्त्यसेचसत्वंविधिवै
कुंठशिवाभिधाभिरेकः ॥ ५१ ॥ विविधेषुजलाशयेषुसोयंसवितेवप्रतिबिंबितस्वभावः ॥ बहुरूपमिदंप्रवि
श्यविश्वंस्वयमेकोऽपिभवान्विभात्यनेकः ॥ ५२ ॥ इतिदेवमभिष्टुवन्विशिष्टस्तुतितोसौसुरसद्मसन्निवि
ष्टः ॥ चिरकालवियोगदीनचित्तैःशिरसाशिष्यगणैरथोववंदे ॥ ५३ ॥ गुरुणाकुशलानुयोगपूर्वंसदयंशि
ष्यगणेषुसांत्वितेषु ॥ अतिदीनमनाःशनैरवादीदजहद्द्वंद्दिकंसपद्मपादः ॥ ५४ ॥

विविधेषुजलाशयेषुयथासूर्यःप्रतिबिंबितस्वभावस्तथाशयेषुप्र
तुःस्वयमेकोपिभवान्बहुरूपमिदंविश्वंप्रविश्यानेकोविभातीतिसदृष्टांतमाह
तिबिंबितस्वभावःसोयंभवानित्यन्वयः तथाचश्रुतिः यथाह्ययंज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोनुगच्छन् उपाधिनाक्रियतेभेदरूपोदेवः
क्षेत्रेष्वेवमजोयमात्माइति ॥ ५२ ॥ ववंदइतिकर्मणिलिट् तैतंशिरसाववंदिरेइत्यर्थः ॥ ५३ ॥ कुशलिनोभवंतइतिकुशलप्रश्नपूर्वकंसदयंय
थास्यात्तथासांत्वितेषुशिष्यगणेषुमध्येसपद्मपादोऽजहद्द्वंद्दिकंयथास्यात्तथाऽवादीत् ॥ ५४ ॥

पूर्वाश्रममातुलेनत्वगेहंप्रतिबहुधाविहितानुनयेननीतोबतेत्यत्यंतखेदे ॥ ५५ ॥ भेदवादींदोरप्यस्यायेममातुलोयमितिपूर्ववासनानुबंधा
दहंभवदीयभाष्यटीकामपठं अस्यांटीकायांकृतोनुयोमश्चोयमोयेनतमजयं व० ॥५६ ॥ अजयमित्यनेनप्रागंगर्ववारयति तवसूक्तैवर्मतुल्यै
रक्षितस्त्वमजयंनतुस्वसामर्थ्येनेतिभावः तानिविशिनष्टि दग्धातप्राचक्रादिमुद्रायेषांतेषांमुखपिधायकमंत्रैः पुनश्चध्वस्तानिगौतमादिशास्त्रा



भगवन्नभिगम्यरंगनाथंपथिपद्माक्षमहंनिवर्त्तमानः ॥ बहुधाविहितानुनीतिनीतोबतपूर्वाश्रममातुलेनगे
हे॥५५॥ अहमस्यपुरोभिदावदेंदोरपिपूर्वाश्रमवासनानुबंधात्॥ अपठंभवदीयभाष्यटीकामजयंचात्रकृता
नुयोगमेनं॥५६॥ दग्धमुद्रमुखमुद्रिणमंत्रैर्ध्वस्ततर्कगुरुकापिलतंत्रैः ॥ वर्मितोनिगमसारसुधाक्तैर्मातुलंत
मजयंतवसूक्तैः ॥ ५७ ॥ खड्गाखड्गिविहारकल्पितरुजंकाणादसेनामुखेशस्त्राशस्त्रिकृतंश्रमंचविपमंप
स्त्वत्पदानांपदं ॥ यष्टायष्टिभवंचकापिलबलेखेदंमुनेतावकैःसूक्तैर्यौक्तिकवंशमौक्तिकमयैर्नापद्यतेवर्मितः
॥ ५८ ॥ अथगूढहृदोयथापुरंमामभिनंद्याहितसत्क्रियस्यतस्य ॥ अधिसद्मनिधायभाष्यटीकामहमस्या
यमशंकितोनिशायां ॥ ५९ ॥

णियैर्वेदसारलक्षणसुधांजितैः स्वा० ॥ ५७ ॥ किंच हेमुनेयौक्तिकलक्षणवंशमौक्तिकमयैस्तवसूक्तैर्वर्मितःकवचैरिवरक्षितःकाणादसेनामु
खेखड्गाखड्गिविहारेणकल्पितंरुजंनापद्यते तथाअक्षपादानांगौतमानांपदेशस्त्राशस्त्रिकृतंश्रमंचनापद्यते तथाकापिलसैन्येयष्टायष्टिजन्यंखेदं
चनापद्यते शा० ॥ ५८ ॥ अथपराजयानंतरंयथापुरंमामभिनंद्यसंपादितसत्क्रियस्यगूढहृदयस्यास्यसद्मनिभाष्यटीकांनिधायाहमशं
कितआयंगतवान् निशायामित्यस्यपरेणान्वयः व० ॥ ५९ ॥

निशायामधिनिशीथमर्धरात्रावग्निरस्यधाम्नासहटीकामपिभस्मसादकार्षीत् दहनंविशिनष्टि युगपर्ययेप्रलयेनृत्यतउग्रस्यमहारुद्रस्यफाले ललाटेयोज्वलनोवन्हिस्तस्यशिखावद्भयंकरंशिखाजालंयस्यसः ॥ ६० ॥ इत्येवमस्यवार्त्ताविजृंभतेस्मविलासंप्राप ॥ ६१ ॥ गरप्रभा वश्चजातइत्याहाधुनानोबुद्धिःदैवेनयथापुरासंशयरहितंप्रसादंनाप्नोति विषमापुनरीदृशीदशाभवदंघ्रिकिंकराणामस्माकंकिमुयुक्ताऽपितुनै

युगपर्ययनृत्यदुग्रफालज्वलनज्वालकरालकीलजालः ॥ दहनोधिनिशीथमस्यधाम्नावतटीकामपिभस्म
सादकार्षीत्॥ ६० ॥ अदहत्स्वगृहंस्वयंहताशोविमतग्रंथमसौविदग्धुकामः ॥ मतिमांद्यकरंगरंचभैक्ष्यव्य
धितास्येतिविजृंभतेस्मवार्त्ता ॥ ६१ ॥ अधुनाधिषणायथापुरंनोविधुनानाविशयंप्रसादमेति ॥ वि
षमापुनरीदृशीदशानःकिमुयुक्ताभवदंघ्रिकिंकराणां ॥ ६२ ॥ गुरुवर्यंतवयाभाप्यवरेण्येव्यरचिमयाललि
ताकिलवृत्तिः ॥ निरतिशयोज्वलयुक्तियुतासापथिकिलहाविननाशकृशानौ ॥ ६३ ॥ प्रयतेहंपुनरेव
यदातांप्रविधातुंबहुधाकृतयत्नः ॥ नयथापूर्वमुपक्रमतेताःपटुयुक्तीर्भगवन्ममबुद्धिः ॥ ६४ ॥ कृपापारावा
रंतवचरणकोणाग्रमरणंगतादीनादूनाःकतिकतिनसर्वेश्वरपदं ॥ गुरोमंतुर्नतुःकइवममपापांशइतिचे
न्मृषामाभाषिष्ठापदकमलचिंतावधिरसौ ॥ ६५ ॥

त्वयुक्तेत्यर्थः ॥ ६२ ॥ अतिदुःखितःसाक्रोशंपुनराह गुरुवरेति उपचित्रा ॥ ६३ ॥ ननुपुनस्तथैवरचनीयेत्याशंक्याह यदाबहुधाकृतप्रयत्नस्तां विधातुमहंप्रयते हेभगवंस्तदायथापूर्वंताःपटुयुक्तीर्ममबुद्धिः नोपक्रमते ॥ ६४ ॥ कृपासमुद्रंतवचरणकोणाग्रंअरणंशरणंयेषामास्तेतेपू र्वंदीनाअपिदूनाःखिन्नाअपिसर्वेश्वरपदंककनप्राप्ताअपितुंसर्वेऽपिप्राप्ताः हेगुरोनमनंगुरोःकर्त्तुर्ममकइवमंतुरपराधः मंतुःपुंस्यपराधेपिमनुष्ये पिप्रजापताविति मेदिनी पापांशइतिचेत्तर्ह्यसौपापांशोगुरुपदकमलचिंतनमेवावधिर्यस्येतिमृषामाभाषिष्ठाः शि० ॥ ६५ ॥

करुणापूरकेणाश्लिष्टंअंतरंगंयस्यसआर्यपादः श्रीशंकराचार्यइत्येवंवादिनमेनंपद्मपादंपीयूषसमुद्रतुल्यैरपास्तोनिराकृतोमोहोयैर्वल्गुःसुंदरो डिं० टी०
शं० वि० बंधोबंधनंग्रंथनंयेषांतैर्वचोभिःसांत्वयतिस्म वसंतमालिका ॥ ६६ ॥ वत्सेतिखेदे विषजन्ममोहतुल्यश्चासौदुर्निवारश्चैषःकर्मणांविपा
कःविषमोऽस्तिप्रथममेवमयायमर्थोज्ञातः सुरेश्वराचार्यायकथितश्च ॥ ६७ ॥ अतोऽद्यतेशोकोयातात्अवगछतुशीघ्रंतांलिखेत्यार्यःश्री १४

॥१६॥ इतिवादिनमेनमार्यपादःकरुणापूरकरंभितांतरंगः ॥ अमृताब्धिसखैरपास्तमोहैर्वचनैःसांत्वयतिस्मवल्गु
वंधैः ॥ ६६ ॥ विषमोवतकर्मणांविपाकोविषमोहोपमदुर्निवारएषः ॥ विदितःप्रथमंमयायमर्थःकथि
तश्चांगसुरेशदेशिकाय ॥ ६७॥ पूर्वंशृंगक्ष्माधरेमत्समीपेप्रेम्णायासौवाचितापंचपादी ॥ सामेचित्तान्नाप
यात्यद्यशोकोयाताच्छीघ्रंतांलिखेत्याख्यदार्यः ॥६८॥ आश्वास्येत्थंजलजचरणंभाष्यकृत्पंचपादीमाचख्यौ
तांकृतिमुपहितांपूर्वयैवानुपूर्व्या॥ नैतच्चित्रंपरमपुरुषेव्याहतज्ञानशक्तौतस्मिंन्मूलेत्रिभुवनगुरौसर्वविद्या
प्रवृत्तेः॥ ६९ ॥ प्रसभंसविलिख्यपंचपादींपरमानंदभरेणपद्मपादः ॥ उदतिष्ठदतिष्ठदभ्यरौदीत्पुनरुद्गाय
तितुस्मनृत्यतिस्म ॥ ७० ॥

शंकरोअवोचत् शालि० ॥ ६८ ॥ अमुनाप्रकारेणपद्मपादमाश्वास्यभाष्यकारस्तांपंचपादींकृतिंपूर्वयैवानुपूर्व्यायुक्तामाचख्यौचित्रं
मन्वानान्प्रत्याहाव्याहताज्ञानशक्तिर्यस्यतस्मिंस्त्रिभुवनगुरौसर्वविद्याप्रवृत्तेर्मूलेमहापुरुषेतच्चित्रंनभवति मं० ॥ ६९ ॥ सपद्मपादःप्रसभंह ॥१६
ठेनपंचपादींविलेख्यपरमानंदातिशयेनोदतिष्ठदूर्ध्वमतिष्ठत्पुनःसममतिष्ठत्पुनरभ्यरौदीदानंदाश्रूण्यमुंचत्पुनरुद्गायतिस्मतुपुनर्नृत्यतिस्म वसं
तमालि० ॥ ७० ॥

कमनोरंजकः निजकोटीरैः किरीटसंबंधिरत्नैर्निघृष्टपादनखाग्र्यं यस्य सः तादृशं अमुं मुनिं मुदं वितेने वि० ॥ ७१ ॥ एवं प्रसादितेनामुनासंय मिनासानाटकत्रयी प्रथयते इति ततो नियुक्तः प्रमादादग्नौ साहुतितामुपागतेतीदमुत्तरमुपाददे ॥ ७२ ॥ तां नाटकत्रयीं हे वरद किंकरोहं किंकर वाणीति प्रणमन् विज्ञापितवान् ॥ ७३ ॥ एवं राजशेखरेण विज्ञापितो देशिकः श्रीशंकरो नृपकालटिनामके पहारो येषां ते द्विजकर्मानधिकारि

कविताकुशलोथकेरलक्ष्माकमनःकश्चनराजशेखराख्यः ॥ मुनिवर्यममुंमुदावितेने निजकोटीररनिघृष्टपादनखाग्र्यं ॥ ७१ ॥ प्रथते किमु नाटकत्रयी सेत्यमुना संयमिनाततो नियुक्तः ॥ अयमुत्तरमाददे प्रमादादनले सा हुतितामुपागतेति ॥ ७२ ॥ मुखतः पठितां मुनींदुना तां विलिखन्नेष विसिस्मये थ भूपः ॥ वद किंकरवाणि किंकरोहं वरदेति प्रणमन्व्यजिज्ञिपच्च ॥ ७३ ॥ नृपकालटिनामकाग्रहाराद्द्विजकर्मानधिकारिणोद्यशप्ताः ॥ भवतापि तथैव ते विधेया वत पापा इति देशिकोशिपत्तं ॥ ७४ ॥ पद्मांघ्रौ प्रतिपद्य नष्टविद्यां तितुष्टे पुनः केरलक्ष्मापालोयति सार्वभौमसविधं प्राप्य प्रणम्यांजसा ॥ लब्ध्वा तस्य मुखात्स नाटकवराण्यानंदपाथोनिधौ मज्जंस्तत्पदपद्मयुग्ममनिशं ध्यायन्प्रतस्थे पुरीं ॥ १७५ ॥ इति श्रीमाधवीये तत्तीर्थयात्राटनार्थकः ॥ संक्षेपशंकरजये सर्गोऽजनि चतुर्दशः ॥ १४ ॥ ॥ छ ॥ ॥ छ ॥ मूलसंख्या ॥ २५३ ॥ ॥ छ ॥

णइति अद्येदानीं शप्ताः भवतापि तथैव विधेयाः यतः पापा इति राजानमशिषत् ॥ ७४ ॥ उपसंहरति पद्मपादे नष्टविद्यां तिप्रतिपद्यतुष्टे सति पुनः केरलनृपालो यतिसार्वभौमस्य सविधं समीपं प्राप्यांजसा झटिति प्रणम्य तस्य मुखात्स नाटकवराणि लब्ध्वा तदानंदजलधौ मज्जंस्तस्य चरणकमल युग्ममनिशं ध्यायन्पुरीं प्रतस्थे शा० ॥ १७५ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारतनुधनपतिसूक्तं श्रीशंकराचार्यविजयडिंडिमे चतुर्दशः सर्गः ॥ १४ ॥ ॥ छ ॥ ॥ छ ॥ टीकासंख्या ॥ २४१ ॥

श्री० ॥ अथदिग्विजयकौतुकंसपरिकरंनिरूपयितुमुपक्रमते अथानंतरंपद्मपादहस्तामलकसमित्पाणिचिद्विलासज्ञानकंदविष्णुगुप्तशुद्धकीर्तिभानुमरीचिकृष्णदर्शनबुद्धिविरिंचिपादशुद्धांतानंदगिरिप्रमुखैःसहस्रैःशिष्यवर्यैर्युतः सुधन्वनाराज्ञाचानुयातः सर्वादिशोविजिगीषुःसैषउदारधीःश्रीशंकराचार्यः प्रथमंसेतुंप्रतिप्रतस्थे वसंतमालिका ॥ अत्रप्राचीनानुरोधेनमध्यार्जुनंप्राप्यततःसर्वाःककुभोविजिगीषुःप्रथमंसेतुंप्रतिप्रतस्थइतिव्याख्येयं तथाहि श्रीशंकराचार्योमध्यार्जुनंनामशिवाविर्भूतस्थलविशेषंप्राप मध्यार्जुनेशानमदृष्टपूर्वंविद्यादिभिःपूजितपादपद्मं बुध्योपचारैरभजत्परेशंनिष्पापतांप्रापफलैकपात्रं तत्रकिलभगवान्श्रीशंकराचार्यःसदाशिवमेवमब्रवीत् स्वामिन्मध्यार्जुनसर्वौपनिषदर्थोसि सर्वज्ञोसि तस्मान्निगमादितात्पर्यगोचरंद्वैतमद्वैतंवेतिसंशयस्यसर्वेषांपश्यतांनिर्वांत्तकुर्वितिप्रार्थितोमध्यार्जुनेशोलिंगात्पा

श्री० ॥ अथपंचदशःसर्गः ॥ अथशिष्यवर्यैर्युतःसहस्रैरनुयातःससुधन्वनाच
राज्ञा ॥ ककुभोविजिगीषुरेपसर्वाःप्रथमंसेतुमुदारधीःप्रतस्थे ॥ १ ॥

त्सावयवरूपेणनिष्क्रम्य मेघवत्गंभीरयागिरादक्षिणहस्तमुद्यम्य सत्यमद्वैतंसत्यमद्वैतंसत्यमद्वैतमितित्रिरुक्त्वालिंगाग्रेऽतर्दधे पश्यतांनराणांमहदद्भुतमासीत् तद्भक्ताश्चतद्देशस्थिताःश्रीशंकरमेवसद्गुरुंकृत्वोमागणपतीशार्काच्युतार्चापराःप्रातःस्नानादिविशुद्धाःपंचयज्ञपरायणाःश्रुतिसंन्नोदिताचारगाःशुद्धाद्वैतपरायणावभूवुः एवंतद्देशस्थानद्वैतवादिनःकृत्वा प्रमथैःशंकरइव शिष्यसमेतोरामेश्वरंप्रतिजगामेति ॥ १ ॥
तत्रकिलतस्यशाक्तैर्विवादोऽभवत्तान्विशिनष्टि गिरिजार्चाकपटान्मधुप्रसक्तैर्विवादंविशिनष्टि निकटस्थेषुवितीर्णोदत्तोवहुमोदोयाभिस्ताश्चताःस्फुटंयथास्यात्तथारिखंत्यःस्फुरंत्योयाःपङ्क्त्यश्चतुरांयुक्तयस्तद्वान् पदेतिक्वचित्पाठः तथाहि तत्रस्थागुरुशेखरंयतिवरंमूर्ध्नाभिवाद्योचिरेस्वामिन्नस्मदिदंमतंश्रृणुसितंचित्तंपरंपावनं आद्याशक्तिरशेषकार्यजननीशंभोर्गुणेभ्यःपरायन्मायावशतोमहत्प्रमुखरंसर्वंजगज्जायते १

तस्यावागाद्यगम्यत्वात्सेवाऽयोग्यत्वहेतुनः तदंशायाभवान्यास्तुपादसेवापरावयं २ स्वर्णनिर्मिततत्पादैर्बद्धयोवासुबाहवः जीवन्मुक्तिर्यतो विद्योपासकानांफलंश्रुतं ३ विद्यांचाविद्यांचयस्तद्वेदोभयंसह अविद्ययामृत्युंतीर्त्वाविद्ययामृतमश्नुते ४ तस्मात्कटाक्षलेशेनमुक्तिदाया मुमुक्षुभिः सेवनीयाप्रयत्नेनप्रकृतिःपुरुषरूपिणी ५ प्रकृतिश्चेश्वरश्चेतिश्रुतितस्तदभिन्नता सदेवेत्यादिवाक्यानितत्पराणिमतानितु ६ अकारादेर्यथोत्पतिःप्रणवस्थस्यसंमता तच्छक्तीनांभवानीलक्ष्म्यादिकानांतथास्तिसा ७ सिद्धांतःसर्वदेवानांकारणस्यप्रभोःपरा चंद्रस्यचंद्रिकावंद्यारुद्धोद्बोधकरूपिणी ८ स्वाधीनवल्लभेत्युक्ताशक्तीरुद्रस्यभोयते सैवास्तीयंभवानीतिनिश्चयेनर्युतावयं ९ निरवद्यैर्भवद्भिश्चकृत्वातच्चिह्नधारणं सैवोपास्यासर्वमातामुक्तिदापरमेश्वरी १० इत्युक्तआचार्यवरोमहेशःसंप्राहतान्सत्यमिदंतथापि श्रेष्ठत्यज्ञानात्पुरुषस्यमुक्तेः

अभवत्किलतस्यतत्रशाक्तैर्गिरिजार्चाकपटान्मधुप्रसक्तैः॥
निकटस्थवितीर्णभूरिमोदस्फुटरिखल्पटुयुक्तिमान्विवादः॥ २॥

संप्रोदितत्वात्सकलेपिशास्त्रे ११ आत्मानमात्मनाध्यात्वामुक्तोभवतिनान्यथा तमेवेत्यादिवाक्यानिप्रमाणान्यत्रकोटिशः १२ अजामित्यादिमंत्रेऽजास्वरूपमभिधायवै ततस्तत्वंपरेशस्यमुक्त्यर्थंसंप्रकाशितं १३ किंचापिसांख्यैःप्रकृतेःपरस्यविकारहीनस्यसुबोधतःसा उक्तातईशस्यसुखैकधाम्नोज्ञानाद्विमुक्तिःपरमस्यभूम्नः १४ ऐक्यंचोक्तंब्रह्मणाज्ञानिनोहिब्रह्मज्ञोब्रह्मैवनान्योस्तिकश्चित् ब्रह्मेत्यादौवेदवाक्ये तदेवज्ञानंसम्यक्साधनीयंभवद्भिः १५ विद्यारूपाभवानीयाप्रोक्तासाद्वैतबोधिनी तस्याःसंसेवनादाशुचित्तशुद्धिर्विजायते १६ तस्मात्कुंकुमपुंड्रादिपरित्यज्यतथैवच हैमपादादिचिह्नानिविद्यायांरतिमागताः १७ ब्रह्माहमितिरूपायांमुक्ताभवथनान्यथा एवमुक्तास्त्यक्तचिह्नाःसर्वएवपरंगुरुं १८ स्नानसंध्यापराःपंचपूजादिनिरतास्तथा शुद्धाद्वैतकृतश्रद्धाःसच्छिष्यत्वमुपागताः १९ महालक्ष्म्याभक्ताःपरमपुरुषंशंकरमथोसमेत्योचुर्नत्वानिखिलफलदासर्वजननी महालक्ष्मीराद्याप्रकृतिरसदित्यादिनिगमैःसदेवेतिश्रुत्यापरमपुरुषस्यामलतनोः २०

ब्रह्मादयोपिजायंतेयस्यायस्यांपरेशितुः अप्यंतर्भावएवास्तिसैवसेव्यामुमुक्षुभिः २१ लक्ष्म्याःसमाराधनतत्पराणांपद्माक्षमालाभरलंकृ
तानां बाह्वोश्चकंजांकविभूषितानांसुकुंकुमेनांकितमस्तकानां २२ हस्तस्थितामुक्तिरतोभवद्भिरुपासनीयासकलेश्वरेश्वरी इत्युक्तआहाद्भुत
मेतदुक्तंमतंभवद्भिःश्रृणुतापितत्वं २३ स्रष्टापरात्मानतुकश्चिदन्यएकोद्वितीयःसदसत्स्वरूपः तत्त्वंसआत्मेतिनिबोधितःश्रुतावानंदरूपःसतुव
र्ततेसदा २४ प्रकृतेस्तदधीनायामोचकत्वंनसंगतं अहंब्रह्मेतियोध्यातातस्यमुक्तिःकरेस्थिता २५ अनित्योपासकानांतुलोकावाप्तिस्तथा
विधा अतोयूयंपरित्यज्यपद्मकुंकुमधारणं २६ शुद्धामद्वैतविद्यांवैसमाश्रित्यसुसाधवः मुक्ताभविष्यथेत्युक्ताःशिष्यतांसमुपागताः २७
ततआगत्यचाचार्यंशारदोपासनेरताः पुस्तपुंड्रकचिह्नेनयुक्तानत्वावभाषिरे २८ स्वामिन्वेदस्यनित्यत्वाच्छारदानित्यरूपिणी कारणंसर्वलो
कानांपरात्परतरामता २९ जगत्कर्त्रीतिनित्यावागितिचश्रुतिवाक्यतः सैवात्मब्रह्मविष्ण्वादिशब्दजालैरुदाहृता ३० गुणातीतस्वरूपाच
सेव्यासर्वैर्मुमुक्षुभिः वागुपासनमेवातःकुरुध्वंसुप्रयत्नतः ३१ नावेदेत्यादिवाक्येनवेदार्थज्ञानवर्जितः तंपरंवाक्स्वरूपंनानवेदेतिप्रकाशना
त् ३२ वाक्स्वरूपानुसंधानंसर्वदानिश्चयेनहि वेदार्थज्ञानपूर्वंवैप्रकर्तव्यंद्विजातिना ३३ इत्युक्तोभगवानाहकंठताल्वादिसंगमात् समुद्भू
तस्यवेदस्यनित्यताकथमुच्यते ३४ वर्णमात्रस्यनित्यत्वंवर्णानांसंततेरुत नाद्यःसर्वलयेतेषांलयसंभवहेतुतः ३५ यस्यनिःश्वसितंवेदाइति
जन्यत्वदर्शनात् यज्जन्यंतदनित्यंचेतिप्रमाणान्नचांत्यमः ३६ महर्षिभ्योरविःप्राहसृष्टिकालेखिलप्रभुः युगांतेप्रलयंयानवेदमंगसमन्वितं
३७ इत्युक्तंसूर्यसिद्धांतेवेदराशेःप्रवर्तनं गतस्यप्रलयंसूर्यात्शारदानित्यताकुतः ३८ अनित्यत्वेपिदेवानांब्रह्मणोनित्यतामता नित्यासाशा
रदातश्चेन्नैवरम्यमिदंतपः ३९ आद्यस्यजीवस्यचतुर्मुखस्यनित्यत्वशून्यस्यमुखेस्थितायाः अनित्यतायाखलुशारदायानसंशयोबुद्धिमतो
स्तिकश्चित् ४० प्रकृतिःपरमासरस्वतीयामहदादेःसकलस्यकारणंसा इतिचेन्नसमंजसंयतोवैपरमात्मव्यतिरेकिणोमृषात्वं ४१ वागाद्यतीत
तःपरएवभूमासदादिबोध्यःप्रकृतिर्नवाच्या सदादिशब्दैरतएवतस्यज्ञानंसुसम्यक्परिसाधनीयं ४२ ज्ञात्वातमेवखलुमुक्तिपदंप्रयातिमा
र्गोनचान्यइतिवेदउदाजहार शुद्धाद्वयेसततमेवरताभवंतःस्नानादिकर्मपरमार्पणबुद्धिमंतः ४३ कुर्वन्ननेकदुरितान्यपहायदूरंशुद्धिंगताःसु
खघनस्यविबोधतोवै मुक्ताभविष्यथकदापिनचान्यथाहीत्युक्ताबभूवुरखिलायमिनःसुशिष्याः ४४ वामाचाराःसमेत्याहुस्ततोज्ञानवतांव

रं संविस्वरूपमज्ञायद्यथावेषधरोभवान् ४५ निरतोऽद्वैतविज्ञानेवंध्यापुत्रसमेयतः लयेपिभेदसत्तातोऽद्वैतंनैवकदाचन ४६ ईश्वरेपिवि 
मर्शोविपृथगेवास्तिसर्वदा ययाविनापरेशस्यक्रियास्वल्पापिदुर्लभा ४७ साशक्तिरस्तीहसदास्वतंत्राजगद्विधात्रीचशिवस्यबीजं विद्यात्मि
कातत्ररतिगतानांमुक्तिःकरस्थाकिलनेतरेषां ४८ विमर्शसंज्ञमव्यक्तंब्रह्मभृग्वादयोजगुः तत्परासत्वतोस्त्यन्यत्ततोयद्यत्तुतद्वशं ४९ तस्याः
 सेवांनिरतमनसांनोनिषेधेऽधिकारेनास्त्येवैवंविहितकरणेसिद्धतामागतानां निस्त्रैगुण्येपथिविचरतांकोविधिःकोनिषेधोभृग्वादीनाममलमन 
सांनप्रवृत्तिर्हिमानं ५० तस्माद्भवंतोपिविहायसर्वंविद्यांपरामाश्रयतात्ममुक्त्यै इत्युक्तआचार्यउवाचमैवंयत्रेतिश्रुत्यादिविबोधकाले ५१ आ
त्मातिरिक्तस्यनिषेधएवकृतस्तदानींनविमर्शदेशः नह्यस्तिसत्यत्वमनात्मनोनोमुक्तिस्त्वनित्यप्रकृतेरुपास्त्या ५२ मायाभिरिंद्रःपुरुरूपईयत

सहियुक्तिभरैर्विधायशाक्तान्प्रतिवाग्व्याहरणेपितानशक्तान् ॥
द्विजजातिबहिष्कृताननार्यानकरोल्लोकहितायकर्मसेतुं ॥ ३ ॥

इत्येवमस्याबहुरूपताश्रुता तस्माच्चिदात्माप्रकृतेःपरःप्रभुर्ज्ञेयोस्तिमोक्षायमुमुक्षुभिर्मुदा ५३ ईशानोभूतभव्यस्येत्यादिकश्रुतिबोधिते अकिं
चित्करइत्युक्तिर्मौढ्यादेवनचान्यथा ५४ कलंजादनशीलानांसुरापानादिकुर्वतां ब्राह्मण्यंनास्तियुष्माकंकुरुतातोविनिष्कृतिं ५५ भृगुणा
ताडितोविष्णुःकुंभजेनसरित्पतिः पीतःकथंनभवतामस्तिशक्तिस्तथाविधा ५६ तस्माद्विमूढतांत्यक्त्वाभ्रष्टैर्ब्राह्मणजातितः प्रायश्चित्तमनुष्ठेयमि
त्युक्तास्तेपरंगुरुं ५७ नत्वाप्रायश्चित्तमेवाशुकृत्वाशुद्धाद्वैतेसंरताःसाधुवृत्ताः सत्कर्मस्थाःपंचपूजापरास्तेजाताःशिष्याःसर्वसंदेहहीनाः ५८॥ 
॥ २ ॥ एतत्सर्वंसंग्रहेणदर्शयति सहिश्रीशंकरस्तान्शाक्तान्प्रतिवाग्व्याहरणेपियुक्त्यतिशयैरशक्तान्विधायकर्मसेतुमकरोत् तान्विशिनष्टि
द्विजेति आचार्यस्यविजयोपिनस्वख्यात्याद्यर्थमित्याह लोकहितायेति ॥ ३ ॥

एवंसेतुंप्रतिप्रस्थितेनतत्रप्रस्थानेतुलाभवानीनिकटस्थानांपराजयंसंक्षेपेणप्रदर्श्यरामेश्वरप्रांतदेशस्थानांतंसंग्रहेणवर्णयितुमाहाभिपूज्येति रामेश्वरंवक्ष्यमाणप्रकारेणाभिपूज्यपांड्यैःसहचोलान्देशविशेषान्द्रविडांश्ववशेविधाय ततोहस्तिसंज्ञकस्यपर्वतस्यकटिमेखलाभूतांकांचींनगरींजगामेदमत्रावधेयं रामेश्वरंरामकृतप्रतिष्ठंकामेश्वरीभूषितवामभागं महेंद्रनीलोज्वलद्युतिकिरीटंश्रीमेश्वरंत्वामिहपूजयामि १ इतिगंगाजलैःशुद्धैरर्चयामासशंकरः सुबिल्वैःपंकजैःपुष्पैर्वन्यैर्वन्यफलैस्तथा २ तत्रमासद्वयंवासंकृतवत्यार्यआगताः अद्वैतद्रोहिणःशैवालिंगांकितभुजद्वयाः ३ फालेशूलांकितारौद्राभक्तालिंगेनचिह्निताः डमर्वंकधराबाहुद्वयेतूपास्तथाहृदि ४ शूलंशिरसिलिंगंचधारिणोजंगमास्तथाललाटेहृदयेनाभौबाह्वोःशूलेनचिह्निताः ५ गुरुंपाशुपतानत्वाप्रोचुःकारणमीश्वरः शिवोतश्चिह्नसंयुक्तैःसेवनीयःप्रयत्नतः ६ ऋतंसत्यंपरंब्रह्मपुरुषंकृष्णपिंगलं ऊर्ध्वरेतंविरूपाक्षंविश्वरूपायवैनमः ७ यौमूर्धानंयस्यवेदावदंतिखंवैनाभिंचंद्रसूर्योचनेत्रे दिशःश्रोत्रेवाग्विद्धत्ताश्ववे

अभिपूज्यसतत्ररामनाथंसहपांड्यैःस्ववशेविधायचोलान् ॥
द्रविडांश्चततोजगामकांचींनगरींहस्तिगिरेर्नितंबकांचीं ॥ ४ ॥

दास्तंमुमुक्षुर्वैशरणमहंप्रपद्ये ८ इत्यादिवचनैरुक्तैःशिवेभक्तिमतांयते तस्यलोकेभवेद्वासःशिवचिह्नांकितात्मनां ९ किंचकारणंचितायांशंभुराकाशमध्यगः प्रोक्तस्तथासुरैःपृष्टःकस्त्वमित्याहशंकरः १० अहमेकःपुरादेवाआसंमत्तोनचापरः इदानीमहमेवास्मिसद्वयोजगदीश्वरः ११ इतितस्माच्छिवःकर्तासामान्यैरप्युदीरितः सद्ब्रह्मात्मादिकैःशब्दैरुपादानतयाप्रभुः १२ वासुदेवःपुराह्यासीन्नब्रह्मानचशंकरः इत्यत्रवासुदेवाख्योमहादेवइतीरितः १३ वसत्यस्मिन्जगत्सर्वंवासस्तेनप्रकीर्तितः सचासौदेवइत्युक्तोजगत्कर्तामहेश्वरः १४ शंसुखंजीवनंयोसौकरोत्यस्यसशंकरः पालकोविष्णुराख्यातःसनासीत्प्राकृतंलयं १५ पाल्यस्याभावतोस्यत्रप्रमाणंकृष्णभाषितं रुद्राणांशंकरश्चास्मीत्येवंशिवरहस्यके १६ महादेवस्यवाक्यानिमुनिंदुर्वाससंप्रति सावधानतयातानिश्रोतव्यानियतीश्वर १७ अहमेकाक्षरःकर्तापरात्परतरःशिवः सदा

त्माब्रह्मविष्णोश्चलोकानामादिकारणं १८ पुराणःपूर्वगःपूर्वज्येष्ठःश्रेष्ठोहमद्वयः मदिच्छारूपिणीशक्तिर्जगत्संहारकारिणी १९ लुप्ता
मय्येवसास्रष्टापुनःसृष्टौमयानघ सामहत्तत्वमुत्पाद्यत्रिगुणांकुरकारणं २० अहंकारंसमुत्पाद्यत्रैगुण्यंपूर्वतत्वतः गुणत्रयात्मिकान्कृत्वारुद्रा
नेकादशाव्ययान् २१ राजसंसृष्टिकर्तारंकारयामाससादरं सात्विकान्पालनपरान्तामसान्प्रलयेश्वरान् २२ क्रमादवर्णसंजातमुवर्णा
श्चमवर्णतः तेषुमुख्यतयाब्रह्माविष्णुरुद्राइतित्रिधा २३ अन्येतदनुवृत्तिस्थाएवमेकादशेश्वराः तेषांविभूतयःसर्वेदेवालोकाश्चराचराः २४
पृथक्पृथङ्नामगतास्तत्तत्कर्मानुसारतः तेसर्वेप्रलयेब्रह्मतेजस्येवलयंगताः २५ राजसेरक्तवर्णेचसतुब्रह्मासमस्तभृत् कृष्णोनारायणस्यैवते
जस्यस्तोभवत्पुरा २६ रुद्रस्यशुक्लवर्णेतुह्यस्तोनारायणःस्वयं सतुरुद्रःप्रकृत्यंतर्गतःशुक्लेनतेजसा २७ मदिच्छाशुक्लवर्णासामय्येवविल
यंगता अतोस्म्यनंतःसर्वार्थवेदैरपिनगोचरः २८ वेत्तिकश्चिन्नमन्मायांजन्मस्थितिलयावहां अतोरुद्रार्चनपरारुद्रसूक्तजपाश्रिताः २९ पं
चाक्षरीजपपरारुद्राक्षाभरणैर्युताः भूतिभूषितसर्वांगाःसदाध्यानपरायणाः ३० ईश्वरंरुद्रमव्यक्तंव्यक्तरूपजगल्लये येर्चयंतिनरश्रेष्ठास्तेषां
मुक्तिःकरेस्थिता ३१ अतस्त्वंभूतिरुद्राक्षधारणंकुरुसर्वदा कुरुनित्यंमहादेवपूजनंभक्तिसंयुतः दूर्वाससेमुनींद्रायह्येवमुक्त्वासदाशिवः ३२
अंतर्दधेतदाचारसक्तोभून्मुनिसत्तमः इत्यतःपरमात्मासौसेवनीयोमुमुक्षुभिः ३३ नारायणोकामयताद्वितीयःप्रजाःसृजामीतिततोमहांति
भूतान्यजायंततथाविधाताप्रजापतिश्चापिजनिंप्रयातौ ३४ अत्रापिनारायणशब्दवाच्योमहेशएवास्तियतस्तुनारं ब्रह्मेंद्रविष्ण्वादिनृणांसमू
हःस्थानंतदस्याखिलबुद्धिगस्य ३५ अस्यैवांशाविश्वदेवाःप्रमाणंत्वस्मिन्नर्थेवेदएवास्तियोसौ येभूम्यादौसंतिरुद्रानतिस्तेभ्यःसर्वेभ्योस्त्वेव
माहात्यिमत्नात् ३६ कारणत्वेनज्येष्ठत्वंतथाप्राहकनिष्ठतां कार्यात्मनायतोजातात्रिदेवाइतिचश्रुतिः ३७ सत्यंज्ञानमनंतंयोगुहायांनिहि
तंप्रभुं वेदेत्यादिश्रुतिप्रोक्तस्ततोदेवोमहेश्वरः ३८ निर्गुण्योप्येषएवेशश्चिंतयित्वाचिरंपुरा सृजामीत्यात्मनस्तेजःसूर्याकारेणसृष्टवान् ३९
मनश्चंद्रंतथासत्त्वंभौमंसौम्यंतुवाङ्मयं सुखज्ञानमयंदेवगुरुंशुक्रमयंसितं ४० क्लेशात्मकंशनिंचैवंचकारपरमेश्वरः सूर्यादिमंडलानीशतेज
साभांतिनस्वतः ४१ नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोयमग्निः तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभाति ४२
इतिश्रुतेस्ततोदेवानारायणपदास्पदात् ब्रह्माप्रजापतिर्विष्णुःप्रजापालनकृत्तथा ४३ आसीन्नारायणःपूर्वंनेशानोनविधिस्तथा इतिश्रुतौ ॥३

सर्वाभावेपिनाभावःपरेशस्यकदाचन जगत्कारणभूतस्यवेदवाक्यप्रमाणतः ४५ कर्मणाजायतेलोकः
विष्णुरुक्तईशानोनमहेश्वरः ४४ सर्वाभावेपिनाभावःपरेशस्यकदाचन ... ब्रह्माभावविदोनिदावेदउक्तात्ततोन
कर्मणैवहिलीयते इतिवाक्याज्जगद्बीजंकर्मैवास्त्वितिनोचितं ४६ ईशंविनाजडंकर्मफलदानेक्षमंनहि ब्रह्माभावविदोनिंदावेदउक्तात्ततोन
सः ४७ असन्नेवसभवतिअसद्ब्रह्मेतिवेदचेत् अस्तिब्रह्मेतिचेद्वेदसंतमेनंततोविदुः ४८ इतितस्माज्जगत्कर्तुर्महेशस्यपरात्मनः उपासनंतथा
तस्यचिह्नानांधारणंसुसत् ४९ इत्युक्तआचार्यवरोबभाषेसृष्टिस्थितिप्रलयंचैकएव ब्रह्मादिरूपेणकरोतिदेवोवेदार्थएषोभिमतोममापि १
मूलहीनंतुलिंगादेर्धारणंत्याज्यमेवहि सर्वदेवमयस्यास्यतापःश्रेयस्करोनहि २ नाभेरूर्ध्वंसोमपास्तुनाभ्यधस्तादसोमपाः देवास्तिष्ठंतिवि
प्रेंद्रवेदवेदांगपारगे ३ शिखाशिरोललाटंचकर्णौघ्राणंकपोलकं जिह्वायांचतथाचौष्ठौचिबुकंकंठमेवच ४ अंसद्वयंभुजद्वंद्वंबाहूहस्तयुगंतथा
वक्षोनाभिःकटिर्लिंगंवृषणंचोरुजानुकं ५ गुल्फौपादौसमाश्रित्यमदाद्याःसर्वदेवताः पितरोमुनयश्चैवस्नानाद्याहारमिश्रितैः ६ नित्यादिक
र्मभिस्तृप्ताभवामोनात्रसंशयः इत्येवंप्रोक्तवान्ब्रह्मारुणकेतुंप्रतीश्वरः ७ श्रुतिस्तथोचेसकलाहिदेवावसंतिदेहेखलुभूसुरस्य ततोस्यता
पेतुकृतेसुरास्तेपलायसंयांतिशरीरतोस्य ८ एनंशम्भवापलायंतेदेवाःशीर्षादिवासिनः पतितोयंभवत्येवशूद्रवच्चितिकाष्ठवत् ९ व्याधिवि
नाकर्मयोग्येविप्रांगेचिह्नमीक्ष्यच लोकेश्वरंभानुमीक्षेदथवाऽह्नदमाविशेत् १० इत्यादिवाक्यानिबहूनिसंतियोन्यामितीयंश्रुतिरेवसाक्षात्
उपासनंभेदयुतंविनिंद्यंब्रूतेतथान्याश्रुतिरेवमाह ११ लोकान्हिसर्वान्खलुकर्मणाचितान्नित्यत्वहीनानवलोक्यभूसुरः निर्वेदमायान्नकृते
नलभ्यतेमोक्षोतआत्मज्ञमनन्यमानसः १२ वेदार्थज्ञंब्रह्मबोधायगच्छेदित्येवंतस्माद्विमोक्षायबोध्यं ब्रह्मैवान्यच्चिह्नसंधारणंतुव्यर्थंमुक्तिःके
वलंज्ञानतोस्ति १३ तंदुर्दर्शंगूढमनुप्रविष्टंगुहाहितंगह्वरेष्टंपुराणं अध्यात्मयोगानुगतेनदेवंमत्वाधीरोहर्षशोकौजहाति १४ नायमात्माप्र
वचनेनलभ्योनमेधयानबहुनाश्रुतेन यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वां १५ अशरीरंशरीरेष्वनवस्थेष्ववस्थितं महांतं
विभुमात्मानंमत्वाधीरोनशोचति १६ यदाचर्मवदाकाशंवेष्टयिष्यंतिमानवाः तदादेवमविज्ञायदुःखस्यांतोभविष्यति १७ तस्मादुपाश्रित्य
परात्मविद्यांप्राप्तांगुरोरेवकृपाकटाक्षात् अभेदवादामृतपानतृप्तोभवेतिसंश्रुत्यगुरोर्मुखाब्जात् १८ विद्वेषनीरनामावैकश्चिल्लिंगभृद्यणीः
उवाचपरमप्रीतःस्वामिनंपरमंगुरुं १९ स्वामिंस्त्वमेवशरणंममसर्वदासिसंसारसर्पविषदष्टतनुंनयाशु मामद्ययुष्मदतिनिर्मलवेदवाक्यैर्नष्टा

भिदास्मिशिवएवजगत्पिताहं २० महादेवस्यपूजायाःफलंत्वमसिसत्तम अद्वैतामृतदातात्वंरुद्रादप्युत्तमोत्तमः २१ इत्येवंस्तुतिपात्रंतं
स्तुत्वानत्वामुहुर्मुहुः पीत्वापादोदकंसम्यकृतदुक्ताचारतत्परः २२ स्वकुलग्रामदेशस्थान्सर्वानद्वैतवर्तिनः कृत्वागुरुंनमस्कृत्यसुखमाससशं
करं २३ ततोन्येभूतिरुद्राक्षधारिणोलिंगचिन्हिताः प्रोचुर्विपक्षशूलाग्याद्दृष्ट्वास्वामिनमद्भुतं २४ मायावेषधरःकस्त्वंप्रामाणिकमतादमुं भ्र
ष्टंकृत्वाधुनागंतुंप्रवृत्तोस्यतिवंचकः २५ ब्राह्मण्यादुत्तमंप्रोक्तंवैष्णव्यंमुनिसत्तम वैष्णव्यादधिकंशैव्यमित्यजःप्राहनारदं २६ तस्मादारूढ
पतनंकिमर्थंभवताकृतं नमस्तइतिवेदे नस्तुतःसम्यङ्महेश्वरः २७ सर्वाननशिरोग्रीवःसर्वभूतगुहाशयः सर्वव्यापीसभगवांस्तस्मात्सर्वगतःशि
वः २८ इतिश्वेताश्वतर्ग्रायःसूक्तमुक्त्वोपसंहृतं ततस्तेनापिसर्वात्माशिवएवनिरूपितः २९ पत्न्यौतेह्रीश्चलक्ष्मीश्चपार्श्वेहोरात्रेकेमते इतिवा
क्यद्वयेनापिशिवएवनिरूपितः ३० गंगाह्रीःपार्वतीलक्ष्मीस्तत्पतिःशिवईरितः स्कांदेचयामलेचैवतद्वाक्यानिमुनेश्शृणु ३१ हिमाद्रादपत
न्मौलौगंगारुद्रस्यवेगतः तदीयभारसंभ्रांतोह्यवादीत्तांसदाशिवः ३२ क्वमतीभवनात्युच्चैर्वर्तःसंप्राप्यमामिह पुरुषंपुरुषश्रेष्ठंब्रह्मविष्ण्वादि
कारणं ३३ सातंनत्वामहादेवंतदाप्रभृतिर्भक्तितः ह्रियातंयाशुमिलिताह्रीरितिप्रोच्यतेबुधैः ३४ तस्यांकमधुनारूढाशक्तिर्माहेश्वरीपरा म
हालक्ष्मीरितिख्याताश्यामासर्वमनोहरा ३५ तस्यास्तेजःकणाज्जातालक्ष्मीवाक्कोटयःपुरा शिवतेजःसमुद्भूताहरिब्रह्मादिकोटयः ३६ क्रियं
तेपुनरेवैतेतत्रतत्रलयानुगाः इतितस्माच्छिवस्यैवतत्पतित्वंसुनिश्चितं ३७ शुद्धस्फटिकसंकाशेदक्षिणेपार्श्वकेमतं दिनत्वंरात्रितावामेभागेदेव्या
मतायनः ३८ श्यामवर्णापिचाथर्ववेदेसर्वात्मरूपतां नित्यानित्योहमित्यादिनाहस्वस्यसुरांच्छिवः ३९ जगत्कारणभूतत्वंतथाशिवरहस्यके
ध्येयत्वादिकमाख्यातंशिवस्यपरमात्मनः ४० ध्येयत्वेतवसाक्षिणोमुनिगणाज्ञानप्रदत्वेशुकोवेद्यत्वेनिगमाःस्वभक्तविमतक्रांतौकृतांतादयः
नित्यत्वेभगवन्पितामहशिरःस्रग्वृंदमाद्यंतयोःशून्यत्वेचवराहहंसवपुषौपद्माक्षपद्मासनौ ४१ एवंश्रुतिषुसर्वत्रजगत्कारणमीश्वरः रुद्रउक्तइ
तिज्ञेयंनचैवान्योविवेकिभिः ४२ तत्रलिंगादिरुद्राक्षविभूत्यादिकधारणात् पीठाद्यर्चनयाचैवरुद्राध्यायजपेनच ४३ सर्वपापविनिर्मु
क्तःप्राप्नोतिशिवरूपतां रुद्रकांडेयमर्थोहिसम्यक्तेननिरूपितः ४४ स्तेयंकृत्वागुरुदारांश्चगत्वासुरांपीत्वाब्रह्महत्यांचकृत्वा भस्मच्छन्नोभ
स्मशय्याशयानोरुद्राध्यायीमुच्यतेसर्वपापैः ४५ कोटिजन्मार्जितैःपुण्यैःशिवेभक्तिःप्रजायते बहुनात्रकिमुक्तेनयस्यभक्तिःशिवेदृढा ४६ ॥४

महापापौघपापौघकोटिग्रस्तोपिमुच्यते इत्युक्तंशिवगीतासुपुनस्तत्रचकीर्तितं ४७ धर्मार्थकाममोक्षाणांपारंयास्यथयेनवै मुनयस्तत्व
वक्ष्यामिव्रतंपाशुपताभिधं ४८ कृत्वातुविरजांदीक्षांभूतिरुद्राक्षधारणं जपस्तुवेदसाराख्यंशिवनामसहस्रकं ४९ संत्यज्यतेनमर्त्यत्वंशैं
वींतनुमवाप्स्यथ ततःप्रसन्नोभगवान्शंकरोलोकशंकरः ५० भवतांदृश्यतामेत्यकैवल्यंवःप्रदास्यति इतिकालाग्निरुद्रोपनिषद्यपिनिरूपितं
५१ अवश्यंब्राह्मणैर्धार्याविभूतिरितिविस्तृतं अतोविभूतिमाहात्म्यंकेनवक्तुंसुशक्यते ५२ शीर्षेकंठेकर्णयोश्चबाह्वोरुद्राक्षधारणात् नील
कंठोभवेन्मर्त्योब्राह्मणश्चेत्परात्परः ५३ इत्यगस्त्यस्यसंप्रोक्तंसंहितायांयतीश्वर अतप्ततनुर्नैवतद्धामैतीतिमानतः ५४ लिंगांकनमवश्यं
वैकर्तव्यंमोक्षकांक्षिभिः इत्युक्तआहनैवात्रवह्नितापोविवक्षितः ५५ किंतुकृच्छ्रादिकंतापःकृच्छ्रचांद्रायणैःकृशः इत्युक्तेनारदीयेनविरोधा
द्दूहतात्तथा ५६ लिंगांकिततनुंदृष्ट्वाशंखचक्रांकितंतथा स्नानमेवतदाकार्यमथवासूर्यमीक्षयेत् ५७ पतितंतप्तलिंगाढ्यंचक्रांकितमथापि
वा वाङ्मात्रेणापिनार्चेतपाखंडाचारतत्परं ५८ शूद्रवत्सपरित्याज्योजीवच्छवसमाकृतिः तस्मैदत्तंचहव्यंचकव्यंचापिवृथाभवेत् ५९ त
द्दर्शनात्परित्याज्यमन्नंमंत्राभिमंत्रितं अपिशूद्रेक्षणाद्भुंजेल्लिंगचक्रांकितंविना ६० अपिचेन्निगमाचाररतोवेदांगतत्परः लिंगचक्रांकमात्रेण
ससद्यःपतितोभवेत् ६१ इत्युक्तंहिबृहन्नारदीयेकिंचप्रकीर्तितं मार्कंडेयपुराणेवैश्रोतव्यंतत्समाहितैः ६२ ब्राह्मणानांचगायत्र्याःसंवादो
भून्महान्पुरा अतस्त्वयातिसंशप्ताःपाषंडाश्चैवदेवताः ६३ वेदोक्तकर्महीनाश्चतांत्रिकाचारतत्पराः यूयंकलौभवंत्वेवमितितानाहसारुषा
६४ अतःकलियुगेप्राप्तेभविष्यंतिद्विजाधमाः वेदार्थहीनाःपाषंडालिंगचक्रादिचिह्निताः ६५ ज्ञानकर्मपथाद्भ्रष्टाःकामक्रोधादिपीडिताः दु
रात्मानःसत्यधर्मवर्जिताःशापभागिनः ६६ कलौत्रिंशत्सहस्राब्देपुनर्नष्टाभवंतिते निःशेषतांगताःपश्चादद्वैतार्थानुचिंतकाः ६७ सत्यधर्म
पराभूयोभविष्यंतिनसंशयः इतितस्मान्नकर्तव्यंलिंगादेर्धारणंनरैः ६८ यतोवाचोनिवर्तंतेअप्राप्यमनसासह इतिसत्यादिलक्ष्यस्योपास्त्यगो
चरतामता ६९ ततोब्रह्मावतारस्यशिवस्योपासनंश्रुतौ प्रोक्तंतस्यनिरासोनोकर्तुंकेनापिशक्यते ७० भूतिरुद्राक्षयोश्चापिकर्तव्यंधारणं
नरैः किंतुलिंगादिचिह्नानांधारणेमानशून्यता ७१ ततःप्रोवाचभक्ताग्रगण्यस्तंपरमंगुरुं असमर्थाःपुरादेवास्त्रिपुरासुरनाशने ७२ इषुंतेक
ल्पयामासुस्त्रिभिर्विष्ण्वग्निचंद्रकैः आदावग्निःशशीमध्येविष्णुरंतेप्रतिष्ठितः ७३ ततोविचारयामासुःकइषुंधारयिष्यति रुद्रोधारयिताकेचिद्वो

चुस्तत्रदिवौकसः ७४ यतोरुद्रस्यवह्न्यादितेजःसकलमेवहि तस्यनेत्रेग्निचंद्रौस्तोविष्णुस्तद्देहजःस्मृतः ७५ सात्विकांशात्समुद्भूतस्तस्माद्भा
रोनतस्यवै इतिदेवाविचार्याशुप्रार्थयामासुरीश्वरं ७६ सोब्रवीद्वरमिच्छामिदेवाःकमितिचाब्रुवन् सोवाचाहंपशूनांवैप्रधानःस्यांपतिःकिल
७७ ऊचुर्देवावयंसर्वेपशवःपद्मजादयः त्वमेकःपतिरस्माकमित्युक्तातेसदाशिवं ७८ लिंगशूलादिचिह्नानिधारयामासुरीश्वरः ततोज्यांवा
सुकिंकृत्वामेरुंकृत्वाधनुर्धरां ७९ रथंचंद्ररवीचक्रेवेदानश्वान्विधायच ब्रह्माणंसारथिंकृत्वास्तूयमानःशिवोमरैः ८० बाणेनतेनतान्दै
त्यान्ददाहपरमेश्वरः तस्माल्लिंगादिचिह्नानांधारणंयुक्तमेवहि ८१ दर्शनाच्चतथालोकेसेव्यसेवकयोर्मुने अस्माभिःसेवकैश्चिह्नंसेव्यस्यपरमे
शितुः ८२ अवश्यमेवसंधार्यमित्युक्तःप्राहतंगुरुः मानहीनमिदंवाक्यंयतोदेवादिषुक्वचित् ८३ लिंगादेर्धारणंनैवप्रसिद्धंकिंतुतेषुवै भू
त्यादिधारणंकिंचकैवल्योपनिषद्वचः ८४ श्रद्धाभक्तिध्यानयोगादवैहीत्येवंब्रूतेनैवशूलादिचिह्नं ज्ञानस्यांगंतेननास्त्येवतस्यज्ञानेप्सूनांधा
रणंभोःकदापि ८५ नान्यःपंथाविद्यतेकोपिमुक्त्याइत्याद्यैर्वैवेदवाक्यैर्मुमुक्षोः नास्त्येवार्थोदेहसंतापनेननिंदातस्यश्रूयमाणाहिशास्त्रे ८६
लोकेराज्ञश्छत्रचिह्नंनरस्यदृष्टंशूलादेर्हिसंधारणंचेत् युष्माकंकोप्याग्रहस्तर्हिलौहंस्वीकर्तव्यंतेनतद्वारएव ८७ किंचास्यभक्तेनभुजादिभू
षणंसर्पादिकंधार्यमनन्यचेतसा परंतुनैतत्खलुपूज्यतेनरेसर्पभ्रमेणापिभयेनकंपिनि ८८ तस्मादिमांपामरबुद्धिमाशुविहायचिह्नंचसमर्प्य
कर्म वेदोक्तमीशेपरजीवयोश्चैक्यस्यानुसंधानमनन्यचित्तः ८९ कुर्वन्निबोधेनपरस्यतस्याज्ञानस्यनाशेनभविष्यसित्वं मुक्तोनचान्येनय
थाकदापीत्युक्तःसआचार्यवरंप्रणम्य ९० चिह्नानिसंत्यज्यसपुत्रबांधवःशिष्योबभूवाद्वयवादतत्परः तथैवचान्येपिगुरोःप्रसादतोबभूवुरद्वै
तपराःसुखार्थिनः ९१ अनंतशयनंनामप्रदेशंप्राप्तवांस्ततः देवस्यदर्शनंकृत्वामासमाससतत्रये ९२ भक्ताभागवताश्चैववैष्णवाःपांचरात्रि
णः वैखानसाःकर्महीनाःषड्विधावैष्णवामताः ९३ तानाहशंकराचार्यःकिंवोलक्षणमुच्यतां भक्ताःप्रथममाहुस्तंसर्वज्ञोजगदीश्वरः ९४
वासुदेवःसरामाद्यानवतारान्बिभर्त्यजः तदुपास्यावयंमूढाःप्राप्स्यामस्तत्सलोकतां ९५ इतिवुध्यावयंसर्वेकौंडिन्यमुनिनाप्रभोः प्रसादित
स्य सेवायामनंतस्यसदारताः ९६ आचारोद्विविधोस्माकंक्रियाज्ञानविभेदतः कर्मठाब्रह्मगुप्ताद्याविष्णुशर्मादयोवयं ९७ ज्ञानिनोत्रैवतिष्ठाम
इत्युक्तोज्ञानलक्षणं पप्रच्छविष्णुशर्मायंप्राहतेषुविचक्षणः ९८ अनंतभगवत्पादकमलंशरणंपरं इतितूष्णींस्थितिर्ज्ञानंयतोनैवतदाज्ञया ९९

विनातृणादिसंचारोभवतीत्युक्तआहतं जन्मनाजायतेशूद्रःकर्मणाजायतेद्विजः १०० नित्यंसंध्यामुपासीतप्रत्यवाय्यन्यथाभवेत् प्रातरा
दिषुकालेषुह्यग्निहोत्रादिकंबुधः १०१ कुर्वन्नेवैब्राह्मणोविद्वान्सकलंभद्रमश्नुते इत्यादिश्रुतिवाक्यानिनित्यंकर्मस्तुवंतिहि २ अतःसर्वैःश्रु
तिप्रोक्तंकर्तव्यंकर्मसर्वदा वैधस्यतस्यसंत्यागाद्दुःखस्याग्निमनुर्जगौ ३ जीवन्कर्मपरित्यागंयःकरोतिनराधमः समूढोनरकंयातियावदाभू
तसंप्लवं ४ यतीनामपिकर्मास्तिस्नानदेवार्चनादिकं ब्राह्मण्यहानिरेवातोभ्रष्टानांस्वीयकर्मतः ५ अब्दैःकतिपयैरेवंस्थितिरित्युक्तआहतं वि
ष्णुशर्माप्रभोसम्मःपुरुषोमयासमः ६ किंचित्कर्मपरस्तस्यपिताभूदितिवैश्रुतं बाल्येमयेतिसंप्रोक्तःप्राहदूरंव्रजाधुना ७ एवमुक्तःसतुक्लेशा
पूरितःसगणस्तदा प्रणम्यदंडवद्भूमौक्षमस्वेत्याहतंगुरुं ८ दृष्ट्वातंशरणंप्राप्तंप्राहशिष्यान्दयानिधिः प्रायश्चित्तविधानार्थंतेपिकुर्युस्तथैवहि
९ प्रायश्चित्तेनसंशुद्धाविष्णुशर्मादयोपिते कर्मनिष्ठास्तमाचार्यंप्रोचुस्त्वत्कृपयाप्रभो १० ब्राह्मण्यसिद्धिरस्माकंजातामुक्तिःकथंभवेत् इ
त्युक्तआहपरमोगुरुःकरुणयान्वितः ११ ब्राह्मणाचारदेवाःस्युरीशोविष्णुर्दिनेश्वरः उमामणपतिश्चैवतेपांपूजापरानराः १२ ब्रह्मार्पण
धियाकामांस्त्यक्त्वाकर्मचरंतिवै एवंकृतेनित्यकर्मण्यमलेमनसिप्रभो १३ जीवस्यचभिदाभावोभवत्येवनसंशयः मूलाज्ञानस्यतत्तस्मान्निव
त्तिर्ज्ञानकारणं १४ तेनभग्नेलिंगदेहेमुक्तिर्भवतिनान्यथा इत्यादिष्टोविष्णुशर्मादंडवत्प्रणिपत्यतं १५ सगणःकारयामासनित्यंकर्मगुरुंस्म
रन् स्मार्ताचारपरिश्रांतःपंचपूजाविशारदः १६ त्रिपुंड्रंभस्मनाकुर्वन्चंदनेनचसुव्रतः स्नात्वामृत्तिकयाचोर्ध्वपुंड्रंकुर्वन्प्रयत्नतः १७ एवं
तेषुनिरस्तेषुब्रह्मगुप्तादयस्ततः समागत्यप्रणम्योचुःस्वामिन्स्मार्तेनवर्त्मना १८ कुर्वंतोवयमाचार्यकर्मब्रह्मार्पणंधिया कृत्वावयंवसामोत्रत्यु
क्तःसप्राहतान्गुरुः १९ इतःपरंपंचपूजातत्पराःशुद्धमानसाः भेदवासनयामुक्ताभवंतःस्वात्मबोधतः २० लिंगदेहेननिर्मुक्ताःसच्चिदानंदम
द्वयं प्राप्नुवंतीतिसंप्रोक्तानत्वातंस्वस्थमानसाः २१ बभूवुरथतंप्राहसमागत्यपरंगुरुं कश्चिद्भागवतोविप्रःस्वामिञ्छृणुमतंमम २२ सर्ववेदे
षुयत्पुण्यंसर्वतीर्थेषुयत्फलं तत्फलंनरआप्नोतिस्तुत्वादेवंजनार्दनं २३ इत्यादिवचनाद्विष्णोःकीर्तनेहर्निशंरतः शंखचक्रादिसंचिह्नैःचि
ह्नितस्तुलसीगलः २४ ऊर्ध्वपुंड्रीवसाम्यत्रमुक्तिर्ममकरेस्थिता इत्युक्तआहमाचक्राद्यंकनस्यविनंदनात् २५ किंचमूर्तिर्भगवतश्चतुर्धा
वर्ततेशृणु परैकाकाशरूपास्याद्वचसामप्यगोचरा २६ यतोवाचोनिवर्ततेअप्राप्यमनसासह इत्यादिश्रुतिवाक्येभ्योद्वितीयाव्यूहसंज्ञिका

२७ सर्वलोकात्मिकात्तस्यविष्णोश्चिह्नस्यधारणं समर्थश्चेत्कुरुष्वाशुतप्तेनैकेनवादृढं २८ शीर्षादिपादपर्यंतंदेहमंकयनाशतः तस्यसत्स्य
तितेवैष्णवत्वंयद्दुर्लभंनृणां २९ विभूतिमूर्तयस्तस्यमंत्स्याद्याःपरिकीर्तिताः तप्तलोहमयीभिर्वैताभिरंकयदेहकं ३० किमर्थंजडशंखादेः
कर्तव्यंचिह्नधारणं विष्णुवल्लौहचक्रादेर्धारणंकुरुवासदा ३१ अर्चामूर्तेःशिलामय्याःस्वरूपेणाथवांकय शरीरंमूढतस्मात्त्वंकर्तव्यंचिह्नधार
णं ३२ विष्णोरितिविहायाशुपाखंडमतिमाश्रय स्वकर्माणिफलंतेषांसमर्पयपरेश्वरे ३३ तेनशुद्धस्ततोद्वैतवादिनंगुरुमाश्रय तस्योपदेशतो
नष्टकर्मबंधोविमोक्ष्यसि ३४ नान्यःपंथाविद्यतेमुक्तयेहीत्युक्तंश्रुत्यातेनबोधेतियत्नः कार्योमोक्षाकांक्षिभिःशुद्धचित्तैरित्युक्तोसौविप्रदेवो
यतीशं ३५ सम्यङ्नत्वाप्राहपुण्यैरनेकैःसत्वत्पादांभोजयोर्दर्शनंमे जातंतस्मान्मांकृतार्थंकुरुष्वेत्येवंतेनप्रार्थितोऽसौबभाषे ३६ भोविप्रदे
वाशुविहायचिह्नकर्माणिकुर्वन्खलुकामहीनः ब्रह्माहमस्मीतिविभावयत्वंमुक्तोभविष्यस्यवबोधनोद्धा ३७ पुनरन्योगुरुंप्राहशार्ङ्गपाणिरि
तिश्रुतः नमोनारायणायेतिमंत्रमुच्चारयन्पुनः ३८ तस्यमुद्रादिकैःशंखचक्रकाद्यैःसुचिह्नितः संसारबंधनान्मुक्तोवैकुंठंवैष्णवोत्तमः ३९
गमिष्यामियतस्तत्रतथाभूतावसंतितत् चिह्नस्यधारणेमानंपुराणंशृणुभोमुने ४० येवाहुमूलपरिचिह्नितशंखचक्रायेकंठलग्नतुलसीनलिनाक्ष
मालाः येवाललाटफलकेलसदूर्ध्वपुंड्रास्तेवैष्णवाभुवनमाशुपवित्रयंति ४१ इत्युक्तआचार्यउवाचमैवंश्रुतेरभावात्कथनीयमत्र. अत्रनदे
होनसमश्नुतेयंविमोक्षमेषाश्रुतिरस्तिमानं ४२ नैवंयतःपातकध्वंसनार्थंमहत्तपःकृच्छ्रमुखंस्वकर्म यद्वाथवाध्यानमधीश्वरस्यप्रोक्तंश्रुतौचि
ह्नमतोनकार्यं ४३ ब्रह्मज्ञोयःसोश्नुतेमोक्षमित्यादेर्वाक्यान्मोक्षस्यहेतुर्विबोधः क्षीणेपुण्येमर्त्यलोकेविशंतीत्यादेर्वाक्यादन्यतःसंसृतिःस्या
त् ४४ पुराणेषुब्रहन्नारदीयादिषुनिषेधनं दृश्यतेतप्तशंखादेर्धारणस्यप्रयत्नतः ४५ चिह्नानांधारणेनाहंभविष्यामिहरेःसमः इत्येतत्तुम
नोराज्यमात्रंशूद्रोयथानहि ४६ शिखायज्ञोपवीतादिधारणादेवसद्द्विजः ब्रह्मात्मबोधतस्तस्मात्तत्प्राप्तिःश्रुतिमानतः ४७ तस्माद्ब्रह्माहमि
त्येवंचिंतनंसर्वदाकुरु तेननष्टेभिदागंधेजीवएवपरःशिवः ४८ शिवःशिवोहमस्मीतिवादिनंयंचकंचन आत्मनासहतादात्म्यभागिनंकुरुते
भृशं ४९ इत्युक्तंशिवगीतास्वित्युक्तोवैष्णवआहतं नमस्कृत्यकृतार्थोहंस्वामिंस्त्वदुपदेशतः ५० अधुनाद्वैतनिष्ठोहंभविष्यामीतिसोब्रवीत्
ननामदंडवद्भूमौतंप्राहगुरुसत्तमः ५१ मुक्तोभवेतिसोप्युक्तःस्मार्ताचारेषुतत्परः पंचपूजास्ततोनित्यंस्वदेशस्थान्जनानपि ५२ तथाकरोत्त

तःपांचरात्रागमसुदीक्षितः आहभगवत्प्रतिष्ठादिमूलभूतोस्मदागमः ५३ तस्मादयंऽतेयमाचारोविप्रैःकार्योखिलैरपि इत्युक्तःश्रीगुरुःप्राहयदि
वेदाविरुद्धता ५४ अस्यागमेतदातस्याचारोग्राह्योनचान्यथा अन्यमंत्राग्रहेतत्रवैष्णवत्वंप्रकीर्तितं ५५ गायत्र्याउपदेशस्तुब्राह्मण्याया
स्तिसर्वथा एवंचवैष्णवत्वस्यभंगएवसमागतः ५६ तदभावेनविप्रत्वंविष्णुमंत्रशतैरपि वैष्णवत्वंकुतोस्यस्याःसत्वेननुहरेरियं ५७ शक्तिःशं
खादिवत्त्वस्यश्रवणादितिचेत्तदा रुद्रस्यशक्तिरेवास्तुचंद्रशेखरतादिकं ५८ श्रूयतेऽस्यायतःपंचमुखत्वाद्यंचदेहगं अस्तुवासर्वसंपूज्याशुभ
दापरमेश्वरी ५९ ननुसूर्येस्थितस्यास्यांप्राधान्यंतेजसोयतः निरूप्यतेततोविष्णोःशक्तिरेवयतोहरिः ६० भानुमंडलवर्तीतिवर्ण्यतेतत्रत
त्रह पंचास्यतापिनोतस्मिन्ब्रह्मरूपेविरुध्यते ६१ इतिचेन्नयतस्तस्याःसमुत्पत्तिर्निरूपिता व्याहृतिभ्यःकिलासांतुप्रणवात्सामहेश्वरात् ६२
अस्यप्रोक्तातएतस्यशक्तिर्नान्यस्यकस्यचित् नारायणःश्रुतौप्रोक्तःस्वरकर्तामहेश्वरः ६३ योवेदादौस्वरःप्रोक्तोवेदांतेचप्रतिष्ठितः तस्यप्रकृ
तिलीनस्ययःपरःसमहेश्वरः ६४ अष्टमूर्तिमहेशस्यमूर्तिरादित्यईरितः तस्मात्तस्यैवशक्तिःसापंचवक्त्रादिसंयुता ६५ वैष्णवेनत्वयैवंनोशि
वमूर्तिर्विभावसुः सेव्योतोब्राह्मणत्वस्यहानिरेवतवागता ६६ तदभावोस्तुकाहानिर्वैष्णवोस्मीतिचेत्तदा भ्रष्टोसिभाषणायोग्योजीवन्नेवम्
तोसिभो ६७ ततस्तुमाधवःकश्चिद्वैष्णवःप्राहतंगुरुं तप्तशंखादिकंधार्यलोकंप्राप्नोतिवैष्णवं ६८ पांचरात्रागमेप्रोक्तमित्येवंतस्यमानता
त्वदुक्त्यानाशमायातीत्युक्तःप्राहपरोगुरुः ६९ आगमाद्युक्तआचारोग्राह्योवेदानुकूलतः विरोधेतस्यनग्राह्यउक्तंचेदंस्फुटंकिल ७० अ
तींद्रियार्थविज्ञानेप्रमाणंश्रुतिरेवहि श्रुत्याचारस्मृतेऽग्राह्यमागमानांप्रसज्यते ७१ अतोवेदविरुद्धंयत्रनमानंकदाचन अतोब्राह्मण्यसिध्यर्थं
स्वकर्मनिरतोभव ७२ तेनसम्यग्विशुद्धःसन्तत्त्वज्ञानमवाप्स्यसि मुक्तिस्तस्मान्नचान्यस्मादत्रार्थेत्वंश्रुतिंशृणु ७३ सर्वभूतेषुचात्मानंसर्व
भूतानिचात्मनि संपश्यन्ब्रह्मपरमंयातिनान्येनहेतुना ७४ तस्मात्पाखंडचिह्नानिविहायाद्वैतनिष्ठता संपाद्यामोक्षसिध्यर्थमित्युक्तःसचमाध
वः ७५ स्वकुलग्रामदेशस्थैःसहाद्वैतपरःसदा संध्याग्निहोत्रमुख्यानिकुर्वन्कर्माणिशुद्धतां ७६ प्रापश्रीशंकराचार्यप्रसादात्ततआगतः
वैखानसमताचारोव्यासदासइतिश्रुतः ७७ उवाचभोभवतेब्रह्मापिमत्पक्षनिवारणे नसमर्थोयतोदेवःपरोनारायणोमम ७८ तद्विष्णोःपरमं
धामेत्यादिवेदेनबोधिता नारायणपदस्यैवश्रेष्ठतामुनिसत्तम ७९ तथानारायणाद्ब्रह्माजायतेरुद्रएवच इत्यादिश्रुतिभिस्तस्यकारणत्वमुदीरि

तं ८० तस्मात्सेव्यः सदैवायमंतर्यामीपरेश्वरः लक्षणंतस्य भक्तस्यप्रोक्तंवैखानसेमते ८१ शंखचक्रपवित्रांगऊर्ध्वपुंड्रइतिप्रभो इत्युक्तःप्रा
हविष्णुस्तुपालकोवाथब्रह्मवा ८२ अस्तुतत्रविवादःकःपदत्वाद्वृत्तिवर्जितं लभ्यतेतत्त्वबोधेननैवत्वन्येनहेतुना ८३ यदित्वंविष्णुभक्तोसि
तदातत्प्रीतयेकुरु कर्मनैवतुतत्साम्यंचक्रादीनांविधारणं ८४ प्रमाणाभावतोवेदविरुद्धेनैवमानता आगमेविप्रतानाशोनोचेत्स्यादेवसर्वथा
८५ इत्युक्तआहतंव्यासदासःपूर्वयुगेमुने दत्तात्रेयःपरोयोगीपंचमुद्राविमुद्रितः ८६ आसीत्तस्मान्महद्भिःस्वीकृतोमार्गोमुमुक्षुभिः ग्राह्यः
किंचपुराणेषुचक्रादेर्धारणंश्रुतं ८७ अन्यथावैष्णवत्वस्यहानिरेवसमापतेत् तस्माद्भगवतश्चिह्नंधार्यमित्युदितोगुरुः ८८ उवाचभोविवेक
स्तेकिमुवाच्योऽतिबालकाः अपिजानंतिमुद्राभिरंकनेनप्रयोजनं ८९ दत्तात्रेयस्यनैवास्तियोगिनस्तत्त्वदर्शिनः मुद्रयांकितदेहोदत्तात्रेयोस्ती
तिकेनचित् ९० श्रुतंनैवततोमूढबुद्धिंत्यक्त्वासुखीभव पुराणेषुश्रुतंचिह्नधारणंत्वितिनोचितं ९१ प्रह्लादस्यविभीषणस्यगजराजस्यध्रुवस्यानि
लेंद्रोपध्याव्रजवासिनांचखलुकश्चक्रांकनंरेऽकरोत् तस्मान्मूढमतिंविहायसकलंपाखंडचिह्नंत्यजब्रह्मास्मीतिविभावनेनसुसुखंगच्छाशुमोक्षंप
दं ९२ अवश्यंचेत्त्वयाकार्यंचिह्नानांधारणंतदा कपोलयोर्गलेचैवशेषेणगरुडेनच ९३ अंकनंकुरुकर्मेंद्रियप्रधानेभुजद्वये कपोलद्वितयेचैव
ज्ञानेंद्रियसमीपगे ९४ चिह्नितेपशुवद्धर्तुंयोग्योभवविबंधनः तथाचैवंविधस्यात्रवैष्णवस्यस्वकर्मणा ९५ हीनस्यशुभवस्त्राणांधारणंत्ववशिष्यते
नतुकर्माग्निहोत्रादीत्युक्तःसंप्राहसोगुरुं ९६ स्वामिस्तवप्रसादेनसविवेकोस्मिनांकितः किंतुमेगुरुरेवासितथेतिभगवंश्श्रुतं ९७ ततःशुद्धाद्वयस्थं
मांकुरुत्वंयतिशेखर इतिविज्ञाप्यतंभूमौदंडवत्प्रणिपत्यच ९८ कृतांजलिंसमासीनमीषन्नम्रंविलोक्यसः करुणानिधिराचार्यःप्रहसन्निदमब्रवी
त् ९९ ब्रह्मैवाहंनसंसारीमुक्तोहमितिभावय तस्मिन्विधावशक्तस्त्वंवाक्यमेतदुदीरय २०० इत्यभ्यासपरित्यक्तद्वंद्वैषणषडूर्मिकः विदित्वापर
मात्मानंमुक्तोभवसिनान्यथा २०१ इतिसंबोधितःशिष्यःकृतार्थोहमितीरयन् ब्रह्माहमितिसंजल्पन्ययौस्वकुलसंयुतः २०२ ततआचार्य
मगत्यनामतीर्थोहिवैष्णवः कर्महीनइदंप्राहभोःस्वामिन्शृणुमेमतं ३ शेषेणाप्यप्रकंप्यंवैसर्वंविष्णुमयंजगत् इत्यादेशाद्यतोमोक्षंगुरुरेवप्रय
च्छति ४ तदानींभगवंतंसगुरुःप्रार्थयतेप्रभो मच्छिष्यंनिजपादारविंदंप्रापयसोप्यथ ५ एवमुक्तःकरोत्येवंतथैवजगदीश्वरः तस्मान्ममपुनर्जन्म
हेत्वभावोयतीश्वर ६ जीवन्मुक्तोहमेववैभवंतोपिमुमुक्षवः कर्महीनाःसुरेशंतंविष्णुंसर्वमयंप्रभुं ७ समालंब्यांजसामुक्ताभविष्यंतीतिनिश्च

यं: एवमुक्तोगुरुःप्राहसत्यमुक्तंत्वयामतं ८ कर्मभ्रष्टोभवान्जीवन्मुक्तएवनसंशयः नित्यानित्यविहीनःसन्प्रवृत्तोसिपिशाचवत् ९ वेदोक्त
सर्वकर्माणिकृत्वातेषांफलार्पणं कर्तव्यंब्रह्मणीत्येवंज्ञानमार्गोऽयमीरितः १० फलार्थंकर्मकरणंकर्ममार्गोस्तितद्द्विधा भ्रष्टस्त्वंदंडनीयोसिवि
ष्णुभक्तोपिनोभवान् ११ नचलतिनिजवर्णधर्मतोयःसममतिरात्मसुहृद्विपक्षपक्षे नजहतिनचहंतिकंचिदुच्चैःसितमनसंतमवैहिविष्णुभक्तं
१२ श्रुतिस्मृतीममैवाज्ञेतेनुल्लंघ्यप्रवर्तते आज्ञाभंगीममद्रोहीमद्भक्तोपिनवैष्णवः १३ आज्ञाछेदीममद्रोहीसयातिनरकंसदा इत्यादिवच
नेभ्योंतःकर्मत्यागोनशस्यते १४ ब्राह्मणःकर्मकुर्वीतेत्यादिवाक्यान्नकर्मणः त्यागोदेवांतरत्यागोब्राह्मणानांनचास्तिहि १५ अग्निर्देवोद्वि
जातीनामितिवाक्यात्ततस्तुभीः ब्रह्मचार्यादिकैःसर्वैःकर्मत्यक्तुंनशक्यते १६ संध्यात्रयातिक्रमदोषशांतिःकृच्छ्रत्रयेणास्तिततोद्विजत्वं तत्त्या
गतोनैवनकर्मणेतिश्रुतिस्तुसंन्यासममुष्यवक्ति १७ इत्युक्तोसौनामतीर्थःप्रणामैःप्रीतंकृत्वाकर्मशीलोबभूव एवंसर्वेखंडनंस्वस्यपक्षस्यश्रुत्वा
तेनिष्कृतिंसंविधाय १८ शुद्धाद्वैतालंबिनःसत्रिपुंड्रावेदप्रोक्ताचारनिष्ठाबभूवुः तस्मात्सुब्रह्मण्यसंज्ञंकुमारस्थानंप्रापश्रीगुरुःपंचघस्रैः १९
स्नात्वाकुमारधारायांनद्यांशिष्यसमन्वितः भक्त्यासंपूजयामासषण्मुखंशेषरूपिणं २० काषायवस्त्रदंडाढ्यःकमंडलुलसत्करः भूतिभूषित
सर्वांगोबभौरुद्रइवस्वयं २१ नानादेशस्थविप्रौघाःसुब्रह्मण्यंसमागताः दृष्ट्वातंशंकराचार्यमिदमूचुःसुविस्मिताः २२ द्विजावयंब्रह्मकुलो
द्भवाःप्रभोमनुप्रभृत्युक्तसुकर्मतत्पराः हिरण्यगर्भार्चनलब्धमानसप्रशुद्धयःस्थैर्यमुपागतास्तथा २३ हिरण्यगर्भःसमवर्ततांग्रेभूतस्यजातःपति
रेकआसीत् सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम २४ इत्यादिमंत्रात्सकलस्यकर्ताब्रह्मातथापालकएषएव लयस्यकर्तानिखि
लोत्तमश्चसर्वाधिकानंदकरूपउक्तः २५ सएवसृष्ट्वानिखिलंजगत्प्रभुःप्रविश्यसर्वात्मतयास्थितोवै तदैक्षतेत्यादिवचोभिरीरितःकरोतिविष्णुं
चशिवंभुजाभ्यां २६ तदीयभक्ताःकिलज्ञाननिष्ठाःकर्मस्थिताःकूर्चकमंडलुश्रिताः वयंयतिवीक्ष्यभवंतमद्यजाताःकृतार्थाःशृणुभोतथा
पि २७ वचोस्मदीयंभगवन्प्रयोजनंकिमस्यभेदेनयतश्चतुर्मुखात् जातिगतोजीवगणःस्वकर्मणापुनःपुनःसंसृतिमेतिदुःखदां २८ ततोलयेब्र
ह्मणएवकुक्षौलयंप्रयात्येपलयस्यकाले मोक्ष्योन्यथाब्रह्मविदेषयातिपरंपदंब्रह्मणएवलोकं २९ तस्माद्भवान्दंडकमंडलुश्रितस्तल्लोकयो
ग्योयतिशेखरोगुरुः इत्युक्तआचार्यउवाचशंकरोब्रह्मादिभूतानियतोभवंतितं ३० ज्ञात्वाविमुक्तिर्भवतीतिहिश्रुतौप्रोक्तंततस्तस्यविबोधका

रणं वेदांतवाक्यश्रवणादिकंसदाकार्यंविमोक्षोहिलयोनकीर्तितः ३१ सुषुप्तितुल्योनचलभ्यतेपरःकार्यस्यहिब्रह्मणएवसेवनात् श्रुत्वैवमा 
चार्यमुखाद्विहायतेचिह्नानिशुद्धात्मविबोधतत्पराः ३२ शिष्याबभूवुस्ततआगतास्तंप्रोचुर्गुरुंवह्निमतानुवर्तिनः स्वामिन्वयंवह्निपरायतोवैमं
 त्रेणदेवोयमुदीरितोस्ति ३३ अग्निरग्रेप्रथमोदेवतानांसंपातानामुत्तमोविष्णुरासीत् यजमानायपरिगृह्यदेवान्देहक्षयेतंहविरागच्छतंनः ३४ 
ततश्चविस्फुलिंगात्ममणेःशकलधारणं कृत्वामुक्ताभविष्यंतिब्राह्मणावह्न्युपासकाः ३५ अग्निर्देवोद्विजातीनामितिवाक्याद्यतीश्वर अग्नि
र्देवोनचान्योस्तिकिंचपापहरःश्रुतः ३६ उद्दीप्यस्वजातवेदोऽपघ्नन्निर्ऋतिमम पशूंश्चमह्यमावहजीवनंचदिशोदिश ३७ अतःसर्वैर्द्विजैर
ग्निरेवसेव्यःप्रयत्नतः कृतकृत्याभवंत्वस्माद्भवंतोप्यस्यसेवया ३८ इत्युक्तआहदेवानामवमोवह्निरीरितः परमोविष्णुराख्यातोदेवास्तन्मध्य
गाःस्मृताः ३९ तथाचाग्निःसुराणांवैभागदःकर्मदेवता अग्निकारणवाक्यानिभूतात्माग्निपराणितु ४० तस्माद्यूयंवह्न्यधीनंहिकर्मकुर्वंतो
स्मिन्विष्णुमाराधयंतः शुद्धाद्वैतेतत्परायास्यथाद्धामुक्तिःप्रोक्ताएवमाचार्यवर्यैः ४१ नत्वासर्वेस्वीकृताद्वैतनिष्ठाःस्वस्थाजातास्तेसुहोत्राद
योन्ये तत्राथागत्याह्वराचार्यवर्यंभक्ताभानोर्मंडितारक्तपुष्पैः ४२ दिवाकरादयःपूर्णमंडलाकारमाश्रिताः तिलकंशृणुभोःस्वामिन्नस्मदीयं
मतंध्रुवं ४३ सूर्यःप्रोक्तःसर्वलोकस्यचक्षुःश्रुत्यातस्मात्सोऽस्तिब्रह्मादिरूपः सृष्टिस्थित्यादेःसहेतुश्चतस्मादादित्योसौब्रह्मचेत्याहवेदः ४४
श्रीघृणिःसूर्यआदित्यइतिवेदेमनुःश्रुतः स्युरस्योपासकारक्तचंदनाश्रितमस्तकाः ४५ तन्मालालंकृतग्रीवाःषड्विधाःसूर्यसेवकाः उद्यंतंमंड
लंकेचित्कारणंब्रह्मरूपिणं ४६ भजंत्याकाशमध्यस्थमीशरूपेणकेचन जगल्लयस्यहेतुंतंतेनैवोपक्रमोपिच ४७ उपसंहारकेणेतिविनि
श्चित्यभजंतितं केचित्केचित्तुविष्ण्वात्मकत्वेनास्तमयेप्रभोः ४८ बिंबपालकमेतस्मादेवसृष्ट्यादिकारणं त्रिमूर्त्यात्मतयाकालत्रयेबिंबस्यसेव
काः ४९ केचिदन्येतुतन्मंडलेक्षणव्रतधारिणः हिरण्यश्मश्रुकेशादियुक्तंतन्मंडलेस्थितं ५० भजंतिकिंचतत्रैकदेशिनस्तुतदीक्षणं कृत्वा
संपूज्यपाद्याद्यैरन्नमश्नंतिनान्यथा ५१ केचित्तुतप्तलोहेनफालेभुजद्वयेतथा वक्षस्थलेचचिह्नानिमंडलस्यविधायते ५२ अनुक्षणंमन
स्येवंध्यायंतःसंत्युपासकाः सर्वैरेतैरुपास्योयमुक्तमंत्रोयतीश्वर ५३ श्रुतयःसंतितन्मंडलस्तुतिप्रतिपादिकाः बह्व्यःपुरुषसूक्तेपिभानुरेवनिरू 
पितः ५४ सर्ववेदनिरूप्यत्वात्पुरुषंकृष्णपिंगलं इत्यादिरुद्रमंत्रस्थपुरुषशब्दोपितत्परः ५५ अरुणःसूर्यभानूचचंद्रस्तपनएवच मित्रो

हिरण्यरेताश्वरव्यर्यमगभस्तयः ५६ विष्णुर्दिवाकरश्चेतिसंप्रोक्तादित्यमध्यगः विष्णुरुक्तस्ततोविष्णुःसएवास्तिनचापरः ५७ आदित्याना
महंविष्णुर्ज्योतिषांरविरंशुमान् इतिकृष्णेनसंप्रोक्तंकिंचब्रह्मादिकाविभोः ५८ सूर्यादिवसमुत्पन्नास्तस्मात्सर्वैर्मुमुक्षुभिः अयमेवसमाराध्य
इतिप्रोक्तःपरोगुरुः ५९ उवाचशृणुभोमूढदिवाकरवचोमम चंद्रमामनसोजातःसूर्यस्तस्यतुचक्षुषः ६० इतिवेदनजन्यत्वंयस्योक्तंतद
नित्यता तर्कसिद्धांततोऽनित्येब्रह्मताकथमागता ६१ सूर्यनिष्ठपरब्रह्मबोधिकाःश्रुतयस्तुताः जगदीशाज्ञयासूर्योभ्रमतीतिश्रुतंस्फुटं ६२
भीषास्माद्वातःपवतेभीषोदेतिसूर्यः भीषास्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमः ६३ नयत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोऽयम
ग्निः तमेवभांतमनुभातिसर्वंयस्यभासासर्वमिदंविभाति ६४ इतिश्रुत्यापरेशस्यभासाभानंप्रकीर्तितं सूर्यादेस्तुतथाप्रोक्ताज्योतिःशास्त्रेप्यनि
त्यता ६५ सृष्टिःसरोजासनवासरादौवियच्चराणांविलयस्तदंते आद्यंतकालःसचकल्पउक्तःकल्पद्वयंतद्दिवसंविरिंचेः ६६ एवंभूतस्यसूर्य
स्यजनकत्वंत्वयेरितं ब्रह्मादिकस्यतस्मात्तेविद्यात्वत्यंतशोभना ६७ तस्मादेकःपरात्मैवसूर्यस्थोनिगमैःस्तुतः ततःपाखंडचिह्नानिविहायाचा
रतत्पराः ६८ शुद्धाद्वैतस्यबोधेनमुक्ताभवथभोद्विजाः इत्युक्तास्तेगुरुंनत्वासर्वेतच्छिष्यतांगताः ६९ ततस्तत्रगतैर्विप्रैःसर्वैरपियतीश्वरः
सभाजितोययौतस्माद्वायोराशांजयेच्छया ७० शिष्येषुत्रिसहस्रेषुकेचित्तंशंखपूरणैः केचिद्वाद्यविशेषैश्चकेचित्तालैःशुभोक्तिभिः ७१
केचिद्घंटानिनादैश्चकरतालैश्चकेचन केचिद्व्यजनवातैश्चपिच्छवातैश्चकेचन ७२ समर्चयंतिसंन्यस्तसुखदुःखंयतीश्वरं तत्तद्देशगताविप्रादृष्ट्वा
तच्छिष्यतांगताः ७३ एवंप्रतिदिनंगत्वातत्रतत्रागतान्द्विजान् कुमतस्थान्परानंदभाजःकृत्वाशुभोक्तिभिः ७४ पुरंगणवरंप्रापगणपत्याश्रमं
शुभं तत्रनद्यांहिकौमुद्यांस्नात्वाविघ्नेशमव्ययं ७५ संपूज्ययतिराट्तत्रमासमाससहानुगैः पद्मपादमुखाःशिष्याःपंचपूजापरायणाः ७६ दि
ग्गजाइतिविख्याताःपरविद्याप्रभेदिनः परपक्षहरोद्युक्तवचसःप्रौढवादिनः ७७ तद्वाक्यंशिरसागृह्यशिष्योन्यःपुरजिद्दले नियतःसर्वशि
ष्याणांपाकादिषुचकर्मसु ७८ समर्चयन्गुरुंभिक्षांदत्वातस्मैपरात्मने पद्मपादस्तदन्येषांशिष्याणांषड्सैर्युतं ७९ अददद्भोजनंनित्यंब्रह्मार्प
णमितिस्मरन् सायंतनेगुरुंशिष्यास्तमाचार्यशिरोमणिं ८० द्विषड्धातंनमस्कृत्यढक्कातालकराःशिवं स्तुवंतोनृत्यमाचक्रुःपरेशंसच्चिदद्वयं
८१ प्रपूर्णंब्रह्माहंनिखिलजनकंबुद्धिनिहितंचिदानंदंसत्यंसकलजगदाधारममलं अगम्यंवागाद्यैःसुजितकरणैर्ज्ञातमनघैःसुनिर्वाणंलब्ध्वाय

जल्पंतएवंबहुधामुनृत्यंकुर्वनआचार्यसमीपसंस्थाः श्रांतिगतास्तस्थुरुदारचित्ताहर्षेणयुक्तानिखिलाविनेयाः डिं०टी
शं०वि० दिहनपुनःसंसृतिरयः ८२ जल्पंतएवंबहुधामुनृत्यंकुर्वनआचार्यसमीपसंस्थाः
८३ एवमानंदसंतुष्टमाचार्यसेवकानपि तत्पहृण द्विजालक्ष्यकिमेतदितिचाब्रुवन् ८४ नहियुष्मन्मतंसम्यगिवभातिहिपश्यतां आकाशवन्नि
रालंबमद्वयंब्रह्मकेवलं ८५ मनोवागादिवृत्तीनामगोचरतरंपरं कथमज्ञोपबोधाययोग्यंस्यान्मतमीदृशं ८६ तत्त्यक्त्वाऽस्मन्मतंसम्यगाचरंतु १५
॥८॥ शुभात्मये गाणपत्यमितिख्यातंषड्भिर्भेदैःसमन्वितं ८७ समस्तवेदतात्पर्यैस्तदेवहिसमीरितं तदाचरध्वमत्यंतशांतिदंमोक्षदंनृणां ८८ तुंडैकदं
तचिह्नाभ्यांचिह्नितंशक्तिसंयुतं महागणपतियस्तुसदाध्यायत्यनन्यधीः ८९ तन्मूलमंत्रपठनपरःसन्ब्राह्मणोत्तमः योवर्ततेसएवात्रमोक्षभा
ग्भवतिध्रुवं ९० ध्येयोवल्लभयाचचंद्रकलयाश्लिष्टोज्वलद्रूपयाविश्वोत्पत्तिविपत्तिसंस्थितिकरोऽविघ्नोविशिष्टार्थदः इत्येवंगणनायकःख
लुजगत्सृष्ट्यादिकर्तेरितोयुक्तंचैतदजादिकस्यविलयेप्यस्मिन्स्थितेहीश्वरे ९१ आसीद्गणपतिस्त्वेकइतिश्रुत्याप्रकीर्तितः ब्रह्मादिकगणेशो
यंतस्मादखिलकारणं ९२ तन्माययाविरचिताब्रह्माद्याजगदीश्वराः इत्युक्तआहभोमूढगजास्यःकारणंकथं ९३ किंचरुद्रसुतत्वेनप्रसि
द्धःकारणंपितुः कथंभवेदतोब्रह्मकारणंश्रुतिमानतः ९४ ब्रह्मवाइदमित्यादिवाक्यतस्त्वत्समीरितं वाक्यंब्रह्मपरंनेयमित्युक्तोगिरिजासुतः ९५
उवाचपुनराचार्यसत्यमेतद्वचोस्तुते तथाप्यंकेनशून्योयंपुमान्देवस्यसन्निधौ ९६ गंतुंयोग्यःकथंभूयात्स्वेष्टस्ययतिपुंगव इत्युक्तःश्रीमदाचा
र्यःप्राहमूढमतेश्शृणु ९७ ब्राह्मणस्यकुलेजन्मशिखादेश्चविधारणं वेदोक्तकर्मनिष्ठत्वंविप्रत्वंसमुदाहृतं ९८ एतावताभवेद्विप्रःकृतकृत्यस्ततोस्यतु
पाखंडमात्रमेवास्तितत्तच्चिह्नस्यधारणं ९९ वेदेनहिविरुद्धंयत्पुराणपुर्चानिदिंतं नतत्कार्यंप्रवृत्तेनमोक्षस्यार्थविवेकिना २०० किंचहेमनि
भेचक्रेमूलाधारेचतुर्दले गणेशोस्तितथाचक्रेस्वाधिष्ठानकसंज्ञके २०१ षड्दलेविद्रुमाकारेब्रह्मास्तिमणिपूरके द्विपंचदलसंयुक्तेनीलवर्णे
स्थितोहरिः २०२ द्विपङ्क्तिस्तुदलैर्युक्तेनाहतेपिंगलेस्थितः रुद्रोभूतपतिर्देवोर्जावालाधूम्रवर्णके ३ विशुद्धेह्यष्टभिर्युक्तेदलैराज्ञाभिधेतथा ॥९॥
सहस्रदलसंयुक्तेचक्रेकर्पूरवर्णके ४ परमात्मास्थितस्तस्माद्देहएवव्यवस्थितः गणेशस्तस्यचिह्नेननप्रयोजनमण्वपि ५ तथाचाज्ञाभिधे
चक्रेसर्वगोपिव्यवस्थितः सर्वान्संप्रेरयित्वाहिस्वयंसाक्षीहिनिर्गुणः ६ सच्चिदानंदरूपोसौसर्वातीतोस्त्रिलोत्तमः सम्यग्वेदेषुसंप्रोक्तस्तंपरेशं
विचितय ७ मुक्तोभविष्यसीत्युक्तःसगणःशिष्यतांगतः त्यक्तचिह्नोगुरोस्तस्यशंकरस्यमहात्मनः ८ पंचपूजापरोनित्यंपंचयज्ञपरायणः

गुरुशुश्रूषणासक्तः समभूद्द्विरिजासुतः ८ आगत्यान्योह्हरिद्रागणपतिमतवादीगुरुंतंजगादब्रह्मादीनांगणानामधिपतिममरेशोपदेष्ट्रादिकानां आ
देष्टारंकवीनांसलिलजंजपातिज्येष्ठराजंपरेशंध्यायेमेत्यादिवेदोवदतियतिषतेसर्वकार्येषुपूज्यं १० तस्माद्देवादिभिः सर्वैः संपूज्योऽयंगणेश्वरः
ध्यानमस्यतुसंप्रोक्तंस्कांदेसम्यग्यतीश्वर ११ पीतांबरधरंदेवंपीतयज्ञोपवीतिनं चतुर्भुजंत्रिनयनंहरिद्रालसदाननं १२ पाशांकुशधरंदे
वंदंडाभयकरांबुजं एवंयःपूजयेद्देवंसमुक्तोनात्रसंशयः १३ जगत्कारणमेवायंब्रह्माद्याअंशरूपिणः अस्मादेवसमुत्पन्नास्तस्मात्सर्वपिताम
हं १४ विघ्नेशानंभवंतोपिभजंतुजगदीश्वरं तुंडाकारेणलोहेनैकदंताकारकेणच १५ संतप्तेनांकितस्यैवमुक्तिरस्तिभुजद्वये इत्युक्तआहसर्व
ज्ञोगुरुस्तंकरुणानिधिः १६ अस्त्वेवंपरमात्मैवजगत्कर्तात्वयेरितः गणाधिपतिशब्देनसर्वनामामहेश्वरः १७ अंशांशिनोरभेदेनरुद्रपुत्रोपिच
स्वयं संभवत्येवसर्वात्मासर्वविघ्ननिवारकः १८ उपासनीयएवायंनिखिलैरस्तुसर्वदः किंचविप्रैर्गणेशाद्याःपंचपूज्यामुमुक्षुभिः १९ किंतुतुं
डादिचिह्नस्यधारणंसंविरुध्यते वेदेनचपुराणेनतस्माच्चिह्नंविहायभोः २० पंचपूजादिसंपन्नोद्वैतनिष्ठोविमोक्ष्यसे एवमुक्तोगुरुंनत्वाद्विष
द्धातत्कटाक्षतः २१ पवित्रतांगतोध्यायंस्तमेवपरमंगुरुं पंचपूजादिकंकुर्वन्सुखमापामितंद्विजः २२ ततोगणकुमाराख्येनिरस्तेन्यःसमा
गतः आचार्यमाहहेरंबसुतस्तंपरमंगुरुं २३ महागणपतेस्त्वेकंहरिद्रागणपस्यच उच्छिष्टगणपस्यैकंनवनीतगणेशितुः २४ मतमेकंतथा
स्वर्णगणपस्यैकमीरितं संतानगणपस्यैकमागमेशैवसंज्ञके १५ उच्छिष्टगणपस्याहमुपासनपरायणः उच्छिष्टगणपःप्रोक्तोवामांगेनावलं
बनात् २६ चतुर्भुजंत्रिनयनंपाशांकुशगदाभयं तुंडाग्रतीव्रमधुकंगणनाथमहंभजे २७ महापीठनिषण्णंतंवामांगपरिसंस्थितां देवीमा
लिंग्यचुंबंतंस्पृशंस्तुंडेनवैभगं २८ इतिध्यानंहिसंप्रोक्तंतस्माद्युक्तंतुचिंतनं जीवेशयोरिवैक्यस्यतयोस्तुयतिनायक २९ कुंकुमांकितफा
लोहंभक्तोमार्गद्वयेस्थितः इच्छाधीनानिकर्माणिकृत्वादेवंभजेत्सदा ३० एतत्समंमतंनास्तीत्येवंमत्वातिहृष्टधीः संपन्नोस्मियतेकिंचधर्मो
स्यास्मिन्मतेनृणां ३१ सर्वेषामेकएवैकजातित्वात्तद्वदेवहि समस्तायोपितस्तेषांतासांचैववियोगतः ३२ संयोगतश्चनोदोषःकश्चिदस्तिय
तीश्वर अयमेवपतिर्ह्यस्याइतिनास्तिनियामकः ३३ अन्योन्यसंगजानंदप्राप्तिरेवविमुक्तिता आनंदात्मागणेशोयंतदंशाःपद्मजादयः ३४
अंशांशिनोरभेदस्तुवेदेसम्यक्प्रकीर्तितः गणेभ्योगणपेभ्यश्चनमइत्यादिनायते ३५ रुद्रस्तुगणपात्मैवनतत्वन्योमुनिपुंगव नकर्मणेतिहिश्रुत्या

अनुकूलमिदंतस्मादेनदेवमु
कर्मनोमोक्षकारणं ३६ किंतुत्यागःसहिष्णुत्वमुखैर्युक्तःसमीरितः द्वंद्वतापुण्यपापादावप्यस्तिहिमतेमम ३७ गृ
मुक्षुभिः सेव्यमित्युक्तआचार्यस्तमुवाचयतीश्वरः ३८ सुरांनैवपिबेन्नैवपरभार्यांसमाप्नुयात् इत्यादिबहुभिर्वेदवचोभिर्निदितंमते ३९ सुरापानपरस्या
स्नतःयत्रनत्याज्यंदूरतःसुखकांक्षिभिः नकर्मणेत्यादिकातुश्रुतिस्तत्त्वविदोयतेः ४० सर्वपापविहीनस्यन्नूतेमोक्षंनपापिनः विप्राणांवाक्यतस्तेपांप्रसादे
थपरदाररतस्यच ४१ सुरापानादिनामुक्तिप्राप्स्यामइतिजल्पनं दुःखदंदौष्ट्यमेवास्तित्यक्तातस्मादिदंमतं ४२ संध्यायंतोगणेशादीनजपामंत्रतत्पराः ४४
नविनिष्कृतिं विधायमोक्षमार्गस्थाःपंचपूजापरायणाः ४३ पंचयज्ञादिनिरतामूलाधारादिचक्रके स्वामिन्नेतज्जगत्स
तद्देवध्यानतोमुक्ताभविष्यथनसंशयः एवमुक्तास्तथाचक्रुर्हेरंबसुतपूर्वकाः ४५ आगत्याथगुरुंप्रोचुरवशिष्टास्त्रयोपिते

## सुरधामसतत्रकारयित्वापरविद्याचरणानुसारिचित्रं ॥ अप
## वार्यचतांत्रिकानतानीद्भगवत्याःश्रुतिसंमतांसपर्यां ॥५॥

भवंतइतिसंप्रोक्तस्तानाह
वैगणपत्यात्मनावयं ४६ चिंतयामोविमोक्षायपूज्यंसर्वैःशुभार्थिभिः तस्माद्दूषितवंतोवैकथमेतन्मतत्रयं ४७ रु
यतिपुंगवः मूढायूयंततःशास्त्रतत्त्वंश्रृणुतनिश्चितं ४८ पुरुषाधिष्ठितायाःप्रकृतेरादौमहानभूत् ततोहंकारउत्पन्नस्त्रिगुणात्मासएवहि ४९ तस्माद्विप्रैर्गणेशा
द्रविष्ण्वादिरूपोभूत्तत्ररुद्रस्यसूनवः गणेशश्चकुमारश्चभैरवश्चेतिविश्रुताः ५० स्वस्वाधिकारनिर्वाहितत्पराःपूज्यतांगताः वीरभद्रादयोनत्वात्यक्तचि
द्यास्तत्तच्चक्रेषुसंस्थिताः ५१ चिंतनीयाःप्रयत्नेनतदशक्तौतुदेवताः पंचपूज्यामहेशाद्याइत्युक्तास्तेपरंगुरुं ५२ ॥ तत्रकांच्यांपरविद्याचरणानुसारिचि
ह्नाःसुशिष्यतां गतास्तेपंचपूजादिरताअद्वैतवादिनः ५३ तदेतत्संक्षिप्योक्तंस्ववशइत्यादिना ॥ ४ अत्रेदमवधेयं परमगुरुःश्रीशंक
त्रंदेवमंदिरंकारयित्वातांत्रिकांश्चविनिवार्यश्रुतिसंमतांभगवत्याःपूजांसश्रीशंकराचार्योविस्तारितवानित्यर्थः

तस्मिन्कांचीनगरेमासमात्रंस्थित्वाशंकरप्रतिष्ठापूर्व
राचार्योयत्रकिलमहादेवःस्वकीयपृथिवीमूर्त्याविर्भूतलिंगरूपेणांबरेशइतिप्रसिध्यावर्तते
कंशिवकांचीतिपट्टणंनिर्मायतस्मात्प्राक्आविर्भूतविष्णुंवरदराजानंसमाश्रित्यतत्रविष्णुकांचीतिपट्टणंनिर्मायतत्सेवार्थंब्राह्मणादीननेकभक्तजना
न्संपादयतानपिशुद्धाद्वैतवृत्तीनेवसर्ववेदांततात्पर्यनिष्ठांश्चकार ततस्तद्देशवासिनःसर्वेताम्रपर्णीतटादागत्यपरमगुरुंनत्वेदमूचुः हेस्वामिन्नस्मिंल्लो
केदेहादिभेदस्यप्रत्यक्षत्वात्परलोकेपितत्तत्कर्मणातत्तदुपासनयाचतत्तल्लोकप्राप्तिश्रवणाच्चभेदएवसत्यवद्भातीतिपृष्टःआचार्यउवाच. भोद्वि
जाःपरमार्थतत्त्वमविदित्वेदमुक्तंभवद्भिः यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदित्यादिश्रुतिभिस्तत्त्वज्ञानाग्निदग्धपापपंजरस्यमुक्तिदशायांभे
दाभावप्रतिपादनात्तत्सृष्ट्वातदेवानुप्राविशत्अनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीत्यादिशास्त्रतात्पर्येणजगत्कर्तुर्ब्रह्मणएवजीवरूपे

अनुगृह्यसवेंकटाचलेशंप्रणिप
निजपादसरोजसेवनायैविनयेनस्वयमागतानथांध्रान् ॥
त्यापविदर्भराजधानीं ॥ ६॥ अभिगम्यसभक्तिपूर्वमस्यांकृतपूजःक्रथकेशिकेश्वरेण॥ नि
जशिष्यनिरस्तदुष्टबुद्धीन्व्यदधाद्भैरवतंत्रसावलंबान् ॥ ७॥

णजगदंतःप्रवेशावगमाच्च किंचकतिदेवाइत्युपक्रम्यत्रयश्चत्रीचशतात्रयश्चत्रीचसहस्रेतिदेवानेकतामभिधायांतर्भावक्रमेणएकोदेवइतिप्राण
इतिचब्रह्मणएवानेकत्वंप्रदर्शितं बहुस्यांप्रजायेयेत्यादिश्रुत्याचभोक्तृभोग्यात्मकसकलस्यापिप्रपंचस्यपरमात्मरूपताप्रतिपादिता तस्मात्सर्व
ज्ञंनित्यशुद्धबुद्धमुक्तस्वभावंसकलंविवर्ताधिष्ठानंब्रह्ममुमुक्षुभिरुपासनीयंतस्माद्भवंतोपिजीवपरमात्मभेदंदेवताभेदंचविहायशुद्धाद्वैतब्रह्मोपास
नयामुक्ताभवथेतिसम्यगुपदिष्टाःकांचीताम्रपर्णीदेशवासिनःशुद्धाद्वैतविद्याश्रितावभूवुरिति ॥५॥ एतदेवसंग्रहेणाहाथनिजपादसरोजसेवना
र्थंविनयेनस्वयमागतान्आंध्रदेशीयाननुगृह्यसवेंकटाचलेशंप्रणिपत्यविदर्भराजधानींप्राप ॥ ६ ॥ क्रथकेशिकेश्वरेणभक्तिपूर्वमभिगम्यास्यां
विदर्भराजधान्यांकृतपूजःसभैरवतंत्रेणसावलंबानवलंबसहितान्निजशिष्यैर्निरस्तादुष्टबुद्धिर्येषांतथाभूतान्व्यदधात् ॥ ७ ॥

शं० वि० अथकर्णाटभूमिंगंतुमिच्छुमभिवाद्यविदर्भराडुक्तवान् हेभगवन्सहिदेशोबहुभिःकापालिकैर्भवतामगम्यरूपः ॥ ८ ॥ यतस्तेकापालिकाःभग डिं०ट
वद्यशोनसहंते यतश्चश्रुतिषुनिहितास्थापिताईर्ष्यायैस्तेयतश्चजगतामहितेसमुत्सहंतेसम्यगुत्साहयुक्ताभवंति यतश्चमहत्सुप्रतिपक्षतामुद्वहं १५
।११।। तेस्वीकुर्वंत्यतएवमहंब्रवीमि ॥ ९ ॥ इत्येवंविदर्भाधिपेवंदतिसतिअधिज्यधन्वासुधन्वायतिराजंवभाषेहेयतिनाथमयितवभक्तेतिष्ठतिपामरे

अभिवाद्यविदर्भराडवादीदथकर्णाटवसुंधरामियासुं ॥ भगन्बहुभिःकपालिजालैःसहिदेशोभवतामगम्यरूपः
॥८॥ नहितेभगवद्यशःसहंतेनिहितेर्ष्याःश्रुतिषुब्रवीम्यतोहं ॥ अहितेजगतांसमुत्सहंतेमहितेषुप्रतिपक्षतांवहंते
॥९॥ इतिवादिनिभूमिपेसुधन्वायतिराजंनिजगावधिज्यधन्वा ॥ मयितिष्ठतिकिंभयंपरेभ्यस्तवभक्तेयतिना
थपामरेभ्यः॥१०॥ अथतीर्थकराग्रणीःप्रतस्थेकिलकापालिकजालकंविजेतुं॥ निशमय्यतमागतंसमागात्क्र
कचोनामकपालिदेशिकाग्र्यः॥ ११ ॥ पितृकाननभस्मनानुलिप्तःकरसंप्राप्तकरोटिरात्तशूलः॥ सहितोबहुभिः
स्वतुल्यवेषैःसइतिस्माहमहामनाःसगर्वः॥ १२ ॥ भसितंधृतमित्यदस्तुयुक्तंशुचिसंत्यज्यशिरःकपालमेतत्॥
वहथाशुचिखर्परंकिमर्थंनकथंकारमुपास्यतेकपाली॥ १३ ॥

भ्यःपरेभ्यस्तवकिमपिभयंनास्ति ॥ १० ॥ अथशास्त्रकरायणीःकापालिकजालकंविजेतुंसउज्जयन्याख्यपुरंप्रतस्थे ॥ ११ ॥ श्मशानभस्म
नालिप्तांगःकरसंप्राप्तमनुष्यशिरःकपालः ॥ १२ ॥ यद्भस्मधृतमितीदंतुयुक्तंपरंतुशुचिशिरःकपालमेतत्परित्यज्यापवित्रंमृन्मयखर्परंकिमर्थंव ॥ ११
हथ कथंकारंकथंकपालीभैरवोभवद्भिर्नोपास्यते ॥ १३ ॥

रुधिराक्तैर्नरशिरोलक्षणकमलैर्मद्येनचभैरवार्चामलब्ध्वाकपालीभैरवःस्वसमानयाकमलाक्ष्याउमयाआश्लिष्टवपुर्मुदंकथंप्राप्नुयात् ॥१४ ॥
रुधिराक्तैर्नरशिरोलक्षणकमलैर्मद्येनचभैरवार्चामलब्ध्वाकपालीभैरवःस्वसमानयाकमलाक्ष्याउमयाआश्लिष्टवपुर्मुदंकथंप्राप्नुयात् ॥१४ ॥ सुधन्वाआत्मविदांसमाजाद्बहिश्चकार ॥ १५ ॥
इत्येवंक्रकचेभैरवागमानांहृदयंजल्पतिसतिहेकुत्सितपुरुषेतितंविनिंद्यस्वीयैरधिकारिभिः सुधन्वाआत्मविदांसमाजाद्बहिश्चकार ॥ १५ ॥
इत्येवंक्रकचेभैरवागमानांहृदयंजल्पतिसतिहेकुत्सितपुरुषेतितंविनिंद्यस्वीयैरधिकारिभिः ॥ १६ ॥ प्रलयांभोधरवद्भयंकरःशब्दोयेषांअमुनाक्रकचे
सितंपरश्वधमुद्यस्यभवतांशिरांसिनविभिद्यांचेत्तर्हिक्रकचोनाहमितिब्रुवन्नयासीत् ॥ १६ ॥ प्रलयांभोधरवद्भयंकरःशब्दोयेषांअमुनाक्रकचे

नरशीर्षकुशेशयैरकृत्वारुधिराक्तैर्मधुनाचभैरवार्चां ॥ उमयासमयासरोरुहाक्ष्याकथमाश्लिष्टवपुर्मुदंप्रया
यात् ॥ १४ ॥ इतिजल्पतिभैरवागमानांहृदयंकापुरुषेतितंविनिंद्य ॥ निरवासयदात्मवित्समाजात्पुरुषैः
स्वैरधिकारिभिःसुधन्वा ॥ १५ ॥ भृकुटीकुटिलाननश्चलोष्ठःसितमुद्यम्यपरश्वधंसमूर्खः ॥ भवतांनशिरांसि
चेद्विभिद्यांक्रकचोनाहमितिब्रुवन्नयासीत् ॥ १६ ॥ रुषितानिकपालिनांकुलानिप्रलयांभोधरभीकराखा
णि ॥ अमुनाप्रहितान्यतिप्रसंख्यान्यभियातानिसमुद्यतायुधानि ॥ १७ ॥ अथविप्रकुलंभयाकुलंतद्द्रुतमा
लोक्यमहारथःसुधन्वा ॥ कुपितःकवचीरथीनिषंगीधनुरादायययौशरान्विमुंचन् ॥ १८ ॥ अवनीभृतियोध
यत्यरींस्तांस्त्वरयैकत्रततोऽन्यतोनियुक्ताः ॥ क्रकचेनवधायभूसुराणांद्रुतमासेदुरुदायुधाःसहस्रं ॥ १९ ॥

नप्रेषितानिअप्रगणितानिकपालिनांकुलानिकुपितानिसमुद्यतायुधानिअभियातानि ॥ १७ ॥ अथतेषामभिगमनानंतरंतद्विप्रकुलंभयेनव्या
कुलमालोक्यझटितिकुपितःसुधन्वाधनुरादायबाणान्विमुंचन्ययौ ॥ १८ ॥ त्वरयातानरीनेकत्रभूमिपेसुधन[illegible]तोब्राह्म
णानांवधायक्रकचेननियुक्ताःसहस्रसंख्याउदायुधाद्रुतमासेदुःआययुः ॥ १९ ॥

यतिसैन्यसमीपमापतंतंकपालिसंघंदूरादवलोक्यव्यथिताभूसुरेंद्राःशरण्यंशरणयोग्यंश्रीशंकरंयोगिनंशरणंप्रपेदिरे ॥ २० ॥ निजहुंकार
 प्रसूतेनवह्निना ॥ २१ ॥ नृपतिश्चसुवर्णपुंखैःशरैर्विच्छिन्नैःप्रतिपक्षिणांमुख्यपद्मैःसहस्रसंघैःरणभूमिसमलंकृत्यमुदामुनींद्रमगमत् ॥ २२ ॥
अतिमात्रमत्यंतंविदूयमानंपीड्यमानंचित्तंयस्यसः ॥ २३ ॥ असौक्रकचोनेत्रनिमील्यक्षणमात्रंध्यानंकृतवान् ॥ २४ ॥ भैरवागमज्ञेक 



अवलोक्यकपालिसंघमाराच्छमनानीकनिकाशमापतंतं॥ व्यथिताःप्रतिपेदिरेशरण्यंशरणंशंकरयोगिनं
द्विजेंद्राः ॥ २० ॥ असितोमरपट्टिशत्रिशूलैःप्रजिघांसून्भृशमुज्झिताट्टहासान्॥ यतिराट्सचकारभस्मसा
त्तान्निजहुंकारभुवाग्निनाक्षणेन ॥ २१ ॥ नृपतिश्चशरैःसुवर्णपुंखैर्विनिकृत्तैःप्रतिपक्षवक्त्रपद्मैः ॥ रणरंग
भुवंसहस्रसंघैःसमलंकृत्यमुदागमन्मुनींद्रं॥ २२॥ तदनुक्रकचोहतान्स्वकीयानरुजांश्चद्विजपुंगवानुदीक्ष्य॥
अतिमात्रविदूयमानचेतायतिराजस्यसमीपमापभूयः ॥ २३॥ कुमताश्रयपश्यमेप्रभावंफलमाप्स्यस्यधु
नैवकर्मणोस्य ॥ इतिहस्तलसद्धलत्कपालंक्षणमध्यायदसौनिमील्यनेत्रे ॥ २४ ॥ सुरयापरिपूरितंकपालं
झटितिध्यायतिभैरवागमज्ञे॥ सनिपीयतदर्धमर्धमस्यानिदधारस्मरतिस्मभैरवंच॥ २५॥ अथमर्त्यशिरः
कपालमालीज्वलनज्वालजटाछटस्त्रिशूली ॥ विकटप्रकटाट्टहासशालीपरतःप्रादुरभून्महाकपाली॥ २६॥

कचेध्यायतिसतिसुरयामद्येनकपालंपरिपूरितंपरिपूर्णमभूत् तस्याःसुरायाअर्धसक्रकचःसम्यक्पीत्वातस्याःसुरायाअर्धंनिदधारस्थापयामा
सचपुनर्भैरवंस्मरतिस्म ॥ २५ ॥ अथभैरवस्वरूपस्मरणानंतरंवह्निज्वालासदृशानांजटानांछटासमूहोयस्यसमहाकपालीभैरवः ॥ २६ ॥ 

हेदेवतवभक्तजनद्रुहंदृष्ट्यासंजहीतिकपालिनाक्रकचेननियुक्तोभैरवस्तत्वविदोममात्मत्वान्मदवतारत्वाद्वाकथंममात्मनिश्रीशंकरेअपराध्यसी
तिरुष्टस्तस्यैवशिरोजहार ॥ २७ ॥ खलानामखिलेपिकुलेखिलेउच्छिन्नेसतिप्रहृष्टाःद्विजाअमुंश्रीशंकरमानर्चुः अत्रेदमवधेयं संहारभैरवं
नत्वासमासीनःकिलाब्रवीत् स्वामिन्वेदेषुशास्त्रेषुपुराणेषुचकर्मयत् १ प्रतिपादितमस्तीहतत्कर्तव्यंहिधर्मतः विप्राणांकर्मणाधर्मःसाध्यःस्या
दितिमेमतं २ धर्मेणसर्वपापौघोनाशंयातिशुचिव्रतात् पापसंघेतथानष्टेमनःशुद्धिःप्रजायते. ३ शुद्धेमनसिसर्वात्मसाक्षात्कारोभवत्यलं
एवंसदासिसर्वेषांब्राह्मणानांमयेरितः ४ त्वद्भक्तःसहशापादिदुष्टयुक्तिपरंपरां एतन्नोचितमित्युग्रोमच्छिष्यैस्ताडितःसतु ५ अकरोदागतंत्वांतु
मंत्रबीजपरायणं इतःपरंत्वमेवैतत्सत्यासत्यंविवेचय ६ इत्युक्तोभैरवःप्राहविप्रदंडार्थमागतः शंकरस्त्वंसदापूज्यःसर्ववेदपदार्थभाक् ७ प्र

तवभक्तजनद्रुहंदशासंजहिदेवेतिकपालिनानियुक्तः॥ कथमात्मनिमेपराध्यसीतिक्रकचस्यैवशि
रोजहाररुष्टः॥ २७॥ यतिनाम्रपभ्रेणसंस्तुतस्सन्नयमंतर्धिमवापदेववर्यः॥ अखिलेपिखिलेकुलेख
लानाममुमानर्चुरलंद्विजाःप्रहृष्टाः ॥ २८ ॥

वर्त्कतंहियत्कर्ममयापिप्रकृतंहितत् तेषांकापालिकानांतुब्राह्मण्याचारतांकुरु ८ विकलेतुकलौप्राप्तेतेषांवृत्तिर्यथेप्सिता बभूवमैत्रवद्धोऽहं
प्रत्यक्षोस्मिनधर्मतः ९ इत्युक्त्वांतर्दधेदेवःकापालिकमतानुगाः तद्वाक्यश्रवणाद्भीताःपरिव्राट्कुलशेखरं १० नत्वाद्वादशधासर्वेवटुकाद्याः
सुविस्मिताः स्वामिन्मूढावयंयस्मात्पालयास्मांश्चसादरं ११ एवमालापिनोदृष्ट्वाकरुणापूर्णविग्रहः आज्ञापयामासयतिःशिष्यांस्तेषांवि
शोधने १२ पद्मपादमुखाःशिष्याश्चक्रुस्तान्ब्राह्मणाध्वगान् प्रातःस्नानरतान्नित्यंसंध्याकर्मदृढव्रतान् १३ पंचपूजापंचयज्ञपरान्निश्चल
मानसान् परंगुरुंसमाश्रित्यतेपिसच्छिष्यतांगताः १४ तत्रागत्यततःकश्चित्कपालीदारुणाकृतिः प्राहेदंन्यूनताचेत्कापालिकानांमतेतदा
१५ फलंकिमपिनान्यत्रविद्यतेवटुकादयः बभूवुःस्वमतभ्रष्टायत्तुतत्रास्तिदूषणं १६ महद्ब्राह्मणजातित्वंनमेजात्याप्रयोजनं किंचदेहस्य

सर्वस्यभौतिकत्वान्नकस्यचित् १७ वक्तुंहिशक्यतेजातिस्तस्मात्संकल्पितात्वियं जातिर्नातःप्रमाणंतत्किंतुजातिद्वयंमतं १८ स्त्रीजातिरेका
नरजातिरन्यात्रापिश्रेष्ठत्वमुपागताद्या प्राकट्यमानंदउपैतियस्याःसंयोगतोतोनविचारइष्टः १९ गम्याहीयंनैवगम्येयमस्तिगच्छेन्नासा
वन्यभार्यामितीदं वाक्यंनांगीकुर्महेदोषभावाद्यस्मात्सर्वाःस्वीयतामाव्रजंति २० आनंदार्थचर्मणश्चर्मयोगंकुर्वन्जीवःप्राप्नुयात्कंत्वनर्थं जी
वस्यासौमोक्षएवास्तितृप्तिःसर्वोत्कृष्टानंदतोदर्शितानः २१ आनंदोयोव्यक्तिमायातिसंगात्तद्रूपोसौभैरवोदेहपाते तस्यप्राप्तिर्मोक्षइत्येवत
त्वमित्युक्तःश्रीशंकराचार्यआह २२ उक्तंभोकापालिकेदंसुसम्यक्सत्यंवाच्यंकस्यपुत्रीत्वदीया मातेत्युक्तःप्राहकापालिकोसौस्वामिन्मा
तादीक्षितस्यास्तिपुत्री २३ दीक्षितत्वमिदमागतंकुतस्त्वत्पितुःसतुजगादभोयते तालमुख्यतरुगांसुरामसावाहरन्ननुरसेविशेषतः २४ ज्ञा
नवानपिनचस्वयंसतांपातुमिच्छतिपरंतुविक्रये शीलवानतइमंसदाजनोदीक्षितंवदतितस्यपुत्रिका २५ मातृतामुपगताममात्मनोदेहमर्प्य
सुखसागरेजनान् आगतान्खलुनरान्सदाकरोत्संप्लुतान्मुमुखलब्धयेयने २६ उन्मत्तभैरवसमाख्यमिमंविबोधतस्याःसुतंममपितापिसुरा
करोभूत् तत्सन्निधौस्थितिमपीहसुरालभंतेनोमद्यगंधविमुखाहिपलायितास्ते २७ तस्मादेवंसत्कुलेहंप्रसूतःसम्यक्पूज्योहंभवद्भिःसुभक्त्या
इत्युक्तोसौप्राहकापालिकत्वंगच्छैतस्मात्स्वेच्छयासंचराशु २८ ब्राह्मणान्ननुसुदुष्टमतस्थान्दंडदातुमहमागतएव नेतरानतइतोऽयमभाप्योदू
रआशुकरणीयइतीत्थं २९ प्रोदितायतिवरेणविनेयाग्र्यस्तस्यवचनंशिरसाते प्रात्यजन्खलममुंसुविदूरंशंकरंतुततदूरतईक्ष्ये ३० चार्वा
कइत्थंस्वकरोद्विचारंमूर्खैर्जनैर्व्याप्तमिदंसमस्तं देहाद्यतीतात्मविबोधिभिस्तत्संगाद्रतामूढतमत्वमन्ये ३१ दुष्टामतिर्नोभवितापितस्मात्तथा
पितेषाममयमद्यचारी संन्यासवानस्तितुकश्चिदेषविवेकयुक्तोयदिचेत्तदग्रे ३२ स्थास्यामिनोचेदहमेमिशीघ्रमेवंविचार्यास्यसभांप्रविश्य उ
वाचतत्त्वंविदितंतवास्तितदाविमुक्तेर्वदलक्षणंत्वं ३३ आदौविवेकोममबुध्यतामयंकायात्मदेहस्यतदादिरूपिणः जीवस्यमोक्षोविलयोन
चेतरस्तस्यागमंमूढधियोब्रुवंतिभोः ३४ लयंगतानांसरितांसमुद्रेयद्यागमःस्यान्मरणंगतानां सस्यादतोमोक्षइयंमृतिर्हिश्राद्धादिकंकर्मतुकु
र्वंतेये ३५ तृप्तिस्त्वनेनेतिमृतिंगतानांतेषांविवेकःकिमुवाचनीयः किंचप्रजल्पंतिपरोस्तिलोकःस्वर्गस्तथान्योनरकोतिघोरः ३६ पुण्येनपा
पेनचयांतितत्रक्षयात्तयोर्मर्त्यमिमंविशंति तेषांमतंतत्सुतराममानंयतस्त्विहैवास्त्युभयानुभूतिः ३७ स्वर्गीभोक्ताकथ्यतेसौसुखस्ययोवाभुं

केक्लेशमेषो द्वितीयः.तस्माद्युक्ताकल्पनानोपरोक्षेप्रत्यक्षेणैवानुभूतिगतेस्ति ३८ देहेंद्रियेषुभूतेषुनष्टेषुपरलोकगः कोवाजीवस्यभदापघट।
काशवदस्यनु ३९ गमनंरूपहीनत्वान्नैवसंभवतिकचित् तस्मादस्मन्मतंसम्यगित्युक्तःप्राहशंकरः ४० श्रुतिबाह्यमिदंमतंयतोतोनचसम्य
कृश्रृणुमेमतंततस्त्वं सतुदेहमुखाद्विभिन्नआत्मापरमात्मापरिपठ्यतेविमुक्तः ४१ विरुद्धःपरात्माऽप्रबोधाद्विमुक्तःपरिज्ञानतोदेहपाताद्विमुक्तिः
त्वदीयेयमुक्तिर्भ्रमादेवनूनंश्रुतिर्ज्ञानमात्राद्विमुक्तिंजगाद ४२ ज्ञानाग्निदग्धकर्माणोयांतिब्रह्मसनातनं इत्याद्यास्तिश्रुतिःसाक्षात्तद्वाक्यंनप्र
मेतिचेत् ४३ भवद्वाक्यंकथंमानंकुत्सितंकिलवह्निना स्थूलेदग्धेपिदेहेऽस्मिँल्लिंगयुक्तोव्रजत्यमुं ४४ ज्योतिष्टोमादिकंवाक्यंमानंमत्रदृढं
स्मृतं जलौकाजंतुतुल्योयंजीवःप्रोक्तस्तथाश्रुतौ ४५ देहाद्देहांतरंयातिपरलोकंसगच्छति श्राद्धादिकर्मकर्तव्यंतस्यपुत्रादिनाखलु ४६
तस्यैतत्वविमुक्त्यर्थंपुण्यलोकस्यचाप्तये गयादौपिंडदानंचकर्तव्यंतस्यमुक्तये ४७ इत्यर्थस्तुपुराणादौवहुधासंप्रदर्शितः तस्मात्सप्तदशांशंस
लिंगंस्यात्मतयागतः ४८ परत्रपक्षिवद्यातिसिद्धांतोयमुदीरितः मूढचार्वाकतस्मात्त्वमितस्तूष्णींव्रजाधुना ४९ इत्युक्तोवेषभाषादित्यक्त्वा
गुरुपदद्वयं नत्वातत्पुस्तभारस्यभरणोद्यमयुतोभवत् ५० ततःसौगतःशंकरंपीनकायःप्रणम्याहलोकाइमेमूढभावात् सदाकर्मशीलाय
तोभौतिकस्यविशुद्धिर्नचस्नानदानादिनास्ति ५१ सदानिर्मलोदेहपाताद्विमुक्तस्तुजीवोपुनर्जायतेऽसावृणेन प्रजल्पंतिमूर्खाधनंतद्धिदेहाद्य
दृष्टेनलभ्यंततोनास्तिभीतिः ५२ देहांतेवाक्षणाभावादृणंकृत्वाघृतंपिबेत् इतिवाक्यस्यमानत्वाद्देहपुष्टिःसदैवहि ५३ कर्तव्याबुद्धियुक्ते
नतत्कृत्वातत्रतत्रच सर्वभक्षणशीलस्यसुखस्यावाप्तिरापितः ५४ विमोक्ष्यस्येतिसंप्रोक्तःशंकरःप्राहसौगतं वृथातेजल्पनंयस्मात्परलोकग
मादिकं ५५ श्रुतिस्मृतीतिहासादौप्रोक्तंभोगायकर्मणः तस्मादृणादिकंकर्तुःपुनर्जन्मसुनिश्चितं ५६ तथाचाज्ञानबुद्धित्वंपापदिग्धांविहा
यवै सन्मार्गस्थोभवेदानीमित्युक्तःपुनराहसः ५७ सुगताख्योमुनिःसर्वांभुवंदृष्ट्वासुविस्मितः विचार्यजगतःसत्त्वंप्राण्युपासनतत्परः ५८
कालेमदुपदेशस्यकरुणाविष्टमानसः इदमाहसधर्मोस्तिपरःप्राण्यविहिंसनं ५९ तथाविधेनधर्मेणकपालस्यविवर्तनात् मुक्तोभविष्यसीत्यु
क्तस्तदारभ्याहमप्ययं ६० तत्पादयुगलध्यानीशिरसाग्रस्तद्वचः दयापरोस्मिसर्वेषुप्राणिजातेपुसर्वदा ६१ यस्मात्धर्मोतोनचान्योस्तिसा
रस्तस्माद्धर्मस्थानमेतन्मतंमे सर्वैरंगाकार्यमित्येवमुक्तोभूयःप्राहाचार्यइत्थंमहात्मा ६२ किंत्वंजल्पसिदुष्टसौगतकथंधर्मोस्त्यहिंसापरोया
।

गीयस्यहिंहिंसनस्यनिगमेधर्मत्वमुक्तंस्फुटं अग्निष्टोममुखेकनौखलुपशोःस्वर्गप्रदंहिंसनंश्रुत्याचाररतैरुपेयमपरेपाखंडिनोविस्फुटं ६३ वेद
निंदापरायेतुतदाचारविवर्जिताः तेसर्वेनरकंयांतियद्यपिब्रह्मवीर्यजाः ६४ इत्येवंमनुनोक्तत्वात्तदाचाररताःकिल पच्यंतेनरकेघोरेयाव
द्ब्रह्मलयोभवेत् ६५ तस्माद्विप्रादिवर्णानांवेदादिपुनिरूपितः आचारःपरमंमानंयस्यतन्नास्तिसोऽधमः ६६ इत्युक्तोसौसौगतोमानशून्यो
नत्वाचार्यंपद्मपादादिकानां तच्छिष्याणांपादुकावाहकोभूत्तेषामुच्छिष्टादनेनातिपुष्टः ६७ कौपीनमात्रधारीतुकश्चित्क्षपणकःस्मृतः
सएकस्मिन्करेधृत्वागोलयंत्रंद्वितीयके ६८ तुरीयंत्रंसमादायसमागत्याहशंकरं स्वामिच्छृणुविचित्रंमेमतंपरमशोभनं ६९ पूर्णःसमयना
माहंसूर्यंकालप्रवर्तकं वध्वात्वाभ्यांमुयंत्राभ्यांसमयज्ञाननःशुभं ७० अशुभंचत्रिलोक्यायल्लभ्यंतद्वच्मिसंस्फुटं किंचकालःपरोदेवोमत्पक्ष
स्यविचालने ७१ परेशोपिसमर्थोनेत्युक्तस्तंप्राहशंकरः सम्यगुक्तंत्वयात्वंयत्कालवित्तंचवेद्म्यहं ७२ तस्मान्मदाश्रयस्तिष्ठपरीक्षाकाल
आगते त्वांपृच्छामीतिसंप्रोक्तस्तथैवांगीचकारसः ७३ कौपीनमात्रसंधारीजैनस्तुततआगतः मलेनदिग्धसर्वांगःसदार्हन्नमइत्यसौ ७४
उच्चरन्नसकृच्चोच्चैःशून्यांकःशून्यपुंड्रकः विंदुपुंड्रसमेतश्चशिष्यैःसर्वभयंकरः ७५ पिशाचवत्समागत्यप्राहश्रीशंकरंगुरुं जिनोदेवोस्तिसर्वे
षांमुक्तिदःप्राणिनांहृदि ७६ जीवात्मनास्थितःसोतिज्ञानमात्रेणसर्वदा मुक्तत्वात्तस्यदेहस्यपातात्तुसमनंतरं ७७ जीवःशुद्धःसदैवास्तिम
लपिंडस्तुदेहकः स्नानादिकर्मणानैवशुद्धिंयातिकदाचन ७८ तस्मात्स्नानादिकंनैवप्रकर्तव्यंवृथायतः इत्युक्तोसौजगादेदंमैवंभोजैनदुर्मते
७९ जीवस्यदेहचितयंहिविद्यतेस्थूलश्चसूक्ष्मश्चतथैवकारणं तेषांक्रमाज्ज्ञातुलयोभवेद्यदास्यात्सच्चिदानंदवपुस्तदात्वयं ८० भिन्नोहमी
शादितिधीरविद्यावद्धस्तयाभेदधियाविमुक्तः एवंविमोक्षस्यमुदुर्लभस्यदेहस्यपातान्नसमातिसंभवः ८१ एवंश्रुत्वाशिष्ययुक्तःसजैनो
भाषावेषाद्यैर्विमुक्तोगुरूणां नित्यंधान्याकर्पणेसंप्रयुक्तःपद्मांघ्र्याद्यैरेषजातोवणिग्वै ८२ बौद्धस्ततस्तंशवलाख्यएत्यप्रोवाचबोधस्तवभो
निरर्थः नरस्यशृंगेणसमोह्यभेदःसर्वोत्तमःसन्किमतःप्रवृत्तः ८३ दृष्टंफलंत्वंपरिहायदूरमदृष्टमाकांक्षसिदृष्टद्रोही तत्रापितेनैवफलंपरोक्षे
शून्यंपरोक्षंनफलायकल्पं ८४ निर्जीवत्वाच्चाप्यपार्थंमतंतएकोप्यात्माचेतनोमेमतेतु भूत्वानेकःप्रेरकोहन्मुखानांनित्यंमुक्तोद्वैतशून्यःसु
खात्मा ८५ कर्ताभोक्ताहंपरानंदरूपोमन्वानःस्वाभीष्टमस्यास्तियावत् तावत्क्रीडन्नेषुदेहेपुपश्चाद्देहंत्यक्त्वामुक्तइत्युक्तआह ८६ सत्यशौ

चपरोयस्तुदेवतातिथिपूजनं सयातिब्रह्मणोलोकंयावदिंद्राश्चतुर्दश ८७ अग्निष्टोमंदेवताप्रीतिदंचेत्कुर्यादस्मादिंद्रलोकंसयाति सत्या
चपरोयस्तुदेवतातिथिपूजनं सयातिब्रह्मणोलोकंयावदिंद्राश्चतुर्दश ८७ अग्निष्टोमंदेवताप्रीतिदंचेत्कुर्यादस्मादिंद्रलोकंसयाति सत्या

ख्यंसत्पौंडरीकाख्ययातितत्तद्देवोपासकास्तंतमेव ८८ योयोयांयांतनुंभक्तःश्रद्धयार्चितुमिच्छति तस्यतस्याचलांश्रद्धांतामेवविदधाम्यहं
८९ इत्यादिवचनादस्यपरलोकगमादिकं सिद्धंतस्मान्नदेहस्यपातमात्राद्विमुच्यते ९० सर्वभूतेषुचात्मानंसर्वभूतानिचात्मनि संपश्यन्ब्रह्म
परमंयातिनान्येनहेतुना ९१ इत्यादिश्रुत्याज्ञानेनविनामोक्षोनलभ्यते इत्युक्तमतआत्मानंपरंज्ञात्वाविमुच्यते ९२ कल्पितांजीवतांहि
त्वासर्वानर्थप्रदायिनीं सच्चिदानंदरूपेणमुक्तिरुक्तासदास्थितिः ९३ तस्मात्त्वंमूढतांत्यक्त्वाभवस्वस्थइतीरितः परंगुरुंनमस्कृत्यतद्यशःस्त
वतत्परः ९४ बंदिमागधसूतानांवेषधारीबभूवह तस्माच्छिष्ययुतःप्रापप्रोद्यद्दिनकरप्रभः ९५ अनुमल्लपुरंतत्रदिनानामेकविंशति स्थित्वा
तत्रस्थितान्वीक्ष्यतानुवाचपरोगुरुः ९६ प्रभातमुखकालेस्वंकृत्यंवदतभोद्विजाः एवमुक्तानमस्कृत्यप्रोचुस्तेपुरवासिनः ९७ मल्लासुरहरः
स्वामिन्मल्लारीतिप्रसिद्धतां लोकेप्राप्तःपरेशोयस्तस्यमूर्तिमिमेवयं ९८ संपूज्यानुदिनंभक्त्याशुनस्तद्वाहनस्यच वेषभाषादिसंयुक्ताकंठेधृ
तवराटिकाः ९९ निःशंकास्त्रिषुकालेषुनाट्यवाद्यादिभिःप्रभुं मल्लारिंसुप्रसन्नंतंकृत्वावासंप्रकुर्महे १०० तत्कटाक्षजनितेहिसर्वदावर्धमान
सुखसागरप्लुताः तस्यगर्भगमिदंनुनित्यदार्चितयामनसुखेच्छयायुताः १०१ किंचवेदस्यसार्वात्म्यंप्रोक्तंतद्वाहनस्यच तद्विद्धितत्त्वमेवातोत
द्वेषादिकधारणं २ इच्छामजायतेन्यत्रततएवभवानपि वेदोक्तमिममाचारंसशिष्यःस्वीकरोतुवै ३ श्रुतिराहनमःश्वभ्यःश्वपतिभ्यश्चवोन
मः वराटकानिदास्यामोयोग्यानीत्युक्तआहतान् ४ एकोद्वितीयःखलुसर्वसाक्षीस्वमाययासर्वजगद्विधाता सदादिश्रुत्याभिहितःपरेशो
यद्गर्भजारुद्रविरिंचिमुख्याः ५ यथावीरभद्रादिकैरंशभूतैर्लयःसाध्यतेकापिरुद्रस्यनैव तथाप्यस्तितेषांविबोधाद्विमुक्तिस्तथाब्रह्मणोंशस्य
रुद्रस्यबोधात् ६ किंचैकादशरुद्राणामियंस्तुतिरुदाहृता तदंशानांकथंसास्यादेकस्यबहुतातथा ७ यस्यस्पृष्ट्वामृदास्नानंविप्राणांपरि
कीर्तितं तस्यवेषादिचिह्नस्यधारणंबहुदोषदं ८ एवंवंशप्रवृत्त्याहिश्ववेषादिविधारणं नित्यादिकर्मसंत्यागस्त्रिकालंनाट्यसक्तता ९ चरि
तंभवतांसर्वंब्राह्मण्यस्यविघातकं तस्मान्निरीक्षणेनापिमुखस्यभवतांकिल १० सूर्यावलोकनंशास्त्रेचोदितंमौनमेवतु कर्तव्यमितिसंप्रोक्ता

* कर्णाटभूमेःसकाशात्

न्यपतन्गुरुसन्निधौ ११ कृत्तमूलाययथावृक्षाराज्ञोमूलेऽपराधिनः तानवेक्ष्यदयायुक्तस्तिष्ठध्वमितिसोऽब्रवीत् १२ अथाज्ञयागुरोःशिष्याः
पद्मपादमुखाःखलु तच्छिरोमुंडनंनद्यामयुतस्नानमेवच १३ मृदाथमुंडनंभूयःशतस्नानंमृदातथा योग्यंचकारयित्वान्यत्प्रायश्चित्तमतंद्रि
ताः १४ ब्राह्मण्यमार्गगांश्चक्रुस्तांस्तेपितुपरंगुरुं नत्वास्तच्छिष्यतांयाताःशौचस्नानादितत्पराः १५ पंचपूजारताजाताःशास्त्राध्ययनसंर
ताः श्रीशंकरप्रसादेनमुक्तिभाजनतांगताः १६ तस्मात्पुरात्पश्चिममार्गगामीमरुंधसंज्ञंपुरमापशिष्यैः ढक्कादिवाद्यानुचलत्करौघैर्विचित्रवं
द्यादिबहुप्रपद्यैः १७ तत्रपुर्यांविचित्रंवैविष्वक्सेनस्यगोपुरं तत्पूर्वतःप्रपाशालांविपुलांतत्रकल्पनां १८ गृहादीनामसौकृत्वासम्यग्दर्भा
सनस्थितः मनोन्मन्यभिधांगुष्ठमात्रलक्ष्यंपरंप्रभुं १९ संपूर्णमंडलाकारमात्मानंसंनिरीक्ष्यसः पीयूषबिंदुसंदोहपानतृप्तांगएवहि २०
कुंडलिनींपुनर्मूलाधारंनीत्वातदीश्वरं स्तुत्वागणपतिंतत्रचिरमासमुखंगुरुः २१ तत्रत्याःस्वामिनंनत्वाविष्वक्सेनपरायणाः शंखचक्रविरा
जद्भुजदंडास्तोत्रपाणयः २२ ऊचुरस्मन्मतंमुख्यंविष्वक्सेनाधिदैवतं पुण्यदंसतुवैकुंठसेनापतिरुदाहृतः २३ तस्यभक्तावयंनास्तिभयंनोय
मराजतः देहपाताद्भटैस्तस्यचोदितेनयथाकिल २४ वैकुंठएवगंतव्यइत्युक्तःप्राहसोगुरुः मैवंनारायणस्यैषोविष्वक्सेनःप्रकीर्तितः २५
भक्तस्तथैवेशभक्तावैकुंठेसंत्यनेकशः तद्भक्ताअपिसंपूज्यास्तद्भक्तैरित्यनुज्ञया २६ कथंतेषामुपास्यत्वंस्वातंत्र्येणभवेत्किल प्रमाणाभाव
तस्तस्मात्सगुणत्वात्सएवहि २७ तल्लोकप्रेप्सुभिःसेव्यःपारंपर्येणमुक्तिदः नारायणस्तमेकंतुध्यातुःप्रत्यगभेदतः २८ मुक्तिःसाक्षादतोयू
यंयदिचेन्मुक्तिकांक्षिणः तदाद्वयमखंडंतंगुरुशास्त्रोपदेशतः २९ ध्यात्वासम्यक्प्रयत्नेनमुक्ताभवथमाचिरं इत्युक्तास्त्यक्तलिंगास्तेप्रणम्य
शिरसागुरुं ३० तदुपदेशेनसंप्राप्यविद्यांस्मृत्यादिदर्शिते कर्मादौसुरताःसर्वेबभूवुःसाधुवृत्तयः ३१ ततःसमागत्यतुमन्मथस्यभक्तानम
स्कृत्यगुरुंसमूचुः शृण्वस्मदीयंमतमद्भुतंत्वंयोमन्मथःसर्वहृदिस्थितःसः ३२ सर्गादिकर्तातउपासनीयःसर्वार्थिभिःसर्वनुतःपरात्मा सुवर्तु
लाकारविभूषणाभ्यांवशीकृतंयेनहृदिस्थिनाभ्यां ३३ कांताकदंबेनतदीयदर्शनस्पर्शनाभ्यांबहुसौख्यदाभ्यां कामात्मनःपूर्णसुखस्यल
ब्धिर्मोक्षोस्त्यतोयूयमपीहतस्य ३४ समुत्सवेपंचशरस्यचिह्नंधृत्वाद्यनंतेनसुखेनयुक्ताः यत्नेनमुक्ताभवथेतिसोक्तःप्रोवाचमैवंवदताप्रमा
णं ३५ कमलजप्रमुखाजगतःस्मृताउदयपालनसंयमनेरताः नचहरेःसुतएषहिपालकोनचसुतेसवितुर्हितथाप्रभा ३६ स्त्रीणांतत्सं

किंचानंगस्यमोक्षादिदातृत्वेशक्तताकुतः प्रद्युम्नस्यचकर्तृत्वंसृष्ट्यादे
गिनांसंगंदूरतःपरिवर्जयेत् इत्येवंप्रतिषेधस्यसत्वाद्दुष्टंभवन्मतं ३७ किंचानंगस्यमोक्षादिदातृत्वेशक्तताकुतः प्रद्युम्नस्यचकर्तृत्वंसृष्ट्यादे
र्नविरोधतः ३८ प्रत्यक्षादेरितिश्रुत्वाबत्वाकौंचविदादयः त्यक्तचिह्नाबभूवुस्तेपंचपूजादितत्पराः ३९ तस्माद्दुदक्पथायातंपुरंसागधमङ्ग
तं कुबेरोपासकास्तत्रकुबेरप्रमुखाःस्थिताः ४० नवनिध्यात्मसौवर्णपदकावलिशोभिताः ऊचुर्नवनिधीशत्वात्सर्वाधिकधनःकिल ४१
कुबेरस्तस्यभक्तानामस्माकंनदरिद्रता ततोनःपूर्णआनंदोब्रह्मरूपोस्तिभोयते ४२ कर्मणोप्यर्थमूलत्वात्तत्पतेःसेवनंवरं मोक्षाद्याकांक्षिभिः
सर्वैःकर्तव्यंसुप्रयत्नतः ४३ किंचब्रह्मादिकानांसधनदानेनपालकः तस्मात्समग्रलोकानांस्वाम्ययंसेव्यतांगतः तस्यसेवाकरीकाचिद्यक्षिणीसु
रसुंदरी महदैश्वर्यलाभस्तत्सेवनादपिजायते ४५ तस्मात्तदन्यसेवांयेकुर्वंतिमनुजादयः मोक्षाद्याकांक्षिणस्तेतुमंदाभाग्यविवर्जिताः ४६
इत्युक्तआचार्यउवाचयुष्मन्मतंप्रमाणेनविहीनमेव ४७ स्वामीकुबेरोस्तुपरोधनस्यत
तस्माद्भवंतोपिकुबेरसेवांकुर्वंतुमोक्षार्थमनन्यचित्ताः इत्युक्तआचार्यउवाचयुष्मन्मतंप्रमाणेनविहीनमेव ४७ स्वामीकुबेरोस्तुपरोधनस्यत
थापिकश्चिन्नहितेनतृप्तः लोभेनयुक्तस्यकुतोस्तितृप्तिरतोस्यधर्मोपिनविद्यतेऽणुः ४८ मोक्षस्यवार्तात्वतिदूरगास्तितस्मात्परित्याज्यमनर्थरूपं
द्रव्यंप्रयत्नेनमुमुक्षुभिःसत्सेव्यंनयस्यास्तिपुनर्वियोगः ४९ अर्थमनर्थंभावयनित्यंनास्तियतःसुखलेशःसत्यं पुत्रादपिधनभाजांभीतिःसर्वत
एषाविहितानीतिः ५० इत्युक्तेननुधर्मोपितत्साध्यइतिचेत्तथा अस्तुनामकुबेरस्तुसेव्योनैवधनार्थिना ५१ यतःप्राक्सुकृतादेवधनभाजो
जनामताः ब्रह्माहिरण्यगर्भ्योस्तिविष्णुर्लक्ष्मीपतिर्हरः ५२ हिरण्यवीर्यइंद्रस्तुसुवर्णाचलसंस्थितः एवंविधाधनेनास्यजीवंतील्यतिसाहसं
५३ महान्निदार्थकंवाक्यंनैववाच्यमितःपरं चिह्नानिसंपरित्यज्यस्नानसंध्यादितत्पराः ५४ अद्वैतविद्ययायुक्ताःपंचपूजारताःसदा भवते
त्युदिताःसर्वेगुरुपादांबुजेरताः ५५ त्यक्तचिह्नाबभूवुस्तेपंचपूजादितत्पराः इंद्रभक्तास्ततोनत्वातमूचुःपरमंगुरुं ५६ इंद्रःस्वामिन्देवगंधर्व
यक्षैःसर्वेशःसर्गादिकर्तासुसेव्यः ब्रह्माविष्णूरुद्रएषेतिवेदेतत्तच्छब्दैर्वाच्यएषैवनान्यः ५७ सर्वेशत्वंसर्वदातृत्वमस्यवेदेप्रोक्तंवामनश्चानुजो
स्य रत्नंसर्वतद्गृहेचामृताद्यंदेवाःसर्वेयस्यकुर्वंतिसेवां ५८ सर्वस्यात्मानिर्विशेषःपरात्मासर्वातीतःशिक्षकोसौयतीनां प्रायच्छत्तान्स्वार्थही
नान्वकेभ्यस्तस्मादिंद्रःसेवनीयोभवद्भिः ५९ श्रेयस्कामैरित्यसौप्रोक्तआहमैवंवाच्यंब्रह्मशब्दादिवद्भि पूर्णैश्वर्येसच्चिदानंदरूपइंद्रःशब्दोनै
ववज्राद्युक्तः ६० सदेवेत्यादिवाक्येषुपरंब्रह्मनिरूपितं कारणंजगतोयस्माद्ब्रह्मविष्ण्वादिसंभवः ६१ ब्रह्मणस्त्विंद्रवह्न्यादिदेवादीनांसमु

श० वि०

द्भवः इंद्रःस्रष्टेतिचेदन्येलोकपालाःकुतोनहि ६२ सर्वदातृत्वमप्यस्यसापेक्षंसर्वजंतुवत् सुधापानेनब्रह्मत्वेतदानंत्यंप्रसज्यते ६३ एकमे ङि०
वेतिवेदोहिव्यर्थःस्यात्तुतथासति सहस्रयुगकालस्यब्रह्मणोदिवसस्यवै ६४ चतुर्दशांशसंजीवीकथंस्यात्परमेश्वरः तस्मात्सर्वलयेशिष्टंसदा १
दिप्रतिपादितं ६५ जगत्कारणमेष्टव्यंश्रुतिरूपात्प्रमाणतः भद्रहर्यादिभिःशुद्धाद्वैतविद्यामुपाश्रितैः ६४ एवमुक्तागुरुंनत्वास्मार्तकर्मपरा
॥१६॥ यणाः बभूवुःपंचपूजादितत्पराःशिष्यतांगताः ६७ तस्माद्यमप्रस्थपुरंप्रयातस्तत्रस्थितोमासमथागतायें यमस्यभक्तामहिपात्मतप्तलोहां
किताबाहुषुनृत्यमानाः ६६ नत्वोचिरेकिंकरसंज्ञकाद्यालयस्यहेतुर्यमएवतस्मात् सृष्ट्यादिकर्तापिसएवनूनंततस्तदीयाःखलुमुक्तिभाजः ६९
यमायसोमंसुनुतयमायजुहुताहविः यमंहयज्ञोयच्छत्यग्निदूतोअरंकृतः ७० इत्येवंयज्ञभोक्तृत्वंश्रुतौप्रोक्तंयमस्यहि तस्मादयंपरंब्रह्मस्र
ष्ट्युत्पत्त्यादिकारणं ७१ तस्यमूर्तिर्द्विधाज्ञेयाशुक्लकृष्णविभेदतः यच्छुक्लंतत्परंब्रह्मेतिश्रुतःशुक्लरूपिणी ७२ यामूर्तिःसापरंब्रह्मतस्मान्निर्गुणतो
यमात् महत्तत्वादिसंभूतिद्वारारुद्रोयमस्यह ७३ जातोवतारएतस्मात्कृष्णवर्णोयमःकिल विष्णुनामासमुत्पन्नस्तस्यनाभिसरोजके ७४
रक्तवर्णोविधिस्तस्मादष्टौदिक्पतयोभवन् ग्रहाःसूर्यादयःसर्वजगज्जज्ञेचराचरं ७५ एवंकृत्वासशिक्षार्थंदक्षिणाशाधिपालकः दंडपाणि
र्महानीशोमहिषारूढआभवत् ७६ इंद्रादीनांनिजांशानांमध्येतद्वद्विलक्ष्यते भस्मनांतर्गतांगारवत्ससत्यादिरूपकः ७७ तस्माद्विशुद्धबुद्धा
दिरूपःसर्वस्यकारणं तस्यांशःसगुणोनैवनिर्गुणोपासनेप्रभुः ७८ कश्चित्तस्माद्वयंनीलवर्णस्योपासनंसदा कुर्मस्तेनयतोनाशंमूलाज्ञानंप्रप
द्यते ७९ तस्मिन्नष्टेयमःसर्वमितिबोधोविजायते ततःशुक्लयमस्यातिरूपोमोक्षोभवत्यतः ८० यूयंमोक्षार्थिनःसर्वेकुरुतानन्यचेतसः त
दीयोपासनंतस्यमुक्तिंप्राप्स्यथबोधतः ८१ इत्युक्तआचार्यउवाचमैवंवाच्यंविरुद्धंश्रुतितोभवद्भिः पुरापितुःशापवशाद्धिकश्चिद्द्विजःपुरं
प्राप्ययमस्यगेहं ८२ सनाचिकेताअवसत्त्रिरात्रमन्नंविनातंप्रतिथिंसुकांत्या युक्तंयमःप्रेक्ष्यसुवेपमानःप्रोवाचभूदेवमतीवनम्रः ८३ ति
स्रोरात्रीर्यदवात्सीर्गृहेमेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः नमस्तेस्तुब्रह्मन्स्वस्तिमेस्तुतस्मात्प्रतित्रीन्वरान्वृणीष्व ८४ इत्येवंतुयमेनासौनमःपूर्वमुदी ॥ १६
रितः नचिकेताउवाचैनंवचनंसुमनोहरं ८५ शांतसंकल्पःसुमनायथास्याद्वीतमन्युर्गौतमोमाभिमृत्यो त्वत्प्रसृष्टंमाभिवदेत्प्रतीतएतत्त्रयाणां
प्रथमंवरंवृणे ८६ यमउवाच यथापुरस्ताद्भवताप्रतीतऔद्दालकिरारुणिर्मत्प्रसृष्टः सुखंरात्रीःशयितावीतमन्युस्त्वांददृशिवान्मृत्युमुखात्प्र

उभेतीर्त्वाअशनायापिपासेशोकातिगोमोदतेस्वर्गलोके ८८ नचिकेताउवा
मुक्तं ८७ स्वर्गेलोकेनभयंकिंचनास्तिनतत्रत्वंजरयाबिभेति उभेतीर्त्वाअशनायापिपासेशोकातिगोमोदतेस्वर्गलोके ८८ नचिकेताउवा
च सत्वमग्निस्वर्ग्यमध्येषिमृत्योप्रब्रूहित्वंश्रद्दधानायमह्यं स्वर्गलोकादमृतत्वंभजंतेएतद्द्वितीयेनवृणेवरेण ८९ एवमुक्तउवाचाग्नेःस्वरूपंयम
आदरात् नचिकेतास्ततःप्राहमृत्युंबुद्धिमतांवरः ९० येयंप्रेतेविचिकित्सामनुष्येअस्तीत्येकेनायमस्तीतिचैके एतद्विद्यामनुशिष्टस्त्वयाहंवरा
णामेषवरस्तृतीयकः ९१ एवमुक्तोयमस्तस्यलोभमुत्पादयन्बहु धनादिनावरस्यास्यगोप्यतामभिलक्ष्यसः ९२ अथैनंलोभनिर्मुक्तंविद्या
र्थिनमकल्मषं दृष्ट्वाप्राहयमस्तत्त्वंसुगोप्यमधिकारिणे ९३ सर्ववेदायत्पदमामनंतितपांसिसर्वाणिचयद्वदंति यदिच्छंतोब्रह्मचर्यंचरंतितत्तेपदं
संग्रहेणब्रवीम्योमित्येतत् ९४ अशरीरंशरीरेष्वनवस्थेष्ववस्थितं महांतंविभुमात्मानंमत्वाधीरोनशोचति ९५ यस्यब्रह्मचक्षत्रंचउभेभव
तओदनः मृत्युर्यस्योपसेचनंकइत्थावेदयत्रसः ९६ इत्यादिनोपदिष्टःसकृतार्थोगृहमागमत् इतिश्रुतौयमेनैवमृत्युर्ब्रह्मोपसेचनं ९७ प्रो
क्तंनचस्वयंस्वस्यभक्ष्यंभवितुमर्हति ततोयमात्परंब्रह्मकारणंसर्ववस्तुनः ९८ ब्रह्मविष्ण्वादिरूपेणसेवनीयंप्रयत्नतः उपसेचनलिंगानांधारणे
नविमुक्तता ९९ इत्युक्तिरवबोधान्नीभवतांसाहसात्मिका मार्कंडेयेश्रृणुप्रोक्तंपुराणेभक्तवत्सलः २०० महादेवोयमंपीड्यस्वभक्तपरि
पालनं अकरोत्किंचपापात्मासुंदराख्योबभूवह २०१ जागरणंतुकृतंतेनधनलोभात्कदाचन शिवरात्रौततोदूतैर्यमस्याकृष्यतांगते २०२
जीवेस्यततआगत्यशिवदूतैःसुताडिताः परित्यज्यंगतायाम्याःशिवलोकंससुंदरः ३ नीतःशैवैर्हिभक्तानामग्रगण्योबभूवह अजामिलोपि
कर्माणिब्राह्मणानांविहायतु ४ नीचस्त्रीसंगतःपुत्रान्पंचप्राप्यकनिष्ठकं नारायणंब्रुवन्प्राणांस्यजन्याम्यैःप्रपीडितः ५ विष्णुदूतैस्तदागत्य
रक्षितस्तेतुकिंकराः यमस्यभग्नसंकल्पास्तन्मंदिरमथोययुः ६ तस्माद्यूयंपरित्यज्यचिह्नान्यद्वैतनत्पराः वैदिकंकर्मकुर्वंतःशुद्धास्तेनततःपरं
७ गुरूपदेशतोज्ञानंलब्ध्वाशांतिमिमिष्यथ इत्युक्तास्तंप्रणम्याशुवभूवुस्तेतथैवहि ८ तस्मात्पापप्रयागाख्यंस्थलंपुण्यविवर्धनं गंगाया
यमुनायाश्वसरस्वत्याश्वसंगमं ९ तत्रस्थितेगुरौपाशचिह्नावरुणसेवकाः समागतास्तथावायूपासकाध्वजचिह्निताः १० भूमिदेवस्यसेवा
यांरताःपूर्णाकंधारिणः तीर्थस्योपासकाबिंदुचिह्नाश्चैवसमागताः ११ तत्राद्यानांगुरुःप्राहगुरुंतीर्थपतिस्तदा श्रोतव्यंमन्मतंचित्रंपुण्यदंय
तिशेखर १२ सर्वोत्तमोजीवनहेतुरस्यदेवादिवंद्योवरुणःसुसेव्यः तंप्राणनाथस्त्ववदत्समीरःसर्वस्यहिप्राणउपासनीयः १३ मुनिस्ततो

नंतउवाचचैनंसर्वोत्तमाभूमिरुपासनीया नत्वाततोजीवप्रदोजगादतीर्थंसुसेव्यंसकलैःसुखाशैः १४ तच्चत्रिवेणीतिप्रथामुपेतंपापापहंयस्य
हिबिंदुमात्रं केचित्तुतद्दर्शनतोविमुक्तिवदंतिसर्वोत्तमतातवोस्य १५ अंबत्वद्दर्शनान्मुक्तिर्नजानेस्नानजंफलं नारदेनोक्तमेतद्धिकिंचसर्वात्मकं
जलं १६ आपोवैस्युरिदंसर्वमित्यादिश्रुतिवाक्यतः तस्मात्सर्वात्मकत्वेनब्रह्मत्वेस्यैतदेवहि १७ मोक्षार्थिभिर्भवद्भिस्तुसेवनीयंप्रयत्नतः इ
त्येवमुक्तआहेदंशंकरःपरमोगुरुः १८ उपासनासुखजननीनकार्यगाह्यनित्यतांगसकलकार्यगामता जलस्यसर्वपरमतातुयोदिताश्रुतौतु
साक्षितिमुखराद्यपेक्षया १९ मुक्तिरतोयुष्माकमलभ्यानास्तिविमोक्षेऽनित्यसुसेवा साधनमात्मज्ञानमतःसंसाध्यमलंमोहंपरिहाय २०
विश्वसुखातिक्रांतममेयंप्राप्यविमुक्ताआभवथाद्धा तेश्रुतवंतःश्रीगुरुशिष्यास्त्यक्तनिजांकाःसंप्रतिजाताः २१ शून्यवादीततोनत्वागुरुंप्रो
वाचशंकरं किंचिद्दृष्टंमयामार्गेसावधानमनाःशृणु २२ मृगतृष्णांभसिस्नातःखपुष्पकृतशेखरः सुखंवंध्यासुतोयातिशशशृंगधनुर्धरः २३
तंदृष्ट्वादेवभावेनप्रणम्यशिरसाभृशं आगतोस्मियतिश्रेष्ठतवांतिकमहंद्रुतं २४ इत्युक्तआहभोविद्वत्तरत्वन्नामकिंस्मृतं सतुप्रोवाचभोः
स्वामिन्निरालंबनसंज्ञकः २५ अहंपितामदीयस्तुकृत्स्ननामेतिविश्रुतः मन्मतस्यप्रवक्तेतिश्रुत्वाप्राहपरोगुरुः २६ शून्यत्वात्तेमतंनिंद्यंशून्य
स्यब्रह्मतानच तमेवभांतमित्यादिश्रुतेस्तस्माद्विमूढतां २७ विहायाद्वैतविद्यांत्वंसमाश्रित्यसुखीभव इत्युक्तस्तंपुनःप्राहखंब्रह्मेतिश्रुतीरितं २८
आकाशःसर्वभूतेभ्योज्यायान्सोस्तिपरायणं तंप्रत्येवास्तमायांतीत्येवंहिश्रुतिरब्रवीत् २९ किंचवेदांतआकाशस्तल्लिंगादितितस्यसां निश्चि
ताब्रह्मतातस्मात्स्वीकर्तव्यमिदंमतं ३० इत्युक्तोसौगुरुवरआहमैवंमूढतमोगकदापि वाच्यंखंयत्सगुणमतोनास्यब्रह्मत्वंनतुपवनस्य ३१ हे
तुःप्रोक्तंखलुपरकार्यंसद्वेदेसावुभयविबोधी आकाशोतःपरमिहबोध्यःशब्देनैतेननतुखमेतत् ३२ ज्यायस्त्वंयस्यखादिभ्यःश्रुत्यासम्यगुदी
रितं तद्ब्रह्मानंदविज्ञानंसन्मात्रंद्वैतवर्जितं ३३ अंतवत्त्वेनदोषेणशालावत्यमतंपुरा निंदित्वाशैवलीराजादोषयुक्तंकथंवदेत् ३४ एवंमसौश्र
वणादतिहृष्टःप्राहगुरुंपरमंपुनरित्थं दर्शनतोभवतामहमेषःपावनतामुपयातइतस्त्वं ३५ ब्रह्मोपदेशंकुरुयेनमुक्तःस्यामित्यसौप्रोक्तउवाचभू
यः आकाशआत्मानमुपास्वसम्यक्हृदिस्थितंतेननवास्तुमोक्षः ३६ इत्युक्तआचार्यवरस्यशिष्योबभूवतंशंकरदेशिकेंद्रं प्राहागतोभक्तइ
दंवराहेनत्वायतेमेशृणुसुंदरंमतं ३७ प्रलयांभसिलीनादिवराहेणोद्धृतामही येनतंमुक्तिसिद्ध्यर्थंभजध्वंयुक्तचेतसः ३८ दंष्ट्रांकितभुजाः

तदांकैःकूर्ममत्स्यादेरंकनीयंशरी
सर्वइत्युक्तःप्राहतंगुरुः मैवंहिब्राह्मणेनैकंतपःकार्यंप्रयत्नतः ३९ वेदोक्तेयदिचिह्नानांधारणेस्तिदुराग्रहः
रकं ४० वेदोक्तकर्मणोन्येनविप्रस्यार्थोनकश्चन सगुणंब्रह्मसंसेव्यमितिचेत्सेव्यतांमुदा ४१ शिवविष्ण्वादिरूपंतत्संत्यक्त्वाचिह्नधारणं
विप्रसंत्यक्तसंध्यादिकर्मादंडंसमर्हति ४२ तस्मान्मूढमतिंत्यक्त्वालिंगशून्यःकुलोचितं कुरुकर्मैवतेनत्वंशुद्धोमुक्तिंगमिष्यसि ४३ ज्ञानला
भेनसोप्युक्तोज्ञानंप्राप्यगुरोर्मुखात् बभूवलक्ष्मणाख्योस्यशिष्यःपरमतापसः ४४ ततोऽन्यःकामकर्माख्योमनुलोकसुसेवकः आगत्यैतंनम
स्कृत्यप्रोवाचपरमंगुरुं ४५ लोकानांसंघएवास्तिपरेशोतोमुमुक्षुभिः सेवनीयोभवद्भिर्वैसएवानन्यबुद्धिभिः ४६ सत्यलोकात्मिकामुक्ति
स्तत्सेवातोनचान्यथा इत्युक्तःप्राहभोमूढतमनानित्यसेवया ४७ अनृतभूतयामुक्तिःसत्यरूपानलभ्यते इत्युक्तोसौगुरुंनत्वाऽद्वैतवृत्त्याश्रि
तोभवत् ४८ ततस्त्रिगुणसेवायांतत्पराःपरमंगुरुं नत्वोचुर्हिगुणाःस्वामिन्कारणंजगतांमताः ४९ ब्रह्मादीनांहिकर्तारस्तेषांसेवापरावयं कु
तार्थाःसर्वसंपूज्यास्तेषांसर्वमयत्नतः ५० भवद्भिरपितेसेव्याइत्युक्तःप्राहसोगुरुः जन्योपासनमत्यंतमयुक्तंमोक्षसिद्धये ५१ इत्युक्ताःकु
मतिंत्यक्त्वाशुद्धाद्वैतपरायणाः तथैवशिष्यतांयातास्ततःकश्चित्समागतः ५२ सांख्यःप्रधानवादीतंनत्वोवाचपरंगुरुं उपादानंप्रधानंतुकार
णंजगतःस्मृतं ५३ स्मृतिःप्रमाणमस्माकंमन्वादिस्मृतिवद्यते गुणसाम्यंप्रधानंस्यान्महत्तत्त्वादिकारणं ५४ अव्यक्तंव्यक्तभावंचजगत्ये
कंपरात्परं तदुपासनमात्रेणमुक्तिःसन्निहितानृणां ५५ इत्यादिस्मर्यतेतस्मात्स्वीकर्तव्यमिदंमतं इत्युक्तआहभोःसांख्यमैवंवेदविरोधतः
५६ स्मृतेर्वेदानुकूलायाःप्रामाण्यंहिनचान्यथा अशब्दत्वात्प्रधानंतुजगतःकारणंनहि ५७ वेदोक्तस्येक्षितृत्वस्याभावादस्यजडस्यवै ना
शब्दमीक्षितेरित्यतआचार्यैरुदीरितं ५८ तस्मात्सऐक्षतेत्यादिश्रुतिवाक्यान्नकारणं प्रधानंकिंतुचैतन्यंपरंब्रह्मसदात्मकं ५९ अतोमूढम
तिंत्यक्त्वाऽद्वैतनिष्ठोभवाधुना इत्युक्तःप्राहनाशब्दंप्रधानंश्रुतिरस्तिहि ६० अचिंत्यमव्यक्तमरूपमव्ययंतथारसंनित्यमगंधवच्चयत् अना
द्यनंतंमहतःपरंध्रुवंनिचाय्यतंमृत्युमुखात्प्रमुच्यते ६१ इत्यव्यक्तेनशब्देनप्रधानंप्रतिपादितं इतिश्रुत्वागुरुःप्राहप्राज्ञःप्रकरणादिना ६२ उ
क्तशब्देनसंप्रोक्तःकिंचज्ञानंनसंभवेत् गुणसाम्यसुसेवातःसत्वस्योद्रेकरूपकं ६३ तस्मादेतन्मतंत्यक्त्वाऽद्वैतविद्यांसमाश्रितः सुखीभवेतिसं
प्रोक्तःसांख्योसौशिष्यतांगतः ६४ ततोन्यस्तंनमस्कृत्यकापिलोयोगवित्तमः प्राहप्रामाणिकंयोगान्मुक्तिरस्तीतिमेमतं ६५ विविक्तदेशे

चसुखासनस्थःशुचिःसमग्रीवशिरःशरीरः अंत्याश्रमस्थःसकलेंद्रियाणिनिरुध्यभक्त्यास्वगुरुंप्रणम्य ६६ हृत्पुंडरीकंविरजंविशुद्धंविचिंत्यमध्येविशदंविशोकं अचिंत्यमव्यक्तमनंतरूपंशिवंप्रशांतंअमृतंब्रह्मयोनिं ६७ अनादिमध्यांतविहीनमेकंविभुंचिदानंदमरूपमद्भुतं उमासहायंपरमेश्वरंप्रभुंत्रिलोचनंनीलकंठंप्रशांतं ६८ ध्यात्वामुनिर्गच्छतिभूतयोनिंसमस्तसाक्षितमसःपरस्तात् इत्यादिवाक्यैर्निगमेषुसंस्थैःप्रमाणभूतंयातिमतंमदीयं ६९ किंचागमेषुसंप्रोक्ताजपविद्याविधानतः भेदनंचक्रषट्कस्यतथाप्रोक्तमतोमतं ७० मुक्त्याकांक्षिभिराचार्यसेवनीयंप्रयत्नतः इत्युक्तआहमैवंभोवेदैर्देहरसंज्ञिका ७१ विद्योक्तानत्वदुक्तोयंयोगोमोक्षस्यकारणं ७२ अजपामूलमंत्रस्यसोहमित्यर्थनिश्चयात् जीवेशयोर्भिदागंधाभावाद्योगःकथंभवेत् ७३ सर्वभूतस्थमात्मानंसर्वभूतानिचात्मनि संपश्यन्ब्रह्मपरमंयातिनान्येनहेतुना ७४ इत्यादिश्रुतिभिर्मार्गोज्ञानादन्योनिषिध्यते षट्चक्रभेदनाद्योयंमुक्तेःकिंचश्रुतिर्जगौ ७५ शांत्यादियुक्तआत्मानंपश्येदात्मनिकेवलं अधिकारीशुद्धचित्तःश्रवणाद्यैःसुसाधनैः ७६ वेदांतविज्ञानसुनिश्चितार्थाःसंन्यासयोगाद्यतयःशुद्धसत्वाः तेब्रह्मलोकेषुपरांतकालेपरामृतात्परिमुच्यंतिसर्वे ७७ इत्यादिभिःश्रौतवचोभिरेषयोगोभवत्प्रोक्तउपेक्षणीयः इत्युक्तआचार्यमुवाचभूयोयतेऽपरिज्ञानवशाद्ब्रवीषि ७८ अज्ञात्वाखेचरींमुद्रांब्रह्मज्ञोहमितिद्विजः योवदेत्तस्यजिह्वायांछेदंकुर्वीतशासनं ७९ नदीत्रितयसंयोगंत्रिकूटाख्यमितिद्विजः ब्रह्माहमितियोब्रूतेतज्जिह्वाच्छेदमाचरेत् ८० अविदित्वाद्विजोयस्तुश्रृंगाटकमतःपरि ब्रह्माहमितियोब्रूतेतज्जिह्वाछेदमाचरेत् ८१ मनोन्मन्यास्वरूपंहिपूर्णमंडलमार्गतः अविदित्वाब्रवीद्ब्रह्मेत्यस्यजिह्वांहिसंछिनेत् ८२ अंगुष्ठमात्रस्यपुंसःस्थानज्ञानंविनाद्विजः ब्रह्मास्मीत्युच्यतेयेनतस्यजिह्वांहिसंछिनेत् ८३ अवस्थात्रितयस्थानंनीचोन्मत्तविगर्हितं अज्ञात्वाब्रह्मयोब्रूतेशिरस्तस्यपतत्यधः ८४ लयवित्परमंयातिब्रह्मनान्येनवर्त्मना हठवित्परमंस्थानंयातिब्रह्मसनातनं ८५ इत्यादिवचनैर्योगःसर्वदामोक्षकांक्षिभिः भवद्भिरतियत्नेनस्वीकर्तव्यइतीरितः ८६ गुराहवृथैवत्वंजल्पस्यज्ञानमोहितः अष्टांगयोगजामुक्तिर्नतुकिंतुविशुद्धिदः ८७ ऐकाग्र्यदस्तथाश्रौतोविरुद्धोवेदतोनहि खेचर्यादिकमुद्रायाविज्ञानेनविनानहि ८८ मुक्तिरित्युक्तिरत्यंतसाहसादेवनान्यथा ब्रह्मज्ञानाद्यतोमुक्तिंवेदोवदतिनान्यतः ८९ तस्माच्छ्रुतिप्रोदितकर्मनिष्ठाविशुद्धचित्तःपुरुषोविवेकी वैराग्यवांश्छांतिदमादियुक्तोमुमुक्षुरात्मानमजंसहिष्णुः ९० गुरोर्मुखात्तत्त्वमसीतिवाक्यंश्रुत्वाविचार्यात्मगतं

सुसम्यक् सच्चित्सुखंभेदविहीनमद्धाविज्ञायमुक्तोभवतीतिसोक्तः ९१ नत्वागुरोःपादयुगंसुभक्त्याशिष्योबभूवाथपराणुवादं समाश्रिता
धीरशिवादयोन्येसमागताःप्रोचुरिदंयवीशं ९२ कर्तापरेशोयदुदीरितोस्तिसृष्टौसभूम्याद्यणुकान्युनक्ति नित्यानूलयेतान्वियुनक्तिचैषो
भूम्यादिभिर्लोकगुरुःसलोकान् ९३ विधायसृष्ट्वाविविधांश्चजीवानास्तेस्वयंसाक्षिवदेषपूर्णः इत्युक्तआचार्यउवाचमैवंश्रुतेर्विरोधाच्छृणु
तद्विरोधं ९४ परात्मनःखादिकसर्गउक्तःश्रुतौकथंतेषुतुनित्यतातः परेशएकःखलुनित्यरूपोजन्यंजगत्सर्वमनित्यमेव ९५ जगदीशादजन्य
त्वंकेषुचिद्यदिवर्तते तस्यतत्त्वंनवक्तव्यंसर्वस्याजनकत्वतः ९६ अधीत्यगौतमींविद्यांस्त्रागालीयोनिमाविशेत् इत्यादिवचनात्तांतुविहायाद्वै
तमाश्रिताः ९७ मुक्ताभवथशुद्धात्मविज्ञानाद्गुरुभक्तिजात् इत्युक्तास्तेवभूवुर्वैशिष्याधीरशिवादयः ९८ प्रातःस्नात्वात्रिवेण्यांहिगुरुःशि
ष्यसमन्वितः प्राङ्मार्गात्प्राप्यपक्षार्धात्काशींकाशीशसंयुतां ९९ स्तुतिभिःकरतालैश्चशंखादिनिनदैस्तथा चित्रमासीत्तत्रमासत्रितयंसंस्थि
तेगुरौ ३०० स्वामिनंकेचिदागत्यनत्वातंकर्मवादिनः प्रोचुर्विश्वस्यसृष्ट्यादिकर्मणोभवत्तिप्रभो १ रम्येनकर्मणारम्यांयोनिंविप्रादिकस्य
वै पापेनकर्मणापापांशूद्रादेस्तांव्रजंतिहि २ कर्मणैवहिसंसिद्धिमास्थिताजनकादयः इत्यादिकैर्वचोभिर्मुमुक्षुभिःकर्मयत्नतः ३ कार्यं
सुखस्यसंप्राप्तिर्मोक्षइत्यभिधीयते इत्युक्तःप्राहमैवंयस्यैतत्कर्मेतिहिश्रुतिः ४ ब्रह्मकार्यंजगद्भूतेध्येयंतत्कारणंतथा इत्युपक्रम्यसंब्रूतेशंभु
राकाशमध्यगः ५ शतंचसत्यमित्यादिश्रुतिश्चास्तिविबोधिका ब्रह्मणःसूक्ष्मस्थूलापिविश्वकारणरूपिणः ६ तस्मात्सर्वज्ञएवेशःकारणंज
गतोमतं नैवकर्मजडत्वाद्येमंदास्तेथाश्रयंतितत् ७ इत्युक्तास्तेपरांविद्यामाश्रिताःशिष्यतांगताः ततोवाभरणाख्यस्तंशिष्यैःसहसमागतः
८ नत्वोवाचसचंद्रोसौसर्वलोकप्रकाशकः देवादिपालकःपूर्णिमादौपूज्यःप्रयत्नतः ९ तदुपासनयामुक्तिरित्युक्तःप्राहनास्तिसः अनि
त्योपासनालभ्योनित्योमोक्षःकदाचन १० इष्टापूर्तादिकंकर्मकृत्वाचंद्रस्यमंडलं प्राप्यभूयोस्यलोकस्यप्राप्तिरुक्तापरात्मना ११ धूमोरा
त्रिस्तथाकृष्णःषण्मासादक्षिणायनं तत्रचांद्रमसंज्योतिर्योगीप्राप्यनिवर्तते १२ एषदेवान्नमित्युक्तंश्रुतौतस्मान्नमुक्तता अन्नस्यास्यसुसेवातः
किंतुतल्लोकसंस्थितिः १३ तस्मान्मूढमतिंत्यक्त्वाशुद्धाद्वैतंसमाश्रितः मुक्तोभवेतिसंप्रोक्तःसच्छिष्योसौबभूवह १४ ततोभौमादिकानांये
ग्रहाणांसमुपासकाः नमस्कृत्योचुराचार्यंशंकरंतेकृपानिधिं १५ भौमादिकस्यसेवातोमुक्तिर्वेदेप्रचोदिता तस्मान्मुमुक्षुभिःसेव्याएतएव

सदेवेत्यादिभिर्वाक्यैर्वेदैसम्यगुदीरिता ... १७ सेवाप्रोक्तानमुक्त्यर्थंसातुचेतनबोधतः डि०

शं०वि० प्रयत्नतः १६ इत्युक्तआहलोकानांग्रहपीडानिवृत्तये सेवाप्रोक्तानमुक्त्यर्थंसातुचेतनबोधतः १७ सदेवेत्यादिभिर्वाक्यैर्वेदैसम्यगुदीरिता

इतिश्रुत्वाथतेसर्वेगताःशिष्यत्वमादरात् १८ ततःक्षपणकोनत्वागुरुमाहप्रभोमया त्वदाश्रयेणषण्मासःकालोनीतस्ततोमतं १९ मदीयं १०

श्रृणुकालोयंपरंब्रह्मसुसेव्यतां मुक्त्यर्थमितिसंप्रोक्तःप्राहकालस्यजन्महि २० संवत्सरोजायतकालएषइतिश्रुतिःप्राहततःकुबुद्धिं विहाय

॥ ११॥ शुद्धाद्वयमाश्रितस्त्वंमुक्तोभवेत्युक्तइमंमुनीशं २१ समस्तसर्वज्ञशिरोवतंसंनत्वाद्वयेब्रह्मणिसंरतोभूत् ततःपितृणांसमुपासकास्तंसमागताः

प्राहुरिदंयतीशं २२ अग्निष्वात्तादयश्चंद्रमंडलोपरिवासिनः नित्यमुक्तास्त्रयस्तेषुमूर्तिहीनाःसमूर्तयः २३ चत्वारःसेवनंतेषांधर्मादिफलदं

स्मृतं मुक्तिदंचैवसंप्रोक्तंसेव्यास्तेतःप्रयत्नतः २४ श्राद्धकृत्सत्यवादीचगृहस्थोपिविमुच्यते चांद्रमासप्रमाणेनपितृमध्याह्नमीरितं २५ अ

मातस्तत्रकर्तव्यंश्राद्धादिपरितुष्टये तेषामितिससंप्रोक्तःप्राहतान्परमोगुरुः २६ मैवंनेत्यादिवेदोहिकर्ममुक्तेर्नसाधनं इतिब्रूतेपरंब्रह्मप्रामो

त्यात्मज्ञइत्यपि २७ तस्मात्कर्माणिसंत्यज्यशुद्धचित्तःपरेश्वरं श्रुत्वागुरुमुखात्सम्यक्विचार्यसुविमुच्यते २८ इतिश्रुत्वाथतेसर्वेसत्यशर्मा

दयोगुरुं नत्वातदुपदेशेनसंगताःकृतकृत्यतां २९ शंखपादाभिधःकश्चित्कुज्वलीटस्तथैवच समागत्योचतुर्नत्वायतीशंपरमंगुरुं ३० य

त्रनारायणःशेतेससेव्यःशेषईश्वरः गरुडोथविमोक्षायतस्यवाहनतांगतः ३१ इत्युक्तआहचेदेवंनारायणसुसेवनं कर्तव्यंतेनशुद्धांतःकरणो

गुरुमुखात्परं ३२ श्रुत्वाविचार्यविज्ञायततोमुक्तिगमिष्यथ इत्युक्तौतौगुरुंनत्वासच्छिष्यत्वमुपागतौ ३३ चिरकीर्तिमुखाःसिद्धोपासका

स्ततआगताः प्रणम्योचुर्वयंमंत्रांल्लब्ध्वासिद्धोपदेशतः ३४ कृतकृत्यास्ततोयूयंभवथैतन्मतानुगाः श्रीशैलादिकशैलेषुप्राप्यमंत्रादिकांश्छुभा

न् ३५ सत्यनाथादयःसिद्धाःकृतार्थाश्चिरजीविनः तेषांसमुपदेशेनतथाभूतावयंस्थिताः ३६ विचित्रांजनमुख्याभिर्विद्याभिःसर्ववेदिनः

तस्मादस्मन्मतंभेत्तुंनशक्यंकेनविद्यते ३७ इत्युक्तआचार्यउवाचफल्गुफलेप्सुभिर्भाषणमप्ययुक्तं विचित्रवेषैर्हिकियानिहार्थोदोषाम्भिरे

वास्तिपरस्वलाभात् ३८ तथाचिरंजीवनतःफलंनोदेहोयतोदुःखमयोस्तिसर्वदा तस्माद्विशुद्धैःकिलसाधनीयोदेहस्यत्यागेनविमुक्त्युपायः ॥१

३९ श्रुत्वाथतेशिष्यवराबभूवुर्गंधर्वभक्तास्ततऊचुरार्यं विश्वावसूपासनतोहिनादविज्ञानतोबिंदुकलाविबोधात् ४० कृतकृत्यावयंयूयम

तोमुक्त्यभिलाषिणः श्रमंगांधर्वविद्यायांकुरुध्वंसर्वदैवहि ४१ इत्युक्तःश्रीगुरुःप्राहमैवंवेदविरोधतः तत्रशब्दाद्यतीतत्वंब्रह्मणःप्रतिपादितं

४२ अशब्दमस्पर्शमरूपमव्ययंतथारसंनित्यमगंधवच्चयत् अनाद्यनंतंमहतःपरंध्रुवंनचाप्यतंमृत्युमुखात्प्रमुच्यते ४३ इतिस्मृतौतथाभाक्त
परःशब्दाद्यगोचरः नादबिंदुकलातीतंयस्तंवेदसवेदवित् ४४ इतितस्माद्भवंतोपिब्रह्मनादाद्यगोचरं भजध्वंतेनमुक्तितुगमिष्यथनसंशयः ४५
इत्युक्ताःशिष्यतांयातास्ततोवैतालसेवकाः चिताभस्मानुलिप्तांगाभूतसेवारतास्तथा ४६ बभाषिरेगुरुंनत्वास्वामिन्भूताद्युपासकाः सर्वे
लोकवशीकारेसमर्थाइतितद्वचः ४७ श्रुत्वोवाचयतीशस्तान्नयुक्तंभवतांमतं ब्राह्मणानांनसंप्रोक्तायतोभूताद्युपासना ४८ अपसर्पंतुये
भूतायेभूताभुविसंस्थिताः येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया ४९ इत्यादिवचनात्तस्माद्दुष्टाचारंविहायतं स्ववर्णोचितकर्माणिकुरुता

यतिराडथतेषुतेषुदेशेष्वितिपाषंडपरान्द्विजान्विमथ्नन्॥अपरांतमहार्णवोपकंठंप्रतिपेदेप्रतिवादिदर्पहंता॥
॥ २९ ॥ विललासचलत्तरंगहस्तैर्नदराजोभिनयन्निगूढमर्थं ॥ अवधीरितदुंदुभिस्वनेनप्रतिवादीवमहा
न्महारवेण ॥ ३० ॥ बहुलभ्रमवानयंजडात्मासुमनोभिर्मथितश्चपूर्वमेव ॥ इतिसिंधुमुपेक्ष्यसक्षमावा
निवगोकर्णमुदारधीःप्रतस्थे ॥ ३१ ॥

द्वैतमाश्रिताः ५० स्वकर्महीनानगतिंलभंतेश्रुत्वेदमाचार्यवरंप्रणम्य स्वकर्मशीलाःकिलपंचपूजापरायणाःशिष्यवराबभूवुः ५१ ॥ २८॥
तदेतत्सर्वंसंक्षिप्याह यतिराडिति अपरांतमहार्णवोपकंठंपश्चिमसमुद्रसमीपं ॥ २९ ॥ चलद्भिस्तरंगात्मकैर्हस्तैस्तथावधीरितास्तिरस्कृतोदुं
दुभिस्वनोयेनतथाभूतेनमहताशब्देननिगूढमर्थमभिनयन्प्रकटयन्महान्नदराजःसमुद्रःप्रतिवादिवद्विललासविशुशुभे ॥ ३० ॥ आचार्यैस्त
र्हिकिमित्युपेक्षितइत्याशंक्याह बहुलेति प्रतिवादितुल्योपिबहुलावर्तलक्षणभ्रमवानूजडात्मापुनश्चदेवलक्षणैःसंस्कृतचित्तैःपंडितैःपुरैवमथि
तश्चेतिहेतोःसमुद्रमुपेक्ष्यसश्रीशंकराचार्यःक्षमावानिवोदारधीर्गोकर्णंप्रतस्थे इवशब्दउत्प्रेक्षार्थकः ॥ ३१ ॥

सश्रीशंकरस्तत्रसरित्पतिंसमुद्रमवगाह्यहिमाचलसुतायाः पार्वत्याः प्रियंमहादेवमासाद्यचतुर्भिर्यकारैर्भुजंगप्रयातमित्युक्तलक्षणभुजंगप्रयात
वृत्तैरम्यमद्भुतैरर्थैर्विचित्रंस्तवसत्तमंरचयामास ॥ ३२ ॥ स्तवसत्तमरचनानंतरं वेदांतविद्यांनम्रीभूतेभ्योविनेयेभ्यःप्रतिपादयंतमेनंश्रीशंक
रं हरदत्तसमाख्योऽधिगम्यस्वगुरुंनीलकंठंप्रोक्तवान् यत्प्रोक्तवांतदुदाहरति हेभगवन्शंकराख्योयतिरार्यपादान्भवतोविजिगीषुरिहागत्य
॥२०॥ शिष्यैःसहशिवालयेसमास्ते तस्योपेक्षणीयत्वंवारयति स्ववशीकृताभट्टपादमंडनमिश्रादयोयेनसः ॥ ३४ ॥ इतितस्यहरदत्तस्यवचनं

अवगाह्यसरित्पतिंसतत्रप्रियमासाद्यतुषारशैलपुत्र्याः ॥ स्तवसत्तममद्भुतार्थचित्रंरचयामासभुजंगवृत्तरम्यं
॥ ३२ ॥ तदनंतरमागमांतविद्यांप्रणतेभ्यःप्रतिपादयंतमेनं ॥ हरदत्तसमाह्वयोधिगम्यस्वगुरुंसंगिरतेस्मनी
लकंठं ॥ ३३ ॥ भगवन्निहशंकराभिधानोयतिरागत्यजिगीषुरार्यपादान् ॥ स्ववशीकृतभट्टमंडनादिःसहशि
ष्यैर्गिरिशालयेसमास्ते ॥ ३४ ॥ इतितद्वचनंनिशम्यसम्यग्ग्रथितानेकनिबंधरत्नहारः ॥ शिवतत्परसूत्रभाष्यक
र्ताप्रहसन्वाचमुवाचशैववर्यः ॥ ३५ ॥ सरितांपतिमेषशोषयेद्वासवितारंवियतःप्रपातयेद्वा ॥ पटवत्सुरवर्त्म
वेष्टयेद्वाविजयेनैवतथापिमेसमर्थः ॥ ३६ ॥ परपक्षतमिस्रचंचदर्कैर्ममतर्कैर्बहुधाविशीर्यमाणं ॥ अधुनैव
मतंनिजंसपश्यत्वितिजल्पन्निरगादनल्पकोपः ॥ ३७ ॥

श्रुत्वासम्यग्ग्रथितानेकनिबंधलक्षणैरत्नैर्हारोयेनपुनश्चशिवतत्परस्याथातोब्रह्मजिज्ञासेत्यादिसूत्राणांभाष्यस्यकर्तासशैववर्यःप्रहसन्वाचमु
वाच ॥ ३५ ॥ वाचमेवसगर्वामुदाहरति यद्येषयतिःसमुद्रंशोषयेत् यदिवागगनात्सवितारंसूर्यंप्रपातयेत् यदिवापटवदाकाशंवेष्टयेत्तथा ॥ २
पि मेविजयेसमर्थोनैवभवेत् ॥ ३६ ॥ परपक्षलक्षणांधकाराणांनिवारणेस्फुरद्भिःसूर्यैर्ममतर्कैरधुनैवानेकधाविशीर्यमाणंनिजंमतंसयतिः
पश्यतइतिजल्पन्ननल्पकोपोनीलकंठोनिर्गतवान् ॥ ३७ ॥

श्वेतभूत्याव्याप्तान्यंगानियेषांपुनश्चस्फुटरुद्राक्षाणांसमूहेनकम्राःकमनीयाःकंठायेषांतथाभूतैरधीतशैवशास्त्रैःशिष्यैःपरिवेष्टितमायांतममुं
नीलकंठमुनिःश्रीशंकरोददर्श ॥३८॥ महर्षेःश्रीशंकराचार्यस्यसन्निकर्षंसमीपंप्राप्यैषःकविर्नीलकंठआत्मपक्षमातिष्ठयत्सम्यक्स्थापितवान्
तत्रोपमानमाह शुकस्यतातेनश्रीवेदव्यासेनकृतादात्मप्रतिपादकाच्छास्त्राच्छारीरकमीमांसासंज्ञकात्प्राक्यथाकपिलाचार्यःसाक्षात्स्वशास्त्रं
स्थापितवान्तद्वत् ॥ ३९ ॥ तदानींस्वगुरुंनिवार्यसुरेश्वरोविवादंकृतवानित्याह हेभगवन्क्षणमात्रंप्रथमंत्वमेतत्स्फुरदुक्तिपाटवमीक्ष्य

परिवीतमधीतशैवशास्त्रैर्मुनिरायांतममुंददर्श
सितभूतितरंगिताखिलांगैःस्फुटरुद्राक्षकलापकम्रकंठैः ॥ शिष्यैः ॥ ३८ ॥ अधिगत्यमहर्षिसन्निकर्षंकविरातिष्ठयदात्मपक्षमेषः ॥ शुकतातकृतात्मशास्त्रतःप्राक्कपिलाचार्यइवात्मशास्त्रमद्धा ॥ ३९ ॥ भगवन्क्षणमात्रमीक्ष्यतांतत्प्रथमंतुस्फुरदुक्तिपाटवंमे ॥ इतिदेशिकपुंगवंनिवार्यव्यवदत्तेनसुरेश्वरःसुधीशः ॥ ४० ॥ सुमतेतवकौशलंविजानेस्वयमेवैषमुनिःप्रतिब्रवीतु ॥ इतितंविनिवर्त्यनीलकंठोयतिकंठीरवसम्मुखस्तदासीत् ॥ ४१ ॥ परपक्षविसावलीमरालैर्वचनैस्तस्यमतंचखंडदंडी ॥ अथनीलगलःस्वपक्षरक्षांजहदद्वैतमपाकरिष्णुरूचे ॥ ४२ ॥

ताम्मितिदेशिकपुंगवंनिवार्यसुधीनामीशःसुरेश्वरस्तेननीलकंठेनव्यवदत् ॥४०॥ विवदमानंसुरेश्वरंप्रतिनीलकंठोयदुक्तवांस्तदाह हेसुमतेतवकुशलतांविजानेऽतःस्वयमेवैषमुनिःप्रतिब्रवीतुइतितंसुरेश्वरंविनिवर्त्यतदायतिसिंहसम्मुखआसीत् ॥ ४१ ॥ ततःपरपक्षलक्षणबिसावलीभक्षणेहंसैर्वचनैस्तस्यसम्यक्स्थापितंमतंदंडीश्रीशंकरश्चखंडखंडितवान् अथानंतरंनीलकंठःस्वपक्षरक्षांत्यजन्नद्वैतमतंनिराकर्तुमिच्छुरुवाच ॥४२॥

यदूचेतदाहषड्भिः हेप्रशमिन् तत्त्वमस्यादिवेदत्रयीमस्तकैर्जीवेश्वराभेदलक्षणोयस्त्वदिष्टोऽर्थःकथितःसनयुज्यतेकिंतमःप्रकाशयोरभेदोघटतेनै
वयुज्यते तत्रहेतुर्विरुद्धधर्मवत्त्वात्तथाचजीवेश्वराभेदोनभवति विरुद्धधर्मवत्त्वात्तमःप्रकाशयोरिवेतियुक्तिविरोधात्त्वदिष्टोर्थोवेदांतैर्नैवकथि
तइतिभावः ॥४३॥ ननुरवितत्प्रतिबिंबयोर्व्यभिचारश्चांचल्याचांचल्यादिविरुद्धधर्मवत्त्वेप्यभेदाभावाभावस्यसत्त्वात्तथाचविरुद्धधर्मयोरपि
तयोरवितत्प्रतिबिंबयोरिवाभेदोयुज्यतामित्याशंक्यपरिहरति रवितत्प्रतिबिंबयोरिवतत्त्वतोऽभिदभेदोघटतामित्यपिनवाच्यं तत्रहेतुर्व्योमशिवा

प्रशमिंस्तदसीतियस्त्रय्यंकैःकथितोर्थःसनयुज्यतेत्वदिष्टः ॥ अभिदातिमिरप्रकाशयोःकिंघटतेहंतविरुद्धध
र्मवत्त्वात् ॥ ४३ ॥ रवितत्प्रतिबिंबयोरिवाभिद्घटतामित्यपितत्त्वतोनवाच्यं ॥ मुकुरेप्रतिबिंबितस्यमिथ्या
त्वगतेर्व्योमशिवादिदेशिकोक्त्या ॥ ४४ ॥ मुकुरस्थमुखस्यबिंबवक्त्राद्भिदयापार्श्वगलोकलोकनेन ॥ प्र
तिबिंबितमाननंमृषास्यादितिभावत्कमतानुगोक्तिकश्च ॥ ४५ ॥ नचमायिकजीवनिष्ठमौढ्येश्वरसार्वज्ञवि
रुद्धधर्मबाधात् ॥ उभयोरपिचित्स्वरूपतायाअविशेषादभिदैववास्तवीति ॥ ४६ ॥

दिदेशिकोक्त्यादर्पणेप्रतिबिंबितस्यमिथ्यात्वावगतेस्तथाचमिथ्यात्वेनबाध्यस्यप्रतिबिंबस्याभेदयोग्यतायाअभावेनव्यभिचाराभावात्तद्दृष्टांतेन
जीवेश्वरयोरभेदोनयुज्यतइत्यर्थः ॥ ४४ ॥ किंचभवदीयमतानुगाप्युक्तिरप्यस्तीत्याह बिंबमुखान्मुकुरस्यमुखस्यभेदेनसमीपस्थलोकाव
लोकनेनहेतुनाप्रतिबिंबितंमुखंमृषास्यादितिभवदीयमतानुगोक्तिकश्चस्वार्थेकः ॥ ४५ ॥ ननुजीवनिष्ठमौढ्यस्येश्वरसार्वज्ञस्यचविरुद्धधर्म
स्यमायिकत्वेनबाधादुभयोरपिचैतन्यस्वरूपतायाअविशेषाद्वास्तवोऽभेदएवेत्याशंक्यपरिहारंप्रतिजानीते नचेति ॥ ४६ ॥

विपक्षेबाधकमाह परथे
तत्रहेतुमाह हियस्मात्प्रमाणशतैःस्थितस्यविरुद्धधर्मस्यबाधोनसंभवतिबाधाभावेनमायिकत्वमप्यस्यनास्तीतिभावः विपक्षेबाधकमाह परथे
ति मानशतैःस्थितस्यापिबाधांगीकारेभेदोदत्तजलांजलिःस्यात् तत्रयुक्तिमाह विपरीतयोरश्वत्वगोत्वयोर्बाधादश्वपश्वोःस्वरूपस्यैक्यमेवेति
युक्त्येत्यर्थः ॥ ४७ ॥ यदिप्रत्यक्षादिमानावगतस्यहानमिष्टंनभवेत्तर्हिनचेश्वरोहमस्मीतिप्रत्यक्षप्रमाणावगतस्यजीवसर्वेश्वरभेदस्यहानमप्य
भीष्टंनभवेदित्यर्थः ॥ ४८ ॥ इत्येवंयुक्तिशतैःसकविर्नीलकंठोवेदांतवचोभिःप्रकाश्यमानमद्वैतपक्षमक्षोभयत् यथाप्रफुल्लंसरोजवनंहस्तिपो

नहिमानशतैःस्थितस्यबाधापरथादत्तजलांजलिर्भिदास्यात् ॥ विपरीतहयत्वगोत्वबाधाद्धयपश्वोर्निजरू
पकैक्ययुक्त्या ॥ ४७ ॥ यदिमानगतस्यहानमिष्टंनभवेत्तर्हिनचेश्वरोहमस्मि ॥ इतिमानगतस्यजीवसर्वे
श्वरभेदस्यनहानमप्यभीष्टं ॥ ४८ ॥ इतियुक्तिशतैःसनीलकंठःकविरक्षोभयदद्वितीयपक्षं ॥ निगमांतव
चःप्रकाश्यमानंकलभःपद्मवनंयथाप्रफुल्लं ॥ ४९ ॥ अथनीलगलोक्तदोषजालोभगवानेवमवोचदस्तुका
मं ॥ शृणुतत्त्वमसीतिसंप्रदायश्रुतिवाक्यस्यपरावरेभिसंधिं ॥ ५० ॥ ननुवाच्यगताविरुद्धताधीरिहसो
सावितिवद्विरोधहाने ॥ अविरोधितुवाच्यमाददैक्यंपदयुग्मंस्फुटमाहकोविरोधः ॥ ५१ ॥

एवंत्वदुक्तंयथेष्टम
तःक्षोभयतितद्वत् ॥ ४९ ॥ अथतत्कृताद्वैतपक्षक्षोभानंतरंनीलकंठेनोक्तंदोषजालंयस्मैसभगवाञ्छंकराचार्यउवाच एवंत्वदुक्तंयथेष्टम
स्तु तथापितत्त्वमसीतिसंप्रदायश्रुतिवाक्यस्यपरावरेऽभिसंधिमभिप्रायंशृणु परेब्रह्मादयोवरेयस्मात्तथाभूतेऽखंडैकरसे यद्वाकार्योपाधिकोजी
वःकारणोपाधिरीश्वरइत्युक्तत्वात्कारणाभिन्नेकार्ये ॥ ५० ॥ इहतत्त्वमसिवाक्येसोयमितिवद्विरुद्धताबुद्धिर्ननुवाच्यगतानतुलक्ष्यगता तथा
चभागलक्षणयातस्यविरोधस्यहानेसतिअविरोधिवाच्यंचैतन्यमात्रंतुस्वीकुर्वतत्त्वमितिपदद्वयमैक्यंस्फुटमाहातःकोपिविरोधोनास्ति॥५१॥

यत्त्वपरथेत्याद्युक्तंतत्राह यदिति इहएवमुच्यमानेयोऽतिप्रसंगस्त्वयोक्तःसनभवेत् हियस्माद्गवाश्वयोरभेदघटकंप्रमाणंनास्ति यतःप्रमाणात्त

योर्गवाश्वयोरुभयोर्भागलक्षणयाऽभेदानुभवःस्यादित्यर्थः ॥५२॥ नीलकंठःशंकते ननुमौढ्यधर्मान्वितजीवस्वरूपात्सर्वज्ञत्वधर्मयुक्तेश्वरस्वरू

॥२१॥ पाद्वातिरिक्तमुभयोर्जीवेश्वरयोःपरिनिष्ठितंस्वरूपंखलुनास्त्येव यतस्तथाभूतस्वरूपसत्त्वादत्रस्वरूपेलक्षणास्यात् यद्वात्रतत्त्वमसिवाक्ये ॥

॥ ५३ ॥ परिहरतीतिचेन्न तत्रहेतुमाह मौढ्यादिविरुद्धधर्मविशिष्टंजीवादिस्वरूपंकल्पितंदृश्यत्वाच्छुक्तिरूप्यादिवदितिपरिदृश्यमानजीवे

यदिहोक्तमतिप्रसंजनंभोनभवेन्नोहिगवाश्वयोःप्रमाणं ॥ अभिदाघटकंतयोर्यतःस्यादुभयोर्लक्षणयाभिदा
नुभूतिः ॥ ५२ ॥ ननुमौढ्यसमस्तवित्त्वधर्मान्वितजीवेश्वररूपतोतिरिक्तं ॥ उभयोःपरिनिष्ठितंस्वरूपंवतना
स्त्येवयतोऽत्रलक्षणास्यात् ॥ ५३ ॥ इतिचेन्नसमीक्ष्यमाणजीवेश्वररूपस्यचकल्पितत्वयुक्त्या ॥ तदधिष्ठितस
त्यवस्तुनोद्धानियमेनैवसदाभ्युपेयतायाः ॥ ५४ ॥ भवतापितथाहिदृश्यदेहाद्यहमंतस्यजडत्वमभ्युपेयं ॥ परि
शिष्टमुपेयमेकरूपंननुकिंचिद्धितदेवतस्यरूपं ॥ ५५ ॥ जगतोऽसतएवमेवयुक्त्यात्वनिरूप्यत्वतएवकल्पित
त्वात् ॥ तदधिष्ठितभूतरूपमेष्यन्ननुकिंचिद्धितदीश्वरस्यसत्यं ॥ ५६ ॥

श्वरस्वरूपस्यकल्पितत्वयुक्त्यातेनस्वरूपेणाधिष्ठितस्यतदधिष्ठानस्यसत्यस्यवस्तुनःसदानियमेनैवसाक्षादभ्युपगंतव्यत्वादद्धेत्यस्यपूर्वपदेनवा

संबंधः ॥ ५४ ॥ नन्वभ्युपगंतव्यंभवद्भिर्मयातुनाभ्युपगम्यतइत्याशंक्यादौसमीक्ष्यमाणजीवस्वरूपाधिष्ठानमभ्युपेयमेवेत्याह भवतापीति हि

यस्माद्भवतापिदृश्यस्यदेहादेरहमंतस्यजडत्वमभ्युपेयंतस्यजीवस्यपरिशिष्टंतदेवकिंचित्सत्यंरूपंस्वीकर्तव्यमेव ॥ ५५ ॥ तथेश्वरस्वरूपमपीत्या ॥२

हासतोजगतोव्युत्थितंप्रति विमतंकल्पितमनिरूप्यत्वाद्रज्जूरगवदित्येवमेवयुक्त्याकल्पितत्वात्किंचिद्धितत्सत्यमीश्वरस्यजगदधिष्ठानभूतंरूपमे

ष्यमवश्यमंगीकार्यमित्यर्थः ॥ ५६ ॥

तत्तस्मादिहश्रुतिगम्येनिरुपाधावुभयस्वरूपेमौढ्यसर्ववित्त्वेनैवस्तः तत्रदृष्टांतमाह जपापुष्यात्प्राप्तस्यलोहितिम्नोनिरुपाधिकेस्फटिकेप्रसक्ति
र्नहिस्यात्तद्वत् ॥ ५७ ॥ अपिचभेदधियोयथार्थतायांभेददृशःपुरुषस्यमृत्योःसमृत्युमाप्नोतियइहनानेवपश्यतियउदरमंतरंकुरुतेथतस्यभ
यंभवतीत्यादिश्रुतिर्भयंनब्रवीतुनब्रूयात् हियस्मादनर्थसंबंधोविपरीतदर्शिनःस्यात् यतश्चभिदाधीर्भेदबुद्धिर्विपरीतधीर्नस्यात्तथाचोक्तश्रुत्या
भेददर्शिनोभयस्योक्तत्वादनर्थयोगस्यचविपरीतदर्शिनएवयुक्तत्वाद्भेदधीर्विपरीतधीरेवेत्यर्थः ॥ ५८ ॥ एवंभेददृशःश्रुतयान्यथानुपप
त्त्याभेदबुद्धेर्विपरीतधीत्वमुपवर्ण्यतत्रकोमोहःकःशोकएकत्वमनुपश्यतइतिश्रुत्याभेदज्ञानेश्रुतपुरुषार्थान्यथानुपपत्त्याभेदस्यतात्विकत्वमावि

तदिहश्रुतिगोभयस्वरूपेनिरुपाधौनहिमौढ्यसर्ववित्त्वे॥ नजपाकुसुमात्तलोहितिम्नःस्फटिकेस्यान्निरुपाधि
केप्रसक्तिः॥ ५७॥ अपिभेदधियोयथार्थतायांनभयंभेददृशःश्रुतिर्ब्रवीतु ॥ विपरीतदृशोह्यनर्थयोगोन
भिदाधीर्विपरीतधीर्यतःस्यात् ॥ ५८ ॥ अभिदाश्रुतिगाप्यतात्विकीचेत्पुरुषार्थश्रवणंनतद्गतौस्यात् ॥
अशिवोहमितिभ्रमस्यशास्त्राद्विधुमानत्वगतेरिवास्तिबाधः ॥ ५९ ॥ तदबाधितकल्पनाक्षतिर्नोश्रुतिसि
द्धात्मपरैक्यबुद्धिबाधः ॥ निगमात्मबलंविलोक्यतेमाकरणंयेनतदीरितस्यबाधः ॥ ६० ॥

ष्करोति अभिदाअभेदः श्रुतिगाप्यतात्विकीअयथार्थाचेत्तर्हि तद्गतौतस्याअभिदायागतौज्ञानेपुरुषार्थस्यश्रवणंनस्यात् यत्तुयदिमानगतस्ये
त्यादितत्राहाशिवोहमितिभ्रमस्यप्रत्यक्षसिद्धचंद्रगतप्रादेशमानत्वबुद्धेरिवशास्त्राद्बाधोस्ति तथाचनचेश्वरोहमस्मीतिबुद्धेर्भ्रमःशास्त्रेणबाध्यमा
नत्वाद्विधुमानत्वबुद्धिवत्तस्यबाधेनचाभेदएवश्रुतिगम्योवास्तवइतिभावः यतएवमतस्तदबाधितकल्पनायाःक्षतिःक्षयोनतुश्रुतिसिद्धात्मपरै
क्यबुद्धिबाधोतंस्तदबाधितत्वकल्पनाक्षतेर्हेतोर्नोक्तबुद्धिबाधइतिपाठांतरेव्याख्येयं कुतोनास्तीतिवदंतंप्रत्याह निगमात्मबलंप्रमाकरणंप्रमाणं
किंविलोक्यतेयेननिगमोक्तस्यात्मपरैक्यस्यबाधःस्यात् ॥ ५९ ॥ ६० ॥

नीलकंठआह ऋषिभिःकपिलादिभिर्बहुधांपरात्मतत्त्वमथपुरुषार्थस्यचतत्त्वमप्युक्तंतदपास्यएकएवनिरूपितप्रकारोभवताकथंधार्योबहू
नामनुसरणस्यन्याय्यत्वात् ॥ ६१ ॥ परिहरति .प्रबलश्रुतिप्रमाणेनविरोधेनतिबलहीनाःस्मृतिवाचएवनांगीकर्तव्याइतिनयबलात्वेदत्र
यीविरुद्धमृषीणांवचनंप्रमात्वंनप्रामुयात् तथाचप्रमाणलक्षणस्योजैमिनिन्यायः विरोधेत्वनपेक्षंस्यादसतिह्यनुमानमिति औदुंबरींस्पृष्टोद्गा
येदितिश्रुतेर्विरुद्धापिसर्वावेष्टयितव्येतिस्मृतिर्मानंनवेतिविषयेऽष्टकादिस्मृतिवन्मानमितिपूर्वपक्षे राद्धांतस्तुपूर्वपक्षमपनुदति श्रुतिविरोधे

ऋषिभिर्बहुधापरात्मतत्त्वंपुरुषार्थस्यचतत्त्वमप्यथोक्तं ॥ तदपास्यनिरूपितप्रकारोभवतासौकथमेक
एवधार्यः ॥ ६१ ॥ प्रबलश्रुतिमानतोविरोधेबलहीनस्मृतिवाचएवनेयाः ॥ इतिनीतिबलात्त्रयीविरु
द्धंनऋषीणांवचनंप्रमात्वमीयात् ॥ ६२ ॥ ननुयुक्तियुतंमहर्षिवाक्यंश्रुतिवद्ग्राह्यतमंपरंतथाहि ॥ प्रति
देहमसौविभिन्नआत्मासुखदुःखादिविचित्रतावलोकात् ॥ ६३ ॥ यदिचात्मनएकतातदानीमतिदुः
खीयुवराजसौख्यमीयात् ॥ अमुकःससुखोऽमुकस्तुदुःखीत्यनुभूतिर्नभवेत्तयोरभेदात् ॥ ६४ ॥

स्मृतेःप्रामाण्यमनपेक्षमनादरणीयंस्याद्धियस्मादसतिविरोधेमूलश्रुत्यनुमापकतयास्मृतिरपिमानमितिन्यायार्थः एवंचवेदविरुद्धवचसांबहू
नामप्यनुसरणमन्याय्यमेवेतिभावः ॥ ६२ ॥ एवमुक्तोनीलकंठःशंकतेचतुर्भिः ननुयुक्तियुक्तंमहर्षिवाक्यंपरंकेवलंग्राह्यतमंनतुत्याज्यंयुक्ति
युक्तत्वमेवदर्शयितुमाह तथाहीति ॥ ६३ ॥ विपक्षेदोषमाह यदिचात्मनएकतास्यात्तदानीमतिदुःखीयुवराजसौख्यंप्रामुयात् किं ॥ २३
चामुकःसुखीअमुकस्तुदुःखीत्यनुभवोनस्यात्तयोरभेदात् ॥ ६४ ॥

किंचात्मनोऽकर्तृत्वमचेतनस्यांतःकरणादेःकर्तृत्वमितिभवन्मतमप्ययुक्तमित्याशयेनाह अयमेवज्ञानान्वितःकर्ताहियस्मादचेतनस्यकर्तृत्वंनदृ
ष्टंअतएवभुजेरपिसआत्माकर्ताभवेद्यतःकर्तुरन्यस्यभोक्तृत्वंदेवदत्तकृतकर्मफलभोक्तृत्वंयज्ञदत्तस्यस्यादित्यतिप्रसंगेनदुष्टं ॥ ६५ ॥ किंच
मोक्षोपिभवदभिमतोऽयुक्तइत्याशयेनाह इहलोकेवेदेवापुरुषार्थोपिप्येषदुःखनाशएवनतुसुखाप्तिस्तत्राभेद्यांयुक्तिमाह सर्वस्यापिसुखस्यदुः
खयुक्तत्वाद्धेयत्वेनविषपृक्तान्नवत्पुरुषार्थत्वंनास्तीत्यभेद्यायायुक्तेर्हेतोस्तथाचायंप्रयोगःविमतंनपुरुषार्थःदुखसंयुक्तत्वात्विषसंपृक्तान्नवत्॥

अयमेवविदन्वितश्चकर्तानहिकर्तृत्वमचेतनस्यदृष्टं ॥ अतएवभुजेर्भवेत्सकर्तापरभोक्तृत्वमतिप्रसंगदुष्टं ॥
॥ ६५ ॥ पुरुषार्थइहैपदुःखनाशःसकलस्यापिसुखस्यदुःखयुक्तात् ॥ अतिहेयतयापुमर्थतातोविषपृक्ता
न्नवदित्यभेद्ययुक्तेः ॥ ६६ ॥ इतिचेन्नसुखादिचित्रतायामनसोधर्मतयात्मभेदकत्वं ॥ नकथंचनयुज्य
तेपुनःसाघटयेत्प्रत्युतमानसीयभेदं ॥ ६७ ॥ चितियोगविशेषएवदेहकृतिमत्ताघटकोप्यचेतनस्यात् ॥ त
दभावतएवकर्तृतास्यान्नतृणादेरितिकल्पनंवराय ॥ ६८ ॥

॥ ६६ ॥ परिहरति इतिचेन्नेति तत्रसुखदुःखादिचित्रतावलोकनादिहेतोःपक्षवृत्तित्वेनात्मभेदकत्वाभावंहेतुमाह सुखादिचित्रतायाःमनसोध
र्मत्वेनात्मभेदकत्वंकथंचिदपिनयुज्यतेप्रत्युतसाचित्रतामानसीयंमनोनिष्ठंभेदंघटयेत् तस्यामनोधर्मत्वेतुकामसंकल्पइत्यादिश्रुतिमानमितिभा
वः ॥ ६७ ॥ अथनहीत्यादियदुक्तंतत्राह चैतन्ययोगविशेषएवदेहद्वयेऽचेतनेपिकर्तृत्वघटकःस्यात् तस्यचितियोगविशेषस्याभावादेवतृ
णादेःकर्तृतानस्यादितिकल्पनमेवश्रुत्यनुकूलत्वाच्छ्रेष्ठमित्यर्थः ॥ ६८ ॥

यदपिपुरुषार्थइत्यादितत्राप्याह विषयोत्थसुखस्यदुःखंयुक्तत्वेपिनाशरहितंब्रह्मसुखंनदुःखयुक्तंआनंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चन तत्र
कोमोहःकःशोकएकत्वमनुपश्यतइत्यादिश्रुतेस्तस्मात्तदेवपुरुषार्थतयावगम्यंनतुतुच्छकंदुःखनाशमात्रं स्वार्थेतद्धितः ॥ ६९ ॥ इत्येवंयुक्ति
शतैरुपबृंहितोऽर्थोयेषांतैःपुनश्चसौविदल्लाःकंचुकिनइत्यमराच्छ्रुत्यनुरोधकंचुकवद्भिर्वचनैर्यतिःश्रीशंकराचार्यःस्वीयमद्वैतमतंप्रसाध्यपरकृ

विषयोत्थसुखस्यदुःखयुक्तेप्यलयंब्रह्मसुखंनदुःखयुक्तं ॥ पुरुषार्थतयातदेवगम्यंनपुनस्तुच्छकदुःखनाश
मात्रं ॥ ६९ ॥ इतियुक्तिशतोपबृंहितार्थैर्वचनैःश्रुत्यवरोधसौविदल्लैः ॥ यतिराण्मतंप्रसाध्यशैवंपरकृद
र्शनदारुणैरजैषीत् ॥ ७० ॥ विजितोयतिभूभृतासशैवःसहगर्वेणविसृज्यचस्वभाष्यं ॥ शरणंप्रतिपेदि
वान्महर्षिंहरदत्तप्रमुखैःसहात्मशिष्यैः ॥ ७१ ॥ यमिनामृषभेणनीलकंठंजितमाकर्ण्यमनीषिधुर्यवर्यं ॥ स
हसोदयनादयःकवींद्राःपरमद्वैतमुपश्चकंपिरेस्म ॥ ७२ ॥ विषयेषुवितत्यनैजभाष्याण्यथसौराष्ट्रमुखेषुत
त्रतत्र ॥ बहुधाविबुधैःप्रशस्यमानोभगवान्द्वारवतींपुरींविवेश ॥ ७३ ॥

च्छास्त्रस्यदारुणैस्तथाभूतैर्वचनैःशैवंमतमजैषीत् निराकरणेनजितवान् ॥ ७० ॥ यतिराजेनविजितःसशैवोनीलकंठोगर्वेणसहस्वभाष्यंवि
सृज्यचपुनर्हरदत्तप्रमुखैरात्मशिष्यैःसहमहर्षिशरणंप्राप्तवान् ॥ ७१ ॥ परमत्यंतंचकंपिरेस्मेतिपादपूरणे ॥ ७२ ॥ अथसौराष्ट्रादिषु
तत्रतत्रदेशेषुस्वीयभाष्याणिप्रसार्यविबुधैःसुपंडितैर्देवैश्चबहुधास्तूयमानोभगवान्शंकरोद्वारवतींपुरींविवेश ॥ ७३ ॥

पुनश्चशरदंडसदृशंऊर्ध्वपुंड्रंयेषां
भुजयोरतितप्तेनशंखचक्राकृतिलोहेनाहतेषुताडितेष्ववयवेषुसंभृतानिसमासादितानिव्रणानामंकानियैः शतशःपांचरात्राःसमवेत्यामृतंमोक्षंपंचभिदाविदांजीवेश्वरभेदोजीवानांपरस्परभेदोजीवानाम
पुनश्चतुलसीपत्रैःसनाथःकर्णदेशोयेषांते प्रगल्भैर्मुनिशिष्यवरैःसिंहैरिभाइवप्रभग्नाइतिद्वयोरर्थः ॥ ७४ ॥
चितांभेदईश्वरस्याचितांभेदश्चितांचपरस्परभेदइत्येवंपंचविधभेदविदांवदंतः अतिक्रांतवेलाभिर्वचोझरीभिर्निरस्ताःप्रतिवादिनोयेनसउज्जयिनींपुरींप्राप्त
॥ ७५ ॥ इत्येवंशैवादीनात्मवशंवदंनीतितथाविधान्विधाय

शरदंडसहोदरोर्ध्वपुंड्रास्तुलसीपर्णसनाथकर्णदे
भुजयोरतितप्तशंखचक्राकृतिलोहाहतसंभृतव्रणांकाः ॥ मुनिशिष्यवरैरतिप्रगल्भैर्मृगराजै
शाः ॥ ७४ ॥ शतशःसमवेत्यपांचरात्रास्त्वमृतंपंचभिदाविदांवदंतः ॥ अतिवेलवचोझ
रिवकुंजराःप्रभग्नाः ॥ ७५ ॥ इतिवैष्णवशैवशाक्तसौरप्रमुखानात्मवशंवदान्विधाय ॥ सपदिप्रतिनादितःपयोदस्वनशंकाकुलगेहकेकिजालैः॥
रीनिरस्तप्रतिवाद्युज्जयिनींपुरीमयासीत् ॥ ७६ ॥ मकरध्वजविद्विषान्तिविद्वाञ्छ्रमहृत्पुष्पसुगं
शशभृन्मुकुटार्हणामृदंगध्वनिरश्रूयततत्रमूर्छिताशः ॥ ७७ ॥ अगरुद्रवधूपधूपिताशंसमहाकालनिवेशनंविवेश ॥ ७८ ॥
धिमन्मरुद्भिः ॥

पुनश्चव्याप्तदिशोयेनतथाभू
वान् ॥ ७६ ॥ पयोदस्वनशंकयामेघशब्दशंकयाव्याकुलैर्गेहेमंदिरादौरुद्धैर्मयूरसमुदायैस्तत्क्षणेप्रतिनादितः मकरध्वजविद्विषःकामविद्विषःशिवस्यप्रा
तश्चंद्रशेखरस्यमहाकालाख्यशिवस्येज्यासंबंधिमृदंगाणांध्वनिस्तत्रोज्जयिन्यामश्रूयत ॥ ७७ ॥ पुनश्चागरुद्रवधूपेनधूपिताआशायत्रतत् ॥ ७८॥
न्तिजानातीतितथाभूतःसमहाकालमंदिरंविवेश तद्विशिनष्टि पुष्पसुगंधिमद्वायुभिःश्रमहृत्

मुनिसंघैरभिवंद्यपादपद्मः विस्त्वरः प्रसरणशीलः प्रभावोयस्यसभगवान् शंकरश्चंद्रशेखरंमहाकालेश्वरमभिवंद्यश्रमहारिणिमनोज्ञेमंडपेविश्रा
मंकृतवान् ॥ ७९ ॥ विश्रम्ययत्कृतवांस्तदाह इहास्यांपुर्यांभट्टभास्करायकवयेऽस्मदीयवार्त्ताहेसौम्यकथयेत्युक्त्वासमुनिर्वशंवदाग्रगण्यं
शिष्याग्रगण्यंसमीपगतंपद्मपादार्यंविससर्ज ॥ ८० ॥ वावदूकोतिवक्तासनंदनार्यस्तंप्रतिपद्योवाच तंविशिनष्टि अभिरूपकुलस्यबुधगणस्या
वतंसंभूतं अभिरूपोबुधेरम्यइतिमेदिनी बहुधाव्याख्यातोवेदराशिर्येनअयत्नेननिरस्तादुःसपत्नायेनतं ॥८१॥ यदुवाचतदाह यःदिगंतगीतकी

भगवानभिवंद्यचंद्रमौलिंमुनिवृंदैरभिवंद्यपादपद्मः ॥ श्रमहारिणिमंडपेमनोज्ञेसविशश्रामविस्त्वरप्रभावः ॥
॥ ७९ ॥ कवयेकथयास्मदीयवार्तामिहसौम्येतिसभट्टभास्कराय ॥ विससर्जवशंवदाग्रगण्यंमुनिरभ्यर्णगतंस
नंदनार्यं ॥ ८० ॥ अभिरूपकुलावतंसभूतंबहुधाव्याकृतसर्ववेदराशिं ॥ तमयत्ननिरस्तदुःसपत्नप्रतिपद्येत्थ
मुवाचवावदूकः ॥ ८१ ॥ जयतिस्मदिगंतगीतकीर्त्तिर्भगवांश्छंकरयोगिचक्रवर्त्ती ॥ प्रथयन्परमाद्वितीयतत्वंश
मयंस्तत्परिपंथिवादिदर्पं ॥ ८२ ॥ सजगादबुधाग्रणीर्भवंतंकुमतोत्प्रेक्षितसूत्रवृत्तिजालं ॥ अभिभूयवयंत्र
यीशिखानांसमवादिस्मपरावरेभिसंधिं ॥ ८३ ॥ तदिदंपरिगृह्यतांमनीषिन्मनसालोच्यनिरस्यदुर्मतंस्वं ॥ अथ
वास्मदुदग्रतर्कवज्रप्रतिघातात्परिरक्ष्यतांस्वपक्षः ॥ ८४ ॥

र्त्तिर्भगवांश्छंकरयोगिचक्रवर्त्तीपरममद्वैततत्वंप्रथयंस्तस्यपरिपंथिनांवादिनांगर्वंशमयन्जयतिस्म सबुधाग्रणीर्भवंतंजगादेतिपरेणान्वयः ॥
॥ ८२ ॥ यद्भाषेतदाह कुत्सितंमतंयेषांतैःकुमतैरुत्प्रेक्षितंसूत्रवृत्तिजालमभिभूयवेदांतानांपरावरेब्रह्माभिन्नेप्रतीचितात्पर्यमवादिस्म
॥ ८३ ॥ तत्तस्मादिदमस्मदीयंमतंमनसालोच्यस्वीयंमतंविहायपरिगृह्यतां यतोहेमनीषिन् अथवास्वमतेदुराग्रहश्चेत्तर्हिअस्मदीयोदग्रतर्कल
क्षणवज्रप्रतिघातात्स्वपक्षःपरिरक्ष्यतां ॥ ८४ ॥

इत्येवमवज्ञापूर्वकावर्णायस्यांतांगिरमाकर्ण्यसलब्धवर्णोविचक्षणोयशसांनिधिरीषत्प्राप्तरोषोभट्टभास्करःप्रहसंस्तंयतींद्रशिष्यमुवाच॥ ८५॥ एषतवगुरुमर्मतंवृत्तांतंनशुश्रुवान् उदंतंविशिनष्टि वादिवचस्ततीर्नुदंतंपरकीर्त्तिलक्षणबिसांकुरान्भक्षयंतंविदुषांशिरस्सुनानटदतिशयेननृत्यत्पदंयस्य ॥ ८६ ॥ ममसूक्तिगुंफवृंदेसूक्तिरचनासमुदायेवल्गतिसतिकणादभाषितमल्पतांप्राप्नोतिकपिलस्यतुप्रलापःपलायते तथाचाधुनातनानांसुधियांकैवकथा ॥ ८७॥ इतिवादिनमेनंभट्टभास्करमथानंतरंकुशलःसनंदनोऽब्रवीत् हेऽविज्ञमावमंस्थाःमावजानीहिअवज्ञांमाकुरु

इतितामवहेलपूर्ववर्णांगिरमाकर्ण्यतदासलब्धवर्णः ॥ यशसांनिधिरीषदात्तरोषस्तमुवाचप्रहसन्यतींद्रशिष्यं ॥८५॥ ध्रुवमेषनशुश्रुवानुदंतंममदुर्वादिवचस्ततीर्नुदंतं ॥ परकीर्त्तिबिसांकुरानदंतंविदुषांमूर्द्धसुनानटत्पदंतं ॥८६॥ ममवल्गतिसूक्तिगुंफवृंदेकणभुग्जल्पितमल्पतामुपैति ॥ कपिलस्यपलायतेप्रलापःसुधियांकैवकथाधुनातनानां ॥ ८७॥ इतिवादिनमब्रवीत्सनंदःकुशलोथैनमविज्ञमावमंस्थाः ॥ नहिदारितभूधरोपिटंकःप्रभवेद्वज्रमणिप्रभेदनाय ॥८८॥ सतमेवमुदीर्यतीर्थकीर्त्तेरुपकंठंप्रतिपद्यसद्विदग्र्यः॥सकलंतदवोचदानुपूर्व्यासमहात्मापियतीशमाससाद॥ ८९ ॥ अथभास्करमस्करिप्रवीरौबहुधाक्षेपसमर्थनप्रवीणौ ॥ बहुभिर्वचनैरुदाररत्नैर्विवदातेविजयैषिणौविवादं॥ ९० ॥

यस्माद्दारितपर्वतोपिटंकोयावदारणोवज्रमणिभेदनायसमर्थोनभवति॥८८॥ सपद्मपादस्तंभट्टभास्करमेवमुदीर्यतीर्थकीर्त्तेर्गुरोःसमीपंप्राप्यसद्विदामग्र्यस्तत्सर्वमानुपूर्व्याप्रोक्तवान् समहात्माभट्टभास्करोपियतीशंप्राप ॥ ८९ ॥ अथानंतरंभास्करयतीशप्रवीरौबहुधाआक्षेपसमर्थनरतियोकुशलौविजयैषिणौबहुभिरुदारपद्यैर्वचनैर्विवादंकृतवंतौ ॥ ९० ॥

अतिचित्रशब्दशय्यांतथाभूतपदानुशांतिदधतोर्दुर्युक्तिभेदेशक्तायुक्तयोययोस्तयोरनयाःपटुवादसंख्येतटस्थाःश्रुतवंतोपिकिंचिदंतरंनप्राप्तवं
तः ॥ ९१ ॥ अथयतिस्तस्यदाक्ष्यंस्वपक्षचंद्रस्यशरत्कालीनकमलभूतं अब्जोधन्वंतरौचंद्रेनिचुलेशंखपद्मयोरितिविश्वप्रकाशस्तथाचचिदब्ज
स्यचंद्रस्यायेयंथाजडाब्जंकमलंमुकुलितंभवतितथाभूतं अस्यपक्षमार्यःश्रीशंकरोबहुधाक्षिपत् पक्षंविशिर्नष्टि सुपंडितानामग्रेअप्रभाताःक
क्ष्याःकोट्योयस्मिंस्तं ॥ ९२ ॥ अथभास्करोविद्वान्वाग्मिवरःप्रकंपितःसन्स्वपक्षपालनायश्रुतिशीर्षवचोभिःप्रकाश्यमद्वैतंप्रगल्भयायुक्त्याऽ

अनयोरतिचित्रशब्दशय्यांदधतोर्दुर्नयभेदशक्तयुक्त्योः ॥ पटुवादमधंतरंतटस्थाःश्रुतवंतोपिनकिंचनान्ववि
दन् ॥ ९१ ॥ अथतस्ययतिःसमीक्ष्यदाक्ष्यंनिजपक्षाब्जशरज्जडाब्जभूतं ॥ बहुधाक्षिपदस्यपक्षमार्योवि
बुधानांपुरतोऽप्रभातकक्ष्यं ॥ ९२ ॥ अथभास्करवित्स्वपक्षगुप्त्यैविधुतोवाग्मिवरःप्रगल्भयुक्त्या ॥ श्रुतिशीर्ष
वचःप्रकाश्यमेवंकविरद्वैतमपाकरिष्णुरूचे ॥ ९३ ॥ प्रशमिंस्त्वदुदीरितंनयुक्तंप्रकृतिर्जीवपराात्मभेदिकेति ॥ न
भिनत्तिहिजीवगेशगावोभयभावस्यतदुत्तरोद्भवत्वात् ॥ ९४ ॥ मुनिरेवमिहोत्तरंबभाषेमुकुरोवाप्रतिबिंबबिंब
भेदी ॥ कथमीरयवक्रमात्रगश्चेच्चितिमात्राश्रिदियंतथेतितुल्यं ॥ ९५ ॥

द्वैतमपाकरिष्णुरेवमुवाच ॥ ९३ ॥ हेप्रशमिन्प्रकृतिर्जीवपरात्मनोर्भेदिकेतित्वदुक्तंनयुक्तंहियस्मात्साजीवगापरात्मगावानभिनत्ति तत्रहेतुरुभयंभावस्य
जीवभावस्येशभावस्यचप्रकृत्युत्तरोद्भवत्वात् ॥ ९४ ॥ इत्युक्तोमुनिरेवमिहोत्तरमुवाचादर्शःकिलप्रतिबिंबबिंबभेदीकथंकिंप्रतिबिंबगउत ॥ २६
बिंबगइतीरय मुखमात्रगश्चेन्मुकुरस्तद्भेदीतर्हिचिन्मात्राश्रितेयंप्रकृतिरपिबिंबप्रतिबिंबभेदिकेतितुल्यमित्यर्थः ॥ ९५ ॥

किमितिजीवएवापादयतीतिचेत्तत्राह चितिमात्रगतप्रकृत्युपाधेर्बिंबभूतपरात्मपक्षपातं
नन्वेवंतर्हिंचिन्मात्रएवदुःखित्वादिकंकुतोनापादयति
त्यजतःप्रतिबिंबभूतजीवात्मपक्षपातोदर्पणस्येवकदाचिदपिनविरुध्यते ॥ ९६ ॥ नन्वस्याविकारिण्याअबोधरूपायाःप्रकृतेरविकारिनिरस्तसं
गंज्ञानैकरसस्वरूपंब्रह्माश्रयोनयुज्यतेविरोधात् अतएवांतःकरणविशिष्टसंश्रितत्वंप्रकृतेःस्यादित्याशंक्यपरिहरति अविकारीति अतएवइत्यपि
नशंकनीयमितिवा ॥ ९७ ॥ हियस्मात्त्वयापादितेविशिष्टगत्वेप्रमाणकथानदृश्यते ननुअहमज्ञइतिविशिष्टाश्रिताज्ञानानुभवएवमानमित्य

चितिमात्रगतप्रकृत्युपाधेर्जहतोर्बिंबपरात्मपक्षपातं ॥ प्रतिबिंबितजीवपक्षपातोमुकुरस्येवविरुध्यतेनजातु॥
॥ ९६॥ अविकारिनिरस्तसंगबोधैकरसात्माश्रयतानयुज्यतेस्याः ॥ अतएवविशिष्टसंश्रितत्वंप्रकृतेःस्यादिति
नापिशंकनीयं ॥९७॥ नहिमानकथाविशिष्टगत्वेभवदापादितईक्ष्यतेतथाहि॥ अहमज्ञइतिप्रतीतिरेषानहिमा
नत्वमिहाश्नुतेतथाचेत्॥ ९८॥ अनुभव्यहमित्यपिप्रतीतेरनुभूतेश्चविशिष्टनिष्ठतास्यात् ॥ अजडानुभवस्यनो
जडांतःकरणस्थत्वमितीष्टतानतस्याः॥ ९९॥ ननुदाहकतायथाग्नियोगादधिकूटंव्यपदिश्यतेतथैव ॥ अनुभूति
मदात्मयोगतोंतःकरणेसाव्यपदिश्यतेऽनुभूतिः॥ १००॥

शंक्याह तथाहीति इहास्मिन्नर्थेहमज्ञइत्येषाप्रतीतिर्मानत्वंनह्यश्नुतेतथाचिदित्यस्योत्तरेणसंबंधः ॥ ९८ ॥ विपक्षेदोषमाह तथाचेदुक्तप्रतीति
र्मानत्वमश्नुतेचेदहमनुभवीत्यपिप्रतीतेर्हेतोरनुभूतेरपिविशिष्टनिष्ठतास्यात्इष्टापत्तिमाशंक्याहाजडस्यानुभवस्यजडांतःकरणनिष्ठत्वंनभवती
तिहेतोस्तस्याविशिष्टनिष्ठतायाइष्टतानास्ति ॥ ९९ ॥ भट्टभास्करःशंकते ननुयथादाहकवह्नितादात्म्याल्लोहपिंडेदाहकताव्यपदिश्यतेतथैवा
नुभूतिमदात्मतादात्म्यादंतःकरणेसानुभूतिर्व्यपदिश्यतइत्यर्थः ॥ १०० ॥

परिहरति इतिचेन्मैवंयतस्तथेहापिमायाश्रयचिन्मात्रयुतेंतःकरणेतस्याज्ञानस्योपचारोनपुनस्तस्यचिन्मात्रस्योपाधेःप्रकृतेर्योगतोंतःकरण स्येत्यन्यथागतिःसमाना ॥ १ ॥ ननुतत्रांतःकरणेऽनुभूतेर्व्यपदेशेऽजडानुभवस्यजडांतःकरणस्थत्वमनुपपन्नमितिबाधकस्यसत्त्वादनुभूतिम दात्मयोगादंतःकरणेनुभूतिव्यपदेशइतीयंगतिरस्तुप्रकृतेंतःकरणस्यमायाश्रयत्वेबाधाभावान्मायाश्रयचिन्मात्रयुतेंतःकरणेऽज्ञानस्योपचारइ त्युक्तांसागतिर्नास्तीत्याशंक्यपरिहरति इतीति नचवाच्यमितिकुतइत्यपेक्षायामाह तज्जेविद्याजनितेचित्तेविद्याश्रयत्वायोगस्यबाधकत्वात्॥२



इतिचेन्मैवमिहापितस्यमायाश्रयचिन्मात्रयुतेतथोपचारः ॥ नपुनस्तदुपाधियोगतोंतःकरणस्येतिसमा ऽन्यथागतिर्हि॥ १॥ नचतत्रहिबाधकस्यसत्त्वादियमस्तुप्रकृतेर्नसास्त्यबाधात्॥ इतिवाच्यमिहापितज्जचित्ते तदुपाश्रित्ययुतेश्चबाधकत्वात् ॥ २ ॥ अधिसुप्त्यपिचित्तवर्तितत्स्याद्यदिवाज्ञानमिदंत्वदाश्रितंस्यात्॥तदि हास्तिनमानमुक्तरीत्याप्रकृतेर्दृश्यविशिष्टनिष्ठतायाः॥ ३॥ ननुनप्रतिबंधिकैवसुप्ताविति साद्रूरतएवचिद्गते ति॥ प्रतिबंधकशून्यतातुसुप्तेःपरमात्मैक्यगतेःसतेतिवाक्यात्॥ ४॥

किंचेदमज्ञानंयदिहदाश्रितंस्यात्तर्हिअधिसुप्त्यपिसुषुप्तावपिचित्तवर्त्तितदज्ञानंस्यात्तत्तस्मादिहास्यांप्रकृतेर्दृश्यांतःकरणविशिष्टनिष्ठतायामुक्त ॥२७ रीत्याप्रमाणंनास्त्यतश्चिद्गतैवसेत्यर्थः ॥ ३ ॥ एवमुक्तोभट्टभास्करःशंकते नन्वित्यादिचतुर्भिर्ननुसुषुप्तौजीवब्रह्मैक्यप्रतिबंधिकाविद्यैवनास्ती तिहेतोःसाविद्यातदानींचिद्गतेतिदूरतएवात्रप्रमाणाकांक्षायामाह सुप्तेऽप्रतिबंधकशून्यतातुसतासौम्यतदासंपन्नोभवतिस्वमपीतोभवतीतिवा क्याज्जीवस्यपरमात्मनैक्यस्यवा गतेस्तथाचोक्तश्रुतिवाक्यमेवात्रप्रमाणमितिभावः ॥ ४ ॥

ननुसतिसंपद्यनविदुरितिवाक्यात्तत्रसुषुप्तावज्ञानस्थितिप्रतीतिरित्याशंक्यपरिहरति नचेति सतिपरमात्मनिसंपद्यैक्यंप्राप्यजनानविदुःकिम
पिनजानंति हेतुमाह यतउक्तश्रुतिगीस्तज्ज्ञानमधिक्षिपतिनिषेधति ननुनिह्नवोज्ञाननिषेधोत्रनास्तीत्याशंक्यपरिहरति नचेति निह्नवोऽत्रश्रुति
गिरि नेतिनचात्रहेतुमाहनविदुरितिज्ञानाभावप्रतीतेरिति ॥ ५ ॥ किंचैतदज्ञानंकिमुनित्यमुतानित्यमेवेतिविकल्प्यदूषयति किम्विति इहोक्त
विकल्पद्वयेप्रथमोविकल्पःसम्यङ्नास्ति तत्रहेतुर्युक्त्यभावात् नांत्योऽस्यानिवर्त्तकसत्त्वतोनिवर्त्तकसत्वाभावात् एतदेवोपपादयन्किमस्यचि
त्प्रकाशोनिवर्त्तकउतजडप्रकाशइतिविकल्प्याद्यंप्रत्याह हियस्मात्तदज्ञानमविरोधिचित्प्रकाशोनभिद्यात् उत्तरश्लोकस्थतत्पदमत्रापिसंबं

नचतत्रचतत्स्थितिप्रतीतिःसतिसंपद्यविदुर्नहीतिवाक्यात् ॥ श्रुतिगीस्तदधिक्षिपत्यभावप्रतिपत्तेर्नचनिह्नवो
त्रनेति ॥ ५ ॥ किमुनित्यमनित्यमेवचैतत्प्रथमोनेहसमस्तियुक्त्यभावात् ॥ अनिवर्तकसत्वतोस्यनांत्योनहिभि
द्यादविरोधिचित्प्रकाशः ॥ ६ ॥ नचतच्छमयेज्जडप्रकाशोप्यविरोधात्सुतरांजडत्वतोस्य॥ तदिहप्रतिबंधकत्वम
स्यप्रभवेत्किंत्विहतद्भ्रमग्रहादि ॥ ७ ॥ इतिचेदिदमीरयभ्रमःकोमनुजोहंत्वितिशेमुषीतिचेन्न ॥ अतिविस्मृति
शीलतातवाहोगदितुःसर्वपदार्थसंकरस्य ॥ ८ ॥

धनीयं ॥ ६ ॥ द्वितीयंप्रत्याह तदज्ञानंजडप्रकाशोनचशमयेत्तत्रहेतुर्जडेनजडस्यविरोधाभावात् ॥ ७ ॥ भ्रमेनिरस्तेसंस्कारनिरासोऽर्था
त्सेत्स्यत्यग्रहणंत्वयोग्यत्वादेवनोपपन्नमित्यभिप्रायेणाचार्यआहइतीति भिन्नाभिन्नविषयत्वेनसर्वप्रत्यययाथार्थ्यान्नभ्रमसिद्धिरितिकिंशब्दा
र्थः प्रश्नंमत्वोत्तरमाह मनुष्योहमित्यहंकारादिदेहपर्यंतेऽनात्मन्यात्मबुद्धिर्भ्रमइत्यर्थउपहासपूर्वकमुत्तरंवक्तुमाचार्यआहेतिचेन्नाहोसर्वपदा
र्थसंकरस्यवक्तुस्तवातिविस्मरणशीलता ॥ ८ ॥

विस्मरणशीलतामेवाह सर्वस्यापिभिदभिद्द्वयविषयत्वात्स्वशास्त्रसिद्धाद्धेतोरमुकःखंडइतिभेदाभेदप्रत्ययस्यप्रमाणत्वमुपपन्नमहंमनुजइ
दिप्रत्ययंभेदाभेदविषयंतुत्वंभेदाभेदाभ्यांसर्वसंकरवादिकिमित्युपेक्षसे ॥ ९ ॥ तथाचेदमनुमानंसिद्धं विवादास्पदाहंमनुजइतिबुद्धिःप्र
माणं भिन्नाभिन्नविषयत्वात्सास्वंडोयमित्येषातवप्रतीतिरिहानुमानेचारुनिदर्शनंदृष्टांतः ॥ १० ॥ ननुसंघातात्मबुद्धिरप्रमाणंनिषिध्यमा
नविषयत्वात् इदमित्रप्रतिपन्नरजतबुद्धिवदिति साध्याभावसाधकहेत्वंतरेणप्रबलांसत्प्रतिपक्षतामापादयतिभट्टभास्करोनन्विति नाहंमनुजो

**प्रमितित्वमुपाश्रयन्प्रतीतिरमुकःखंडइतिस्वशास्त्रसिद्धात्॥भिदभिद्द्वयगोचरत्वहेतोर्धियमेतांतुकिमित्युपेक्ष
सेत्वं॥९॥अनुमानमिदंतथाचसिद्धंविमताधीःप्रमितिर्भिदाभिदित्वात्॥इहचारुनिदर्शनंभवेत्सातवखंडो
यमितिप्रतीतिरेषा॥ १० ॥ ननुसंहननात्मधीःप्रमाणंनभवत्येवनिषिध्यमानगत्वात् ॥ इदमित्रप्रतिपन्नरूप्य
धीवत्प्रबलासत्प्रतिपक्षतेतिचेन्न॥ ११ ॥व्यभिचारयुतत्वतोऽस्यखंडःपशुरित्यत्रतदन्यधीस्थमुंडे ॥ इतर
त्रनिषिध्यमानखंडोल्लिखितत्वेननिरुक्तहेतुमत्त्वात्॥ १२ ॥**

ब्रह्मास्मीतिप्रतिप्रत्ययसामर्थ्यान्निषिध्यमानविषयत्वमित्यर्थः दूषयतीतिचेन्नेति ॥ ११ ॥ तत्रहेतुमाहास्यहेतोःखंडःपशुरित्यत्रव्यभि
चारयुक्तत्वात् कुतएतदिति तत्रहेतुरत्रनायंखंडोगौःकिंतुमुंडोगौरितिखंडान्यधीस्थेमुंडेनिषिध्यमानखंडोल्लिखितत्वेननिषिध्यमानविषयत्व ॥ २८
रूपनिरुक्तहेतुमत्त्वात्तथाचखंडमुंडाभ्यांगोत्वस्याभेदवद्देहब्रह्मभ्यांजीवस्याभेदप्रत्ययस्यप्रामाण्योपपत्तिरितिभावः ॥ १२ ॥

प्रतीतस्यो प्रतिपन्नस्य नन्विति शंकते भट्टभास्करः मितिनिषिध्यमानविषयत्व किंतुप्रतिपन्नोपाधौनिषिध्यमानविषयत्वमितिभट्टभास्करःशंकते नन्विति प्रतिपन्नस्यप्रतीतस्यो

ननुनायंनिषिध्यमानविषयत्वमात्रंहेतुः किंतुप्रतिपन्नोपाधौनिषिध्यमानविषयत्वमितिभट्टभास्करःशंकते नन्विति प्रतिपन्नस्यप्रतीतस्यो
पाधिकउपाधावधिष्ठानेतथाचेदमंशेप्रतिपन्नंतत्रैवनिषिध्यते नेदंरजतमिति तथात्वनिप्रतिपन्नंमनुजत्वंतत्रैवनिषिध्यतेइतितस्यंभ्रमत्वंखंडो
गौरित्यस्यतुतद्वैपरीत्यान्नतत्त्वमितिभावः दूषयतीति तत्रहेतुर्विवक्षितस्यहेतोःपुनरप्यमुत्रखंडोगौरित्यमुष्मिन्व्यभिचारादेव ॥ १३ ॥न
नुनायंखंडःकिंतुमुंडइतिगोत्वउपाधौप्रतिपन्नस्यखंडस्यनतत्रनिषेधोऽपितुप्रथमानमुंडइतितथाचहेतोर्व्यभिचारितानास्तीतिशंकते नन्विति
॥ १४ ॥ परिहरतीतिचेन्नविकल्पनासहत्वात् विकल्पनासहत्वमेवदर्शयति किमुखंडस्यकेवलेमुंडेनिषेधः उतगोत्वोपहितेमुंडेसंनिषेध

ननुहेतुरयंविविक्ष्यतेतत्रप्रतिपन्नोपधिकेनिषेधगत्वं ॥ इतिचेन्नविवक्षितस्यहेतोर्व्यभिचारात्पुनरप्यमुत्रचैव ॥
॥ १३ ॥ ननुगोत्वउपाधिकेत्वमुष्यप्रतिपन्नस्यहितत्रनोनिषेधः ॥ अपितुप्रथमानमुंडइत्यत्रतथाचव्यभिचा
रितानहेतोः ॥ १४ ॥ इतिचेन्नविकल्पनासहत्वात्किमुखंडस्यतुकेवलेनिषेधः ॥ उतगोत्वसमन्वितेसमुंडप्रथमो
नोघटतेप्रसक्त्यभावात् ॥ १५ ॥ नहिजात्वपिखंडकेप्रसक्तःपरमुंडस्त्वितिसंप्रसक्त्यभावः ॥ चरमोपिनगोत्व
युक्तमुंडखलुखंडस्यनिषेधकालएव ॥ १६ ॥ स्वविशेषणभूतगोत्वएवस्फुटमेतस्यनिषेधनंश्रुतंस्यात् ॥ तदिहो
चितहेतुसत्वतोऽस्यव्यभिचारोदृढवज्रलेपएव ॥ १७ ॥

स्तत्रप्रथमोनयुज्यतेप्राप्त्यभावात् ॥ १५ ॥ हियस्मादिहभूतलेघटोनेत्यत्रभूतलसंसृष्टतयाप्रतिपन्नस्यस्मर्यमाणस्यान्यत्रनिषेधोदृष्टः परो
मुंडस्तुकदाचिदपिखंडप्रसक्तोनभवतीत्येतस्मात्प्रसक्त्यभावः द्वितीयंप्रत्याह चरमोपिनयतोगोत्वोपहितमुंडेखंडस्यनिषेधसमयेएवमुंडविशे
षणीभूतगोत्वेप्येतस्यखंडस्यनिषेधनंश्रुतंस्याद्यथेदमिप्रतिपन्नमिदंतोपहितशुक्तिव्यक्तौनिषिध्यतेतद्वदित्यर्थस्तत्तस्मादिहप्रतिपन्नोपाधौनिषि
ध्यमानविषयेखंडज्ञानेउक्तहेतोःप्रतिपन्नोपाधौनिषिध्यमानविषयस्यसत्त्वादस्यहेतोर्व्यभिचारोदृढवज्रलेपएव ॥ १६ ॥ १७ ॥

अत्रानुच्छिन्नैतद्व्यवहारत्वमुपाधिरतिशयेनभातीतिशंकते नन्विति नायंखंडोगौरितिनिषेधप्रत्ययोत्तरकालमपिखंडगोत्वव्यवहारोलक्ष्यते नतथाब्रह्मसाक्षात्कारादूर्ध्वमनुजत्वव्यवहारइतिभाव: साधनव्यापकत्वान्नायमुपाधिरितिसमाधत्तेइतिचेन्न साक्षात्कारोत्तरकालमपि प्रारब्धकर्मानुरोधादहंमनुजइत्यहमोनुभवेनसाधनव्यापकत्वात् ॥१८॥ प्रारब्धकर्मसमाप्तेरूर्ध्वंव्यवहारस्यव्यवहर्तुश्चोच्छेदान्नसाधनव्यापकत्वमित्याशयेनचोदयति नन्विति यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितिश्रुतिवाक्यगतेनमोक्षेइहतत्केनकमित्यनेनतद्व्यवहारोच्छेदस्यसम्यक्प्रतीतेर्व्यवहर्तुरुच्छेदःकथंनास्ति किंत्वस्त्येव परिहरतीतिचेन्नेति ॥ १९ ॥ यस्मात्तदिदमस्मदीयमतेघटतेतस्यपरब्रह्मणोऽबोध:

ननुभातितरामुपाधिरत्रादलदेतद्व्यवहर्ततेतिचेन्न ॥ अहमानुभवेनसाधनव्यापकभावादवगत्यनंतरंच॥ ॥ १८ ॥ ननुतद्व्यवहारसंछिदायाइहतत्केनकमित्यनेननुक्तौ ॥ श्रुतिवाक्यगतेनसंप्रतीतेर्व्यवहर्तुर्नकथंछिदेतिचेन्न ॥ १९ ॥ तदिदंघटतेमतेस्मदीयेतदवोधोल्लसितत्वतोऽखिलस्य ॥ तदवोधलयेलयोपपत्तेर्जगत: सत्यतयाछिदानतेस्यात्॥ १२०॥ ननुपंचसुतुस्थलेपुभेदोह्यभिदानोतुशरीरदेहिनोस्ते॥ प्रथितस्थलपंचकेतरत्वात्फलिताह्यत्रतथाचहेत्वसिद्धि:॥ २१॥

सचासाववबोधइतिवा सर्वस्यतदज्ञानविलसितत्वात्तदज्ञानलयेलयोपपत्तेस्तेमतेतुजगत:सत्यतयोच्छेदोनस्यात् ॥ १२० ॥ भिन्नाभिन्नविषयत्वस्यहेतोरसिद्धि:शंकते ननुजातिव्यक्तिगुणगुणिकार्यकारणविशिष्टस्वरूपांशांशिसंबंधायत्रविद्यंतेतत्रपंचसुतुस्थलेषुभेदोऽभेदश्चनतुशरीरदेहिनोस्तेभिदाभिदेतत्रहेतुरुक्त:प्रथितस्थलपंचकेतरत्वादयमर्थ: देहदेहिनोर्द्रव्यत्वाज्जातिव्यक्तितागुणगुणिभावश्चनसंभवति नापिकार्यकारणता देहस्यभौतिकत्वात् नापिविशिष्टस्वरूपता दंडवैशिष्ट्यस्यचैत्रतंत्रतावद्देहस्यात्मतंत्रत्वाभावात् नाप्यंशांशितादेहिनोनिरवयवद्रव्यत्वात्तथाचात्रदेहदेहिनोर्हेत्वसिद्धिरेवफलितेत्यर्थ: ॥ २१ ॥



* अनुच्छिन्नखंडेयमितिव्यवहर्तृता

यतोमिलिताःपंचक्कचिदपिनस्युः ॥ २२ ॥ अं
परिहरतीतिचेन्नेति किंमिलितानामेतेषांभेदाभेदप्रयोजकत्वमुतपृथगेव तत्राद्योनसंभवति नचप्रयोजकगौरवमपिदो
तोपिनयुज्यतेतदाप्रत्येकंप्रयोजकत्वेगुणगुणिभावादिवदंगांगिकभावस्यदेहदेहिभावस्यापिप्रयोजकत्वंकिंनस्यात् ॥ २३ ॥ अपिचजा
षः प्रकृतेतस्यांगांगिकभावस्यतवापिसंमतत्वात् देहदेहिनोर्भेदाभेदानंगीकारेसर्वसंकरवादिनस्तवसिद्धांतोबाध्येत चिदात्मशरीरकयोःकार्यकारणभावसत्त्वा
तिजातिवत्प्रभृतीनांजातिव्यक्त्यादीनामन्यतमस्यप्रयोजकत्वेऽभिनिवेशश्चेत्सोप्यत्रदुर्लभोनास्ति

इतिचेन्नविकल्पनासहत्वान्मिलितानांभिदभेदतंत्रताकिं ॥ उतवापृथगेवतत्रनाद्योमिलिताःपंच
नहिक्कचिद्यतःस्युः ॥ २२ ॥ चरमोपिनयुज्यतेतदांगांगिकभावस्यचतंत्रतानकिंस्यात् ॥ नचयो
जकगौरवंचदोषःप्रकृतेतस्यतवापिसंमतत्वात् ॥ २३ ॥ अपिचान्यतमस्यजातितद्वत्प्रभृतीनांघट
कत्वआग्रहश्चेत् ॥ अपिसोत्रनदुर्लभश्चिदात्मांगकयोःकारणकार्यभावभावात् ॥ २४ ॥ नचवा
च्यमिदंपरात्मजत्वात्सकलस्यापिनजीवकार्यतेति ॥ तदभेदतएवसर्वकस्याप्युपपत्तेरिहजीवकार्य
तायाः ॥ २५ ॥ तदसिद्धिमुखानुमानदोषानुदयादुक्तनयस्यनिर्मलत्वं ॥ भ्रमधीप्रमितित्ववेदिनो
ऽतस्तवनभ्रांतिपदार्थएवसिद्ध्येत् ॥ २६ ॥

जीवस्यब्रह्माभेदादेवसर्वस्यापीहजीवकार्यतायानुपपत्तेः ॥
त् ॥ २४ ॥ सकलस्यापिपरात्मकार्यत्वान्नजीवकार्यतेतीदंत्वयानचवाच्यं तत्तस्मादसिद्ध्यादीनामनुमानदोषाणामनुदयादुक्तानुमानस्यनिर्मलत्वमतो
॥ २५ ॥ असिद्ध्यादिदोषवैधुर्यादनुमानंनिरवद्यमित्युपसंहरति
भ्रमप्रमितित्ववेदिनस्तवभ्रमपदार्थएवनसिद्ध्येत् ॥ २६ ॥

अपिचैषभ्रमः किं

शं० वि० अहंमनुजंइत्यादिप्रत्ययानांयाथार्थ्यान्नभ्रमत्वमित्युक्तं संप्रतिसमवायिकारणपर्यालोचनयापिभ्रमत्वंप्रतिक्षिप्यतेइत्याह अपिचैषभ्रमः किं मृ

तवमतेंतःकरणस्यपरिणामः अथवाचिदात्मनोऽसौपरिणामइत्यस्मिन्पक्षद्वयेआद्योनसंभवति तस्यभ्रमस्यात्मगतत्वानुभवस्यभंगापत्तेः मृ ०१

तवमतेंतःकरणस्यपरिणामः अथवाचिदात्मनोऽसौपरिणामइत्यस्मिन्पक्षद्वयेआद्योनसंभवति ॥ २७ ॥ ननुरक्ततमस्यजपाकुसुमस्ययोगाद्यथास्फ

ज्ञस्यघटस्यतत्वनाश्रयत्ववदंतःकरणपरिणामित्वेभ्रमस्यात्माश्रयत्वंनस्यादित्यर्थः ॥ २८ ॥ एतत्परिहर्तुंपृच्छतीतिचेदय

॥३०॥ टिकेलौहित्यस्यस्फुरणंतथाभ्रमसंयुतचित्तयोगादस्यभ्रमस्यात्मन्यनुभवःस्यादितिशंकते नन्विति ॥ २८ ॥ एतत्परिहर्तुंपृच्छतीतिचेदय

मंतःकरणाश्रितस्यभ्रमस्यस्वीकृतआत्मसंबंधःसन्नसन्वा तत्रप्रथमोनघटतेअन्यथाख्यातिवादिनस्तवमतेसंसर्गस्यशून्यत्वात्तथाचात्मभ्रमसं

अपिचभ्रमएषकिंतवांतःकरणस्येतिचिदात्मनोऽथवासौ ॥ परिणामइहादिमोनतस्यात्मगतत्वानुभवस्य भंगपत्तेः ॥ २७ ॥ ननुरक्ततमप्रसूनयोगात्स्फटिकेसंस्फुरणंयथारुणिम्नः ॥ भ्रमसंयुतचित्तयोगतोऽस्यभ्रमणस्यानुभवस्तथात्मनिस्यात् ॥ २८ ॥ इतिचेदयमीरयात्मयोगोभ्रमणस्याश्रितएषसन्नसन्वा ॥ प्रथमोघटतेनसंसृजेस्तेऽपरथाख्यातिवदस्यशून्यकत्वात् ॥ २९ ॥ चरमोपिनयुज्यतेपरोक्षप्रथनस्यानुपपद्यमानतायाः ॥ परिणामविशेषआत्मनोसौभ्रमइत्येपनयुज्यतेत्यपक्षः ॥ ३० ॥ असभागतयात्मनोनिरस्ततरयुक्तेःपरिणत्ययोग्यतायाः ॥ परिणत्ययुजेश्चयोग्यतायामपिवुद्ध्याकृतितश्चिदात्मनोस्य ॥ ३१ ॥

बंधोनस्यादित्यर्थः ॥ २९ ॥ नाप्यंत्यश्चपरोक्षप्रथायाअनुपपद्यमानत्वादित्याह चरमोपीति एवमंतःकरणस्यपरिणामोभ्रमइतिपक्षंनि राकृत्यात्मनःपरिणामविशेषोसौभ्रमइत्येतमंत्यपक्षंनिराचष्टे परिणामविशेषइति ॥ ३० ॥ तत्रहेतुर्निरस्तेतरसंगस्यात्मनोसभागतयानिरव यवद्रव्यत्वेनपरिणामायोग्यत्वात् परिणामित्वमंगीकृत्याप्याह योग्यतायामपिवुद्ध्याकृतितोज्ञानांतराकारेणचिदात्मनोस्यपरिणामायो गादित्यर्थः ॥ ३१ ॥

मिति सुप्तोत्थितपरामर्शानुमेयस्य कारणविरमेपिसत्त्वेननित्यंचयज्ज्ञानंतदाश्रयस्य
हियस्मान्नित्यज्ञानाश्रयस्य सुखमहमस्वाप्संनकिंचिदवेदिषमिति गुणताजातावंवांतरजातितःसजात्योर्गुणयोःसमुदायगत्ययोगाद्युगपत्समवाया
प्रत्यगात्मनःपुनरन्यचित्स्वरूपोभ्रमात्मकःपरिणामोनसंभवति ॥ ३२ ॥ हियस्माच्छौक्ल्यद्वयंयत्रकुत्रचिदपिनोसंभवति ननुम
योगादेकद्रव्याश्रितरूपरसादिगुणव्यावृत्त्यर्थंगुणतावांतरेतिविशेषणं ॥ ३३ ॥ तत्रहेतुमाह कटकाश्रयभूतदीप्तसुवर्ण
न्मतेज्ञानंनगुणोऽपितुगुणीद्रव्यपदार्थः तथाच नोदितदुष्टताप्रसरेदेतद्दूषयतीतिचेन्नेति

नहिनित्यचिदाश्रयप्रतीचःपरिणामःपुनरन्यचित्स्वरूपः ॥ गुणयोःसमुदायगत्ययोगाद्गुणतावांतरजातितःस
जात्योः ॥ ३२ ॥ युगपत्समवैतिनोहिशौक्ल्यद्वयकंयत्रचकुत्रचिद्घटेत ॥ ननुविन्नगुणोगुणीतथाचप्रसरेन्नोदित
दुष्टतेतिचेन्न ॥ ३३ ॥ कटकाश्रयभूतदीप्तहेम्नोरुचकाधारकभाववत्तथैव ॥ अविनाशिचिदाश्रयस्यभूयोन्य
चिदाधारतयास्थितेरयोगात् ॥ ३४ ॥ नचसंस्कृतिरग्रहोप्यविद्याभ्रमशब्दार्थनिरुक्त्यसंभवेपि ॥ भ्रमसंज्ञि
तवस्त्वसंभवेनभ्रमसंपादितसंस्कृतेरयोगात् ॥ ३५ ॥ अपिनाग्रहणंचितेरभावश्चितिरूपग्रहणस्यनित्यतायाः ॥
तदसंभवतोनवृत्त्यभावस्तदभावेपिचिदात्मनोवभासात् ॥ ३६ ॥

ननुभ्रमशब्दार्थनिरुक्त्यसंभवेपिसंस्कृ
स्यतदैवरुचकाधारत्वंयथातथैवनित्यज्ञानाश्रयस्यभूयोज्ञानांतराधारतयास्थितेरयोगात् ॥ ३४ ॥ अग्रहणमपिकिंस्वरूपग्रहणस्याभावः उतआगंतु
तिरग्रहणंवाविद्यास्यादित्याशंक्यपरिहरति नचेति तत्रहेतुमाह भ्रमसंज्ञितेति ॥ ३५ ॥ द्वितीयंप्रत्याह वृत्त्यभावोप्यग्र
कस्येतिविकल्प्याद्यंप्रत्याह नाप्यग्रहणंचितेरभावश्चितिरूपग्रहणस्यनित्यत्वेनतस्यचितेरभावस्यासंभवात्
हणंनभवति तत्रहेतुस्तस्यावृत्तेरागंतुकस्यग्रहणस्याभावेपिचिदात्मनःस्फुरणान्नतस्यप्रतिबंधकत्वमित्यर्थः ॥ ३६ ॥

नन्वात्मन्यज्ञानाभ्युपगमेतस्यभंजकंनेक्ष्यंतइत्याशंक्यपरिहरति नचेति तत्त्वमस्यादिमहावाक्यजन्याखंडवृत्त्यारूढपरब्रह्मचैतन्यस्यनिवर्त्त कत्वयोगात् ॥ ३७ ॥ किंचेष्टानिष्टसाधनज्ञानजन्निते सर्वस्यजंगमस्यप्रवृत्तिनिवृत्तीनचतेसर्वसंकरमतेसंभवतः सकलव्यवहारस्यसंकीर्ण त्वात् जीवनिकापितेदुर्लभातस्मादलमित्याह अपिचेति ॥ ३८ ॥ इत्येवंयुक्तिशतैःसअमर्त्यकीर्त्तिर्भगवान्भाष्यकारस्तमनलसंसुधींद्रं भट्टभास्करंजित्वाश्रुतिभावविरोधिभावभाजंविमतग्रंथंझटितिममंथ ॥ ३९ ॥ इत्येवंभास्करदुर्मतेऽभिभूतेसतिभगवत्पादकथालक्षणासुध

नचभंजकमीक्ष्यतेनतस्योपगमेखंडजडानृतात्मकस्य॥इतिवाच्यमखंडवृत्तिरूढेश्वरबोधस्यनिवर्तकत्वयोगात्॥३७॥ अपिचेष्टतदन्यहेतुधीजेजगतःकृत्यकृतीनतेघटेते॥सकलव्यवहारसंकरत्वात्तदलंजीवनिकापिदुर्लभाते॥३८॥इतियुक्तिशतैरमर्त्यकीर्तिःसुमतींद्रंतमतंद्रितंसजित्वा॥श्रुतिभावविरोधिभावभाजंविमतग्रंथममंथरंममंथ॥३९॥इतिभास्करदुर्मतेऽभिभूतेभगवत्पादकथासुधाप्रसस्रे॥घनवार्षिकवारिवाहजालेविगतेशारदचंद्रचंद्रिकेव॥१४०॥सकथाभिरवंतिपुप्रसिद्धान्विबुधान्बाणमयूरदंडिमुख्यान्॥ शिथिलीकृतदुर्मताभिमानान्निजभाष्यश्रवणोत्सुकांश्चकार॥ ४१ ॥ प्रतिपद्यतुबाह्लिकान्महर्षौविनयिभ्यःप्रविवृण्वतिस्वभाष्यं ॥ अवदन्नसहिष्णवःप्रवीणाःसमयेकेचिदथार्हताभिधाने॥ ४२ ॥

प्रसस्रेविस्तारंगता यथाघनीभूतानांवार्षिकपयोदानांजालेविगतेसतिशरत्कालीनचंद्रचंद्रिकातद्वदित्यर्थः ॥ १४० ॥ सअवंतिषुजनपदेषु प्रसिद्धान्विबुधान्बाणादीन्पंडितान्कथाभिःशिथिलीकृतदुर्मताभिमानान्निजभाष्यश्रवणोत्कंठितांश्चकार कथाभिःप्रसिद्धानितिवा ॥ ॥ ४१ ॥ बाल्हिकांस्तुदेशान्प्रतिपद्यमहर्षौश्रीशंकरेशिष्येभ्यःस्वभाष्यंविवृण्वतिसतिआर्हतसंज्ञकेविवसनसमयेप्रवीणाःकेचिदसहि ष्णवऊचुः ॥ ४२ ॥

तिपंचास्तिकायानाम अस्तीतिकायंतेशब्द्यंतइत्यस्तिकायाः कैगैशब्दइतिस्मरणात् तत्रजीवास्तिकायस्त्रिधाबद्धोमुक्तोनित्यसिद्धश्चा
बोधात्मकोजीवोजडवर्गस्त्वजीवएतयोरयमपरःप्रपंचोजीवास्तिकायःपुद्गलास्तिकायःधर्मास्तिकायःअधर्मास्तिकायःआकाशास्तिकायश्चे
र्हन्नित्यसिद्धइतरेकेचित्साधनैर्मुक्ताअन्येबद्धाः पुद्गलास्तिकायःषोढा पृथिव्यादीनिचत्वारिभूतानिस्थावरंजंगमंचेतिशास्त्रीयबाह्यप्रवृत्त्या
द्यांतरोऽपूर्वाख्योधर्मोऽनुमीयतइतिप्रवृत्त्यनुमेयोधर्मोधर्मास्तिकायः ऊर्ध्वगमनशीलस्यजीवस्यदेहेवस्थानेनाधर्मोनुमीयतइतिस्थित्यनुमेयो
ऽधर्मास्तिकायः आकाशास्तिकायोद्वेधा लोकाकाशोऽलोकाकाशश्च तत्रोपर्युपरिस्थितानांलोकानामंतर्वर्त्तीआद्यस्तेषामुपरिमोक्षस्था
नंद्वितीयः पुरुषंविषयेष्वास्रावयतिगमयतीतिइंद्रियप्रवृत्तिरास्रवः इंद्रियद्वाराहिपौरुषंज्योतिर्विषयान्स्पृशद्रूपादिज्ञानरूपेणपरिणमते अ
न्येतुकर्माण्यास्रवमाहुस्तानिकर्त्तारमभिव्याप्यस्रवंतिकर्त्तारमनुगच्छंतीत्यास्रवः सेयंमिथ्याप्रवृत्तिरनर्थहेतुत्वात् जीवमजीवमास्रवंचा

ननुजीवमजीवमास्रवंचश्रितवत्संवरनिर्जरौचबंधः॥ अपिमोक्ष
मुपैषिसप्तसंख्यान्वपदार्थान्कथमेवसप्तभंग्या॥४२॥

श्रितवंता तैःसहितौसंवरनिर्जरौ सम्यक्प्रवृत्ती तत्रशमदमादिप्रवृत्तिःसंवरः सहिआस्रवस्रोतसोद्वारंसंवृणोतीतिसंवरउच्यते निर्जरस्त्वनादि
कालप्रवृत्तिकषायकलुषपुण्यापुण्यप्रहाणहेतुस्तप्तशिलारोहणादिः सहिनिःशेषंपुण्यापुण्यसुखदुःखोपभोगेनजरयतीतिनिर्जरः बंधोऽष्टविधं
कर्म तत्रघातिकर्मचतुर्विधं तद्यथाज्ञानावरणीयंदर्शनावरणीयंमोहनीयमंतरायमिति तथाचत्वार्यघातिकर्माणि तद्यथावेदनीयंनामिकंगोत्रि
कमायुष्कंचेति तत्रसम्यक्ज्ञानंनमोक्षसाधनंनहिज्ञानाद्वस्तुसिद्धिरतिप्रसंगादितिविपर्ययोज्ञानावरणीयं आर्हतदर्शनाभ्यासान्नमोक्षइतिज्ञा
नंदर्शनावरणीयं बहुषुविप्रतिषिद्धेषुतीर्थकरैरुपदर्शितेषुमोक्षमार्गेषुविशेषानवधारणंमोहनीयं मोक्षमार्गप्रवृत्तानांतद्विघ्नकरंज्ञानमांतरायं ता
नीमानिश्रेयोहंतृत्वाद्घातीनिकर्माण्युच्यंते अघातीनिकर्माणि तद्यथा शुक्लशरीराकारेणपरिणामहेतुर्वेदनीयं द्वारेणतत्त्ववेदनहेतुत्वात् तदनुगु

णंनामिकं तद्धिशुक्लपुद्गलस्याद्यामवस्थांकललबुद्बुदादिरूपामारभते गोत्रिकंत्वव्याकृतं ततोप्याद्यंदेहाकारपरिणामशक्तिरूपेणावस्थितंआ
युष्कंचायुःकायतिकथयत्युत्पादनद्वारेणेतिशुक्रशोणितस्वरूपं यद्वाममवेदनीयंतत्त्वमस्मीतिवेदनीयं एतन्नामाहमस्मीत्यभिमानोनामिकं अ
हमत्रभगवतोदेशिकस्यार्हतःशिष्यवंशेप्रविष्टइत्यभिमानोगोत्रिकं शरीरस्थित्यर्थंकर्मायुष्कं तान्येनानितत्वावेदकशुक्लपुद्गलाश्रयत्वादघाती
निकर्माणि तदेतत्कर्माष्टकंपुरुषंबध्नातीतिबंधः विगलितसमस्तक्लेशतद्वासनस्यानावरणीयज्ञानस्यसुखैकतानस्यात्मनउपरिदेशावस्थानंमोक्ष
इत्येके अन्येतूर्ध्वगमनशीलोहिजीवोधर्माधर्मास्तिकायेनबद्धस्तद्विमोकादूर्ध्वंगच्छत्येवसमोक्षइतिसप्तानामस्तित्वादीनांभंगानांसमाहारःसप्त

कथयार्हतजीवमस्तिकायंस्फुटमेवंविधइत्युवाचमौनी॥ अ
वदत्सचदेहतुल्यमानोदृढकर्माष्टकवेष्टितश्चविद्वन्॥ ४४ ॥

भंगीतयोपलक्षितान्सप्तपदार्थान्किंकथंनांगीकरोषि सप्तभंगास्तुस्यादस्तिस्यान्नास्तिस्यादस्तिचनास्तिचस्यादवक्तव्यःस्यादस्तिचावक्तव्यःस्या
न्नास्तिचावक्तव्यश्चस्यादस्तिचनास्तिचावक्तव्यश्चेति स्यादितितिङंतप्रतिरूपकंकथंचिदर्थकमव्ययं तत्रवस्तुनोऽस्तित्ववांछायांप्रथमोभंगः
प्रवर्त्तते नास्तित्ववांछायांद्वितीयः क्रमेणोभयवांछायांतृतीयः युगपदुभयवांछायांचतुर्थः आद्यचतुर्थभंगयोर्वांच्छायांपंचमः द्वितीयचतुर्थे ॥ २
च्छायांषष्ठः तृतीयचतुर्थेच्छायांसप्तमइतिविवेकः ॥ ४३ ॥ एवमुक्तोमौनीसश्रीशंकराचार्यउवाच हेआर्हतजीवास्तिकायमेवंविधोजी व
स्तिकायइतिस्फुटंकथय एवमुक्तःसचार्हतोबभाषे देहतुल्यप्रमाणोदृढेनोक्तकर्माष्टकेनबद्धश्च ॥ ४४ ॥

। अपिचशरीराणामनवस्थितप
आचार्यआह अमहाननणुर्देहपरिमाणोजीवोघटादयामध्यमपरिमाणत्वाद्यथाननित्यास्तथानित्योनस्यात्
रिमाणत्वान्मनुष्यजीवोमनुष्यशरीरपरिमाणोभूत्वापुनःकेनचित्कर्मविपाकेनहस्तिजन्मप्राप्नुवन्नसर्वंहस्तिशरीरंप्रविशेद्देहापरदेशोनिर्जीवः
स्यात्पुत्तिकादेहंचप्राप्नुवन् तंसर्वोनप्रविशेत् देहाद्बहिरपिजीवःस्यादित्यर्थः चकाराद्दस्मिन्नपिजन्मनिकौमारयौवनस्थविरेष्वेषदोषोबोध्यः
॥ ४५ ॥ एवमुक्तआर्हतःशंकते महतासंघातेनास्यजीवस्यसंगमेसतिकेचनावयवाउपयांति तथाऽल्पदेहमभिगंतुमिच्छोःकेचनावयवाअ

अमहाननणुर्घटादिवत्स्यात्सननित्योपिचमानुपाच्चदेहात् ॥ गजदेहमयन्विशेन्नकृत्स्नंप्रविशेच्चपु
षिदेहमप्यकृत्स्नः ॥ ४५ ॥ उपयांतिचकेचनप्रतीकामहतासंहननेनसंगमेस्य ॥ अपयात्यधिजग्मु
षोल्पदेहंतदयंदेहसमःसमश्नुतेश्च ॥ ४६ ॥ उपयंतइमेतथापयंतोयदिवर्ष्मवनजीवतांभजेयुः ॥ प्र
भवेयुरनात्मनःकथंतेकथमात्मावयवाःप्रयंतुतास्मिन् ॥ ४७ ॥ जनितारहिताक्षयेणहीनाःसमुपायं
त्यपयांतिचात्मनस्ते ॥ अमुकोपचितःप्रयातिकृत्स्नंत्वमुकैश्चापचितःप्रयात्यकृत्स्नं ॥ ४८ ॥

पयांतीत्येवंसमानव्याप्तेश्चसचरसावयंजीवोदेहसमः ॥ ४६ ॥ आचार्यआह यदीमेऽवयवाउपयंतस्तथापयंतश्चतर्ह्यागमापायित्वाच्छ
रीरवदात्मतांनभजेयुः किंचानात्मनस्तेजीवावयवाःकथंप्रादुर्भवेयुः कथंचतस्मिन्ननात्मनितेलीयेरन् विरोधादित्यर्थः ॥ ४७ ॥ आर्ह
तआहात्मनस्तेऽवयवाजन्मनारहिताःक्षयेणचहीनानित्याएवसमुपायांत्यपयांतिच तथाचामुकैरुपचितोगजादिदेहंकृत्स्नंप्रयातिअमुकैश्चाप
चितःपुत्तिकादिदेहमकृत्स्नंस्वल्पंप्रयाति ॥ ४८ ॥

आचार्यउवाच किंतेषामचेतनत्वमुतचेतनत्वमितिवद तत्रांत्येपक्षेबहूनांचेतनानामेकाभिप्रायनियमाभावात्कदाचिद्विरुद्धमत्याशरीरमुन्म
थितंभवेत् आद्येतुकात्स्र्येनशरीरंनचेतयेयुः ॥ ४९ ॥ अंत्यविकल्पमवलंब्यार्हतआह यथाबहवोप्यश्वाएकमत्यारथंचालयंति तथान्यो
न्यमप्रतीताःचेतनतामपिप्रतिपद्यहेतत्त्वज्ञाधिपते अंगंशरीरमेजयंतुचालयंतु ॥ ५० ॥ आचार्यःपरिहरति बहवोपिवाजिनोनिया
मकस्यसत्त्वादैकमत्यंतत्ररथचालनेभजेयुरत्रतुतद्वत्कस्यचिदपिनियामकस्याभावादवएकमत्यंकथंघटेत कटाक्षेणसंबोधयति हेसुमतेइति ॥

किमचेतनतोनचेतनत्वंवदतेपांचरमेविरुद्धमत्या ॥ वपुरुन्मथितंभवेत्तुपूर्वंवतकात्स्र्येनवपुर्नचेत
येयुः ॥ ४९ ॥ चलयंतिरथंयथैकमत्याबहवोवाजिनएवमप्रतीताः ॥ इतरेतरमंगमेजयंतुज्ञपतेचे
तनतामपिप्रपद्य ॥ ५० ॥ बहवोपिनियामकस्यसत्त्वात्सुमतेतत्रभजेयुरेकमत्यं ॥ कथमत्रनिया
मकस्यतद्वद्विरहात्कस्यचिदप्यदोघटेत ॥ ५१ ॥ उपयांतिनचापयांतिजीवावयवाःकिंतुमहत्तरेशरी
रे ॥ विकसंतिचसंकुचंत्यनिष्टेयतिवर्यात्रनिदर्शनंजलौका ॥ ५२ ॥ यदिचैवमर्मीसविक्रियत्वाद्व
टवत्तेचविनश्वराभवेयुः ॥ इतिनश्वरतांप्रयातिजीवेकृतनाशाकृतसंगमौभवेतां ॥ ५३ ॥ अपिचै
वमलाबुवद्भवाब्धौनिजकर्माष्टकभारमग्नजंतोः ॥ सततोर्ध्वगतिस्वरूपमोक्षस्तवसिद्धांतसमर्थि ॥ २३
तोनसिध्येत् ॥ ५४ ॥

॥ ५१ ॥ आर्हतआहोपयांतीति अनिष्टेपुत्तिकादिदेहे ॥ ५२ ॥ एवमुक्तआचार्यउवाच यदिचैवंतर्हिसविक्रियत्वात्तेऽमीविनश्वराभवे
युरित्येवंजीवेनश्वरतांप्रयातिसतिकृतनाशाकृताभ्यागमौभवेतां ॥ ५३ ॥ किंचैवंसतितुंबिकावत्संसारसागरेनिजकर्माष्टकभारेणमग्नस्यजं
तोःसततोर्ध्वगतिस्वरूपोमोक्षस्तवसिद्धांतसमर्थितोबाध्येत ॥ ५४ ॥

हियस्मात्परमार्थसतांविरोधभाजांसदसत्त्वादिधर्माणामेकस्मिन्धर्मण्येकदायुगप
अपिचहेआर्हत तेसाधनभूतसप्तभंगीनयमपिनाद्रियामहे त्स्थितिर्नघटेत ॥ ५५ ॥ इत्येवंमाध्यमिकेषुभग्नगर्वेषुसत्सुअथानंतरंसश्रीशंकराचार्योनैमिशेभाष्याणिविस्तार्यदरदादिकान्देशविशे
षान्जितवान् ॥ ५६ ॥ सहिभाष्यकारःखंडनकारंश्रीहर्षाख्यंबहुधावादंकृत्वावशंवदंचकार तंविशिनष्टि बहुयुक्तिभिःखंडितानिसर्व
शास्त्राणियेन गुरुःप्रभाकरःभट्टोभट्टपादोभट्टभास्करश्चगुर्वादिभिर्जेतुमशक्यमतएवोढदर्पं ॥ ५७ ॥ कामरूपान्देशविशेषानधिगत्यप्राप्य

अपिसाधनभूतसप्तभंगीनयमप्यार्हतनाद्रियामहेते ॥ परमार्थसतांविरोधभाजांस्थितिरेकत्रहिनैकदांघटे
त ॥ ५५ ॥ इतिमाध्यमिकेषुभग्नदर्पेष्वथभाष्याणिसनैमिशेवितत्य ॥ दरदान्भरतांश्चशूरसेनान्कुरुपांचा
लमुखान्बहूनजैषीत् ॥ ५६ ॥ पटुयुक्तिनिकृत्तसर्वशास्त्रंगुरुभट्टोदयनादिकैरजय्यं ॥ सहिखंडनकारमूढद
र्पंबहुधाव्युध्यवशंवदंचकार ॥ ५७॥ तदनंतरमेषकामरूपानधिगत्याभिनवोपशब्दगुप्तं ॥ अजयत्किलशा
क्तभाष्यकारंसचभग्नोमनसेदमालुलोचे ॥ ५८ ॥ निगमाब्जविकासिबालभानोर्नसमोमुष्यविलोक्यतेत्रि
लोक्यां ॥ नकथंचनमद्वशंवदोसौतदमुंदैवतकृत्ययाहरेयं ॥ ५९ ॥ इतिगूढमसौविचिंत्यपश्चात्सहशिष्यैः
सहसास्वशाक्तभाष्यं ॥ परिहृत्यजनापवादभीत्यायमिनःशिष्यइवान्ववर्त्ततैषः ॥ १६० ॥

विचारयामास॥५८॥तदेवाह वे
अभिनवउपशब्दोयस्यसचासौगुप्तश्चतमभिनवगुप्तमितियावत् सचभग्नोऽभिनवगुप्ताचार्योमनसेदंवक्ष्यमाणं दाब्जविकासिनोबालसूर्यस्यामुष्यशंकरस्यसमस्त्रिलोक्यांनविलोक्यतेऽतोसमद्वशंवदःकथंचिदपिनभविष्यति तस्मादमुंदैवतकृत्ययाहंपरिहरे
य॥५९॥ इत्येवमसौगूढंविचिंत्यपश्चाच्छिष्यैःसह विचिंत्यजनापवादभयेनस्वशाक्तभाष्यंसहसापरित्यज्यैषोयमिनःशिष्यइवान्ववर्तत॥६०॥

इत्येवमुदीच्यानुत्तरदिशिभवान् स्वशिष्यपदंगतांन्विधायाथविदेहाद्यैर्विहितापूजायस्यसतथांगादिष्वयंयशआस्तीर्यगौडानूजगाम ॥ ६१ ॥ तेषुगौडदेशेषुस्थितान्मुरारिमिश्रादीन्विजित्यप्रौढस्वयशोगौडदेशोद्भवानगापयद् ॥ ६२ ॥ पूर्वंकलौयेनशास्त्राम्नायविनिंदकेनकुबुद्धिनाद्विजवराविमोहितास्तस्यासतोबुद्धस्यारींस्तान्भास्करादीन्निगमागमादिषुनिष्णातःपारंगतोमस्करिवरोयतिश्रेष्ठःश्रीशंकराचार्यःक्षणमात्रेणप्रविभेद ननुबुद्धारीणांतेषांप्रविभेदंनमनुचितमित्याशंकानिरासायतान्विशिनष्टि कूटेषुमिथ्याभूतेषुप्रवादेष्वाग्रहोयेषां नन्वेवंतर्हिबुद्धमतस्थापन

निजशिष्यपदंगतानुदीच्यानितिकृत्वाथविदेहकौशलाद्यैः ॥ विहितापचितिस्तथांगवंगेष्वयमास्तीर्ययशोजगामगौडान् ॥ ६१ ॥ अभिभूयमुरारिमिश्रवर्यंसहसाचोदयनंविजित्यवादे ॥ अवधूयचधर्मगुप्तमिश्रंस्वयशःप्रौढमगापयत्सगौडान् ॥ ६२ ॥ पूर्वंयेनविमोहिताद्विजवरास्तस्यासतोरीन्कलौबुद्धस्यप्रविभेदमस्करिवरस्तान्भास्करादीन्क्षणात् ॥ शास्त्राम्नायविनिंदकेनकुधियाकूटप्रवादाग्रहान्निष्णातोनिगमागमादिषुमतंद्रक्ष्यकूटग्रहे ॥ ६३ ॥ शाक्तैःपाशुपतैरपिक्षपणकैःकापालिकैर्वैष्णवैरप्यन्यैरखिलैःखिलंखलुखलैर्दुर्वादिभिर्वैदिकं ॥ मार्गंरक्षितुमुग्रवादिविजयंनोमानहेतोर्व्यधात्सर्वज्ञोनयतोस्यसंभवतिसंमानग्रहग्रस्तता ॥ ६४ ॥

कृतंभविष्यतीत्याशंकाव्यवच्छेदायाहकूटग्रहेमिथ्याभूतपक्षस्वीकारेदक्षस्यबुद्धस्यापिमतंप्रविभेदेत्यनुषज्यते शा॰ ॥६३ ॥ शाक्तादिभिरन्यैर्वैशेषिकादिभिरपिसर्वैर्दुष्टैर्वादिभिःखिलमुच्छिन्नंवैदिकंमार्गंरक्षितुंसर्वज्ञःश्रीशंकराचार्यउग्रंवादिविजयंव्यधात् मानहेतोर्नयतोऽस्यसंमानग्रहग्रस्ततानसंभवति ॥ ६४ ॥ ॥ ३४

परिसिचितेपरिस किंचजगतामाद्येनकमलासनेनचतुर्मुखेनदिष्टेउपदिष्टेपुनश्चतस्यपुत्रैः सनकादिभिर्निर्दिष्टेसम्यगुपदिष्टेपुनश्चवाल्मीक्यादिभिः परिचितेपरिस
किंचजगतामाद्येनकमलासनेनचतुर्मुखेनदिष्टेउपदिष्टेपुनश्चतस्यपुत्रैः सनकादिभिर्निर्दिष्टेसम्यगुपदिष्टेपुनश्चवाल्मीक्यादिभिः मोक्षाध्वगैर्मुमुक्षुभिः क्षुण्णतामभ्यस्ततांचकार
मंतात्संचितेश्रौताद्वैतमार्गेपरात्मभेदिनोदुर्वादिनः कंटकान्प्रोद्धृत्याथानंतरंतत्रमोक्षाध्वनि मोक्षाध्वगैर्मुमुक्षुभिः क्षुण्णतामभ्यस्ततांचकार
॥ ६५ ॥ मातृभिः षडाननवत्प्रथिताभिः शांत्याद्याभिरेधिततनौपुनश्चातिशयितंपिचंडमुदरंयेषांतेपिचंडिलाः स्थूलोदराः पिच्छादित्वादिल
च् बृहत्कुक्षिः पिचंडिलइत्यमरः अतिशयेनपिचंडिलानांप्रचंडानामतिकंडूच्चलतांपाखंडात्मकानामसुराणांखंडनैकरसिकेभिक्षुराजेश्रीशंक

दिष्टेपंकजविष्टरेणजगतामाद्येनतत्सूनुभिर्निर्दिष्टेसनकादिभिः परिचितेप्राचेतसाद्यैरपि ॥ श्रौताद्वैतपथे
परात्मभिदुरान्दुर्वादिनः कंटकान्प्रोद्धृत्याथचकारतत्रकरुणोमोक्षाध्वगक्षुण्णतां ॥ ६५ ॥ शांतिर्दांतिविराग
ताप्युपरतिः क्षांतिः परैकाग्रताश्रद्धेतिप्रथिताभिरेधिततनौषड्वक्त्रवन्मातृभिः ॥ भिक्षुक्षोणिपतौपिचंडिलत
रोच्चंडातिकंडूच्चलत्पाखंडासुरखंडनैकरसिकेवाधाबुधानांकुतः ॥ ६६ ॥ यत्रारंभजकाहलीकलकलैर्लोका
यतोविद्रुतः काणाः काणभुजस्तुसैन्यरजसासांख्यैर्भृतासांख्यधीः ॥ युध्वातेषुपलायितेषुसहसायोगाः सहैवा
द्रवन्कोवावादिभटः पटुर्भुविभवेद्वस्तुंपुरस्तान्मुनेः ॥ ६७ ॥

राचार्येसतिबुधानांपंडितात्मकानांदेवानांबाधाकुतः कुतोपिनैवेत्यर्थः ॥ ६६ ॥ यत्रारंभजन्यकाहल्याः कलकलैः कर्णालाख्यवाद्यविशे
षकोलाहलैः कलकलउक्तः कोलाहलइतिमेदिनी लोकायतश्चार्वाकोविद्रुतः काणादास्तुसैन्यरजसाकाणाजाताः सांख्यैस्तुअसांख्यधीर्धृ
ता युद्धंकृत्वातेषुचार्वाकादिषुपलायितेषुतैः सहैवपातंजलाअपिसहसापलाय्यागतास्तथाचभुविकोवावादिभटोमुनेः पुरस्ताद्वस्तुंपटुर्भवेन्न
कोपीत्यर्थः ॥ ६७ ॥

शोभनेप्रचंडपूर्वमंडनस्यखंडनेयोवाचंयमक्ष्मापतेर्डिडिमाडंबरःसमुदभूत्तस्मात्डिंडिमाडंबराज्जाताःशब्द
पणस्यग्लहस्यबंधनेनबंधुरतरेति परंपराअद्यपाखंडदुर्वादिनांश्रोत्रतटाटवीषुदावाग्निज्वालतांदधते ॥ ६८ ॥ किंचयुद्धायसमुद्यतोबौद्धःकिलपुरःस्थित्वाक्षणाद्विद्रुतः क
णादस्तुझटितिकोणेविलयंगतः गौतमस्तुतमःस्तोमेनावृतःक्वचिद्गाढांधकारेमग्नः असौकपिलस्तुभग्नःसंस्ततोपलायत ततस्तस्मात्कारणादि

उच्चंडपणबंधबंधुरतरेवाचंयमक्ष्मापतेःपूर्वमंडनखंडनेसमुदभूद्योडिंडिमाडंबरः ॥ जाताःशब्दपरंपरास्त
तइमाःपाखंडदुर्वादिनामद्यश्रोत्रतटाटवीषुदधतेदावानलज्वालतां ॥ ६८ ॥ बुद्धोयुद्धसमुद्यतःकिलपुनः
स्थित्वाक्षणाद्विद्रुतःकोणेद्राक्कणभुग्विलीयततमःस्तोमावृतोगौतमः ॥ भग्नोसौकपिलोपलायतततःपा
तंजलाश्चांजलिंचक्रुस्तस्ययतीशितुश्चतुरताकेनोपमीयेतसा ॥ ६९ ॥ हस्तग्राहंगृहीताःकतिचनसमरेवैदि
कावादियोधाःकाणादाद्याःपरेतुप्रसभमभिहताहंतलोकायताद्याः ॥ गाढंबंदीकृतास्तेसुचिरमथपुनःस्वस्व
राज्येनियुक्ताःसेवंतेतंविचित्रायतिधरणिपतेःशूरतावादयावा ॥ १७० ॥

केचित्काणादाद्यावैदिकावादियोधाःसंग्रामेहस्तग्राहं
तिवा पातंजलाश्चांजलिंचक्रुस्तस्ययतिपतेःसाचतुरताकेनोपमीयेत ॥ ६९ ॥ गृहीताहस्तेनगृहीताइत्यर्थः परेतुवेदबाह्यश्चार्वाकाद्याबलात्कारेणाभिहताः हंतेतिहर्षे तेकाणादाद्याःसुचिरंगाढंबंदीकृताः अथपुनःस्वस्वरा
ज्येस्वस्वरूपब्रह्मानंदलक्षणेनियुक्तास्तंसेवंते तथाचाहोअतिचित्रायतिभूमिपतेःशूरतावादयावा स्र० १७० ॥

किंचपाखंडवाङ्मंडलीदंडिपतिनाऽखंडिखंडिता तांविशिनष्टि शांतिलक्षणसमुद्रस्यवाडवाग्निशिखासत्यलक्षणमेघस्यवात्यावायुसमूहो
दयालक्षणायाश्चंद्रिकायाअमावास्यारात्रिःक्षांतिलक्षणायाःकमलिन्याःपूर्णमासीचंद्रकांतिःआस्तिक्यवृक्षस्यदावानलनूतनज्वालानामाव
लीसत्कथालक्षणायाहंस्याःप्रावृट् अथेतिपदंसर्वत्रसंबंधनीयं खंडनयोग्यताबोधकानिविशेषणानि शा० ॥ १७१ ॥ हंतेतिहर्षे समंत
तःप्रसृमरैःप्रसरणशीलैःकांतैःसुंदरैरद्वैतामृतवर्षिभिरुत्कृत्तमुन्मूलितमाध्यात्मिकाधिदैविकाधिभौतिकलक्षणंतापत्रयंयैःपरगुरुव्याहारलक्षणैः

शांत्यार्घ्णववाडवानलशिखासत्याभ्रवात्यादयाज्योत्स्नादर्शनिशाथशांतिनलिनीएकाशशांकद्युतिः ॥
आस्तिक्यद्रुमदावपावकनवज्वालावलीसत्कथाहंसीप्रावृडखंडिदंडिपतिनापाखंडवाङ्मंडली ॥ ७१ ॥ अ
द्वैतामृतवर्षिभिःपरगुरुव्याहारधाराधरैःकांतैर्हंतसमंततःप्रसृमरैरुत्कृत्ततापत्रयैः ॥ दुर्भिक्षंस्वपरैकताफल
गतंदुर्भिक्षसंपादितंशांतंसंप्रतिखंडिताश्चनिबिडाःपाखंडचंडातपाः ॥ ७२ ॥ शांतानांसुभटाःकपालिक
पतद्ग्राहग्रहव्यापृताःकाणादप्रतिहारिणःक्षपणकक्षोणीशवैतालिकाः ॥ सामंताश्चदिगंबरान्वयभुवश्चा
र्वाकवंशांकुरानव्याःकेचिदलंमुनीश्वरगिरानीताःकथाशेषतां ॥ ७३ ॥

पयोदैर्दुर्भिक्षसंपादितंस्वपरैकतालक्षणफलविषयंदुर्भिक्षंसंप्रतिशांतं निबिडाश्पाखंडलक्षणाश्चंडातपाश्चखंडिताः ॥ ७२ ॥ शांतानांपातं
जलानांसुभटाः कपालिकानांपतद्ग्रहाणांग्रहणेव्यापृताः काणादानांप्रतिहारिणः क्षपणकराजानःवैतालिकादिगंबरवंशोद्भवाःसामंताःकेचि
न्नव्याश्चार्वाकवंशांकुरामुनीश्वरगिराकथाशेषतामलंनीताः ॥ ७३ ॥

उपसंहरति इत्येवंसकलासुदिशासुद्वैतवार्तानिवृत्तौसत्यामथस्वयमयंप्रतिदिनंसंदेहनाशंकुर्वन्नद्वैतमार्गविस्तारितवान् यथातिमिरौघेसंप्रशां



इतिसकलदिशासुद्वैतवार्तानिवृत्तौस्वयमथपरितस्तारायमद्वैतवर्त्म ॥ प्रतिदिनमपिकुर्वन्सर्वसंदेहमोक्षं रविरिवतिमिरौघेसंप्रशांतेमहःस्वं॥ १७४॥ इतिश्रीमाधवीयेतत्तदाशाजयकौतुकी॥ संक्षेपशंकरजयेसर्गःपंचदशोभवत् ॥ १५॥ मूलसंख्या२९३

तेसतिरविर्महःस्वंप्रकाशंवितनोतितद्वत् मालिनी ॥ १७४ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिकृतेश्रीमच्छंकराचार्यविजयडिंडिमेपंचदशःसर्गः ॥ १५ ॥ टी० सं० १३५०

॥इतिपंचदशःसर्गःसमाप्तः॥

एवंदिग्विजयकौतुकंप्रतिपाद्यशारदापीठवासंसपरिकरंनिरूपयितुमारभते अथानुत्तमंमांत्रिकमभिनवगुप्तंयतिशेखरोय
॥ श्री० ॥ द्रुतवि० ॥ १ ॥ समूढबुद्धिःप्ररूढकोपोऽभिन
स्मिन्कालेजितवांस्तस्मिन्कालेसतुपराजितोहतमनायतिविषयमपगोरणंवधोद्यमंकृतवान् अस्मादभिचाराद्वस्यश्रीशंकरस्यवैद्यैरचिकित्स्यतमोभगंदराख्योरोगः अ
वगुप्तस्तदनंतरंयतिशेखरमभिचचाराभिचारिकंकर्मकृत्यांकृतवान्

श्री० ॥ अथषोडशःसर्गः ॥ अथयदाजितवान्यतिशेखरोऽभिनवगुप्तमनुत्तममांत्रिकं॥ सतुतदापजि
तोयतिगोचरंहतमनाःकृतवानपगोरणं ॥ १ ॥ सततोऽभिचचारमूढबुद्धिर्यतिशार्दूलममुंप्ररूढरोषः ॥ अ
चिकित्स्यतमोभिषग्भिरस्मादजनिष्टास्यभगंदराख्यरोगः ॥ २ ॥ अचिकित्स्यभगंदराख्यरोगप्रसरच्छो
णितपंकिलस्वशाट्याः ॥ अजुगुप्स्यविशोधनादिरूपांपरिचर्यामकृतास्यतोटकार्यः॥३॥ भगंदरव्याधिनि
पीडितंगुरुंनिरीक्ष्यशिष्याःसमबोधयंश्छनैः ॥ नोपेक्षणीयोभगवन्महामयस्त्वपीडितःशत्रुरिवर्धिमाप्नुया
त् ॥ ४ ॥ ममत्वहानाद्भवताशरीरकेनगण्यतेव्याधिकृतार्तिरीदृशी ॥ पश्यंतएवांतिकवर्तिनोवयंभृशातु
राःस्मःसहसाव्यथासहाः॥५॥

जनिष्ट वसंतमालिका ॥ २ ॥ अचिकित्स्येनभगंदराख्यरोगेणप्रसरत्शोणितस्यपंकेनव्याप्तायाआचार्यशाट्याः अजुगुप्सपरिशोधनादिं
रूपांसेवांतोटकार्यःकृतवान् ॥ ३ ॥ हेभगवन्महारोगस्तूपेक्षणीयोनभवति नोचेदपीडितःशत्रुर्यथाऋद्धिमाप्नोतितथावृद्धिंप्राप्नुयात् उ० ॥
॥४॥यद्यपिशरीरकेममत्वहानात्भवताएवंविधामिरोगकृतापीडानगण्यते तथापिसमीपवर्तिनःपश्यंतएवसहसाव्यथाऽसहाःभृशार्त्ताःस्मः॥५॥

तर्हिकिंकर्त्तव्यमितितत्राहुश्चिकित्सकाइति संप्रतिजीवातुवेदेजीवनौषधवेदेवैदिकशास्त्रे जीवातुरस्त्रियांभक्केजीविनेजीवनौषधइतिमेदिनी ग
दितार्थसिद्धिदाउक्तार्थसिद्धिदाःपुरुषाःप्रत्यक्षवत्संति ॥ ६ ॥ ननुयथामयोपेक्ष्यस्तथाभवद्भिरप्युपेक्षणीयमित्याशंक्याहुः शरीरकादाव
नास्थयागुरावात्मनिसुखमुपेक्षमाणेसत्यपिगुरुदुःखदर्शिभिःसमर्थैःशिष्यैर्नोपेक्षणीयमितिशास्त्रनिश्चयः ॥ ७ ॥ किंच स्वस्थेभवत्पादसरो





चिकित्सकाव्याधिनिदानकोविदाःसंपृच्छनीयाभगवन्नितस्ततः ॥ प्रत्यक्षवत्संप्रतिसंतिपूरुषाजीवातुवेदे
गदितार्थसिद्धिदाः ॥ ६ ॥ उपेक्ष्यमाणेऽपिगुरावनास्थयाशरीरकादौसुखमात्मनीश्वरैः ॥ नोपेक्षणीयंगुरुदुः
खदृश्विभिर्दुःखंविनेयैरितिशास्त्रनिश्चयः ॥ ७ ॥ स्वस्थेभवत्पादसरोरुहद्वयेस्वस्थावयंयन्मधुपायिवृत्तयः ॥
तस्माद्भवेत्तावकविग्रहोयथास्वस्थस्तथावांछतिपूज्यनोमनः ॥ ८ ॥ व्याधिर्हिजन्मांतरपापपाकोभोगेनत
स्मान्नक्षपणीयएषः ॥ अभुज्यमानःपुरुषंनमुंचेज्जन्मांतरेपीतिहिशास्त्रवादः ॥ ९ ॥ व्याधिर्द्विधाऽसौकथि
तोहिविद्भिःकर्मोद्भवोधातुकृतस्तथेति ॥ आद्यक्षयःकर्मणएवलीनाच्चिकित्सयास्याच्चरमोदितस्य ॥ १० ॥

जडद्वेवयंस्वस्थायत्रपादसरोरुहद्वयभ्रमराणांवृत्तिर्येषांतस्मात्तावकविग्रहोयथास्वस्थोभवेत्तथाहेपूज्यास्माकंमनोवांछति वंश० ॥ ८ ॥
एवंशनैर्बोधितआचार्यउवाच हियस्माद्रोगोजन्मांतरपापस्यपाकस्तस्मादेषोभोगेननाशनीयोहियतश्चाभुज्यमानएषांजन्मांतरेऽपिनत्यजे ॥१॥
दितिशास्त्रवादः ॥ ९ ॥ नन्वेवंतर्हिचिकित्साशास्त्रवैयर्थ्यमितिचेत्तत्राह विद्वद्भिरसौव्याधिर्द्विप्रकारएवकथितः कर्मोद्भवोवाताम्रादिधातु
भिःकृतश्चतत्रकर्मणोलीनादेवाद्यस्यक्षयःचरमोक्तस्यचिकित्सयाक्षयःस्यात् ॥ १० ॥

तर्हिधातुकृतत्वाच्चिकित्सयानाशनीयइतिचेत्तत्रायंप्रवृत्तोव्याधिःकर्मणएवसंक्षयात्संक्षीयतां मयानैवचिकित्स्यते तर्हिरोगवशाच्छरीरं
पतिष्यतीत्याशंक्याह यदितन्निमित्ततःशरीरंपतेत्तर्हिअवश्यंपततु तत्पतनात्किंचिदपिनबिभेमि ॥ ११ ॥ एवमुक्ताःशिष्याःप्राहुर्हेगुरोसत्यं
तवशरीरलोभोनास्तितथाप्यस्माकंतदर्थंचिरायचिरकालंतत्स्थितयेस्पृहालुतास्ति हियस्मात्तवजीवनेननोजीवनं हियतोजलचराणांजल

संक्षीयतांकर्मणएवसंक्षयाद्व्याधिःप्रवृत्तोनचिकित्स्यतेमया ॥ पतेच्छरीरंयदितन्निमित्ततःपतत्ववश्यंनबि
भेमिकिंचन ॥ ११ ॥ सत्यंगुरोतेनशरीरलोभःस्पृहालुतानस्तुचिरायतस्मै ॥ त्वज्जीवनेनैवहिजीवनंनःपाथ
श्चराणांजलमेवतद्धि ॥ १२ ॥ स्वयंकृतार्थाःपरतुष्टिहेतोःकुर्वंतिसंतोनिजदेहरक्षां ॥ तस्माच्छरीरंपरिरक्षणी
यंत्वयापिलोकस्यहितायविद्वन् ॥ १३ ॥ निर्बंधतोगुरुवरःप्रददावनुज्ञांदिग्भ्योभिषग्वरसमानयनायतेभ्यः ॥
नत्वागुरुंप्रतिदिशंप्रययुःप्रहृष्टाःशिष्याःप्रवासकुशलाहरिभक्तिभाजः ॥ १४ ॥ प्रायोनृपंकविजनाभिष
जोवदान्यंवित्तार्थिनःप्रतिदिनंकुशलाजुषंते ॥ तस्माद्दर्मानृपपुरेपुनिरीक्षणीयाइत्येवचेतसिमनोरथमाद
धानाः ॥ १५ ॥ तेऽतीत्यदेशान्बहुलान्स्वकार्यसिद्ध्यैक्वचिद्राजपुरेभिषग्भिः ॥ अवाप्यसंदर्शनभाषणानि
समानयंस्तान्गुरुवर्यपार्श्वे ॥ १६ ॥

मेवतत्जीवनं ॥ १२ ॥ भवत्वेवंतथापिमयानिजदेहरक्षाकिमितिकर्त्तव्येत्याशंक्याहुः स्वयमिति ॥ १३ ॥ एवंशिष्याणामाग्रहाद्गुरुव
रोदिग्भ्योवैद्यवराणांसमानयनार्थंतेभ्यःशिष्येभ्योऽनुज्ञांप्रददौ व० ॥ १४ ॥ वदान्यमुदारंजुषंतेसेवंते ॥ १५ ॥ गुरुवर्यसमीपंतान्भिषजः
समानीतवंतः उ० ॥ १६ ॥

ततोनिजसेवकैः स्वाभिमतार्थदानैः संतोषितान्यदत्रकर्त्तव्यंतत्कथ्यतांस्वशक्त्याकुर्मः इतिभाषमाणांस्तान्सगुरुवरोजगौ ॥ १७ यदुवाचतदाह हेभिषजोगुदसमीपेतनुमध्यगोगदोरोगउदेत्यशरीरंपरिबाधते यदिदमस्यरोगस्यविधेयमौषधंतदिदंध्रुवमव्यभिचारिवदत यतोरोगतमस्तिमिरारयः उ० ॥ १८ ॥ नन्वेवंभूतोरोगएतावत्कालंकिमित्युपेक्षितस्तत्राह चिरमिति तदपितथापिशिष्यगणैरहंनिरहंसिअत्याग्रहेणनि

ततोद्विजेंद्रैर्निजसेवकैस्तान्संतोषितान्स्वाभिमतार्थदानैः॥ यदत्रकर्तव्यमुदीर्यतांतत्कुर्मःस्वशक्त्येतिवदान् जगौसः॥ १७॥ उपगुदंभिषजःपरिबाधतेगदउदेत्यतनुंतनुमध्यगः॥ यदिदमस्यविधेयमिदंध्रुवंवदतरोगतमस्तिमिरारयः॥ १८॥ चिरमुपेक्षितवानहमेतकंदुरितजोयमितिप्रतिभातिमे॥ तदपिशिष्यगणैर्निरहिंस्यहंप्रहितवान्भवदानयनायतान्॥ १९॥ निगदितमुनिनेतिभिषग्वराविदधिरेबहुधागदसत्क्रियाः॥ नचशशामगदोबहुतापदोविमनसःपटवोभिषजोभवन्॥ २०॥ अथमुनिर्विमनस्त्वसमन्वितानिदमवोचतसिद्धभिषग्वरान्॥ अटतगेहमगात्समयोबहुर्गदहृतेभवतामितरायुषां॥ २१॥ दिनचयंगणयन्पथिलोचनःप्रियजनोनिवसेद्विरहातुरः॥ नरपतिर्भवतांशरणंध्रुवंसचविदेशगमंश्रुतवान्यदि॥ २२॥ रुषितवान्नचवोवितरेन्नृपःफणितजीवितमक्षतशासनः॥ तुरगवन्नृपतिश्चलमानसोभिषजमन्यमसौविदधीतवा॥ २३॥

योजितत्वाद्धसितः ॥ १९ ॥ इत्येवंमुनिनाकथितेसतिवैद्यवरारोगस्यसत्क्रियाबहुधाविदधिरे ॥ २० ॥ इतोगेहमटतगच्छत यतोरोगहरणार्थंइतआगतानांभवतांकालोमहानगात् ॥ २१ ॥ अवश्यमेवभवद्भिर्गंतव्यमित्यनुशयेनाह विरहातुरःप्रियजनःपथिलोचनोदिनसमुदायंगणयन्निवसेदितिसंभावनायांलिङ् किंच नरपतिर्भवतांध्रुवंशरणंसचभवतांविदेशगमनंयदिश्रुतवान् ॥ २२ ॥ तदाकुपितःसन्नृपःकथितंजीवितंप्रतिज्ञातांजीविकांयुष्मभ्योनदद्यात् यतोऽक्षतशासनःयद्वायस्मादश्ववन्नृपतिश्चलमानसस्ततोसावन्यंवैद्यंविदधीत ॥ २३ ॥

किंचरोगहारकैर्विरलोरहितोजनपदः स्वभावादेवबहुलंरुग्णाःजनायस्मिन् अतोरोगिजनोरोगंसहितुमसमर्थोभवतांगृहेभवतोविचिनुते
॥ २४ ॥ जनिर्जन्मअवनंपालनंतस्मादसौवैद्यःशरीरभृतोविष्णुरेवतद्वदुपासनीयइत्यर्थः ॥ २५ ॥ एवमुक्त्वाभिषजऊचुः भवताय
त्कथितंतन्मिथ्यानभवति तथापिगंतुंमनोनक्षमतेयतोदेवभूमिंप्रविहायमनुष्यभूमिंगंतुंसुधीर्नरोऽत्रजगतिकइच्छतिनकोपीत्यर्थः ॥ २६ ॥ इ

जनपदोविरलोगदहारकैर्बहुलरुग्णजनःप्रकृतेरतः ॥ मृगयतेभवतोभवतांगृहेगदिजनःसहितुंगदमक्ष
मः ॥ २४॥ पितृकृताजनिरस्यशरीरिणःसमवनंगदहारिषुतिष्ठति ॥ जनितमप्यफलंभिषजांविनाभिषग्
सौहरिरेवतनूभृतः ॥ २५ ॥ यदुदितंभवतावितथंनतत्तदपिनक्षमतेव्रजितुंमनः ॥ सुरभुवंप्रविहायमनु
ष्यगांव्रजितुमिच्छतिकोत्रनरःसुधीः ॥ २६ ॥ इतिनिगद्ययुर्भिषजांगणाविमनसःपटवोऽपिनिजान्गृ
हान् ॥ अथमुनिर्विजहन्ममतांतनौगुरुवरोगुरुदुःखमसोढसः ॥ २७॥ प्रथितैरवनौपरःसहस्रैरगदंकारच
यैरथाचिकित्स्ये ॥ प्रबलेसतिहाभगंदराख्येस्मरतिस्मस्मरशासनंमुनींद्रः ॥ २८ ॥ स्मरशासनशासना
न्नियुक्तौद्विजवेषंप्रविधायभूमिमाप्तौ ॥ उपसेदतुरश्विनौचदेवौसुभुजौसांजनलोचनौसुपुस्तौ ॥ २९ ॥

तिनिगद्यैवमुक्त्वा. ॥ २७ ॥ भूमौप्रथितैःसहस्रादप्यधिकैरौषधंकारसमूहैर्भगंदराख्येप्रबले हेऽतिखेदेऽचिकित्स्येसतिमुनींद्रःश्रीशंकराचार्यः
कामशासनंमहादेवंस्मरतिस्म व०मा० ॥ २८ ॥ स्मृतमहादेवाज्ञयानियुक्तौदेवावश्विनीकुमारौद्विजवेषंप्रविधायभूमिंप्राप्तौसुभुजौसांज
नलोचनौसुपुस्तकयुक्तौमुनींद्रसमीपेविविशतुः ॥ २९ ॥

उपविश्ययदूचतुस्तदाह भोयतिवर्यएषातेरुक्रोगःचिकित्सितुंनशक्या हियस्मात्परकृत्ययाउत्पादिताइति तंयोगिवर्यंसमुदीर्यतौदेवौ यथागतंप्रतिजग्मतुः ॥ ३० ॥ तदनंतरजातकोपःशत्रुवर्गेप्यनुकंपिनाआर्यपादेनाचार्येणमुहुर्वार्यमाणोऽपिपद्मपादःस्वगुरोरोगस्यनाशाय परमंत्रंतुजजाप ॥ ३१ ॥ ततःकिंवृत्तमित्याकांक्षायामाह अमुनैवेति प्रतियातेनप्रतिप्राप्तेन ॥ ३२ ॥ स्वस्थःसोयंश्रीशंकराचार्यःसैकतेसा

येतिवर्यचिकित्सितुंनशक्यापरकृत्याजनिताहितेरुगेषा ॥ इतितैःसमुदीर्ययोगिवर्यंविबुधौतौप्रतिजग्मतुर्यथेतं ॥ ३० ॥ तदनुस्वगुरोर्गदापनुत्यैपरमंत्रंतुजजापजातमन्युः ॥ मुहुरार्यपदेनवार्यमाणोऽप्यरिवर्गेप्यनुकंपिनाब्जपादः ॥ ३१ ॥ अमुनैवततोगदेननीचःप्रतियातेनहतोममारगुप्तः ॥ मतिपूर्वकृतामहानुभावेष्वनयःकस्यभवेत्सुखोपलब्ध्यै ॥ ३२ ॥ स्वस्थःसोयंब्रह्मसायंकदाचिद्ध्यायन्गंगापूरसंगार्द्रवातैः ॥ आगच्छंतंसैकतेप्रत्यगच्छद्योगीशानंगौडपादाभिधानं ॥ ३३ ॥ पाणौफुल्लश्वेतपंकेरुहश्रीमैत्रीपात्रीभूतभासाघटेन ॥ आराद्राजत्कैरवानंदसंध्यारागारक्तांभोदलीलांदधानं ॥ ३४ ॥ पाणौशोणांभोजबुद्ध्यासमंताद्भ्राम्यद्भृंगीमंडलीतुल्यकुल्यां ॥ अंगुल्यग्रासंगिरुद्राक्षमालामंगुष्ठाग्रेणासकृद्भ्रामयंतं ॥ ३५ ॥

यंकालेब्रह्मध्यायन्सन्गंगापूरेणार्द्रैर्वायुभिःसहागच्छंतंयोगीशंगौडपादसंज्ञंप्रत्यबुध्यत शालि० ॥ ३३ ॥ तमेववर्णयति पाणौहस्तेप्रफुल्लितस्यश्वेतकमलस्ययाश्रीस्तयायामैत्रीतस्याःपात्रीभूताभाकांतिर्यस्यतेनघटेनकमंडलुनाआराद्राजत्कैरवस्यसितपंकजस्यानंदोयस्यतस्य संध्यारागेणासमंताद्रक्तस्यपयोदस्यचलीलांदधानं ॥ ३४ ॥ पुनश्चहस्तेशोणपद्मबुद्ध्यासमंताद्भ्राम्यंतीभ्रमरीणांयामंडलीतत्तुल्यकुलोद्भवां तत्सदृशांअंगुल्यग्रासंगिरुद्राक्षमालांपुनःभ्रामयंतं ॥ ३५ ॥

अथानंतरमार्यस्यगौडपादस्यपंकजाभौपादावसौशंकरोभ्यर्च्यभक्तिश्रद्धाभ्यांयःसंभ्रमस्तेनतैर्वाक्रांतचित्तोनम्रीभूतोअपतःप्रांजलिःसन्नव
तस्थे॥ ३६ ॥ एनंशंकरंक्षीरवारिराशिसादृश्यायासन्नयनैःप्रामयनैःकटाक्षैःसिचन्दंतज्योत्स्नयादंतुराउन्नतरदाआशादिशोऽपिधवलीकुर्वन्
सुष्टूक्तिसंदधे ॥ ३७ ॥ तामेवदर्शयति कच्चिदितिप्रश्ने संसारोद्धारकारणीभूताहृदयस्यप्रियायागोविंदनाम्नोविद्यातांसर्वांवेत्सिजानासि स

आर्यस्याथोगौडपादस्यपादावभ्यर्च्यासौशंकरःपंकजाभौ॥ भक्तिश्रद्धासंभ्रमाक्रांतचेताःप्रह्वस्तस्थावग्र
तःप्रांजलिःसन् ॥ ३६॥ सिंचन्नेनंक्षीरवाराशिवीचीसाचिव्यायासन्नयनैःकटाक्षैः॥ दंतज्योत्स्नादंतुरांश्चा
पिकुर्वन्नाशाःसूक्तिंसंदधेगौडपादः ॥ ३७॥ कच्चित्सर्वांवेत्सिगोविंदनाम्नोहृद्यांविद्यांसंसृदुत्तारकुद्या ॥ क
च्चित्तत्वंतत्वमानंदरूपंनित्यंसच्चिन्निर्मलंवेत्सिवेद्यं ॥ ३८ ॥ भक्त्यायुक्ताःस्वानुरक्ताविरक्ताःशांतादांताःसं
ततंश्रद्दधानाः ॥ कच्चित्तत्वज्ञानकामाविनीताश्शुश्रूषुस्तेशिष्यवर्यागुरुंत्वां ॥ ३९ ॥ कच्चिन्नित्याःशत्रवो
निर्जितास्तेकच्चित्प्राप्ताःसद्गुणाःशांतिपूर्वाः ॥ कच्चिद्योगःसाधितोष्टांगयुक्तःकच्चिच्चित्तंसाधुचित्तत्वगंते ॥
॥ ४० ॥ इत्यद्वैताचार्यवर्येणतेनप्रेम्णापृष्टःशंकरःसाधुशीलः ॥ भक्त्युद्रेकाद्बाष्पपर्याकुलाक्षोवध्नन्मूर्द्धन्यं
जलिंव्याजहार ॥ ४१ ॥

भक्त्यासेवयायुक्ताः स्वस्मिंस्त्वयिस्वात्मनिवानुरक्ताविषयेषुविरक्तावशीकृतां
च्छास्त्रप्रसिद्धंनित्यंसच्चिदमलंवेद्यंतत्त्वंत्वंकच्चिद्वेत्सि ॥ ३८ ॥ भक्त्यासेवयायुक्ताः स्वस्मिंस्त्वयिस्वात्मनिवानुरक्ताविषयेषुविरक्तावशीकृतां ... नित्याःशत्रवःकामाद्याः
तरिंद्रियाजितवांस्त्वकरणानिरंतरंश्रद्धावंतस्तत्त्वज्ञानाभिलाषाविनयंप्राप्ताःशिष्यवर्याःकच्चित्त्वांगुरुंसेवंते ॥ ३९ ॥ नित्याःशत्रवःकामाद्याः
यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिसंज्ञकैरष्टभिरंगैर्युक्तःसाधुचित्तत्वगंसम्यक्चैतन्यतत्त्वविषयं ॥ ४० ॥ बाष्पपर्या
कुलेपरिव्याप्तेऽक्षिणीयस्य ॥ ४१ ॥

हेभगवन्नार्यपादैर्यद्यत्स्पृष्टंतत्तत्सर्वमवश्यंस्पष्टंभविष्यति यस्मात्कारुण्यसमुद्रस्यकल्पैःसदृशैर्भवत्कटाक्षैर्दृष्टस्यजंतोःकिंनुदुर्लभंकिमपिदुर्लभंनेत्याहुः ॥ ४२ ॥ एतदेवोपपादयति भवद्विधानामार्याणांकटाक्षावलोकात्क्षणमात्रेणमूकोवाग्मीस्यादेवमग्रेपि निस्पृहाणांमध्येकीर्त्तिमान् ॥ ४३ ॥ सीमातीतस्यभवन्महिम्नोलेशंवापिज्ञातुमयंकःपुमान्समर्थोनकोपीत्यर्थः कुतइतिचेत्तत्राह यस्यभवतःसअतिप्रसिद्धोव्याससूनुःशुकाचार्योऽत्यंतंतुष्टोभूत्वासाक्षात्स्वयमेवविद्योपदेष्टाजातोऽतइत्यर्थः ॥ ४४ ॥ वैयासकिरित्युक्त्याव्यासपुत्रत्वेनैवतस्यश्रैष्ठ्यं

॥४॥

यद्यत्पृष्टंस्पष्टमाचार्यपादैस्तत्तत्सर्वंभोभविष्यत्यवश्यं ॥ कारुण्याब्धेःकल्पयुष्मत्कटाक्षैर्दृष्टस्याहुर्दुर्लभंकिंनुजंतोः ॥ ४२ ॥ मूकोवाग्मीमंदधीःपंडिताग्र्यःपापाचारःपुण्यनिष्ठेषुगण्यः ॥ कामासक्तःकीर्त्तिमान्निस्पृहाणामार्यापांगालोकतःस्यात्क्षणेन ॥ ४३ ॥ लेशंवापिज्ञातुमिष्टेपुमान्कःसीमातीतस्याद्ययुष्मन्महिम्नः ॥ तुष्ट्वात्यंतंतत्त्वविद्योपदेष्टाजातःसाक्षाद्यस्यवैयासकिःसः ॥ ४४ ॥ आजानात्मज्ञानसिद्धंयमारादौदासीन्याज्जातमात्रंव्रजंतं ॥ प्रेमावेशात्पुत्रपुत्रेतिशोचन्पाराशर्यःपृष्ठतोऽनुप्रपेदे ॥४५॥ यश्चाहूतोयोगभाष्यप्रणेत्रापित्राप्राप्तःसप्रपंचैकभावं ॥ सर्वाहंताशीलनाद्योगभूमेःप्रत्याक्रोशंप्रातनोद्दक्षरूपः ॥ ४६ ॥

नास्त्यपितुस्वतोपीत्याशयेनतंवर्णयति यंजन्मतएवात्मज्ञानसिद्धमौदासीन्येनारात्समीपाद्दूरंवाजातमात्रंव्रजंतंप्रेमावेशात्पुत्रपुत्रेतिशोचन्पराशरनंदनोवेदव्यासःपृष्ठतोऽनुप्रपेदे अवैदिकेइतिशब्देपरेप्लुतोऽप्लुतवत्स्यादित्यर्थकेनाप्लुतवदुपस्थितइतिसूत्रेणाप्लुतवत्त्वात्स्वरसंधिः ॥४५॥ यश्चयोगभाष्यप्रणेत्रापित्राआहूतःसर्वाहंभावशीलनाद्योगभूमेःप्रपंचैकभावंप्राप्तःसदक्षरूपःप्रत्याक्रोशंप्रातनोत् तथाचोक्तं यंप्रव्रजंतमनुपेतमपेतकृत्यंद्वैपायनोविरहकातरआजुहाव पुत्रेतितन्मयतयातरवोऽभिनेदुस्तंव्याससूनुमुपयामिगुरुंमुनीनांइतियोगमाहात्म्येनगमनागमनयोःसंभवात्परीक्षिदुपदेष्टृत्ववद्गौडपादोपदेष्टृत्वमपिनविरुध्यतइतिद्रष्टव्यं ॥ ४६ ॥

॥४॥

तत्तस्मादेवंविधस्यज्ञानसमुद्रस्यभवतःकमलस्यसौहार्देनसादृश्येनहृद्यमेतत्पादद्वंद्वंदेवादस्मद्विधदीनदृष्टिविषयभूतंयदिस्यात्तर्हिएतद्भक्तस्या
प्रमेयंभाग्यं॥४७॥शांतमनोवंतंत्वांद्रष्टुंअत्यंतोत्कंठागर्भितंममममानसमासीत्॥४८॥किंचमत्कृतकारिकाब्जमुखसूर्याःभाष्यादयोनिबंधास्त्वया
कृताइतिगोविंदमुखाच्छ्रुत्वाहर्षंप्राप्याद्यहेविद्वन्नतवदृष्टिमार्गगोऽस्मि॥४९॥ मांडूक्यगतभाष्ययुग्मंश्रुतिभाष्यंगौडपादीयकारिकाभाष्यंचेत्य

तत्तादृक्षज्ञानपाथोधियुष्मत्पादद्वंद्वंपद्मसौहार्दहृद्यं ॥ दैवादेतद्दीनदृग्गोचरंचेद्भक्तस्यैतद्भागधेयंत्वमेयं ॥
॥ ४७ ॥ द्रष्टुंशांतस्वांतवंतंममत्वांगाढोत्कं ठागर्भितंचित्तमासीत् ॥ ४८ ॥ इत्याकर्ण्याथाब्रवीद्गौडपादोवत्सश्रुत्वावास्तवांस्त्वद्गुणौघान् ॥ कृतास्त्वयाभाष्यमुखानिबंधामत्कारिकावारिजनुःसुखार्काः ॥ श्रुत्वेतिगो विंदमुखात्प्रहृष्यदृगध्वनीनोऽस्मितवाद्यविद्वन्॥४९॥ इतिस्फुटंप्रोक्तवतेविनीतःसोऽश्रावयद्भाष्यमशेषम स्मै ॥ विशिष्यमांडूक्यगभाष्ययुग्मंश्रुत्वाप्रहृष्यन्निदमब्रवीत्तं ॥ ५० ॥ मत्कारिकाभावविभेदितादृक्मां डूक्यभाष्यश्रवणोत्थहर्षः ॥ दातुंवरंतेविदुषांवरायप्रोत्साहयत्याशुवरंवृणीष्व ॥ ५१ ॥ सप्राहपर्यायशुक र्षिमीक्ष्यभवंतमद्राक्षमतिष्यपूरुषं ॥ वरःपरःकोऽस्तितथापिचिंतनंचित्तत्वगंमेस्तुगुरोनिरंतरं ॥ ५२ ॥

र्थः वि०॥५०॥ यदुवाचतदेवाह मत्कारिकाभावविभेदिनोस्तादृशयोर्मांडूक्यभाष्ययोःश्रवणेनोत्थितोहर्षःविदुषांमध्येश्रेष्ठायतुभ्यंवरंदातुंप्रो त्साहयति तस्मात्त्वंशीघ्रंवरंवृणीष्व इंद्र०॥५१॥ एवंवरग्रहणायप्रेरितःसश्रीशंकरःप्राह भवंतंपर्यायेणरूपांतरेणोपलक्षितंशुकर्षिंशुकर्षेःपर्याय मितिवा सर्वात्मनाशुकर्षितुल्यमीक्ष्यभगवंतमकलिपूरुषंत्रियुगंपरमात्मानंविष्णुमेवाहमद्राक्षमतोऽस्मात्परोवरःकोपिनास्तितथापिहेगुरोमेचिं तनंसदैवचैतन्यतत्वविषयमस्त्वितिवरंदेहीत्यर्थः उ० ॥ ५२ ॥

तथेतिसगौडपादःप्राहेत्यनुकंप्यसंबंधनीयं अथापास्तमोहेचिरंजीविमुनावंतर्धिगतेसतिअसौएतंवृत्तांतंशिष्येभ्योमुदासंश्रावयंस्तांरात्रिमनैषीत् ॥ ५३ ॥ अथप्रातःकालेश्रीशंकरःशिष्यैःसहनित्यकर्तव्यंगंगायांविधिवत्संपाद्यतस्यास्तीरेनिदिध्यासनलालसोऽभूदेतस्मिन्नंतरेलोकवार्त्ताऽश्रूयत ॥ ५४ ॥ तामेवाह जंबूद्वीपमिति इंद्र० ॥ ५५ ॥ मंडपसंबंधिभिःचतुर्भिःद्वारैर्युक्तंतस्यादिव्यागेहंयस्मिन्गेहेसर्वज्ञपीठं यत्रा

तथेतिसोंतर्धिमपास्तमोहेगतेचिरंजीविमुनावथासौ ॥ वृत्तांतमेतंसमुदाश्रवेभ्यःसंश्रावयंस्तांक्षणदामनैषीत् ॥ ५३ ॥ अथघुनद्यामुपसिक्षमींद्रोनिर्वर्त्यनित्यंविधिवत्सशिष्यैः ॥ तीरेनिदिध्यासनलालसोऽभूदत्रांतरेश्रूयतलोकवार्त्ता ॥ ५४ ॥ जंबूद्वीपंशस्यतेऽस्यांपृथिव्यांतत्राप्येतन्मंडलंभारताख्यं ॥ काश्मीराख्यंमंडलंतत्रशस्तंयत्रास्तेऽसौशारदावागधीशा ॥ ५५ ॥ द्वारैर्युक्तंमांडपैस्तच्चतुर्भिर्देव्यागेहंयत्रसर्वज्ञपीठं॥ यत्रारोहेसर्ववित्सज्जनानांनान्येसर्वेयत्प्रवेष्टुंक्षमंते ॥ ५६ ॥ प्राच्याःप्राच्यांपश्चिमाःपश्चिमायांयेचोदीच्यास्तामुदीचींप्रपन्नाः॥ सर्वज्ञास्तद्द्वारमुद्घाटयंतोदाक्षानद्धंनोतदुद्घाटयंति॥ ५७ ॥ वार्त्तामुपश्रुत्यसदाक्षिणात्योमानंतदीयंपरिमातुमिच्छन्॥ काश्मीरदेशायजगामहृष्टःश्रीशंकरोद्वारमपावरीतुं ॥ ५८ ॥

रोहेसतिसज्जनानांमध्येसर्वज्ञोभवति सर्वज्ञादन्येसर्वेऽपियद्देहंप्रवेष्टुमपिनक्षमंते यद्वा यदेवंभूतंतद्देव्यागेहमित्यन्वयः ॥ ५६ ॥ दाक्षादाक्षिणात्याःपिनद्धंतत्द्वारंनोद्घाटयंति ॥ ५७ ॥ तस्यावार्त्तायाइदंप्रमाणंमातुंइदंमानंनवेतिनिश्चेतुंइच्छन्तद्द्वारमुद्घाटयितुंकाश्मीरदेशायजगाम ॥ ५८ ॥

विधातुंजगाम आ० ॥ ५९ ॥
किलेतिप्रसिद्धं दाक्षिणात्यंद्वारंपिनद्धं यतइहभूमौदाक्षिणात्याविद्वांसोनैवसंतीतिकिंवदंतींजनश्रुतिंविफलां विधातुंजगाम आ० ॥ ५९ ॥ सचासौश्रीमच्छंकरदेशिकेंद्रलक्षणोमृगेंद्रःसर्वार्थविदायात्यतोहेवा वादिसमूहाएवगजेंद्रास्तेषांदुर्मदघटाभिर्योगर्वस्तंसम्यक्कर्षतीतितथा सचासौश्रीमच्छंकरदेशिकेंद्रलक्षणोमृगेंद्रःसर्वार्थविदायात्यतोहेवा वादिसमूहाएवगजेंद्रास्तेषांदुर्मदघटाभिर्योगर्वस्तंसम्यक्कर्षतीतितथा वेदांतादन्यंद्वैतप्रतिपादकंशास्त्रलक्षणंवनंभक्षतीत्य विदुःशठगजादूरंगच्छत किंकरोतीतिचेत्संन्यासलक्षणदंष्ट्रायुधोवेदांतलक्षणबृहद्वनाश्रयोवेदांतादन्यंद्वैतप्रतिपादकंशास्त्रलक्षणंवनंभक्षतीत्य ध्वनिसंश्रावयन्नितिव्यवहितेनान्वयः शा० ॥ ६० ॥ करटनटांताद्गजगंडतटप्रांतभागादुद्भमितमदसौरभसारभरेणस्खलद्भिःअलि

तांकिंवदंतींविफलांविधातुंजगामदेवीनिलयाय
द्वारंपिनद्धंकिलदाक्षिणात्यंनसंतिविद्वांसइतींहदाक्षाः ॥ तांकिंवदंतींविफलांविधातुंजगामदेवीनिलयाय ॥ आयातिसर्वार्थवित्
हृप्यन् ॥ ५९ ॥ वादिव्रातगजेंद्रदुर्मदघटादुर्गर्वसंकर्षणश्रीमच्छंकरदेशिकेंद्रमृगराडायातिसर्वार्थवित् ॥
हृप्यन् ॥ ५९ ॥ वादिव्रातगजेंद्रदुर्मदघटादुर्गर्वसंकर्षणश्रीमच्छंकरदेशिकेंद्र ॥ ६० ॥ करटतटां
दूरंगच्छतवादिदुःशठगजाःसंन्यासदंष्ट्रायुधोवेदांतोरुवनाश्रयस्तदपरंद्वैतंवनंभक्षति ॥ ६० ॥ करटतटां
तवांतमदसौरभसारभरस्खलदलिसंभ्रमत्कलभकुंभजृंभितबलः ॥ हरिरिवजंबुकानतिमदरदयुतानकु
जनानपिनाक्षिगोचरयतींहयतिपतिर्हतकान् ॥ ६१ ॥ संश्रावयन्नध्वनिदेशिकेंद्रःश्रीदक्षिणद्वारभुवंप्रपे
दे ॥ कवाटमुद्घाट्यनिवेष्टुकामंससंभ्रमंवादिगणोन्यरौत्सीत् ॥ ६२ ॥ अथाब्रवीद्वादिगणःसदेशिकंकिमर्थ
मेवंबहुसंभ्रमक्रिया ॥ यदत्रकार्यंतदुदीर्यतांशनैर्नसंभ्रमःकर्तुमलंतदीप्सितं ॥ ६३ ॥
भिःभ्रमतिगजकुंभेजृंभितंवलंयस्यससिंहोयथाक्षुद्रान्शृगालान्नगणयतितथेहलोकेयतिपतिर्मदलक्षणरदयुक्तान्निंदितान्कुत्सितजनानपि
नाक्षिगोचरयतिनगणयति यद्विभवतोनजौभजजलागुरुर्मर्कटकं ॥ ६१ ॥ इत्येवंमार्गेसंश्रावयन्देशिकेंद्रःश्रीदक्षिणद्वारभूमिंप्राप्तवान्
ततःकवाटमुद्घाट्यप्रवेष्टुकामंससंभ्रमंतंवादिगणोनिरोधितवान् उ० ॥ ६२ ॥ अथनिरोधनानंतरंसवादिगणोदेशिकमुवाच एवंबहुसंभ्रमा
क्रियाकिमर्थंबहुसंभ्रमस्यक्रियाकरणंइतिवा यदत्रकार्यंतत्कथ्यतां यतस्तदीप्सितंकर्तुंसंभ्रमःसमर्थोनभवति वंश० ॥ ६३ ॥

यः कश्चित्परीक्षितुमायातिस काममागच्छतुयतोहमखिलंवेद अण्वपिममाविदितंनास्ति वादिगणआह अमुनाप्रकारेणभवान्यूवक्तिचेत्त
र्हिहेसमुन्नतीच्छोपरीक्षांदत्वादेवतालयंव्रज इंद्र० ॥ ६४ ॥ एवंश्रुत्वापरीक्षांदातुमवस्थितंश्रीशंकराचार्यंप्रतिकणादमतेस्थितः एकंस्वीयंर
हस्यंपप्रच्छ तन्निशिनष्टि द्रव्यगुणकर्मसामान्यविशेषसमवायाःषड्भावाइतिवादीरहस्यमेवदर्शयति संयोगभागिनःपरमाणुद्वयात्सूक्ष्मंद्व्यणुकं

यःकश्चिदेत्येतुपरीक्षितुंचेद्वेदाखिलंनाविदितंममाणु॥ इत्थंभवान्वक्तिसमुन्नतीच्छोदत्वापरीक्षांव्रजदेवता
लयं ॥ ६४ ॥ षड्भाववादीकणभुङ्मतस्थःपप्रच्छतंस्वीयरहस्यमेकं॥ संयोगभाजःपरमाणुयुग्माज्जातंहिसू
क्ष्मंद्व्यणुकंमतंनः ॥ ६५ ॥ यत्स्यादणुत्वंतदुपाश्रितंतज्जायेतकस्माद्वदसर्वविच्चेत् ॥ नोचेत्प्रभुत्वंतववक्तुमे
तेसर्वज्ञभाषांविहितांकथंते ॥ ६६ ॥ याद्वित्वसंख्यापरमाणुनिष्ठासाकारणंतस्यगतस्यमात्रा॥ इतीरितत
द्वचनंप्रपूज्यस्वयंनिवर्त्तिष्टकणादलक्ष्मीः॥ ६७॥ तत्रापिनैय्यायिकआत्तगर्वःकणादपक्षाच्चरणाक्षपक्षे॥
मुक्तेर्विशेषंवदसर्वविच्चेन्नोचेत्प्रतिज्ञांत्यजसर्वविक्त्वे॥ ६८॥

जातमितिनोमतं ॥ ६५ ॥ द्व्यणुकाश्रितंअणुत्वंयत्स्यात्तत्कस्माज्जायेतेतिवदयदित्वंसर्वविच्चेत्तवप्रभुत्वंवक्तुमेतेतवशिष्यारचितांसर्वज्ञभाषांब्रुवं
ति नत्वर्थतःत्वंसर्वज्ञोसीत्यर्थः ॥ ६६ ॥ परमाणुद्वयनिष्ठायाद्वित्वसंख्यासातस्यद्व्यणुकगतस्याणुत्वस्यकारणमितिमात्राज्ञाचार्यश्रीशंकरेणक
थितेसतितद्वचनंप्रपूज्यकणादलक्ष्मीःस्वयमेवनिवर्त्तिगता उ० ॥ ६७ ॥ तदनंतरंतेषुमध्येगौतममताश्रयआत्तगर्वोनैय्यायिकआह कणा
दपक्षाद्गौतमपक्षेमुक्तेर्विशेषंवदयदित्वंसर्वज्ञोनोचेत्सर्वविक्त्वेप्रतिज्ञांत्यज ॥ ६८ ॥ ॥ ६ ॥

तदीयेगौतमपक्षेतुसागुणसंगतेरत्यंतनाशेनभोवत्स्थि
एवमुक्तआचार्यआह गुणसंबंधस्यात्यंतनाशेनभोवद्यास्थितिः साकणादपक्षेमुक्तिः तदीयेगौतमपक्षेतुसागुणसंगतेरत्यंतनाशेनभोवत्स्थि
तिरानंदसंवित्संहितामुक्तिरित्यर्थः ॥ ६९ ॥ पदार्थभेदस्तुस्फुटएवसिद्धः कणादमतेसप्तपदार्थागौतममतेतुषोडशते तथाचकर्णभुक्सूत्रे द्र
व्यगुणकर्मसामान्यविशेषसवायाभावाःसप्तपदार्थाः तथागौतमीयमपिप्रमाणप्रमेयसंशयप्रयोजनदृष्टांतसिद्धांतावयवतर्कनिर्णयवादज
ल्पवितंडाहेत्वाभासच्छलजातिनिग्रहस्थानानांतत्वज्ञानान्निःश्रेयसाधिगमइति सर्वजगन्निमित्तकारणभूतईश्वरस्तथाकणादपक्षवद्देवइत्युदि

अत्यंतनाशेगुणसंगतेर्यास्थितिर्नभोवत्कणभक्षपक्षे ॥ मुक्तिस्तदीयेचरणाक्षपक्षेसानंदसंवित्सहितांविमु
क्तिः ॥ ६९ ॥ पदार्थभेदःस्फुटएवसिद्धस्तथेश्वरःसर्वजगद्विधाता ॥ सईशवादीत्युदितेभिनंद्यनैयायिको
पिन्यवृतन्निरोधात् ॥ ७० ॥ तंकापिलःप्राहचमूलयोनिःकिंवास्वतंत्रांचिदधिष्ठितावा ॥ जगन्निदानंवदस
र्वविंत्त्वान्नोचेत्त्वमेवंशस्तवदुर्लभःस्यात् ॥ ७१ ॥ साविश्वयोनिर्वहुरूपभागिनीस्वयंस्वतंत्रात्रिगुणात्मिकास
ती ॥ इत्येवसिद्धांतगतिस्तुकापिलीवेदांतपक्षेपरतंत्रतामता ॥ ७२ ॥ ततोनदंतोन्यरुणन्सगर्वादत्वापरी
क्षांव्रजधामदेव्याः ॥ बौद्धास्तथासंप्रथिताःपृथिव्यांबाह्यार्थविज्ञानकशून्यवादैः ॥ ७३ ॥

तेसतिसईशवादीनैय्यायिकोपिनिरोधनान्यवृतन्निवृत्तः ॥ ७० ॥ ततस्तंसांख्यःप्राहमूलप्रकृतिःकिंस्वतंत्राजगत्कारणमुतचिदधिष्ठिते
तिसर्वज्ञत्वात्त्वंवद नोचेत्त्वमेवंशस्तवदुर्लभःस्यात् ॥ ७१ ॥ एवमुक्तआचार्यआह साविश्वयोनिःसत्वरजस्तमोभिधगुणत्रयात्मिकास्वतं
त्रासतीबहुरूपभागिनीजगन्निदानमितितुकापिलीसिद्धांतगतिर्वेदांतपक्षेत्वस्याःपरतंत्रतामता ॥ ७२ ॥ ततोनदंतोन्यरुणन्निति ततस्त
दनंतरंतथैवबाह्यार्थविज्ञानकशून्यवादैःपृथिव्यांप्रथिताःसगर्वाःसौत्रांतिकवैभाषिकयोगाचार्यमाध्यमिकमतावलंबिनोबौद्धाः परीक्षांदत्वा
देव्याधामव्रजेतिनादंकुर्वंतोनिरोधंकृतवंतः ॥ ७३ ॥

यदित्वंदेवतालयंविविक्षुस्तर्हि द्विविधोयोबाह्यार्थस्तदंतरंत्वयावाच्यं विज्ञानवादस्यचभवतोवेदांतवादिनोमताल्किंविभेदकमितिब्रूहि ततःपरं
व्रज ॥ ७४ ॥ एवमुक्तआचार्यउवाच सौत्रांतिकःसर्वमपिवेद्यमनुमानगम्यंवक्ति वैभाषिकस्तुतत्सर्वंप्रत्यक्षगम्यंवक्ति तयोःसौत्रांतिकवै
भाषिकयोःपदार्थयोस्तयोःक्षणभंगुरतासमानावेदनवेद्यविषयोभेदोलिंगवेद्यत्वाक्षिवेद्यत्वरूपोविशेषःक्रियान्वियतइत्यर्थः ॥ ७५॥ विज्ञान

बाह्यार्थवादोद्विविधस्तदंतरंवाच्यंविविक्षुर्यदिदेवतालयं ॥ विज्ञानवादस्यचकिंविभेदकंभवन्मताद्ब्रूहित
तःपरंव्रज ॥ ७४ ॥ सौत्रांतिकोवक्तिहिवेद्यजातंलिंगाधिगम्यंत्वितरोक्षिगम्यं ॥ तयोस्तयोर्भंगुरताविशि
ष्टाभेदःक्रियान्वेदनवेद्यभागी ॥ ७५ ॥ विज्ञानवादीक्षणिकत्वमेषामंगीचकारापिबहुत्वमेषः ॥ वेदांतवादी
स्थिरसंविदेकेत्यंगीचकारेतिमहान्विशेषः ॥ ७६ ॥ अथाब्रवीद्दिग्वसनानुसारीरहस्यमेकंवदसर्वविच्चेत् ॥
यदस्तिकायोत्तरशब्दवाच्यंतल्किंमतेऽस्मिन्वददेशिकाशु ॥ ७७ ॥ तत्राहदेशिकवरःशृणुरोचतेचेज्जीवादि
पंचकमभीष्टमुदाहरंति ॥ तच्छब्दवाच्यमितिजैनमतेप्रशस्तेयद्यस्तिबोद्धुमपरंकथयाशुतन्मे ॥ ७८ ॥

वाद्ययंविज्ञानानांक्षणिकत्वंबहुत्वंचांगीचकार अयंवेदांतवादीतुस्थिरमेकंज्ञानमित्यंगीचकारेतिमहान्विशेषः इंद्र० ॥ ७६ ॥ अथदि
गंबरानुसारीजगाद यदित्वंसर्वज्ञस्तर्ह्येकंगुह्यंवद किंतदितितत्राह कायइत्युत्तरशब्दोयेषांतैर्वाच्यंयदस्मिन्जैनमतेऽस्ति तत्किंहेदेशिकाशुव
द उ० ॥ ७७ ॥ तैर्जीवास्तिकायःपुद्गलास्तिकायोऽधर्मास्तिकायःआकाशास्तिकायः इतिशब्दैर्वाच्यंजीवादिपंचकमभीष्टमित्युदाहरंति
तत्पृष्टमुक्त्वाऽप्रशस्तेजैनमतेऽपरमपियत्ज्ञातुमास्तेतच्छीघ्रंवदेत्याह जैनमतइति इंद्र० ॥ ७८ ॥

एवंवेदबाह्येवादिगणेतुदत्तोत्तरेसतिकश्चिज्जैमिनिमतावलंब्यध्वरमीमांसकोजगाद जैमिनीयेमतेशब्दःकिंस्वरूपः किंशब्दार्थमाहं द्रव्यंगुणो
वेति तथाचशब्दस्वरूपमुक्त्वाततोव्रज उ० ॥ ७९ ॥ नित्यावर्णाव्यापकाःश्रोत्रेंद्रियवेद्याः यद्रूपंशब्दजालंतच्चनित्यंद्रव्यंव्यापीतिजैमिनीया
अब्रुवन्इत्येवंतंजैमिनीयंदेशिकेंद्रःप्रोक्तवान् शालि० ॥ ८० ॥ सर्वेष्वपिशास्त्रेषुप्रत्युत्तरंदत्तवंतंतंश्रीशंकरंतेवादिनःसम्यगपूजयन् द्वारंसमु
द्घाट्यमार्गंचददुः तदनंतरमंतरभूमिभागंविवेश उ० ॥ ८१ ॥ हस्तेसनंदनमसाववलंब्यतद्विद्याभद्रासनमारोढुमनाश्चचालैतस्मिन्नंतरेविबुधा

दत्तोत्तरेवादिगणेतुवाल्येवभाणकश्चित्किलजैमिनीयः ॥ शब्दःकिमात्मावदजैमिनीयेद्रव्यंगुणोवेतितती
व्रजत्वं ॥ ७९ ॥ नित्यावर्णाःसर्वगाःश्रोत्रवेद्यायत्तद्रूपंशब्दजालंचनित्यं ॥ द्रव्यंव्यापीत्यब्रुवन्जैमिनीया
इत्येवंतंप्रोक्तवान्देशिकेंद्रः ॥ ८० ॥ शास्त्रेषुसर्वेष्वपिदत्तवंतंप्रत्युत्तरंतंसमपूजयंस्ते ॥ द्वारंसमुद्घाट्यददुश्चमा
र्गंततोविवेशांतरभूमिभागं ॥ ८१ ॥ पाणौसनंदनमसाववलंब्यविद्याभद्रासनंतदवरोढुमनाश्चचाल ॥
अत्रांतरेविधिवधूर्विबुधाग्रगण्यमाचार्यशंकरमवोचदनंगवाचा ॥ ८२ ॥ सर्वज्ञताते ऽस्तिपुरैवयस्मात्सर्वत्र
पर्यैक्षिभवान्नचेत्त ॥ विरंचिरूपांतरविश्वरूपःशिष्यःकथंस्यात्प्रथिताग्रणीःसः ॥ ८३ ॥ सर्वज्ञतैकैवभवेन्न
हेतुःपीठाधिरोहेपरिशुद्धताच ॥ सातेस्तिवानेतिविचार्यमेतत्तिष्ठक्षणंत्वंकुरुसाहसंमा ॥ ८४ ॥

ग्रगण्यंश्रीशंकराचार्यमशरीरवाचाशारदाऽवोचत् इं० ॥ ८२ ॥ तेयदवोचन्तदुदाहरति सर्वज्ञतायांसंशयोनास्ति यस्मात्पूर्वमेवसर्वत्रपरीक्षांप्रा
प्तोऽसि यदिभवान्सर्वज्ञोनाभवत् तर्हिविरंचिःरूपांतरंयस्यसचासौविश्वरूपःप्रथितानामग्रणीः सशिष्यःकथंस्यात् उ० ॥ ८३ ॥ यद्य
प्येवंतथापिपीठाधिरोहेकेवलंसर्वज्ञतैवहेतुर्नभवेदपितुपरिशुद्धतापिसातेस्तिनवेत्येतद्विचारणीयमतःक्षणमात्रंत्वंतिष्ठसाहसंमाकुरु इं० ॥ ८४ ॥

एवंकोटिद्वयमुक्त्वोत्तरकोटिंसाधयति त्वंयतोयतिधर्मनिष्ठःसन्नंगनाःसम्यगुपभुक्त्वाकामकलारहस्यप्रवीणतापात्रमभूरतईदृशपदमारोढुमे
वंभूतस्यतवयोग्यताकथमपिनास्ति यतःसर्वज्ञतेवविमलतापीहारोहेहेतुः ॥ ८५ ॥ एवमुक्तःश्रीशंकरउवाच नेति अहमपिनसंदिहे
बायास्तवसंदेहोनास्तीतिकिमुवक्तव्यमित्यनुशयेनसंबोधयति हेवेति यत्तुत्वंचांगनाइत्यादितत्रशृणुयत्कर्मदेहांतरसंश्रयाद्विहितंतेनकर्मणाअ
न्योयंदेहोनलिप्येत लोकशास्त्रप्रसिद्धंचैतत् उ० ॥ ८६ ॥ सरस्वत्यापंडितैश्चपूजितोऽभवत् यथागार्ग्याकहोलादिभिश्चयाज्ञवल्क्यस्तद्व
त् ॥ ८७ ॥ अथभगवत्पादस्यशारदापीठवासंवर्णयति वादेचप्रादुःप्रकटतांगतोविनोदोयेषांतेचतेप्रतिकथनसुधियःप्रतिवादिपंडितामंडन

त्वंचांगनाःसमुपभुज्यकलारहस्यप्रावीण्यभाजनमभूर्यतिधर्मनिष्ठः॥ आरोढुमीदृशपदंकथमर्हतातेसर्वज्ञतेव
विमलत्वमपीहहेतुः॥८५॥नास्मिंश्छरीरकृतकिल्बिषोहंजन्मप्रभृत्यंबनसंदिहेऽहं॥विधायिदेहांतरसंश्रयाद्यन्नते
नलिप्येतहिकर्मणान्यः॥८६॥इत्थंनिरुत्तरपदांसविधायदेवींसर्वज्ञपीठमधिरुह्यननंदसभ्यः॥संभाजितोभ
वदसौविबुधैश्चवाण्यागार्ग्याकहोलमुखरैरिवयाज्ञवल्क्यः॥८७॥ वादप्रादुर्विनोदप्रतिकथनसुधीवादुर्वा
रतर्कन्यक्कारस्वैरधाटीभरितहरिदुपन्यस्तमाहानुभाव्यः ॥ सर्वज्ञोवस्तुमर्हस्त्वमितिवहुमतःस्फारभारत्यमोघ
श्लाघाजोघुष्यमाणोजयतियतिपतेःशारदापीठवासः॥८८॥

मिश्रप्रमुखास्तैःसाकंयोवादस्तत्रयेदुर्वारास्तर्काअविज्ञाततत्त्वेऽर्थेकारणोपपत्तितस्तत्वज्ञानार्थमूहस्तर्कइत्युक्तलक्षणास्तेषांन्यक्कारेतिरस्कारे
स्वैराभिःस्वतंत्राभिर्धाटीभिर्युद्धयात्राभिर्भरिताभिर्व्याप्ताभिर्हरिद्भिर्दिग्भिरुपन्यस्तंवर्णितंमहानुभाव्यंमहाप्रभावत्वंयस्यसत्वंसर्वज्ञोऽतएवबहु
भिःसमस्तगुणशालित्वेनात्यंतंसंभावितोऽस्मिन्पीठेवस्तुमर्होयोग्यइतिस्फारभारत्याविशालयावाचाऽमोघश्लाघयासफलप्रशंसयासर्वैर्जोघु
ष्यमाणोभृशंघुष्यमाणोयतिपतेःश्रीशंकरस्यशारदापीठवासोजयतिसर्वोत्कर्षेणवर्त्तते स्फारंयथातथाभारत्यासरस्वत्यामोघश्लाघयाजोघु
ष्यमाणइतिवा स्व० ॥ ८८ ॥

॥८॥



॥८

किंच दुर्दांतैरुद्धतैर्वादिभिः सहब्रह्मविद्यागुरोः श्रीशंकरस्य वादलक्षणद्यूतकथयां दुंदुभेर्धिधिमेइतिशब्दादीक्षणचरणस्याक्षपादस्य मतम
स्यकथाक्वापिप्रकर्षेणलीनाआसीत्तथाकापिलीकपिलकथाक्वापिलीनाआसीत्तथापूर्वमभग्नापिप्रभाकरोक्तिर्भग्नाआसीत् भट्टपादप्रवा
दःपरंकेवलंक्वचिदपिभूमावजनिप्रादुर्भूतः किंचअथतथापातंजलैःकाणादैश्चजनितंयन्मतंतदभिव्याप्यभेदवार्त्ताभूतवागनुचितवागासीत्
असमवागितिवाअसत्यवागितिवा भूतंक्ष्मादौपिशाचादौजंतौक्लीवंत्रिषूचिते प्राप्तेवृत्तेसमेसत्येदेवयोन्यंतरेनुगेइतिमेदिनी॥ ८९॥ किंचपाखं

कुत्राप्यासीत्प्रलीनेक्षणचरणकथाकापिलीक्वापिलीनाभग्नाऽभग्नागुरूक्तिः क्वचिदजनिपरंभट्टपादप्रवादः॥
भूमावायोगकाणादजनिनमतमथाभूतवाग्भेदवार्तादुर्दांतब्रह्मविद्यागुरुदुरुदकथादुंदुभेर्धिधिमेऽतः॥८९॥
काणादः क्वप्रणादः क्वचकपिलवचः क्वाक्षिपादप्रवादः क्वाप्यंधायोगकंथाक्वगुरुरतिलघुः क्वापिभाट्टप्रघट्टं॥ क्व
द्वैताद्वैतवार्त्ताक्षपणकविवृतिः क्वापिपाखंडखंडध्वांतध्वंसैकभानोर्जयतियतिपतेः शारदापीठवासे॥ ९०॥
ततोदिविषदध्वनित्वरितमध्वराशावलीधुरंधरसमीरितत्रिदशपाणिकोणाहतः॥ अरुंधहरिदंतरंस्वरभरैर्भ्र
मत्सिंधुभिर्घनाघनघनारवप्रथमबंधुभिर्दुंदुभिः॥ ९१॥

डसंघातात्मांधकारध्वंसैकसूर्यस्ययतिपतेःशारदापीठवासेजयतिसतिकाणादःप्रवादःक्वनक्वापीत्यर्थः क्वापिक्वचक्षपणकविवृतिरार्हतव्या
ख्यानं॥ ९०॥ ततःशारदापीठारोहणानंतरंदिविषदध्वनिदेवमार्गेत्वरितंझटितियज्ञभुक्पंक्तिधुरंधरइंद्रस्तेनसम्यक्प्रेरितानांदेवानांहस्तप्रांतभा
गैराहतआसमंतात्ताडितोदुंदुभिर्भ्रमंतःसिंधवःसमुद्रायैर्घनाघनोमेघस्तस्यघनीभूतानामारवाणांशब्दानांप्रथमबंधुभिस्तत्तुल्यैःस्वराणामंतश
यैर्हरितांदिशामंतरमंतरालमरुंधरोधितवान् पृथ्वी०॥ ९१॥

अथानंतरंसुधाभुजोदेवाःपुलोमजायाःशच्याःसंयतकेशभरवहनंकतिचिद्दिवसानिअपगर्भकमपगतेषद्धिकसत्पुष्पंयथास्यात्तथागुरोःश्रीशंकरस्यशिरसिकल्पवृक्षपुष्पाणिहर्षेणाभ्यवर्षन्सम्यक्दृष्टिकृतवंतः पुष्पिताग्रा ॥ १२ ॥ इत्येवमतितुष्टोमुनिःश्रीशंकरःसर्वज्ञपीठमध्युष्य तदुपरिस्थित्वातदपिनिजमतस्यगुरुतायैश्रेष्ठ्यायनपुनर्मानहेतोरथानंतरंकतिचनसुरेश्वरादीनृतच्छिस्यानृष्यश्रृंगाश्रमादौविनिवेश्याथसमुनि

कचभरवहनंपुलोमजायाःकतिचिदहान्यपगर्भकंयथास्यात् ॥ गुरुशिरसितथासुधाशनाःस्वस्तरुकुसुमान्यथहर्षतोभ्यवर्षन् ॥ १२ ॥ इतिमुनिरतितुष्टोध्युष्यसर्वज्ञपीठंनिजमतगुरुतायैनोपुनर्मानहेतोः ॥ कतिचनविनिवेश्याथर्ष्यश्रृंगाश्रमादौमुनिरथबदरींसंप्रापकैश्चित्स्वशिष्यैः ॥ १३ ॥ दिवसान्विनिनायतत्रकांश्चित्सचपातंजलतंत्रनिष्ठितेभ्यः ॥ कृपयोपदिशन्स्वसूत्रभाष्यंविजितत्याजितसर्वदर्शनेभ्यः ॥ १४ ॥ नितरांयतिराडुडुराजकरप्रकरप्रचुरप्रसरस्वयशाः ॥ स्वमयंसमयंगमयन्नमयन्हृदयंसदयंसुधियांशुशुभे ॥ १५ ॥

र्बदरींबदरिकाश्रमंकैश्चित्स्वशिष्यैःसहितःसन्प्राप मालिनी ॥ १३ ॥ अथतत्रयत्कृतवांस्तदाह तत्रबदर्यांसचश्रीशंकराचार्योविजिताश्चते त्याजितसर्वदर्शनाश्चइतितेतथाभूतेभ्यःपातंजलशास्त्रनिष्ठितेभ्यःकृपयास्वकृतंभाष्यमुपदिशन्सन्कानिचिद्दिवसानिव्यतिक्रांतवान् वसंतमालिका ॥ १४ ॥ उडुराजस्यचंद्रस्यकिरणप्रकरःकिरणकलापस्तद्वत्प्रचुरःप्रसरोयस्यतथाभूतंस्वीयंयशोयस्यसयतिराट्श्रीशंकराचार्यःस्वमयमात्मप्रचुरंसमयंशास्त्रमवगमयदयंसुधियांहृदयंरमयन्सन्नितरांशुशुभे तोटकं ॥ १५ ॥

उपसंहरति एवंप्रकारैःकलिकल्मषघ्नैःशुभैश्चरित्रैरुज्ज्वलकीर्तिराशेःशिवावतारस्यशंकरस्यद्वात्रिंशत्संवत्सराव्यतीयुरितियोजना आख्यान
की ॥ १६ ॥ श्रीशंकराचार्यैर्भाष्यादिकरणैःसुधियांकृतेनिरतिशयंश्रेयःसंपादितवानित्याशयेनाह भाष्यमिति सुशीलैःभूष्यंकलिमल
विनाशकंकैवल्यस्यमूल्यंवेतनंभाष्यमकलिकृतं हंतेतिहर्षेकोमलामंत्रणेवा कुमतीनांनमस्कारैःकृतायापंडितानामहंतासासमंतात्खंडिता ए

एवंप्रकारैःकलिकल्मषघ्नैःशिवावतारस्यशुभैश्चरित्रैः ॥ द्वात्रिंशदत्युज्ज्वलकीर्तिराशेःसमाव्यतीयुःकि
लशंकरस्य ॥ १६ ॥ भाष्यंभूष्यंसुशीलैरकलिकलिमलध्वंसिकैवल्यमूल्यंहंताहंतासमंतात्कुमतिनति-
कृताखंडितापंडितानां ॥ सद्योविद्योतितासौविपथविमथनैर्मुक्तिपद्यानवद्याश्रेयोभूयोबुधानामधि
कतरमितःशंकरःकिंकरोतु ॥१७॥ हंताशोभियशोभरैस्त्रिजगतीमंदारकुंदेंदुभामुक्ताहारपटीरहीरविहर
न्नीहारताराभिनैः ॥ कारुण्यामृतनिर्झरैःसुकृतिनांदैन्यानलःशून्यतांनीतःशंकरयोगिनाकिमधुनासौ
रभ्यमारभ्यतां ॥ १८॥

वंचविपथमथनैरसावनवद्यामुक्तिपद्यामोक्षपद्धतिःसद्योविद्योतिता तस्मादेवंकर्ताशंकरःइतोऽधिकतरंश्रेयःपुनःकिंकरोतु तस्याभावादित्यर्थः
स्रग्ध० ॥१७॥ किंचहंतेत्याश्चर्येहर्षेवा त्रिजगत्यांत्रिलोक्यांयानिमंदारादीनितत्तुल्यैरासमंताच्छोभनैर्यशसांभरैर्भारैरतिशयैर्वाकारुण्यामृत
स्यनिर्झरैःप्रवाहैःशंकरयोगिनासुकृतिनांदैन्यलक्षणोऽग्निःशून्यतांनीतोऽतस्तेनाधुनातःपरंसौरभ्यंसौगंध्यंकिमारभ्यतां . तत्रेंदुभाश्चंद्रज्योत्स्ना
पट्टीरश्चंदनंहीरोवज्रंविहरन्नीहारश्चलतुषारं शार्दूल० ॥ १८ ॥

किंच साधीयसाबाढतरेणानिदृढेनभूयसायशसा दिगंतराणिआक्रांतानिव्याप्तानि अंतिमबाढयोर्नेदसाधावितिबाढशब्दस्यसाधादेशः बाढंदृढप्रतिज्ञयोरितिमेदिनी. तथात्यंतमाश्चर्यरूपैरतिमानुषैःक्रीडितैर्दिगंतराणिविस्मेराणिविस्मयशीलानिरचितानि तथास्वभक्ताःस्वस्येप्सितभोगमोक्षप्राप्त्युपायैःकृतार्थीकृतास्तस्मादेवंकृतवतायतिराजेनाधुनेतोऽन्यत्सौजन्यंकिमातन्यतां ॥ ९९ ॥पारिकांक्षीश्वरो पतापसेश्वरोऽपि



आक्रांतानिदिगंतराणियशसासाधीयसाभूयसाविस्मेराणिदिगंतराणिरचितान्यत्यद्भुतैःक्रीडितैः ॥
भक्ताःस्वेप्सितभुक्तिमुक्तिकलनोपायैःकृतार्थीकृताभिक्षुक्ष्मापतिनाकिमन्यदधुनासौजन्यमातन्यतां
॥ ९९ ॥ पारिकांक्षीश्वरोथापदुद्धारकंसेवमानानुलस्वस्तिविस्तारकं ॥ पापदावानलातापसंहारकं
योगिवृंदाधिपःप्रापकेदारकं॥ १०० ॥ तत्रातिशीतार्दितशिष्यसंघसंरक्षणायातुलितप्रभावः ॥ तप्तो
दकंप्रार्थयतेस्मचंद्रकलाधरात्तीर्थकरप्रधानः॥ १०१ ॥

तपस्वीतापसःपारिकांक्षीत्यमरः केदारकंप्राप तंविशिनष्टि आपदुद्धारकंसेवमानानामतुलायाःस्वस्तेर्विस्तारकंपापदावाग्निपरितापस्यसंहारकं स्रग्विणी ॥ १०० ॥ तत्रकेदारकेअतिशीतेनपीडितस्यशिष्यसमूहस्यसंरक्षणार्थमतुलप्रभावःशास्त्रकर्तृषुप्रधानःश्रीशंकराचार्यः चंद्रकलाधरान्महादेवात्. तप्तोदकंप्रार्थयामास उपजातिः ॥ १०१ ॥

कर्मंदिवृंदस्य भिक्षुसमुदायस्य पतिः श्रीशंकरस्तेन प्रार्थितः सन् गिरिशः शिवः संतप्ततोयलहरीं नदीं स्वचरणारविंदात्प्रवर्त्तितवान् यातप्ततोयायति नाथकीर्तिविस्तारयंती अद्यापि तत्र समुद्गच्छति समुल्लसतीति वा वसंततिलका ॥ १०२ ॥ इत्येवं कृतं देवकार्यं येन तं तमेनमीशावतारं श्रीशं करं तुंगमुन्नतं कैलासगिरिशृंगं प्रति नेतुं ब्रह्मेंद्रादयः सुरसमुदायप्रवरा ऋषिसंघैः सिद्धैश्च सहिता आजग्मुः . मालिनी ॥ १०३ ॥ आगत्यय

कर्मंदिवृंदपतिना गिरिशोऽर्थितः सन् संतप्तवारिलहरीं स्वपदारविंदात् ॥ प्रावर्तयत्स्वथ यतीयतिना
थकीर्त्तिर्याद्यापि तत्र समुदंचति तप्ततोया ॥ १०२ ॥ इतिकृतसुरकार्यं नेतुमाजग्मुरेनं रजतशिख
रिशृंगं तुंगमीशावतारं ॥ विधिशतमखचंद्रोपेंद्रवाय्वग्निपूर्वाः सुरनिकरवरेण्याः सर्षिसंघाः ससि
द्धाः ॥ १०३ ॥ विद्युद्वल्लीनियुतसमुदारब्ध्युद्धैर्विमानैः संख्यातीतैः सपदि गगनाभोगमाच्छादयंतः ॥
स्तुत्वा देवं त्रिपुरमथनं ते यतीशानवेषं मंदारोत्थैः कुसुमनिचयैरब्रुवन्नर्चयंतः ॥ १०४ ॥

तूक्तवंतस्तदाह विद्युद्वल्लीनां नियुतैर्लक्षैः सम्यगारब्धं युद्धं यैः विद्युद्वल्लीनियुततुल्यैरिति यावत् तथाभूतैः संख्यारहितैर्विमानैः सपदि तत्क्षणे आभोगं पूर्णं गगनमाकाशमाच्छादयंतो यतीशवेषं त्रिपुरमथनं महादेवं स्तुत्वा मंदारोत्थैः पुष्पसमुदायैरर्चयंतस्ते ब्रह्मादयो देवा अब्रुवन्नुक्तवंतः मंदा क्रांता ॥ १०४ ॥

यदभुवंस्तदुदाहरति आद्यःसर्वकारणभूतोदेवःयोऽनात्मकःसकलदेवादिःजगद्रक्षणायकवलितंयसितंविषंसमुद्रमथनादुत्थंहालाहलाख्यंयेन
पुनश्चकामदहनःपुरारातिस्त्रिपुरसंहारकर्त्ताविश्वोत्पत्तिलयकारणंत्रिनेत्रोमहादेवोभवान्यदर्थंवेदमर्यादास्थापनार्थंभूमिप्राप्तस्तदधुनाहेसंसृ
तिनिवारकवृत्तंसंपन्नतत्तस्माद्धुनासपदिद्रागहोगिरिशमस्मत्प्रियार्थंस्वर्गमायाहि शिख० ॥ १०५ ॥ विकसद्विनयप्रधानानांसुमनसां



भवानाद्योदेवःकवलितविषःकामदहनःपुरारातिर्विश्वप्रभवलयहेतुस्त्रिनयनः ॥ यदर्थंगां
प्राप्तोभवमथनवृत्तंतदधुनातदायाहिस्वर्गंसपदिगिरिशास्मत्प्रियकृते ॥ १०५ ॥ उन्मील
द्विनयप्रधानसुमनोवाक्यावसानेमहादेवेसंभृतसंभ्रमेनिजपदंगंतुंमनःकुर्वति ॥ शैलादिः
प्रमथैःपरिष्कृतवपुस्तस्थौपुरस्तत्क्षणादुक्षाशारदवारिमुग्धवरटाहंकारहुंकारकृत् ॥१०६॥

देवानांवाक्यस्यांतेउन्मीलतोविनयप्रधानसुमनोवाक्यस्येतिवा महादेवेश्रीशंकरेस्वीकृतसंभ्रमेनिजपदंगंतुंमनःकुर्वतिसतिप्रमथैःरुद्रगणैःप
रिष्कृतंभूषितंवपुर्यस्यसशैलादिरुक्षानंद्याख्योवृषस्तत्क्षणाच्छ्रीशंकराचार्यस्याग्रेतस्थौ तंविशिनष्टि शरत्कालीनजलस्यदुग्धस्यवरटायाहंस
योषितश्चाहंकारस्यशौक्ल्याहंभावस्यहुंकारकृत्तेभ्योऽपिशुक्लइत्यर्थः हंसस्ययोषिद्वरटेत्यमरः शार्दूलविक्रीडितंछंदः ॥ १०६ ॥

अथसंपादितसमस्तसुरकार्यस्यश्रीशंकराचार्यस्यस्वधामारोहणंवर्णयति इंद्रोपेंद्रप्रधानैस्त्रिदशपरिवृढैर्देवाधिपैःस्तूयमानः पुनश्चदिविभवैःपु
ष्पैरर्च्यमानः कमलजेनब्रह्मणादत्तोहस्तावलंबोयस्मैसः अग्र्यंश्रेष्ठंवृषभंदिनंसमारुह्यप्रकटितौजटाजूटचंद्रावतंसौयेनसऋषिभिःसमुदितंआ
लोकशब्दंबंदिभाषणशब्दंशृण्वन्स्वीयंधामजगत्स्थे आलोकस्तुपुमानुद्योतेदर्शनेवंदिभाषणेइतिमेदिनी स्रग्धरा ॥ १०७॥ जीवन्नेवविमुच्यतेयदु
दितंब्रह्माद्वयंतारकंश्रुत्वातंद्विजराजसंश्रितपदंभाष्याधिपस्यात्मदं वेदांतामृतयुक्तकंठममलैर्हंसैःसदासेवितंगोप्यासंगविवर्जितंयतिवरंनौम्यद्भुतं
शंकरं॥ १॥ पांडवेष्वहितारेशप्रमितेशुभवत्सरे ॥ श्रावणेसितपंचम्यांसिद्धेसिद्धोगुरावयं ॥ २॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालती

इंद्रोपेंद्रप्रधानैस्त्रिदशपरिवृढैःस्तूयमानःप्रसूनैर्दिव्यैरभ्यर्च्यमानःसरसिरुहभुवादत्तहस्तावलंबः ॥
आरुह्योक्षाणमग्र्यंप्रकटितकुजटाजूटचंद्रावतंसःशृण्वन्नालोकशब्दंसमुदितमृषिभिर्धामनैजं
प्रतस्थे ॥ १०७ ॥ इतिश्रीमाधवीयेतच्छारडिंटीकासगः संक्षेपशंकरजयेसर्गःपूर्णोऽपिषोड
शः ॥ १६ ॥ ॥ ७ ॥ मूलसंख्या ॥ १६३ ॥ सर्वमूलसंख्या ॥ २७५१ ॥

र्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिविरचितेश्रीमच्छंकराचार्यविजयडिंडिमेषोडशःसर्गःसमाप्तः ॥ १६ ॥ टी०सं ०२२५
सर्वटीकाग्रंथसंख्या ६४५८ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

रचितोमाधवेनासौयुतोडिंडिमटीकया ॥ शांकरोदिग्जयोनामग्रंथःसर्वरसात्मकः ॥ १ ॥
रसाद्रिद्वीपभूसंख्ये १७८६ शाकेरक्ताक्षिसंज्ञके ॥ तपस्यस्यासितेपक्षेपंचम्यांभृगुवासरे ॥ २ ॥
नारायणेनविदुषांप्रमोदार्थंप्रयत्नतः ॥ कृष्णपुत्रगणेशस्यमुद्रायंत्रालयेऽंकितः ॥ ३ ॥

